# महाभारत - द्रोण पर्व

# ॥ महाभारत द्रोणपर्व ॥

## द्रोणाभिषेकपर्व

### अध्याय ००१

जनमेजय उवाच ॥

तमप्रतिमसत्त्वौजोबलवीर्यपराक्रमम् ।
हतं देवव्रतं श्रुत्वा पाञ्चाल्येन शिखण्डिना ॥ ००१ ॥

धृतराष्ट्रस्तदा राजा शोकव्याकुलचेतनः ।
किमचेष्टत विप्रर्षे हते पितरि वीर्यवान् ॥ ००२ ॥

तस्य पुत्रो हि भगवन्भीष्मद्रोणमुखै रथैः ।
पराजित्य महेष्वासान्पाण्डवान्राज्यमिच्छति ॥ ००३ ॥

तस्मिन्हते तु भगवन्केतौ सर्वधनुष्मताम् ।
यदचेष्टत कौरव्यस्तन्मे ब्रूहि द्विजोत्तम ॥ ००४ ॥

वैशंपायन उवाच ॥

निहतं पितरं श्रुत्वा धृतराष्ट्रो जनाधिपः ।

लेभे न शान्तिं कौरव्यश्चिन्ताशोकपरायणः ॥ ००५ ॥

तस्य चिन्तयतो दुःखमनिशं पार्थिवस्य तत् ।
आजगाम विशुद्धात्मा पुनर्गावल्गणिस्तदा ॥ ००६ ॥

शिबिरात्सञ्जयं प्राप्तं निशि नागाह्वयं पुरम् ।
आम्बिकेयो महाराज धृतराष्ट्रोऽन्वपृच्छत ॥ ००७ ॥

श्रुत्वा भीष्मस्य निधनमप्रहृष्टमना भृशम् ।
पुत्राणां जयमाकाङ्क्षन्विललापातुरो यथा ॥ ००८ ॥

धृतराष्ट्र उवाच ॥

संसाध्य तु महात्मानं भीष्मं भीमपराक्रमम् ।
किमकार्षुः परं तात कुरवः कालचोदिताः ॥ ००९ ॥

तस्मिन्विनिहते शूरे दुराधर्षे महौजसि ।
किं नु स्वित्कुरवोऽकार्षुर्निमग्नाः शोकसागरे ॥ ०१० ॥

तदुदीर्णं महत्सैन्यं त्रैलोक्यस्यापि सञ्जय ।
भयमुत्पादयेत्तीव्रं पाण्डवानां महात्मनाम् ॥ ०११ ॥

देवव्रते तु निहते कुरूणामृषभे तदा ।
यदकार्षुर्नृपतयस्तन्ममाचक्ष्व सञ्जय ॥ ०१२ ॥

सञ्जय उवाच ॥

शृणु राजन्नेकमना वचनं ब्रुवतो मम ।
यत्ते पुत्रास्तदाकार्षुर्हते देवव्रते मृधे ॥ ०१३ ॥

निहते तु तदा भीष्मे राजन्सत्यपराक्रमे ।

तावकाः पाण्डवेयाश्च प्राध्यायन्त पृथक्पृथक्  ॥ ०१४  ॥

विस्मिताश्च प्रहृष्टाश्च क्षत्रधर्मं निशाम्य ते ।
स्वधर्मं निन्दमानाश्च प्रणिपत्य महात्मने  ॥ ०१५  ॥

शयनं कल्पयामासुर्भीष्मायामिततेजसे ।
सोपधानं नरव्याघ्र शरैः संनतपर्वभिः  ॥ ०१६  ॥

विधाय रक्षां भीष्माय समाभाष्य परस्परम् ।
अनुमान्य च गाङ्गेयं कृत्वा चापि प्रदक्षिणम्  ॥ ०१७  ॥

क्रोधसंरक्तनयनाः समवेक्ष्य परस्परम् ।
पुनर्युद्धाय निर्जग्मुः क्षत्रियाः कालचोदिताः  ॥ ०१८  ॥

ततस्तूर्यनिनादैश्च भेरीणां च महास्वनैः ।
तावकानामनीकानि परेषां चापि निर्ययुः  ॥ ०१९  ॥

व्यावृत्तेऽहनि राजेन्द्र पतिते जाह्नवीसुते ।
अमर्षवशमापन्नाः कालोपहतचेतसः  ॥ ०२०  ॥

अनादृत्य वचः पथ्यं गाङ्गेयस्य महात्मनः ।
निर्ययुर्भरतश्रेष्ठाः शस्त्राण्यादाय सर्वशः  ॥ ०२१  ॥

मोहात्तव सपुत्रस्य वधाच्छांतनवस्य च ।
कौरव्या मृत्युसाद्भूताः सहिताः सर्वराजभिः  ॥ ०२२  ॥

अजावय इवागोपा वने श्वापदसङ्कुले ।
भृशमुद्विग्नमनसो हीना देवव्रतेन ते  ॥ ०२३  ॥

पतिते भरतश्रेष्ठे बभूव कुरुवाहिनी ।
द्यौरिवापेतनक्षत्रा हीनं खमिव वायुना  ॥ ०२४  ॥

विपन्नसस्येव मही वाक्चैवासंस्कृता यथा ।
आसुरीव यथा सेना निगृहीते पुरा बलौ ॥ ०२५ ॥

विधवेव वरारोहा शुष्कतोयेव निम्नगा ।
वृकैरिव वने रुद्धा पृषती हतयूथपा ॥ ०२६ ॥

स्वाधर्षा हतसिंहेव महती गिरिकन्दरा ।
भारती भरतश्रेष्ठ पतिते जाह्नवीसुते ॥ ०२७ ॥

विष्वग्वातहता रुग्णा नौरिवासीन्महार्णवे ।
बलिभिः पाण्डवैर्वीरैर्लब्धलक्षैर्भृशार्दिता ॥ ०२८ ॥

सा तदासीद्भृशं सेना व्याकुलाश्वरथद्विपा ।
विषण्णभूयिष्ठनरा कृपणा द्रष्टुमाबभौ ॥ ०२९ ॥

तस्यां त्रस्ता नृपतयः सैनिकाश्च पृथग्विधाः ।
पाताल इव मज्जन्तो हीना देवव्रतेन ते ॥ ०३० ॥

कर्णं हि कुरवोऽस्मार्षुः स हि देवव्रतोपमः ॥ ०३० ॥

सर्वशस्त्रभृतां श्रेष्ठं रोचमानमिवातिथिम् ।
बन्धुमापद्गतस्येव तमेवोपागमन्मनः ॥ ०३१ ॥

चुक्रुशुः कर्ण कर्णेति तत्र भारत पार्थिवाः ।
राधेयं हितमस्माकं सूतपुत्रं तनुत्यजम् ॥ ०३२ ॥

स हि नायुध्यत तदा दशाहानि महायशाः ।
सामात्यबन्धुः कर्णो वै तमाह्वयत माचिरम् ॥ ०३३ ॥

भीष्मेण हि महाबाहुः सर्वक्षत्रस्य पश्यतः ।

रथेषु गण्यमानेषु बलविक्रमशालिषु ॥ ०३४ ॥

संख्यातोऽर्धरथः कर्णो द्विगुणः सन्नरर्षभः ॥ ०३४ ॥

रथातिरथसंख्यायां योऽग्रणीः शूरसंमतः ।
पितृवित्ताम्बुदेवेशानपि यो योद्धुमुत्सहेत् ॥ ०३५ ॥

स तु तेनैव कोपेन राजन्गाङ्गेयमुक्तवान् ।
त्वयि जीवति कौरव्य नाहं योत्स्ये कथञ्चन ॥ ०३६ ॥

त्वया तु पाण्डवेयेषु निहतेषु महामृधे ।
दुर्योधनमनुज्ञाप्य वनं यास्यामि कौरव ॥ ०३७ ॥

पाण्डवैर्वा हते भीष्मे त्वयि स्वर्गमुपेयुषि ।
हन्तास्म्येकरथेनैव कृत्स्नान्यान्मन्यसे रथान् ॥ ०३८ ॥

एवमुक्त्वा महाराज दशाहानि महायशाः ।
नायुध्यत ततः कर्णः पुत्रस्य तव संमते ॥ ०३९ ॥

भीष्मः समरविक्रान्तः पाण्डवेयस्य पार्थिव ।
जघान समरे योधानसंख्येयपराक्रमः ॥ ०४० ॥

तस्मिंस्तु निहते शूरे सत्यसंधे महौजसि ।
त्वत्सुताः कर्णमस्मार्षुस्तर्तुकामा इव प्लवम् ॥ ०४१ ॥

तावकास्तव पुत्राश्च सहिताः सर्वराजभिः ।
हा कर्ण इति चाक्रन्दन्कालोऽयमिति चाब्रुवन् ॥ ०४२ ॥

जामदग्न्याभ्यनुज्ञातमस्त्रे दुर्वारपौरुषम् ।
अगमन्नो मनः कर्णं बन्धुमात्ययिकेष्विव ॥ ०४३ ॥

स हि शक्तो रणे राजंस्त्रातुमस्मान्महाभयात् ।
त्रिदशानिव गोविन्दः सततं सुमहाभयात्  ॥ ०४४  ॥

वैशंपायन उवाच  ॥

तथा कर्णं युधि वरं कीर्तयन्तं पुनः पुनः ।
आशीविषवदुच्छ्वस्य धृतराष्ट्रोऽब्रवीदिदम्  ॥ ०४५  ॥

यत्तद्वैकर्तनं कर्णमगमद्वो मनस्तदा ।
अप्यपश्यत राधेयं सूतपुत्रं तनुत्यजम्  ॥ ०४६  ॥

अपि तन्न मृषाकार्षीद्युधि सत्यपराक्रमः ।
संभ्रान्तानां तदार्तानां त्रस्तानां त्राणमिच्छताम्  ॥ ०४७  ॥

अपि तत्पूरयां चक्रे धनुर्धरवरो युधि ।
यत्तद्विनिहते भीष्मे कौरवाणामपावृतम्  ॥ ०४८  ॥

तत्खण्डं पूरयामास परेषामादधद्भयम् ।
कृतवान्मम पुत्राणां जयाशां सफलामपि  ॥ ०४९  ॥

---

# अध्याय ००२

सञ्जय उवाच  ॥

हतं भीष्ममाधिरथिर्विदित्वा ; भिन्नां नावमिवात्यगाधे कुरूणाम् ।
सोदर्यवद्व्यसनात्सूतपुत्रः ; संतारयिष्यंस्तव पुत्रस्य सेनाम्  ॥ ००१  ॥

श्रुत्वा तु कर्णः पुरुषेन्द्रमच्युतं ; निपातितं शांतनवं महारथम् ।

अथोपायात्तूर्णममित्रकर्शनो ; धनुर्धराणां प्रवरस्तदा वृषः ॥ ००२ ॥

हते तु भीष्मे रथसत्तमे परै ;र्निमज्जतीं नावमिवार्णवे कुरून् ।
पितेव पुत्रांस्त्वरितोऽभ्ययात्ततः ; संतारयिष्यंस्तव पुत्रस्य सेनाम् ॥ ००३ ॥

कर्ण उवाच ॥

यस्मिन्धृतिर्बुद्धिपराक्रमौजो ; दमः सत्यं वीरगुणाश्च सर्वे ।
अस्त्राणि दिव्यान्यथ संनतिर्ह्रीः ; प्रिया च वागनपायीनि भीष्मे ॥ ००४ ॥

ब्रह्मद्विषघ्ने सततं कृतज्ञे ; सनातनं चन्द्रमसीव लक्ष्म ।
स चेत्प्रशान्तः परवीरहन्ता ; मन्ये हतानेव हि सर्वयोधान् ॥ ००५ ॥

नेह ध्रुवं किञ्चन जातु विद्यते ; अस्मि.ण्ल्लोके कर्मणोऽनित्ययोगात् ।
सूर्योदये को हि विमुक्तसंशयो ; भावं कुर्वीताद्य महाव्रते हते ॥ ००६ ॥

वसुप्रभावे वसुवीर्यसंभवे ; गते वसूनेव वसुंधराधिपे ।
वसूनि पुत्रांश्च वसुंधरां तथा ; कुरूंश्च शोचध्वमिमां च वाहिनीम् ॥ ००७ ॥

सञ्जय उवाच ॥

महाप्रभावे वरदे निपातिते ; लोकश्रेष्ठे शांतनवे महौजसि ।
पराजितेषु भरतेषु दुर्मनाः ; कर्णो भृशं न्यश्वसदश्रु वर्तयन् ॥ ००८ ॥

इदं तु राधेयवचो निशम्य ते ; सुताश्च राजंस्तव सैनिकाश्च ह ।
परस्परं चुक्रुशुरार्तिजं भृशं ; तदाश्रु नेत्रैर्मुमुचुर्हि शब्दवत् ॥ ००९ ॥

प्रवर्तमाने तु पुनर्महाहवे ; विगाह्यमानासु चमूषु पार्थिवैः ।
अथाब्रवीद्धर्षकरं वचस्तदा ; रथर्षभान्सर्वमहारथर्षभः ॥ ०१० ॥

कर्ण उवाच ॥

जगत्यनित्ये सततं प्रधावति ; प्रचिन्तयन्नस्थिरमद्य लक्षये ।
भवत्सु तिष्ठत्स्विह पातितो रणे ; गिरिप्रकाशः कुरुपुङ्गवः कथम्  ॥ ०११  ॥

निपातिते शांतनवे महारथे ; दिवाकरे भूतलमास्थिते यथा ।
न पार्थिवाः सोढुमलं धनञ्जयं ; गिरिप्रवोढारमिवानिलं द्रुमाः  ॥ ०१२  ॥

हतप्रधानं त्विदमार्तरूपं ; परैर्हतोत्साहमनाथमद्य वै ।
मया कुरूणां परिपाल्यमाहवे ; बलं यथा तेन महात्मना तथा  ॥ ०१३  ॥

समाहितं चात्मनि भारमीदृशं ; जगत्तथानित्यमिदं च लक्षये ।
निपातितं चाहवशौण्डमाहवे ; कथं नु कुर्यामहमाहवे भयम्  ॥ ०१४  ॥

अहं तु तान्कुरुवृषभानजिह्मगैः ; प्रवेरयन्यमसदनं रणे चरन् ।
यशः परं जगति विभाव्य वर्तिता ; परैर्हतो युधि शयिताथ वा पुनः  ॥ ०१५  ॥

युधिष्ठिरो धृतिमतिधर्मतत्त्ववा ;न्वृकोदरो गजशततुल्यविक्रमः ।
तथार्जुनस्त्रिदशवरात्मजो यतो ; न तद्बलं सुजयमथामरैरपि  ॥ ०१६  ॥

यमौ रणे यत्र यमोपमौ बले ; ससात्यकिर्यत्र च देवकीसुतः ।
न तद्बलं कापुरुषोऽभ्युपेयिवा ;न्निवर्तते मृत्युमुखादिवासकृत्  ॥ ०१७  ॥

तपोऽभ्युदीर्णं तपसैव गम्यते ; बलं बलेनापि तथा मनस्विभिः ।
मनश्च मे शत्रुनिवारणे ध्रुवं ; स्वरक्षणे चाचलवद्व्यवस्थितम्  ॥ ०१८  ॥

एवं चैषां बुध्यमानः प्रभावं ; गत्वैवाहं ताञ्जयाम्यद्य सूत ।
मित्रद्रोहो मर्षणीयो न मेऽयं ; भग्ने सैन्ये यः सहायः स मित्रम्  ॥ ०१९  ॥

कर्तास्म्येतत्सत्पुरुषार्यकर्म ; त्यक्त्वा प्राणाननुयास्यामि भीष्मम् ।
सर्वान्संख्ये शत्रुसंघान्हनिष्ये ; हतस्तैर्वा वीरलोकं गमिष्ये  ॥ ०२०  ॥

संप्राकुष्टे रुदितस्त्रीकुमारे ; पराभूते पौरुषे धार्तराष्ट्रे ।
मया कृत्यमिति जानामि सूत ; तस्माच्छत्रून्धार्तराष्ट्रस्य जेष्ये ॥ ०२१ ॥

कुरून्रक्षन्पाण्डुपुत्राञ्जिघांसं ;स्त्यक्त्वा प्राणान्घोररूपे रणेऽस्मिन् ।
सर्वान्संख्ये शत्रुसंघान्निहत्य ; दास्याम्यहं धार्तराष्ट्राय राज्यम् ॥ ०२२ ॥

निबध्यतां मे कवचं विचित्रं ; हैमं शुभ्रं मणिरत्नावभासि ।
शिरस्त्राणं चार्कसमानभासं ; धनुः शरांश्चापि विषाहिकल्पान् ॥ ०२३ ॥

उपासङ्गान्षोडश योजयन्तु ; धनूंषि दिव्यानि तथाहरन्तु ।
असींश्च शक्तीश्च गदाश्च गुर्वीः ; शङ्खं च जाम्बूनदचित्रभासम् ॥ ०२४ ॥

एतां रौक्मीं नागकक्ष्यां च जैत्रीं ; जैत्रं च मे ध्वजमिन्दीवराभम् ।
श्लक्ष्णैर्वस्त्रैर्विप्रमृज्यानयस्व ; चित्रां मालां चात्र बद्ध्वा सजालाम् ॥ ०२५ ॥

अश्वानग्र्यान्पाण्डुराभ्रप्रकाशा ;न्पुष्टान्स्नातान्मन्त्रपूताभिरद्भिः ।
तप्तैर्भाण्डैः काञ्चनैरभ्युपेता ;ञ्शीघ्राञ्शीघ्रं सूतपुत्रानयस्व ॥ ०२६ ॥

रथं चाग्र्यं हेमजालावनद्धं ; रत्नैश्चित्रं चन्द्रसूर्यप्रकाशैः ।
द्रव्यैर्युक्तं संप्रहारोपपन्नै ;र्वाहैर्युक्तं तूर्णमावर्तयस्व ॥ ०२७ ॥

चित्राणि चापानि च वेगवन्ति ; ज्याश्चोत्तमाः संहननोपपन्नाः ।
तूणांश्च पूर्णान्महतः शराणा ;मासज्य गात्रावरणानि चैव ॥ ०२८ ॥

प्रायात्रिकं चानयताशु सर्वं ; कन्याः पूर्णं वीरकांस्यं च हैमम् ।
आनीय मालामवबध्य चाङ्गे ; प्रवादयन्त्वाशु जयाय भेरीः ॥ ०२९ ॥

प्रयाहि सूताशु यतः किरीटी ; वृकोदरो धर्मसुतो यमौ च ।
तान्वा हनिष्यामि समेत्य संख्ये ; भीष्माय वैष्यामि हतो द्विषद्भिः ॥ ०३० ॥

यस्मिन्राजा सत्यधृतिर्युधिष्ठिरः ; समास्थितो भीमसेनार्जुनौ च ।

वासुदेवः सात्यकिः सृञ्जयाश्च ; मन्ये बलं तदजय्यं महीपैः ॥ ०३१ ॥

तं चेन्मृत्युः सर्वहरोऽभिरक्षे ;त्सदाप्रमत्तः समरे किरीटिनम् ।
तथापि हन्तास्मि समेत्य संख्ये ; यास्यामि वा भीष्मपथा यमाय ॥ ०३२ ॥

न त्वेवाहं न गमिष्यामि तेषां ; मध्ये शूराणां तत्तथाहं ब्रवीमि ।
मित्रद्रुहो दुर्बलभक्तयो ये ; पापात्मानो न ममैते सहायाः ॥ ०३३ ॥

सञ्जय उवाच ॥

स सिद्धिमन्तं रथमुत्तमं दृढं ; सकूबरं हेमपरिष्कृतं शुभम् ।
पताकिनं वातजवैर्हयोत्तमै ;र्युक्तं समास्थाय ययौ जयाय ॥ ०३४ ॥

संपूज्यमानः कुरुभिर्महात्मा ; रथर्षभः पाण्डुरवाजियाता ।
ययौ तदायोधनमुग्रधन्वा ; यत्रावसानं भरतर्षभस्य ॥ ०३५ ॥

वरूथिना महता सध्वजेन ; सुवर्णमुक्तामणिवज्रशालिना ।
सदश्वयुक्तेन रथेन कर्णो ; मेघस्वनेनार्क इवामितौजाः ॥ ०३६ ॥

हुताशनाभः स हुताशनप्रभे ; शुभः शुभे वै स्वरथे धनुर्धरः ।
स्थितो रराजाधिरथिर्महारथः ; स्वयं विमाने सुरराडिव स्थितः ॥ ०३७ ॥

---

# अध्याय ००३

सञ्जय उवाच ॥

शरतल्पे महात्मानं शयानममितौजसम् ।

महावातसमूहेन समुद्रमिव शोषितम् ॥ ००१ ॥

दिव्यैरस्त्रैर्महेष्वासं पातितं सव्यसाचिना ।
जयाशां तव पुत्राणां संभग्नां शर्म वर्म च ॥ ००२ ॥

अपाराणामिव द्वीपमगाधे गाधमिच्छताम् ।
स्रोतसा यामुनेनेव शरौघेण परिप्लुतम् ॥ ००३ ॥

महान्तमिव मैनाकमसह्यं भुवि पातितम् ।
नभश्च्युतमिवादित्यं पतितं धरणीतले ॥ ००४ ॥

शतक्रतोरिवाचिन्त्यं पुरा वृत्रेण निर्जयम् ।
मोहनं सर्वसैन्यस्य युधि भीष्मस्य पातनम् ॥ ००५ ॥

ककुदं सर्वसैन्यानां लक्ष्म सर्वधनुष्मताम् ।
धनञ्जयशरव्याप्तं पितरं ते महाव्रतम् ॥ ००६ ॥

तं वीरशयने वीरं शयानं पुरुषर्षभम् ।
भीष्ममाधिरथिर्दृष्ट्वा भरतानाममध्यमम् ॥ ००७ ॥

अवतीर्य रथादार्तो बाष्पव्याकुलिताक्षरम् ।
अभिवाद्याञ्जलिं बद्ध्वा वन्दमानोऽभ्यभाषत ॥ ००८ ॥

कर्णोऽहमस्मि भद्रं ते अद्य मा वद भारत ।
पुण्यया क्षेमया वाचा चक्षुषा चावलोकय ॥ ००९ ॥

न नूनं सुकृतस्येह फलं कश्चित्समश्नुते ।
यत्र धर्मपरो वृद्धः शेते भुवि भवानिह ॥ ०१० ॥

कोशसञ्जनने मन्त्रे व्यूहप्रहरणेषु च ।
नाथमन्यं न पश्यामि कुरूणां कुरुसत्तम ॥ ०११ ॥

बुध्या विशुद्धया युक्तो यः कुरूंस्तारयेद्भयात् ।
योधांस्त्वमप्लवे हित्वा पितृलोकं गमिष्यसि ॥ ०१२ ॥

अद्य प्रभृति सङ्क्रुद्धा व्याघ्रा इव मृगक्षयम् ।
पाण्डवा भरतश्रेष्ठ करिष्यन्ति कुरुक्षयम् ॥ ०१३ ॥

अद्य गाण्डीवघोषस्य वीर्यज्ञाः सव्यसाचिनः ।
कुरवः संत्रसिष्यन्ति वज्रपाणेरिवासुराः ॥ ०१४ ॥

अद्य गाण्डीवमुक्तानामशनीनामिव स्वनः ।
त्रासयिष्यति सङ्ग्रामे कुरूनन्यांश्च पार्थिवान् ॥ ०१५ ॥

समिद्धोऽग्निर्यथा वीर महाज्वालो द्रुमान्दहेत् ।
धार्तराष्ट्रान्प्रधक्ष्यन्ति तथा बाणाः किरीटिनः ॥ ०१६ ॥

येन येन प्रसरतो वाय्वग्नी सहितौ वने ।
तेन तेन प्रदहतो भगवन्तौ यदिच्छतः ॥ ०१७ ॥

यादृशोऽग्निः समिद्धो हि तादृक्पार्थो न संशयः ।
यथा वायुर्नरव्याघ्र तथा कृष्णो न संशयः ॥ ०१८ ॥

नदतः पाञ्चजन्यस्य रसतो गाण्डिवस्य च ।
श्रुत्वा सर्वाणि सैन्यानि त्रासं यास्यन्ति भारत ॥ ०१९ ॥

कपिध्वजस्य चोत्पाते रथस्यामित्रकर्शिनः ।
शब्दं सोढुं न शक्ष्यन्ति त्वामृते वीर पार्थिवाः ॥ ०२० ॥

को ह्यर्जुनं रणे योद्धुं त्वदन्यः पार्थिवोऽर्हति ।
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः ॥ ०२१ ॥

अमानुषश्च सङ्ग्रामस्त्र्यम्बकेन च धीमतः ।
तस्माच्चैव वरः प्राप्तो दुष्प्रापश्चाकृतात्मभिः ॥ ०२२ ॥

तमद्याहं पाण्डवं युद्धशौण्ड ;ममृष्यमाणो भवतानुशिष्टः ।
आशीविषं दृष्टिहरं सुघोर ;मियां पुरस्कृत्य वधं जयं वा ॥ ०२३ ॥

---

# अध्याय ००४

सञ्जय उवाच ॥

तस्य लालप्यतः श्रुत्वा वृद्धः कुरुपितामहः ।
देशकालोचितं वाक्यमब्रवीत्प्रीतमानसः ॥ ००१ ॥

समुद्र इव सिन्धूनां ज्योतिषामिव भास्करः ।
सत्यस्य च यथा सन्तो बीजानामिव चोर्वरा ॥ ००२ ॥

पर्जन्य इव भूतानां प्रतिष्ठा सुहृदां भव ।
बान्धवास्त्वानुजीवन्तु सहस्राक्षमिवामराः ॥ ००३ ॥

स्वबाहुबलवीर्येण धार्तराष्ट्रप्रियैषिणा ।
कर्ण राजपुरं गत्वा काम्बोजा निहतास्त्वया ॥ ००४ ॥

गिरिव्रजगताश्चापि नग्नजित्प्रमुखा नृपाः ।
अम्बष्ठाश्च विदेहाश्च गान्धाराश्च जितास्त्वया ॥ ००५ ॥

हिमवद्दुर्गनिलयाः किराता रणकर्कशाः ।
दुर्योधनस्य वशगाः कृताः कर्ण त्वया पुरा ॥ ००६ ॥

तत्र तत्र च सङ्ग्रामे दुर्योधनहितैषिणा ।
बहवश्च जिता वीरास्त्वया कर्ण महौजसा ॥ ००७ ॥

यथा दुर्योधनस्तात सज्ञातिकुलबान्धवः ।
तथा त्वमपि सर्वेषां कौरवाणां गतिर्भव ॥ ००८ ॥

शिवेनाभिवदामि त्वां गच्छ युध्यस्व शत्रुभिः ।
अनुशाधि कुरून्संख्ये धत्स्व दुर्योधने जयम् ॥ ००९ ॥

भवान्पौत्रसमोऽस्माकं यथा दुर्योधनस्तथा ।
तवापि धर्मतः सर्वे यथा तस्य वयं तथा ॥ ०१० ॥

यौनात्संबन्धकाल्लोके विशिष्टं सङ्गतं सताम् ।
सद्भिः सह नरश्रेष्ठ प्रवदन्ति मनीषिणः ॥ ०११ ॥

स सत्यसङ्गरो भूत्वा ममेदमिति निश्चितम् ।
कुरूणां पालय बलं यथा दुर्योधनस्तथा ॥ ०१२ ॥

इति श्रुत्वा वचः सोऽथ चरणावभिवाद्य च ।
ययौ वैकर्तनः कर्णस्तूर्णमायोधनं प्रति ॥ ०१३ ॥

सोऽभिवीक्ष्य नरौघाणां स्थानमप्रतिमं महत् ।
व्यूढप्रहरणोरस्कं सैन्यं तत्समबृंहयत् ॥ ०१४ ॥

कर्णं दृष्ट्वा महेष्वासं युद्धाय समवस्थितम् ।
क्ष्वेडितास्फोटितरवैः सिंहनादरवैरपि ॥ ०१५ ॥

धनुःशब्दैश्च विविधैः कुरवः समपूजयन् ॥ ०१५ ॥

# अध्याय ००५

सञ्जय उवाच ॥

रथस्थं पुरुषव्याघ्रं दृष्ट्वा कर्णमवस्थितम् ।
हृष्टो दुर्योधनो राजन्निदं वचनमब्रवीत् ॥ ००१ ॥

सनाथमिदमत्यर्थं भवता पालितं बलम् ।
मन्ये किं तु समर्थं यद्धितं तत्संप्रधार्यताम् ॥ ००२ ॥

कर्ण उवाच ॥

ब्रूहि तत्पुरुषव्याघ्र त्वं हि प्राज्ञतमो नृप ।
यथा चार्थपतिः कृत्यं पश्यते न तथेतरः ॥ ००३ ॥

ते स्म सर्वे तव वचः श्रोतुकामा नरेश्वर ।
नान्याय्यं हि भवान्वाक्यं ब्रूयादिति मतिर्मम ॥ ००४ ॥

दुर्योधन उवाच ॥

भीष्मः सेनाप्रणेतासीद्वयसा विक्रमेण च ।
श्रुतेन च सुसंपन्नः सर्वैर्योधगुणैस्तथा ॥ ००५ ॥

तेनातियशसा कर्ण घ्नता शत्रुगणान्मम ।
सुयुद्धेन दशाहानि पालिताः स्मो महात्मना ॥ ००६ ॥

तस्मिन्नसुकरं कर्म कृतवत्यास्थिते दिवम् ।
कं नु सेनाप्रणेतारं मन्यसे तदनन्तरम् ॥ ००७ ॥

न ऋते नायकं सेना मुहूर्तमपि तिष्ठति ।
आहवेष्वाहवश्रेष्ठ नेतृहीनेव नौर्जले ॥ ००८ ॥

यथा ह्यकर्णधारा नौ रथश्चासारथिर्यथा ।
द्रवेद्यथेष्टं तद्वत्स्यादृते सेनापतिं बलम् ॥ ००९ ॥

स भवान्वीक्ष्य सर्वेषु मामकेषु महात्मसु ।
पश्य सेनापतिं युक्तमनु शांतनवादिह ॥ ०१० ॥

यं हि सेनाप्रणेतारं भवान्वक्ष्यति संयुगे ।
तं वयं सहिताः सर्वे प्रकरिष्याम मारिष ॥ ०११ ॥

कर्ण उवाच ॥

सर्व एव महात्मान इमे पुरुषसत्तमाः ।
सेनापतित्वमर्हन्ति नात्र कार्या विचारणा ॥ ०१२ ॥

कुलसंहननज्ञानैर्बलविक्रमबुद्धिभिः ।
युक्ताः कृतज्ञा ह्रीमन्त आहवेष्वनिवर्तिनः ॥ ०१३ ॥

युगपन्न तु ते शक्याः कर्तुं सर्वे पुरःसराः ।
एक एवात्र कर्तव्यो यस्मिन्वैशेषिका गुणाः ॥ ०१४ ॥

अन्योन्यस्पर्धिनां तेषां यद्येकं सत्करिष्यसि ।
शेषा विमनसो व्यक्तं न योत्स्यन्ते हि भारत ॥ ०१५ ॥

अयं तु सर्वयोधानामाचार्यः स्थविरो गुरुः ।
युक्तः सेनापतिः कर्तुं द्रोणः शस्त्रभृतां वरः ॥ ०१६ ॥

को हि तिष्ठति दुर्धर्षे द्रोणे ब्रह्मविदुत्तमे ।
सेनापतिः स्यादन्योऽस्माच्छुक्राङ्गिरसदर्शनात् ॥ ०१७ ॥

न च स ह्यस्ति ते योधः सर्वराजसु भारत ।
यो द्रोणं समरे यान्तं नानुयास्यति संयुगे ॥ ०१८ ॥

एष सेनाप्रणेतॄणामेष शस्त्रभृतामपि ।
एष बुद्धिमतां चैव श्रेष्ठो राजन्गुरुश्च ते ॥ ०१९ ॥

एवं दुर्योधनाचार्यमाशु सेनापतिं कुरु ।
जिगीषन्तोऽसुरान्संख्ये कार्त्तिकेयमिवामराः ॥ ०२० ॥

सञ्जय उवाच ॥

कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा ।
सेनामध्यगतं द्रोणमिदं वचनमब्रवीत् ॥ ०२१ ॥

वर्णश्रैष्ठ्यात्कुलोत्पत्त्या श्रुतेन वयसा धिया ।
वीर्याद्दाक्ष्यादधृष्यत्वादर्थज्ञानान्नयाज्जयात् ॥ ०२२ ॥

तपसा च कृतज्ञत्वाद्वृद्धः सर्वगुणैरपि ।
युक्तो भवत्समो गोप्ता राज्ञामन्यो न विद्यते ॥ ०२३ ॥

स भवान्पातु नः सर्वान्विबुधानिव वासवः ।
भवन्नेत्राः पराञ्जेतुमिच्छामो द्विजसत्तम ॥ ०२४ ॥

रुद्राणामिव कापाली वसूनामिव पावकः ।
कुबेर इव यक्षाणां मरुतामिव वासवः ॥ ०२५ ॥

वसिष्ठ इव विप्राणां तेजसामिव भास्करः ।
पितॄणामिव धर्मोऽथ आदित्यानामिवाम्बुराट् ॥ ०२६ ॥

नक्षत्राणामिव शशी दितिजानामिवोशनाः ।

श्रेष्ठः सेनाप्रणेतॄणां स नः सेनापतिर्भव ॥ ०२७ ॥

अक्षौहिण्यो दशैका च वशगाः सन्तु तेऽनघ ।
ताभिः शत्रून्प्रतिव्यूह्य जहीन्द्रो दानवानिव ॥ ०२८ ॥

प्रयातु नो भवानग्रे देवानामिव पाविकिः ।
अनुयास्यामहे त्वाजौ सौरभेया इवर्षभम् ॥ ०२९ ॥

उग्रधन्वा महेष्वासो दिव्यं विस्फारयन्धनुः ।
अग्रे भवन्तं दृष्ट्वा नो नार्जुनः प्रसहिष्यते ॥ ०३० ॥

ध्रुवं युधिष्ठिरं संख्ये सानुबन्धं सबान्धवम् ।
जेष्यामि पुरुषव्याघ्र भवान्सेनापतिर्यदि ॥ ०३१ ॥

एवमुक्ते ततो द्रोणे जयेत्यूचुर्नराधिपाः ।
सिंहनादेन महता हर्षयन्तस्तवात्मजम् ॥ ०३२ ॥

सैनिकाश्च मुदा युक्ता वर्धयन्ति द्विजोत्तमम् ।
दुर्योधनं पुरस्कृत्य प्रार्थयन्तो महद्यशः ॥ ०३३ ॥

द्रोण उवाच ॥

वेदं षडङ्गं वेदाहमर्थविद्यां च मानवीम् ।
त्रैयम्बकमथेष्वस्त्रमस्त्राणि विविधानि च ॥ ०३४ ॥

ये चाप्युक्ता मयि गुणा भवद्भिर्जयकाङ्क्षिभिः ।
चिकीर्षुस्तानहं सत्यान्योधयिष्यामि पाण्डवान् ॥ ०३५ ॥

सञ्जय उवाच ॥

स एवमभ्यनुज्ञातश्चक्रे सेनापतिं ततः ।

द्रोणं तव सुतो राजन्विधिदृष्टेन कर्मणा ॥ ०३६ ॥

अथाभिषिषिचुर्द्रोणं दुर्योधनमुखा नृपाः ।
सेनापत्ये यथा स्कन्दं पुरा शक्रमुखाः सुराः ॥ ०३७ ॥

ततो वादित्रघोषेण सह पुंसां महास्वनैः ।
प्रादुरासीत्कृते द्रोणे हर्षः सेनापतौ तदा ॥ ०३८ ॥

ततः पुण्याहघोषेण स्वस्तिवादस्वनेन च ।
संस्तवैर्गीतशब्दैश्च सूतमागधबन्दिनाम् ॥ ०३९ ॥

जयशब्दैर्द्विजाग्र्याणां सुभगानर्तितैस्तथा ।
सत्कृत्य विधिवद्द्रोणं जितान्मन्यन्त पाण्डवान् ॥ ०४० ॥

---

# अध्याय ००६

सञ्जय उवाच ॥

सेनापत्यं तु संप्राप्य भारद्वाजो महारथः ।
युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह ॥ ००१ ॥

सैन्धवश्च कलिङ्गश्च विकर्णश्च तवात्मजः ।
दक्षिणं पार्श्वमास्थाय समतिष्ठन्त दंशिताः ॥ ००२ ॥

प्रपक्षः शकुनिस्तेषां प्रवरैर्हयसादिभिः ।
ययौ गान्धारकैः सार्धं विमलप्रासयोधिभिः ॥ ००३ ॥

कृपश्च कृतवर्मा च चित्रसेनो विविंशतिः ।
दुःशासनमुखा यत्ताः सव्यं पार्श्वमपालयन् ॥ ००४ ॥

तेषां प्रपक्षाः काम्बोजाः सुदक्षिणपुरःसराः ।
ययुरश्वैर्महावेगैः शकाश्च यवनैः सह ॥ ००५ ॥

मद्रास्त्रिगर्ताः साम्बष्ठाः प्रतीच्योदीच्यवासिनः ।
शिबयः शूरसेनाश्च शूद्राश्च मलदैः सह ॥ ००६ ॥

सौवीराः कितवाः प्राच्या दाक्षिणात्याश्च सर्वशः ।
तवात्मजं पुरस्कृत्य सूतपुत्रस्य पृष्ठतः ॥ ००७ ॥

हर्षयन्सर्वसैन्यानि बलेषु बलमादधत् ।
ययौ वैकर्तनः कर्णः प्रमुखे सर्वधन्विनाम् ॥ ००८ ॥

तस्य दीप्तो महाकायः स्वान्यनीकानि हर्षयन् ।
हस्तिकक्ष्यामहाकेतुर्बभौ सूर्यसमद्युतिः ॥ ००९ ॥

न भीष्मव्यसनं कश्चिद्दृष्ट्वा कर्णममन्यत ।
विशोकाश्चाभवन्सर्वे राजानः कुरुभिः सह ॥ ०१० ॥

हृष्टाश्च बहवो योधास्तत्राजल्पन्त सङ्गताः ।
न हि कर्णं रणे दृष्ट्वा युधि स्थास्यन्ति पाण्डवाः ॥ ०११ ॥

कर्णो हि समरे शक्तो जेतुं देवान्सवासवान् ।
किमु पाण्डुसुतान्युद्धे हीनवीर्यपराक्रमान् ॥ ०१२ ॥

भीष्मेण तु रणे पार्थाः पालिता बाहुशालिना ।
तांस्तु कर्णः शरैस्तीक्ष्णैर्नाशयिष्यत्यसंशयम् ॥ ०१३ ॥

एवं ब्रुवन्तस्तेऽन्योन्यं हृष्टरूपा विशां पते ।

राधेयं पूजयन्तश्च प्रशंसन्तश्च निर्ययुः ॥ ०१४ ॥

अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत् ।
परेषां क्रौञ्च एवासीद्व्यूहो राजन्महात्मनाम् ॥ ०१५ ॥

प्रीयमाणेन विहितो धर्मराजेन भारत ॥ ०१५ ॥

व्यूहप्रमुखतस्तेषां तस्थतुः पुरुषर्षभौ ।
वानरध्वजमुच्छ्रित्य विष्वक्सेनधनञ्जयौ ॥ ०१६ ॥

ककुदं सर्वसैन्यानां लक्ष्म सर्वधनुष्मताम् ।
आदित्यपथगः केतुः पार्थस्यामिततेजसः ॥ ०१७ ॥

दीपयामास तत्सैन्यं पाण्डवस्य महात्मनः ।
यथा प्रज्वलितः सूर्यो युगान्ते वै वसुंधराम् ॥ ०१८ ॥

अस्यतामर्जुनः श्रेष्ठो गाण्डीवं धनुषां वरम् ।
वासुदेवश्च भूतानां चक्राणां च सुदर्शनम् ॥ ०१९ ॥

चत्वार्येतानि तेजांसि वहञ्श्वेतहयो रथः ।
परेषामग्रतस्तस्थौ कालचक्रमिवोद्यतम् ॥ ०२० ॥

एवमेतौ महात्मानौ बलसेनाग्रगावुभौ ।
तावकानां मुखं कर्णः परेषां च धनञ्जयः ॥ ०२१ ॥

ततो जाताभिसंरम्भौ परस्परवधैषिणौ ।
अवेक्षेतां तदान्योन्यं समरे कर्णपाण्डवौ ॥ ०२२ ॥

ततः प्रयाते सहसा भारद्वाजे महारथे ।
अन्तर्नादेन घोरेण वसुधा समकम्पत ॥ ०२३ ॥

ततस्तुमुलमाकाशमावृणोत्सदिवाकरम् ।
वातोद्धूतं रजस्तीव्रं कौशेयनिकरोपमम्  ॥ ०२४  ॥

अनभ्रे प्रववर्ष द्यौर्मांसास्थिरुधिराण्युत ।
गृध्राः श्येना बडाः कङ्का वायसाश्च सहस्रशः  ॥ ०२५  ॥

उपर्युपरि सेनां ते तदा पर्यपतन्नृप  ॥ ०२५  ॥

गोमायवश्च प्राक्रोशन्भयदान्दारुणान्रवान् ।
अकार्षुरपसव्यं च बहुशः पृतनां तव  ॥ ०२६  ॥

चिखादिषन्तो मांसानि पिपासन्तश्च शोणितम्  ॥ ०२६  ॥

अपतद्दीप्यमाना च सनिर्घाता सकम्पना ।
उल्का ज्वलन्ती सङ्ग्रामे पुच्छेनावृत्य सर्वशः  ॥ ०२७  ॥

परिवेषो महांश्चापि सविद्युत्स्तनयित्नुमान् ।
भास्करस्याभवद्राजन्प्रयाते वाहिनीपतौ  ॥ ०२८  ॥

एते चान्ये च बहवः प्रादुरासन्सुदारुणाः ।
उत्पाता युधि वीराणां जीवितक्षयकारकाः  ॥ ०२९  ॥

ततः प्रववृते युद्धं परस्परवधैषिणाम् ।
कुरुपाण्डवसैन्यानां शब्देनानादयज्जगत्  ॥ ०३०  ॥

ते त्वन्योन्यं सुसंरब्धाः पाण्डवाः कौरवैः सह ।
प्रत्यघ्नन्निशितैर्बाणैर्जयगृद्धाः प्रहारिणः  ॥ ०३१  ॥

स पाण्डवानां महतीं महेष्वासो महाद्युतिः ।
वेगेनाभ्यद्रवत्सेनां किरञ्शरशतैः शितैः  ॥ ०३२  ॥

द्रोणमभ्युद्यतं दृष्ट्वा पाण्डवाः सह सृञ्जयैः ।
प्रत्यगृह्णंस्तदा राजञ्शरवर्षैः पृथक्पृथक् ॥ ०३३ ॥

सङ्क्षोभ्यमाणा द्रोणेन भिद्यमाना महाचमूः ।
व्यशीर्यत सपाञ्चाला वातेनेव बलाहकाः ॥ ०३४ ॥

बहूनीह विकुर्वाणो दिव्यान्यस्त्राणि संयुगे ।
अपीडयत्क्षणेनैव द्रोणः पाण्डवसृञ्जयान् ॥ ०३५ ॥

ते वध्यमाना द्रोणेन वासवेनेव दानवाः ।
पाञ्चालाः समकम्पन्त धृष्टद्युम्नपुरोगमाः ॥ ०३६ ॥

ततो दिव्यास्त्रविच्छूरो याज्ञसेनिर्महारथः ।
अभिनच्छरवर्षेण द्रोणानीकमनेकधा ॥ ०३७ ॥

द्रोणस्य शरवर्षैस्तु शरवर्षाणि भागशः ।
संनिवार्य ततः सेनां कुरूनप्यवधीद्बली ॥ ०३८ ॥

संहृत्य तु ततो द्रोणः समवस्थाप्य चाहवे ।
स्वमनीकं महाबाहुः पार्षतं समुपाद्रवत् ॥ ०३९ ॥

स बाणवर्षं सुमहदसृजत्पार्षतं प्रति ।
मघवान्समभिक्रुद्धः सहसा दानवेष्विव ॥ ०४० ॥

ते कम्प्यमाना द्रोणेन बाणैः पाण्डवसृञ्जयाः ।
पुनः पुनरभज्यन्त सिंहेनेवेतरे मृगाः ॥ ०४१ ॥

अथ पर्यपतद्द्रोणः पाण्डवानां बलं बली ।
अलातचक्रवद्राजंस्तदद्भुतमिवाभवत् ॥ ०४२ ॥

खचरनगरकल्पं कल्पितं शास्त्रदृष्ट्या ; चलदनिलपताकं ह्रादिनं वल्गिताश्वम् ।

स्फटिकविमलकेतुं तापनं शात्रवाणां; रथवरमधिरूढः सञ्जहारारिसेनाम्  ॥ ०४३  ॥

---

## अध्याय ००७

सञ्जय उवाच  ॥

तथा द्रोणमभिघ्नन्तं साश्वसूतरथद्विपान् ।
व्यथिताः पाण्डवा दृष्ट्वा न चैनं पर्यवारयन्  ॥ ००१  ॥

ततो युधिष्ठिरो राजा धृष्टद्युम्नधनञ्जयौ ।
अब्रवीत्सर्वतो यत्तैः कुम्भयोनिर्निवार्यताम्  ॥ ००२  ॥

तत्रैनमर्जुनश्चैव पार्षतश्च सहानुगः ।
पर्यगृह्णंस्ततः सर्वे समायान्तं महारथाः  ॥ ००३  ॥

केकया भीमसेनश्च सौभद्रोऽथ घटोत्कचः ।
युधिष्ठिरो यमौ मत्स्या द्रुपदस्यात्मजास्तथा  ॥ ००४  ॥

द्रौपदेयाश्च संहृष्टा धृष्टकेतुः ससात्यकिः ।
चेकितानश्च सङ्क्रुद्धो युयुत्सुश्च महारथः  ॥ ००५  ॥

ये चान्ये पार्थिवा राजन्पाण्डवस्यानुयायिनः ।
कुलवीर्यानुरूपाणि चक्रुः कर्माण्यनेकशः  ॥ ००६  ॥

सङ्गृह्यमाणां तां दृष्ट्वा पाण्डवैर्वाहिनीं रणे ।
व्यावृत्य चक्षुषी कोपाद्भारद्वाजोऽन्ववैक्षत  ॥ ००७  ॥

स तीव्रं कोपमास्थाय रथे समरदुर्मदः ।
व्यधमत्पाण्डवानीकमभ्राणीव सदागतिः  ॥ ००८  ॥

रथानश्वान्नरान्नागानभिधावंस्ततस्ततः ।
चचारोन्मत्तवद्द्रोणो वृद्धोऽपि तरुणो यथा  ॥ ००९  ॥

तस्य शोणितदिग्धाङ्गाः शोणास्ते वातरंहसः ।
आजानेया हया राजन्नविभ्रान्ताः श्रियं दधुः  ॥ ०१०  ॥

तमन्तकमिव क्रुद्धमापतन्तं यतव्रतम् ।
दृष्ट्वा संप्राद्रवन्योधाः पाण्डवस्य ततस्ततः  ॥ ०११  ॥

तेषां प्रद्रवतां भीमः पुनरावर्ततामपि ।
वीक्षतां तिष्ठतां चासीच्छब्दः परमदारुणः  ॥ ०१२  ॥

शूराणां हर्षजननो भीरूणां भयवर्धनः ।
द्यावापृथिव्योर्विवरं पूरयामास सर्वतः  ॥ ०१३  ॥

ततः पुनरपि द्रोणो नाम विश्रावयन्युधि ।
अकरोद्रौद्रमात्मानं किरञ्शरशतैः परान्  ॥ ०१४  ॥

स तथा तान्यनीकानि पाण्डवेयस्य धीमतः ।
कालवन्न्यवधीद्द्रोणो युवेव स्थविरो बली  ॥ ०१५  ॥

उत्कृत्य च शिरांस्युग्रो बाहूनपि सभूषणान् ।
कृत्वा शून्यान्रथोपस्थानुदक्रोशन्महारथः  ॥ ०१६  ॥

तस्य हर्षप्रणादेन बाणवेगेन चाभिभो ।
प्राकम्पन्त रणे योधा गावः शीतार्दिता इव  ॥ ०१७  ॥

द्रोणस्य रथघोषेण मौर्वीनिष्पेषणेन च ।
धनुःशब्देन चाकाशे शब्दः समभवन्महान्  ॥ ०१८  ॥

अथास्य बहुशो बाणा निश्चरन्तः सहस्रशः ।
व्याप्य सर्वा दिशः पेतुर्गजाश्वरथपत्तिषु  ॥ ०१९  ॥

तं कार्मुकमहावेगमस्त्रज्वलितपावकम् ।
द्रोणमासादयां चक्रुः पाञ्चालाः पाण्डवैः सह  ॥ ०२०  ॥

तान्वै सरथहस्त्यश्वान्प्राहिणोद्यमसादनम् ।
द्रोणोऽचिरेणाकरोच्च महीं शोणितकर्दमाम्  ॥ ०२१  ॥

तन्वता परमास्त्राणि शरान्सततमस्यता ।
द्रोणेन विहितं दिक्षु बाणजालमदृश्यत  ॥ ०२२  ॥

पदातिषु रथाश्वेषु वारणेषु च सर्वशः ।
तस्य विद्युदिवाभ्रेषु चरन्केतुरदृश्यत  ॥ ०२३  ॥

स केकयानां प्रवरांश्च पञ्च ; पाञ्चालराजं च शरैः प्रमृद्य ।
युधिष्ठिरानीकमदीनयोधी ; द्रोणोऽभ्ययात्कार्मुकबाणपाणिः  ॥ ०२४  ॥

तं भीमसेनश्च धनञ्जयश्च ; शिनेश्च नप्ता द्रुपदात्मजश्च ।
शैब्यात्मजः काशिपतिः शिबिश्च ; हृष्टा नदन्तो व्यकिरञ्शरौघैः  ॥ ०२५  ॥

तेषामथो द्रोणधनुर्विमुक्ताः ; पतत्रिणः काञ्चनचित्रपुङ्खाः ।
भित्त्वा शरीराणि गजाश्वयूनां ; जग्मुर्महीं शोणितदिग्धवाजाः  ॥ ०२६  ॥

सा योधसंघैश्च रथैश्च भूमिः ; शरैर्विभिन्नैर्गजवाजिभिश्च ।
प्रच्छाद्यमाना पतितैर्बभूव ; समन्ततो द्यौरिव कालमेघैः  ॥ ०२७  ॥

शैनेयभीमार्जुनवाहिनीपा ;ञ्शैब्याभिमन्यू सह काशिराज्ञा ।

अन्यांश्च वीरान्समरे प्रमृद्य ;द्रोणः सुतानां तव भूतिकामः ॥ ०२८ ॥

एतानि चान्यानि च कौरवेन्द्र ; कर्माणि कृत्वा समरे महात्मा ।
प्रताप्य लोकानिव कालसूर्यो ; द्रोणो गतः स्वर्गमितो हि राजन् ॥ ०२९ ॥

एवं रुक्मरथः शूरो हत्वा शतसहस्रशः ।
पाण्डवानां रणे योधान्पार्षतेन निपातितः ॥ ०३० ॥

अक्षौहिणीमभ्यधिकां शूराणामनिवर्तिनाम् ।
निहत्य पश्चाद्धृतिमानगच्छत्परमां गतिम् ॥ ०३१ ॥

पाण्डवैः सह पाञ्चालैरशिवैः क्रूरकर्मभिः ।
हतो रुक्मरथो राजन्कृत्वा कर्म सुदुष्करम् ॥ ०३२ ॥

ततो निनादो भूतानामाकाशे समजायत ।
सैन्यानां च ततो राजन्नाचार्ये निहते युधि ॥ ०३३ ॥

द्यां धरां खं दिशो वारि प्रदिशश्चानुनादयन् ।
अहो धिगिति भूतानां शब्दः समभवन्महान् ॥ ०३४ ॥

देवताः पितरश्चैव पूर्वे ये चास्य बान्धवाः ।
ददृशुर्निहतं तत्र भारद्वाजं महारथम् ॥ ०३५ ॥

पाण्डवास्तु जयं लब्ध्वा सिंहनादान्प्रचक्रिरे ।
तेन नादेन महता समकम्पत मेदिनी ॥ ०३६ ॥

# अध्याय ००८

धृतराष्ट्र उवाच ॥

किं कुर्वाणं रणे द्रोणं जघ्नुः पाण्डवसृञ्जयाः ।
तथा निपुणमस्त्रेषु सर्वशस्त्रभृतामपि ॥ ००१ ॥

रथभङ्गो बभूवास्य धनुर्वाशीर्यतास्यतः ।
प्रमत्तो वाभवद्द्रोणस्ततो मृत्युमुपेयिवान् ॥ ००२ ॥

कथं नु पार्षतस्तात शत्रुभिर्दुष्प्रधर्षणम् ।
किरन्तमिषुसंघातान्रुक्मपुङ्खाननेकशः ॥ ००३ ॥

क्षिप्रहस्तं द्विजश्रेष्ठं कृतिनं चित्रयोधिनम् ।
दूरेषुपातिनं दान्तमस्त्रयुद्धे च पारगम् ॥ ००४ ॥

पाञ्चालपुत्रो न्यवधीद्दिष्ट्या स वरमच्युतम् ।
कुर्वाणं दारुणं कर्म रणे यत्तं महारथम् ॥ ००५ ॥

व्यक्तं दिष्टं हि बलवत्पौरुषादिति मे मतिः ।
यद्द्रोणो निहतः शूरः पार्षतेन महात्मना ॥ ००६ ॥

अस्त्रं चतुर्विधं वीरे यस्मिन्नासीत्प्रतिष्ठितम् ।
तमिष्वस्त्रवराचार्यं द्रोणं शंससि मे हतम् ॥ ००७ ॥

श्रुत्वा हतं रुक्मरथं वैयाघ्रपरिवारणम् ।
जातरूपपरिष्कारं नाद्य शोकमपानुदे ॥ ००८ ॥

न नूनं परदुःखेन कश्चिन्म्रियति सञ्जय ।
यत्र द्रोणमहं श्रुत्वा हतं जीवामि न म्रिये ॥ ००९ ॥

अश्मसारमयं नूनं हृदयं सुदृढं मम ।
यच्छ्रुत्वा निहतं द्रोणं शतधा न विदीर्यते  ॥ ०१० ॥

ब्राह्मे वेदे तथेष्वस्त्रे यमुपासन्गुणार्थिनः ।
ब्राह्मणा राजपुत्राश्च स कथं मृत्युना हतः  ॥ ०११ ॥

शोषणं सागरस्येव मेरोरिव विसर्पणम् ।
पतनं भास्करस्येव न मृष्ये द्रोणपातनम्  ॥ ०१२ ॥

दृप्तानां प्रतिषेद्धासीद्धार्मिकानां च रक्षिता ।
योऽत्याक्षीत्कृपणस्यार्थे प्राणानपि परंतपः  ॥ ०१३ ॥

मन्दानां मम पुत्राणां जयाशा यस्य विक्रमे ।
बृहस्पत्युशनस्तुल्यो बुद्ध्या स निहतः कथम्  ॥ ०१४ ॥

ते च शोणा बृहन्तोऽश्वाः सैन्धवा हेममालिनः ।
रथे वातजवा युक्ताः सर्वशब्दातिगा रणे  ॥ ०१५ ॥

बलिनो घोषिणो दान्ताः सैन्धवाः साधुवाहिनः ।
दृढाः सङ्ग्राममध्येषु कच्चिदासन्न विह्वलाः  ॥ ०१६ ॥

करिणां बृंहतां युद्धे शङ्खदुन्दुभिनिस्वनम् ।
ज्याक्षेपशरवर्षाणां शस्त्राणां च सहिष्णवः  ॥ ०१७ ॥

आशंसन्तः पराञ्जेतुं जितश्वासा जितव्यथाः ।
हयाः प्रजविताः शीघ्रा भारद्वाजरथोद्वहाः  ॥ ०१८ ॥

ते स्म रुक्मरथे युक्ता नरवीरसमाहिताः ।
कथं नाभ्यतरंस्तात पाण्डवानामनीकिनीम्  ॥ ०१९ ॥

जातरूपपरिष्कारमास्थाय रथमुत्तमम् ।

भारद्वाजः किमकरोच्छूरः सङ्क्रन्दनो युधि ॥ ०२० ॥

विद्यां यस्योपजीवन्ति सर्वलोकधनुर्भृतः ।
स सत्यसंधो बलवान्द्रोणः किमकरोद्युधि ॥ ०२१ ॥

दिवि शक्रमिव श्रेष्ठं महामात्रं धनुर्भृताम् ।
के नु तं रौद्रकर्माणं युद्धे प्रत्युद्ययू रथाः ॥ ०२२ ॥

ननु रुक्मरथं दृष्ट्वा प्रद्रवन्ति स्म पाण्डवाः ।
दिव्यमस्त्रं विकुर्वाणं सेनां क्षिण्वन्तमव्ययम् ॥ ०२३ ॥

उताहो सर्वसैन्येन धर्मराजः सहानुजः ।
पाञ्चाल्यप्रग्रहो द्रोणं सर्वतः समवारयत् ॥ ०२४ ॥

नूनमावारयत्पार्थो रथिनोऽन्यानजिह्मगैः ।
ततो द्रोणं समारोहत्पार्षतः पापकर्मकृत् ॥ ०२५ ॥

न ह्यन्यं परिपश्यामि वधे कञ्चन शुष्मिणः ।
धृष्टद्युम्नादृते रौद्रात्पाल्यमानात्किरीटिना ॥ ०२६ ॥

तैर्वृतः सर्वतः शूरैः पाञ्चाल्यापसदस्ततः ।
केकयैश्चेदिकारूषैर्मत्स्यैरन्यैश्च भूमिपैः ॥ ०२७ ॥

व्याकुलीकृतमाचार्यं पिपीलैरुरगं यथा ।
कर्मण्यसुकरे सक्तं जघानेति मतिर्मम ॥ ०२८ ॥

योऽधीत्य चतुरो वेदान्सर्वानाख्यानपञ्चमान् ।
ब्राह्मणानां प्रतिष्ठासीत्स्रोतसामिव सागरः ॥ ०२९ ॥

स कथं ब्राह्मणो वृद्धः शस्त्रेण वधमाप्तवान् ॥ ०२९ ॥

अमर्षणो मर्षितवान्क्लिश्यमानः सदा मया ।
अनर्हमाणः कौन्तेयः कर्मणस्तस्य तत्फलम् ॥ ०३० ॥

यस्य कर्मानुजीवन्ति लोके सर्वधनुर्भृतः ।
स सत्यसंधः सुकृती श्रीकामैर्निहतः कथम् ॥ ०३१ ॥

दिवि शक्र इव श्रेष्ठो महासत्त्वो महाबलः ।
स कथं निहतः पार्थैः क्षुद्रमत्स्यैर्यथा तिमिः ॥ ०३२ ॥

क्षिप्रहस्तश्च बलवान्दृढधन्वारिमर्दनः ।
न यस्य जीविताकाङ्क्षी विषयं प्राप्य जीवति ॥ ०३३ ॥

यं द्वौ न जहतः शब्दौ जीवमानं कदाचन ।
ब्राह्मश्च वेदकामानां ज्याघोषश्च धनुर्भृताम् ॥ ०३४ ॥

नाहं मृष्ये हतं द्रोणं सिंहद्विरदविक्रमम् ।
कथं सञ्जय दुर्धर्षमनाधृष्ययशोबलम् ॥ ०३५ ॥

केऽरक्षन्दक्षिणं चक्रं सव्यं के च महात्मनः ।
पुरस्तात्के च वीरस्य युध्यमानस्य संयुगे ॥ ०३६ ॥

के च तत्र तनुं त्यक्त्वा प्रतीपं मृत्युमाव्रजन् ।
द्रोणस्य समरे वीराः केऽकुर्वन्त परां धृतिम् ॥ ०३७ ॥

एतदार्येण कर्तव्यं कृच्छ्रास्वापत्सु सञ्जय ।
पराक्रमेद्यथाशक्त्या तच्च तस्मिन्प्रतिष्ठितम् ॥ ०३८ ॥

मुह्यते मे मनस्तात कथा तावन्निवर्त्यताम् ।
भूयस्तु लब्धसञ्ज्ञस्त्वा परिप्रक्ष्यामि सञ्जय ॥ ०३९ ॥

# अध्याय ००९

वैशंपायन उवाच ॥

एवं पृष्ट्वा सूतपुत्रं हृच्छोकेनार्दितो भृशम् ।
जये निराशः पुत्राणां धृतराष्ट्रोऽपतत्क्षितौ ॥ ००१ ॥

तं विसञ्ज्ञं निपतितं सिषिचुः परिचारकाः ।
जलेनात्यर्थशीतेन वीजन्तः पुण्यगन्धिना ॥ ००२ ॥

पतितं चैनमाज्ञाय समन्ताद्भरतस्त्रियः ।
परिवव्रुर्महाराजमस्पृशंश्चैव पाणिभिः ॥ ००३ ॥

उत्थाप्य चैनं शनकै राजानं पृथिवीतलात् ।
आसनं प्रापयामासुर्बाष्पकण्ठ्यो वराङ्गनाः ॥ ००४ ॥

आसनं प्राप्य राजा तु मूर्छयाभिपरिप्लुतः ।
निश्चेष्टोऽतिष्ठत तदा वीज्यमानः समन्ततः ॥ ००५ ॥

स लब्ध्वा शनकैः सञ्ज्ञां वेपमानो महीपतिः ।
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ००६ ॥

यत्तदुद्यन्निवादित्यो ज्योतिषा प्रणुदंस्तमः ।
आयादजातशत्रुर्वै कस्तं द्रोणादवारयत् ॥ ००७ ॥

प्रभिन्नमिव मातङ्गं तथा क्रुद्धं तरस्विनम् ।
आसक्तमनसं दीप्तं प्रतिद्विरदघातिनम् ॥ ००८ ॥

वाशितासङ्गमे यद्वदजय्यं प्रतियूथपैः ॥ ००८ ॥

अति चान्यान्रणे योधान्वीरः पुरुषसत्तमः ।
यो ह्येको हि महाबाहुर्निर्दहेद्घोरचक्षुषा ॥ ००९ ॥

कृत्स्नं दुर्योधनबलं धृतिमान्सत्यसङ्गरः ॥ ००९ ॥

चक्षुर्हणं जये सक्तमिष्वासवररक्षितम् ।
दान्तं बहुमतं लोके के शूराः पर्यवारयन् ॥ ०१० ॥

के दुष्प्रधर्षं राजानमिष्वासवरमच्युतम् ।
समासेदुर्नरव्याघ्रं कौन्तेयं तत्र मामकाः ॥ ०११ ॥

तरसैवाभिपत्याथ यो वै द्रोणमुपाद्रवत् ।
तं भीमसेनमायान्तं के शूराः पर्यवारयन् ॥ ०१२ ॥

यदायाज्जलदप्रख्यो रथः परमवीर्यवान् ।
पर्जन्य इव बीभत्सुस्तुमुलामशनिं सृजन् ॥ ०१३ ॥

ववर्ष शरवर्षाणि वर्षाणि मघवानिव ।
इषुसंबाधमाकाशं कुर्वन्कपिवरध्वजः ॥ ०१४ ॥

अवस्फूर्जन्दिशः सर्वास्तलनेमिस्वनेन च ॥ ०१४ ॥

चापविद्युत्प्रभो घोरो रथगुल्मबलाहकः ।
रथनेमिघोषस्तनितः शरशब्दातिबन्धुरः ॥ ०१५ ॥

रोषनिर्जितजीमूतो मनोऽभिप्रायशीघ्रगः ।
मर्मातिगो बाणधारस्तुमुलः शोणितोदकः ॥ ०१६ ॥

संप्लावयन्महीं सर्वां मानवैरास्तरंस्तदा ।

गदानिष्टनितो रौद्रो दुर्योधनकृतोद्यमः ॥ ०१७ ॥

युद्धेऽभ्यषिञ्चद्विजयो गार्ध्रपत्रैः शिलाशितैः ।
गाण्डीवं धारयन्धीमान्कीदृशं वो मनस्तदा ॥ ०१८ ॥

कच्चिद्गाण्डीवशब्देन न प्रणश्यत वै बलम् ।
यद्वः स भैरवं कुर्वन्नर्जुनो भृशमभ्यगात् ॥ ०१९ ॥

कच्चिन्नापानुदद्द्रोणादिषुभिर्वो धनञ्जयः ।
वातो मेघानिवाविध्यन्प्रवाञ्शरवनानिलः ॥ ०२० ॥

को हि गाण्डीवधन्वानं नरः सोढुं रणेऽर्हति ॥ ०२० ॥

यत्सेनाः समकम्पन्त यद्वीरानस्पृशद्भयम् ।
के तत्र नाजहुर्द्रोणं के क्षुद्राः प्राद्रवन्भयात् ॥ ०२१ ॥

के वा तत्र तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् ।
अमानुषाणां जेतारं युद्धेष्वपि धनञ्जयम् ॥ ०२२ ॥

न च वेगं सिताश्वस्य विशक्ष्यन्तीह मामकाः ।
गाण्डीवस्य च निर्घोषं प्रावृड्जलदनिस्वनम् ॥ ०२३ ॥

विष्वक्सेनो यस्य यन्ता योद्धा चैव धनञ्जयः ।
अशक्यः स रथो जेतुं मन्ये देवासुरैरपि ॥ ०२४ ॥

सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः ।
मेधावी निपुणो धीमान्युधि सत्यपराक्रमः ॥ ०२५ ॥

आरावं विपुलं कुर्वन्व्यथयन्सर्वकौरवान् ।
यदायान्नकुलो धीमान्के शूराः पर्यवारयन् ॥ ०२६ ॥

आशीविष इव क्रुद्धः सहदेवो यदाभ्ययात् ।
शत्रूणां कदनं कुर्वञ्जेतासौ दुर्जयो युधि ॥ ०२७ ॥

आर्यव्रतममोघेषुं ह्रीमन्तमपराजितम् ।
द्रोणायाभिमुखं यान्तं के शूराः पर्यवारयन् ॥ ०२८ ॥

यः स सौवीरराजस्य प्रमथ्य महतीं चमूम् ।
आदत्त महिषीं भोज्यां काम्यां सर्वाङ्गशोभनाम् ॥ ०२९ ॥

सत्यं धृतिश्च शौर्यं च ब्रह्मचर्यं च केवलम् ।
सर्वाणि युयुधानेऽस्मिन्नित्यानि पुरुषर्षभे ॥ ०३० ॥

बलिनं सत्यकर्माणमदीनमपराजितम् ।
वासुदेवसमं युद्धे वासुदेवादनन्तरम् ॥ ०३१ ॥

युक्तं धनञ्जयप्रेष्ये शूरमाचार्यकर्मणि ।
पार्थेन सममस्त्रेषु कस्तं द्रोणादवारयत् ॥ ०३२ ॥

वृष्णीनां प्रवरं वीरं शूरं सर्वधनुष्मताम् ।
रामेण सममस्त्रेषु यशसा विक्रमेण च ॥ ०३३ ॥

सत्यं धृतिर्दमः शौर्यं ब्रह्मचर्यमनुत्तमम् ।
सात्वते तानि सर्वाणि त्रैलोक्यमिव केशवे ॥ ०३४ ॥

तमेवङ्गुणसंपन्नं दुर्वारमपि दैवतैः ।
समासाद्य महेष्वासं के वीराः पर्यवारयन् ॥ ०३५ ॥

पाञ्चालेषूत्तमं शूरमुत्तमाभिजनप्रियम् ।
नित्यमुत्तमकर्माणमुत्तमौजसमाहवे ॥ ०३६ ॥

युक्तं धनञ्जयहिते ममानर्थाय चोत्तमम् ।

यमवैश्रवणादित्यमहेन्द्रवरुणोपमम् ॥ ०३७ ॥

महारथसमाख्यातं द्रोणायोद्यन्तमाहवे ।
त्यजन्तं तुमुले प्राणान्के शूराः पर्यवारयन् ॥ ०३८ ॥

एकोऽपसृत्य चेदिभ्यः पाण्डवान्यः समाश्रितः ।
धृष्टकेतुं तमायान्तं द्रोणात्कः समवारयत् ॥ ०३९ ॥

योऽवधीत्केतुमाञ्शूरो राजपुत्रं सुदर्शनम् ।
अपरान्तगिरिद्वारे कस्तं द्रोणादवारयत् ॥ ०४० ॥

स्त्रीपूर्वो यो नरव्याघ्रो यः स वेद गुणागुणान् ।
शिखण्डिनं याज्ञसेनिमम्लानमनसं युधि ॥ ०४१ ॥

देवव्रतस्य समरे हेतुं मृत्योर्महात्मनः ।
द्रोणायाभिमुखं यान्तं के वीराः पर्यवारयन् ॥ ०४२ ॥

यस्मिन्नभ्यधिका वीरे गुणाः सर्वे धनञ्जयात् ।
यस्मिन्नस्त्राणि सत्यं च ब्रह्मचर्यं च नित्यदा ॥ ०४३ ॥

वासुदेवसमं वीर्ये धनञ्जयसमं बले ।
तेजसादित्यसदृशं बृहस्पतिसमं मतौ ॥ ०४४ ॥

अभिमन्युं महात्मानं व्यात्ताननमिवान्तकम् ।
द्रोणायाभिमुखं यान्तं के वीराः पर्यवारयन् ॥ ०४५ ॥

तरुणस्त्वरुणप्रख्यः सौभद्रः परवीरहा ।
यदाभ्याद्रवत द्रोणं तदासीद्वो मनः कथम् ॥ ०४६ ॥

द्रौपदेया नरव्याघ्राः समुद्रमिव सिन्धवः ।
यद्द्रोणमाद्रवन्संख्ये के वीरास्तानवारयन् ॥ ०४७ ॥

ये ते द्वादश वर्षाणि क्रीडामुत्सृज्य बालकाः ।
अस्त्रार्थमवसन्भीष्मे बिभ्रतो व्रतमुत्तमम्  ॥ ०४८  ॥

क्षत्रञ्जयः क्षत्रदेवः क्षत्रधर्मा च मानिनः ।
धृष्टद्युम्नात्मजा वीराः के तान्द्रोणादवारयन्  ॥ ०४९  ॥

शताद्विशिष्टं यं युद्धे समपश्यन्त वृष्णयः ।
चेकितानं महेष्वासं कस्तं द्रोणादवारयत्  ॥ ०५०  ॥

वार्धक्षेमिः कलिङ्गानां यः कन्यामाहरद्युधि ।
अनाधृष्टिरदीनात्मा कस्तं द्रोणादवारयत्  ॥ ०५१  ॥

भ्रातरः पञ्च कैकेया धार्मिकाः सत्यविक्रमाः ।
इन्द्रगोपकवर्णाश्च रक्तवर्मायुधध्वजाः  ॥ ०५२  ॥

मातृष्वसुः सुता वीराः पाण्डवानां जयार्थिनः ।
तान्द्रोणं हन्तुमायातान्के वीराः पर्यवारयन्  ॥ ०५३  ॥

यं योधयन्तो राजानो नाजयन्वारणावते ।
षण्मासानभिसंरब्धा जिघांसन्तो युधां पतिम्  ॥ ०५४  ॥

धनुष्मतां वरं शूरं सत्यसंधं महाबलम् ।
द्रोणात्कस्तं नरव्याघ्रं युयुत्सुं प्रत्यवारयत्  ॥ ०५५  ॥

यः पुत्रं काशिराजस्य वाराणस्यां महारथम् ।
समरे स्त्रीषु गृध्यन्तं भल्लेनापहरद्रथात्  ॥ ०५६  ॥

धृष्टद्युम्नं महेष्वासं पार्थानां मन्त्रधारिणम् ।
युक्तं दुर्योधनानर्थे सृष्टं द्रोणवधाय च  ॥ ०५७  ॥

निर्दहन्तं रणे योधान्दारयन्तं च सर्वशः ।
द्रोणायाभिमुखं यान्तं के वीराः पर्यवारयन् ॥ ०५८ ॥

उत्सङ्ग इव संवृद्धं द्रुपदस्यास्त्रवित्तमम् ।
शैखण्डिनं क्षत्रदेवं के तं द्रोणादवारयन् ॥ ०५९ ॥

य इमां पृथिवीं कृत्स्नां चर्मवत्समवेष्टयत् ।
महता रथवंशेन मुख्यारिघ्नो महारथः ॥ ०६० ॥

दशाश्वमेधानाजह्रे स्वन्नपानाप्तदक्षिणान् ।
निरर्गलान्सर्वमेधान्पुत्रवत्पालयन्प्रजाः ॥ ०६१ ॥

पिबन्त्यो दक्षिणां यस्य गङ्गास्रोतः समापिबन् ।
तावतीर्गा ददौ वीर उशीनरसुतोऽध्वरे ॥ ०६२ ॥

न पूर्वे नापरे चक्रुरिदं केचन मानवाः ।
इति सञ्चुक्रुशुर्देवाः कृते कर्मणि दुष्करे ॥ ०६३ ॥

पश्यामस्त्रिषु लोकेषु न तं संस्थास्नुचारिषु ।
जातं वापि जनिष्यं वा द्वितीयं वापि संप्रति ॥ ०६४ ॥

अन्यमौशीनराच्छैब्याद्धुरो वोढारमित्युत ।
गतिं यस्य न यास्यन्ति मानुषा लोकवासिनः ॥ ०६५ ॥

तस्य नप्तारमायान्तं शैब्यं कः समवारयत् ।
द्रोणायाभिमुखं यान्तं व्यात्ताननमिवान्तकम् ॥ ०६६ ॥

विराटस्य रथानीकं मत्स्यस्यामित्रघातिनः ।
प्रेप्सन्तं समरे द्रोणं के वीराः पर्यवारयन् ॥ ०६७ ॥

सद्यो वृकोदराज्जातो महाबलपराक्रमः ।

मायावी राक्षसो घोरो यस्मान्मम महद्भयम्  ॥ ०६८  ॥

पार्थानां जयकामं तं पुत्राणां मम कण्टकम् ।
घटोत्कचं महाबाहुं कस्तं द्रोणादवारयत्  ॥ ०६९  ॥

एते चान्ये च बहवो येषामर्थाय सञ्जय ।
त्यक्तारः संयुगे प्राणान्किं तेषामजितं युधि  ॥ ०७०  ॥

येषां च पुरुषव्याघ्रः शार्ङ्गधन्वा व्यपाश्रयः ।
हितार्थी चापि पार्थानां कथं तेषां पराजयः  ॥ ०७१  ॥

लोकानां गुरुरत्यन्तं लोकनाथः सनातनः ।
नारायणो रणे नाथो दिव्यो दिव्यात्मवान्प्रभुः  ॥ ०७२  ॥

यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः ।
तान्यहं कीर्तयिष्यामि भक्त्या स्थैर्यार्थमात्मनः  ॥ ०७३  ॥

---

# अध्याय ०१०

धृतराष्ट्र उवाच  ॥

शृणु दिव्यानि कर्माणि वासुदेवस्य सञ्जय ।
कृतवान्यानि गोविन्दो यथा नान्यः पुमान्क्वचित्  ॥ ००१  ॥

संवर्धता गोपकुले बालेनैव महात्मना ।
विख्यापितं बलं बाह्वोस्त्रिषु लोकेषु सञ्जय  ॥ ००२  ॥

उच्चैःश्रवस्तुल्यबलं वायुवेगसमं जवे ।

जघान हयराजं यो यमुनावनवासिनम् ॥ ००३ ॥

दानवं घोरकर्माणं गवां मृत्युमिवोत्थितम् ।
वृषरूपधरं बाल्ये भुजाभ्यां निजघान ह ॥ ००४ ॥

प्रलम्बं नरकं जम्भं पीठं चापि महासुरम् ।
मुरुं चाचलसङ्काशमवधीत्पुष्करेक्षणः ॥ ००५ ॥

तथा कंसो महातेजा जरासंधेन पालितः ।
विक्रमेणैव कृष्णेन सगणः शातितो रणे ॥ ००६ ॥

सुनामा नाम विक्रान्तः समग्राक्षौहिणीपतिः ।
भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान् ॥ ००७ ॥

बलदेवद्वितीयेन कृष्णेनामित्रघातिना ।
तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥ ००८ ॥

दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः ।
आराधितः सदारेण स चास्मै प्रददौ वरान् ॥ ००९ ॥

तथा गान्धारराजस्य सुतां वीरः स्वयंवरे ।
निर्जित्य पृथिवीपालानवहत्पुष्करेक्षणः ॥ ०१० ॥

अमृष्यमाणा राजानो यस्य जात्या हया इव ।
रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ॥ ०११ ॥

जरासंधं महाबाहुमुपायेन जनार्दनः ।
परेण घातयामास पृथगक्षौहिणीपतिम् ॥ ०१२ ॥

चेदिराजं च विक्रान्तं राजसेनापतिं बली ।
अर्घे विवदमानं च जघान पशुवत्तदा ॥ ०१३ ॥

सौभं दैत्यपुरं स्वस्थं शाल्वगुप्तं दुरासदम् ।
समुद्रकुक्षौ विक्रम्य पातयामास माधवः ॥ ०१४ ॥

अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान् ।
वत्सगर्गकरूषांश्च पुण्ड्रांश्चाप्यजयद्रणे ॥ ०१५ ॥

आवन्त्यान्दाक्षिणात्यांश्च पार्वतीयान्दशेरकान् ।
काश्मीरकानौरसकान्पिशाचांश्च समन्दरान् ॥ ०१६ ॥

काम्बोजान्वाटधानांश्च चोलान्पाण्ड्यांश्च सञ्जय ।
त्रिगर्तान्मालवांश्चैव दरदांश्च सुदुर्जयान् ॥ ०१७ ॥

नानादिग्भ्यश्च संप्राप्तान्व्रातानश्वशकान्प्रति ।
जितवान्पुण्डरीकाक्षो यवनांश्च सहानुगान् ॥ ०१८ ॥

प्रविश्य मकरावासं यादोभिरभिसंवृतम् ।
जिगाय वरुणं युद्धे सलिलान्तर्गतं पुरा ॥ ०१९ ॥

युधि पञ्चजनं हत्वा पातालतलवासिनम् ।
पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान् ॥ ०२० ॥

खाण्डवे पार्थसहितस्तोषयित्वा हुताशनम् ।
आग्नेयमस्त्रं दुर्धर्षं चक्रं लेभे महाबलः ॥ ०२१ ॥

वैनतेयं समारुह्य त्रासयित्वामरावतीम् ।
महेन्द्रभवनाद्वीरः पारिजातमुपानयत् ॥ ०२२ ॥

तच्च मर्षितवाञ्शक्रो जानंस्तस्य पराक्रमम् ।
राज्ञां चाप्यजितं कञ्चित्कृष्णेनेह न शुश्रुम ॥ ०२३ ॥

यच्च तन्महदाश्चर्यं सभायां मम सञ्जय ।
कृतवान्पुण्डरीकाक्षः कस्तदन्य इहार्हति ॥ ०२४ ॥

यच्च भक्त्या प्रपन्नोऽहमद्राक्षं कृष्णमीश्वरम् ।
तन्मे सुविदितं सर्वं प्रत्यक्षमिव चागमत् ॥ ०२५ ॥

नान्तो विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुनः ।
कर्मणः शक्यते गन्तुं हृषीकेशस्य सञ्जय ॥ ०२६ ॥

तथा गदश्च साम्बश्च प्रद्युम्नोऽथ विदूरथः ।
आगावहोऽनिरुद्धश्च चारुदेष्णश्च सारणः ॥ ०२७ ॥

उल्मुको निशठश्चैव झल्ली बभ्रुश्च वीर्यवान् ।
पृथुश्च विपृथुश्चैव समीकोऽथारिमेजयः ॥ ०२८ ॥

एते वै बलवन्तश्च वृष्णिवीराः प्रहारिणः ।
कथञ्चित्पाण्डवानीकं श्रयेयुः समरे स्थिताः ॥ ०२९ ॥

आहूता वृष्णिवीरेण केशवेन महात्मना ।
ततः संशयितं सर्वं भवेदिति मतिर्मम ॥ ०३० ॥

नागायुतबलो वीरः कैलासशिखरोपमः ।
वनमाली हली रामस्तत्र यत्र जनार्दनः ॥ ०३१ ॥

यमाहुः सर्वपितरं वासुदेवं द्विजातयः ।
अपि वा ह्येष पाण्डूनां योत्स्यतेऽर्थाय सञ्जय ॥ ०३२ ॥

स यदा तात संनह्येत्पाण्डवार्थाय केशवः ।
न तदा प्रत्यनीकेषु भविता तस्य कश्चन ॥ ०३३ ॥

यदि स्म कुरवः सर्वे जयेयुः सर्वपाण्डवान् ।

वार्ष्णेयोऽर्थाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमम् ॥ ०३४ ॥

ततः सर्वान्नरव्याघ्रो हत्वा नरपतीन्रणे ।
कौरवांश्च महाबाहुः कुन्त्यै दद्यात्स मेदिनीम् ॥ ०३५ ॥

यस्य यन्ता हृषीकेशो योद्धा यस्य धनञ्जयः ।
रथस्य तस्य कः संख्ये प्रत्यनीको भवेद्रथः ॥ ०३६ ॥

न केनचिदुपायेन कुरूणां दृश्यते जयः ।
तस्मान्मे सर्वमाचक्ष्व यथा युद्धमवर्तत ॥ ०३७ ॥

अर्जुनः केशवस्यात्मा कृष्णोऽप्यात्मा किरीटिनः ।
अर्जुने विजयो नित्यं कृष्णे कीर्तिश्च शाश्वती ॥ ०३८ ॥

प्राधान्येन हि भूयिष्ठममेयाः केशवे गुणाः ।
मोहाद्दुर्योधनः कृष्णं यन्न वेत्तीह माधवम् ॥ ०३९ ॥

मोहितो दैवयोगेन मृत्युपाशपुरस्कृतः ।
न वेद कृष्णं दाशार्हमर्जुनं चैव पाण्डवम् ॥ ०४० ॥

पूर्वदेवौ महात्मानौ नरनारायणावुभौ ।
एकात्मानौ द्विधाभूतौ दृश्येते मानवैर्भुवि ॥ ०४१ ॥

मनसापि हि दुर्धर्षौ सेनामेतां यशस्विनौ ।
नाशयेतामिहेच्छन्तौ मानुषत्वात्तु नेच्छतः ॥ ०४२ ॥

युगस्येव विपर्यासो लोकानामिव मोहनम् ।
भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः ॥ ०४३ ॥

न ह्येव ब्रह्मचर्येण न वेदाध्ययनेन च ।
न क्रियाभिर्न शस्त्रेण मृत्योः कश्चिद्विमुच्यते ॥ ०४४ ॥

लोकसंभावितौ वीरौ कृतास्त्रौ युद्धदुर्मदौ ।
भीष्मद्रोणौ हतौ श्रुत्वा किं नु जीवामि सञ्जय ॥ ०४५ ॥

यां तां श्रियमसूयामः पुरा यातां युधिष्ठिरे ।
अद्य तामनुजानीमो भीष्मद्रोणवधेन च ॥ ०४६ ॥

तथा च मत्कृते प्राप्तः कुरूणामेष सङ्क्षयः ।
पक्वानां हि वधे सूत वज्रायन्ते तृणान्यपि ॥ ०४७ ॥

अनन्यमिदमैश्वर्यं लोके प्राप्तो युधिष्ठिरः ।
यस्य कोपान्महेष्वासौ भीष्मद्रोणौ निपातितौ ॥ ०४८ ॥

प्राप्तः प्रकृतितो धर्मो नाधर्मो मानवान्प्रति ।
क्रूरः सर्वविनाशाय कालः समतिवर्तते ॥ ०४९ ॥

अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः ।
अन्यथैव हि गच्छन्ति दैवादिति मतिर्मम ॥ ०५० ॥

तस्मादपरिहार्येऽर्थे संप्राप्ते कृच्छ्र उत्तमे ।
अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे ॥ ०५१ ॥

---

# अध्याय ०११

सञ्जय उवाच ॥

हन्त ते वर्णयिष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
यथा स न्यपतद्द्रोणः सादितः पाण्डुसृञ्जयैः ॥ ००१ ॥

सेनापतित्वं संप्राप्य भारद्वाजो महारथः ।
मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् ॥ ००२ ॥

यत्कौरवाणामृषभादापगेयादनन्तरम् ।
सेनापत्येन मां राजन्नद्य सत्कृतवानसि ॥ ००३ ॥

सदृशं कर्मणस्तस्य फलं प्राप्नुहि पार्थिव ।
करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ॥ ००४ ॥

ततो दुर्योधनश्चिन्त्य कर्णदुःशासनादिभिः ।
तमथोवाच दुर्धर्षमाचार्यं जयतां वरम् ॥ ००५ ॥

ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् ।
गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहानय ॥ ००६ ॥

ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः ।
सेनां प्रहर्षयन्सर्वामिदं वचनमब्रवीत् ॥ ००७ ॥

धन्यः कुन्तीसुतो राजा यस्य ग्रहणमिच्छसि ।
न वधार्थं सुदुर्धर्ष वरमद्य प्रयाचसि ॥ ००८ ॥

किमर्थं च नरव्याघ्र न वधं तस्य काङ्क्षसि ।
नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवम् ॥ ००९ ॥

आहो स्विद्धर्मपुत्रस्य द्वेष्टा तस्य न विद्यते ।
यदिच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनि ॥ ०१० ॥

अथ वा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान् ।
राज्यांशं प्रतिदत्त्वा च सौभ्रात्रं कर्तुमिच्छसि ॥ ०११ ॥

धन्यः कुन्तीसुतो राजा सुजाता चास्य धीमतः ।
अजातशत्रुता सत्या तस्य यत्स्निह्यते भवान् ॥ ०१२ ॥

द्रोणेन त्वेवमुक्तस्य तव पुत्रस्य भारत ।
सहसा निःसृतो भावो योऽस्य नित्यं प्रवर्तते ॥ ०१३ ॥

नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि ।
तस्मात्तव सुतो राजन्प्रहृष्टो वाक्यमब्रवीत् ॥ ०१४ ॥

वधे कुन्तीसुतस्याजौ नाचार्य विजयो मम ।
हते युधिष्ठिरे पार्थो हन्यात्सर्वान्हि नो ध्रुवम् ॥ ०१५ ॥

न च शक्यो रणे सर्वैर्निहन्तुममरैरपि ।
य एव चैषां शेषः स्यात्स एवास्मान्न शेषयेत् ॥ ०१६ ॥

सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते ।
पुनर्यास्यन्त्यरण्याय कौन्तेयास्तमनुव्रताः ॥ ०१७ ॥

सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति ।
अतो न वधमिच्छामि धर्मराजस्य कर्हिचित् ॥ ०१८ ॥

तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित् ।
तं वरं सान्तरं तस्मै ददौ सञ्चिन्त्य बुद्धिमान् ॥ ०१९ ॥

द्रोण उवाच ॥

न चेद्युधिष्ठिरं वीर पालयेदर्जुनो युधि ।
मन्यस्व पाण्डवं ज्येष्ठमानीतं वशमात्मनः ॥ ०२० ॥

न हि पार्थो रणे शक्यः सेन्द्रैर्देवासुरैरपि ।
प्रत्युद्यातुमतस्तात नैतदामर्षयाम्यहम् ॥ ०२१ ॥

असंशयं स शिष्यो मे मत्पूर्वश्चास्त्रकर्मणि ।
तरुणः कीर्तियुक्तश्च एकायनगतश्च सः ॥ ०२२ ॥

अस्त्राणीन्द्राच्च रुद्राच्च भूयांसि समवाप्तवान् ।
अमर्षितश्च ते राजंस्तेन नामर्षयाम्यहम् ॥ ०२३ ॥

स चापक्रम्यतां युद्धाद्येनोपायेन शक्यते ।
अपनीते ततः पार्थे धर्मराजो जितस्त्वया ॥ ०२४ ॥

ग्रहणं चेज्जयं तस्य मन्यसे पुरुषर्षभ ।
एतेन चाभ्युपायेन ध्रुवं ग्रहणमेष्यति ॥ ०२५ ॥

अहं गृहीत्वा राजानं सत्यधर्मपरायणम् ।
आनयिष्यामि ते राजन्वशमद्य न संशयः ॥ ०२६ ॥

यदि स्थास्यति सङ्ग्रामे मुहूर्तमपि मेऽग्रतः ।
अपनीते नरव्याघ्रे कुन्तीपुत्रे धनञ्जये ॥ ०२७ ॥

फल्गुनस्य समक्षं तु न हि पार्थो युधिष्ठिरः ।
ग्रहीतुं समरे शक्यः सेन्द्रैरपि सुरासुरैः ॥ ०२८ ॥

सञ्जय उवाच ॥

सान्तरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे ।
गृहीतं तममन्यन्त तव पुत्राः सुबालिशाः ॥ ०२९ ॥

पाण्डवेषु हि सापेक्षं द्रोणं जानाति ते सुतः ।
ततः प्रतिज्ञास्थैर्यार्थं स मन्त्रो बहुलीकृतः ॥ ०३० ॥

ततो दुर्योधनेनापि ग्रहणं पाण्डवस्य तत् ।

सैन्यस्थानेषु सर्वेषु व्याघोषितमरिंदम ॥ ०३१ ॥

---

# अध्याय ०१२

सञ्जय उवाच ॥

ततस्ते सैनिकाः श्रुत्वा तं युधिष्ठिरनिग्रहम् ।
सिंहनादरवांश्चक्रुर्बाणशङ्खरवैः सह ॥ ००१ ॥

तत्तु सर्वं यथावृत्तं धर्मराजेन भारत ।
आप्तैराशु परिज्ञातं भारद्वाजचिकीर्षितम् ॥ ००२ ॥

ततः सर्वान्समानाय्य भ्रातॄन्सैन्यांश्च सर्वशः ।
अब्रवीद्धर्मराजस्तु धनञ्जयमिदं वचः ॥ ००३ ॥

श्रुतं ते पुरुषव्याघ्र द्रोणस्याद्य चिकीर्षितम् ।
यथा तन्न भवेत्सत्यं तथा नीतिर्विधीयताम् ॥ ००४ ॥

सान्तरं हि प्रतिज्ञातं द्रोणेनामित्रकर्शन ।
तच्चान्तरममोघेषौ त्वयि तेन समाहितम् ॥ ००५ ॥

स त्वमद्य महाबाहो युध्यस्व मदनन्तरम् ।
यथा दुर्योधनः कामं नेमं द्रोणादवाप्नुयात् ॥ ००६ ॥

अर्जुन उवाच ॥

यथा मे न वधः कार्य आचार्यस्य कथञ्चन ।

तथा तव परित्यागो न मे राजंश्चिकीर्षितः ॥ ००७ ॥

अप्येवं पाण्डव प्राणानुत्सृजेयमहं युधि ।
प्रतीयां नाहमाचार्यं त्वां न जह्यां कथञ्चन ॥ ००८ ॥

त्वां निगृह्याहवे राजन्धार्तराष्ट्रो यमिच्छति ।
न स तं जीवलोकेऽस्मिन्कामं प्राप्तः कथञ्चन ॥ ००९ ॥

प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकलीभवेत् ।
न त्वां द्रोणो निगृह्णीयाज्जीवमाने मयि ध्रुवम् ॥ ०१० ॥

यदि तस्य रणे साह्यं कुरुते वज्रभृत्स्वयम् ।
देवैर्वा सहितो दैत्यैर्न त्वां प्राप्स्यत्यसौ मृधे ॥ ०११ ॥

मयि जीवति राजेन्द्र न भयं कर्तुमर्हसि ।
द्रोणादस्त्रभृतां श्रेष्ठात्सर्वशस्त्रभृतामपि ॥ ०१२ ॥

न स्मराम्यनृतां वाचं न स्मरामि पराजयम् ।
न स्मरामि प्रतिश्रुत्य किञ्चिदप्यनपाकृतम् ॥ ०१३ ॥

सञ्जय उवाच ॥

ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह ।
प्रावाद्यन्त महाराज पाण्डवानां निवेशने ॥ ०१४ ॥

सिंहनादश्च सञ्जज्ञे पाण्डवानां महात्मनाम् ।
धनुर्ज्यातलशब्दश्च गगनस्पृक्सुभैरवः ॥ ०१५ ॥

तं श्रुत्वा शङ्खनिर्घोषं पाण्डवस्य महात्मनः ।
त्वदीयेष्वप्यनीकेषु वादित्राण्यभिजघ्निरे ॥ ०१६ ॥

ततो व्यूढान्यनीकानि तव तेषां च भारत ।
शनैरुपेयुरन्योन्यं योत्स्यमानानि संयुगे ॥ ०१७ ॥

ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
पाण्डवानां कुरूणां च द्रोणपाञ्चाल्ययोरपि ॥ ०१८ ॥

यतमानाः प्रयत्नेन द्रोणानीकविशातने ।
न शेकुः सृञ्जया राजंस्तद्धि द्रोणेन पालितम् ॥ ०१९ ॥

तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
न शेकुः पाण्डवीं सेनां पाल्यमानां किरीटिना ॥ ०२० ॥

आस्तां ते स्तिमिते सेने रक्ष्यमाणे परस्परम् ।
संप्रसुप्ते यथा नक्तं वनराज्यौ सुपुष्पिते ॥ ०२१ ॥

ततो रुक्मरथो राजन्नर्केणेव विराजता ।
वरूथिना विनिष्पत्य व्यचरत्पृतनान्तरे ॥ ०२२ ॥

तमुद्यतं रथेनैकमाशुकारिणमाहवे ।
अनेकमिव संत्रासान्मेनिरे पाण्डुसृञ्जयाः ॥ ०२३ ॥

तेन मुक्ताः शरा घोरा विचेरुः सर्वतोदिशम् ।
त्रासयन्तो महाराज पाण्डवेयस्य वाहिनीम् ॥ ०२४ ॥

मध्यं दिनमनुप्राप्तो गभस्तिशतसंवृतः ।
यथादृश्यत घर्मांशुस्तथा द्रोणोऽप्यदृश्यत ॥ ०२५ ॥

न चैनं पाण्डवेयानां कश्चिच्छक्नोति मारिष ।
वीक्षितुं समरे क्रुद्धं महेन्द्रमिव दानवाः ॥ ०२६ ॥

मोहयित्वा ततः सैन्यं भारद्वाजः प्रतापवान् ।

धृष्टद्युम्नबलं तूर्णं व्यधमन्निशितैः शरैः ॥ ०२७ ॥

स दिशः सर्वतो रुद्ध्वा संवृत्य खमजिह्मगैः ।
पार्षतो यत्र तत्रैव ममृदे पाण्डुवाहिनीम् ॥ ०२८ ॥

---

# अध्याय ०१३

सञ्जय उवाच ॥

ततः स पाण्डवानीके जनयंस्तुमुलं महत् ।
व्यचरत्पाण्डवान्द्रोणो दहन्कक्षमिवानलः ॥ ००१ ॥

निर्दहन्तमनीकानि साक्षादग्निमिवोत्थितम् ।
दृष्ट्वा रुक्मरथं युद्धे समकम्पन्त सृञ्जयाः ॥ ००२ ॥

प्रततं चास्यमानस्य धनुषोऽस्याशुकारिणः ।
ज्याघोषः श्रूयतेऽत्यर्थं विस्फूर्जितमिवाशनेः ॥ ००३ ॥

रथिनः सादिनश्चैव नागानश्वान्पदातिनः ।
रौद्रा हस्तवता मुक्ताः प्रमथ्नन्ति स्म सायकाः ॥ ००४ ॥

नानद्यमानः पर्जन्यः सानिलः शुचिसङ्क्षये ।
अश्मवर्षमिवावर्षत्परेषामावहद्भयम् ॥ ००५ ॥

व्यचरत्स तदा राजन्सेनां विक्षोभयन्प्रभुः ।
वर्धयामास संत्रासं शात्रवाणाममानुषम् ॥ ००६ ॥

तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम् ।
भ्रमद्रथाम्बुदे तस्मिन्दृश्यते स्म पुनः पुनः ॥ ००७ ॥

स वीरः सत्यवान्प्राज्ञो धर्मनित्यः सुदारुणः ।
युगान्तकाले यन्तेव रौद्रां प्रास्कन्दयन्नदीम् ॥ ००८ ॥

अमर्षवेगप्रभवां क्रव्यादगणसङ्कुलाम् ।
बलौघैः सर्वतः पूर्णां वीरवृक्षापहारिणीम् ॥ ००९ ॥

शोणितोदां रथावर्तां हस्त्यश्वकृतरोधसम् ।
कवचोडुपसंयुक्तां मांसपङ्कसमाकुलाम् ॥ ०१० ॥

मेदोमज्जास्थिसिकतामुष्णीषवरफेनिलाम् ।
सङ्ग्रामजलदापूर्णां प्रासमत्स्यसमाकुलाम् ॥ ०११ ॥

नरनागाश्वसंभूतां शरवेगौघवाहिनीम् ।
शरीरदारुश्रृङ्गाटां भुजनागसमाकुलाम् ॥ ०१२ ॥

उत्तमाङ्गोपलतलां निस्त्रिंशझषसेविताम् ।
रथनागह्रदोपेतां नानाभरणनीरजाम् ॥ ०१३ ॥

महारथशतावर्तां भूमिरेणूर्मिमालिनीम् ।
महावीर्यवतां संख्ये सुतरां भीरुदुस्तराम् ॥ ०१४ ॥

शूरव्यालसमाकीर्णां प्राणिवाणिजसेविताम् ।
छिन्नच्छत्रमहाहंसां मुकुटाण्डजसङ्कुलाम् ॥ ०१५ ॥

चक्रकूर्मां गदानक्रां शरक्षुद्रझषाकुलाम् ।
बडगृध्रसृगालानां घोरसंघैर्निषेविताम् ॥ ०१६ ॥

निहतान्प्राणिनः संख्ये द्रोणेन बलिना शरैः ।

वहन्तीं पितृलोकाय शतशो राजसत्तम ॥ ०१७ ॥

शरीरशतसंबाधां केशशैवलशाद्वलाम् ।
नदीं प्रावर्तयद्राजन्भीरूणां भयवर्धिनीम् ॥ ०१८ ॥

तं जयन्तमनीकानि तानि तान्येव भारत ।
सर्वतोऽभ्यद्रवन्द्रोणं युधिष्ठिरपुरोगमाः ॥ ०१९ ॥

तानभिद्रवतः शूरांस्तावका दृढकार्मुकाः ।
सर्वतः प्रत्यगृह्णन्त तदभूल्लोमहर्षणम् ॥ ०२० ॥

शतमायस्तु शकुनिः सहदेवं समाद्रवत् ।
सनियन्तृध्वजरथं विव्याध निशितैः शरैः ॥ ०२१ ॥

तस्य माद्रीसुतः केतुं धनुः सूतं हयानपि ।
नातिक्रुद्धः शरैश्छित्त्वा षष्ट्या विव्याध मातुलम् ॥ ०२२ ॥

सौबलस्तु गदां गृह्य प्रचस्कन्द रथोत्तमात् ।
स तस्य गदया राजन्रथात्सूतमपातयत् ॥ ०२३ ॥

ततस्तौ विरथौ राजन्गदाहस्तौ महाबलौ ।
चिक्रीडतू रणे शूरौ सशृङ्गाविव पर्वतौ ॥ ०२४ ॥

द्रोणः पाञ्चालराजानं विद्ध्वा दशभिराशुगैः ।
बहुभिस्तेन चाभ्यस्तस्तं विव्याध शताधिकैः ॥ ०२५ ॥

विविंशतिं भीमसेनो विंशत्या निशितैः शरैः ।
विद्ध्वा नाकम्पयद्वीरस्तदद्भुतमिवाभवत् ॥ ०२६ ॥

विविंशतिस्तु सहसा व्यश्वकेतुशरासनम् ।
भीमं चक्रे महाराज ततः सैन्यान्यपूजयन् ॥ ०२७ ॥

स तन्न ममृषे वीरः शत्रोर्विजयमाहवे ।
ततोऽस्य गदया दान्तान्हयान्सर्वानपातयत् ॥ ०२८ ॥

शल्यस्तु नकुलं वीरः स्वस्त्रीयं प्रियमात्मनः ।
विव्याध प्रहसन्बाणैर्लाडयन्कोपयन्निव ॥ ०२९ ॥

तस्याश्वानातपत्रं च ध्वजं सूतमथो धनुः ।
निपात्य नकुलः संख्ये शङ्खं दध्मौ प्रतापवान् ॥ ०३० ॥

धृष्टकेतुः कृपेनास्ताञ्छित्त्वा बहुविधाञ्शरान् ।
कृपं विव्याध सप्तत्या लक्ष्म चास्याहरत्त्रिभिः ॥ ०३१ ॥

तं कृपः शरवर्षेण महता समवाकिरत् ।
निवार्य च रणे विप्रो धृष्टकेतुमयोधयत् ॥ ०३२ ॥

सात्यकिः कृतवर्माणं नाराचेन स्तनान्तरे ।
विद्धा विव्याध सप्तत्या पुनरन्यैः स्मयन्निव ॥ ०३३ ॥

सप्तसप्ततिभिर्भोजस्तं विद्धा निशितैः शरैः ।
नाकम्पयत शैनेयं शीघ्रो वायुरिवाचलम् ॥ ०३४ ॥

सेनापतिः सुशर्माणं शीघ्रं मर्मस्वताडयत् ।
स चापि तं तोमरेण जत्रुदेशे अताडयत् ॥ ०३५ ॥

वैकर्तनं तु समरे विराटः प्रत्यवारयत् ।
सह मत्स्यैर्महावीर्यैस्तदद्भुतमिवाभवत् ॥ ०३६ ॥

तत्पौरुषमभूत्तत्र सूतपुत्रस्य दारुणम् ।
यत्सैन्यं वारयामास शरैः संनतपर्वभिः ॥ ०३७ ॥

द्रुपदस्तु स्वयं राजा भगदत्तेन सङ्गतः ।
तयोर्युद्धं महाराज चित्ररूपमिवाभवत् ॥ ०३८ ॥

भूतानां त्रासजननं चक्रातेऽस्त्रविशारदौ ॥ ०३८ ॥

भूरिश्रवा रणे राजन्याज्ञसेनिं महारथम् ।
महता सायकौघेन छादयामास वीर्यवान् ॥ ०३९ ॥

शिखण्डी तु ततः क्रुद्धः सौमदत्तिं विशां पते ।
नवत्या सायकानां तु कम्पयामास भारत ॥ ०४० ॥

राक्षसौ भीमकर्माणौ हैडिम्बालम्बुसावुभौ ।
चक्रातेऽत्यद्भुतं युद्धं परस्परवधैषिणौ ॥ ०४१ ॥

मायाशतसृजौ दृप्तौ मायाभिरितरेतरम् ।
अन्तर्हितौ चेरतुस्तौ भृशं विस्मयकारिणौ ॥ ०४२ ॥

चेकितानोऽनुविन्देन युयुधे त्वतिभैरवम् ।
यथा देवासुरे युद्धे बलशक्रौ महाबलौ ॥ ०४३ ॥

लक्ष्मणः क्षत्रदेवेन विमर्दमकरोद्भृशम् ।
यथा विष्णुः पुरा राजन्हिरण्याक्षेण संयुगे ॥ ०४४ ॥

ततः प्रजविताश्वेन विधिवत्कल्पितेन च ।
रथेनाभ्यपतद्राजन्सौभद्रं पौरवो नदन् ॥ ०४५ ॥

ततोऽभियाय त्वरितो युद्धाकाङ्क्षी महाबलः ।
तेन चक्रे महद्युद्धमभिमन्युररिंदमः ॥ ०४६ ॥

पौरवस्त्वथ सौभद्रं शरव्रातैरवाकिरत् ।
तस्यार्जुनिर्ध्वजं छत्रं धनुश्चोर्व्यामपातयत् ॥ ०४७ ॥

सौभद्रः पौरवं त्वन्यैर्विद्धा सप्तभिराशुगैः ।
पञ्चभिस्तस्य विव्याध हयान्सूतं च सायकैः ॥ ०४८ ॥

ततः संहर्षयन्सेनां सिंहवद्विनदन्मुहुः ।
समादत्तार्जुनिस्तूर्णं पौरवान्तकरं शरम् ॥ ०४९ ॥

द्वाभ्यां शराभ्यां हार्दिक्यश्चकर्त सशरं धनुः ।
तदुत्सृज्य धनुश्छिन्नं सौभद्रः परवीरहा ॥ ०५० ॥

उद्वबर्ह सितं खड्गमाददानः शरावरम् ॥ ०५० ॥

स तेनानेकतारेण चर्मणा कृतहस्तवत् ।
भ्रान्तासिरचरन्मार्गान्दर्शयन्वीर्यमात्मनः ॥ ०५१ ॥

भ्रामितं पुनरुद्भ्रान्तमाधूतं पुनरुच्छ्रितम् ।
चर्मनिस्त्रिंशयो राजन्निर्विशेषमदृश्यत ॥ ०५२ ॥

स पौरवरथस्येषामाप्लुत्य सहसा नदन् ।
पौरवं रथमास्थाय केशपक्षे परामृशत् ॥ ०५३ ॥

जघानास्य पदा सूतमसिनापातयद्ध्वजम् ।
विक्षोभ्याम्भोनिधिं तार्क्ष्यस्तं नागमिव चाक्षिपत् ॥ ०५४ ॥

तमाकलितकेशान्तं ददृशुः सर्वपार्थिवाः ।
उक्षाणमिव सिंहेन पात्यमानमचेतनम् ॥ ०५५ ॥

तमार्जुनिवशं प्राप्तं कृष्यमाणमनाथवत् ।
पौरवं पतितं दृष्ट्वा नामृष्यत जयद्रथः ॥ ०५६ ॥

स बर्हिणमहावाजं किङ्किणीशतजालवत् ।

चर्म चादाय खड्गं च नदन्पर्यपतद्रथात्  ॥ ०५७  ॥

ततः सैन्धवमालोक्य कार्ष्णिरुत्सृज्य पौरवम् ।
उत्पपात रथात्तूर्णं श्येनवन्निपपात च  ॥ ०५८  ॥

प्रासपट्टिशनिस्त्रिंशाञ्शत्रुभिः संप्रवेरितान् ।
चिच्छेदाथासिना कार्ष्णिश्चर्मणा संरुरोध च  ॥ ०५९  ॥

स दर्शयित्वा सैन्यानां स्वबाहुबलमात्मनः ।
तमुद्यम्य महाखड्गं चर्म चाथ पुनर्बली  ॥ ०६०  ॥

वृद्धक्षत्रस्य दायादं पितुरत्यन्तवैरिणम् ।
ससाराभिमुखः शूरः शार्दूल इव कुञ्जरम्  ॥ ०६१  ॥

तौ परस्परमासाद्य खड्गदन्तनखायुधौ ।
हृष्टवत्संप्रजह्राते व्याघ्रकेसरिणाविव  ॥ ०६२  ॥

संपातेष्वभिपातेषु निपातेष्वसिचर्मणोः ।
न तयोरन्तरं कश्चिद्ददर्श नरसिंहयोः  ॥ ०६३  ॥

अवक्षेपोऽसिनिर्ह्रादः शस्त्रान्तरनिदर्शनम् ।
बाह्यान्तरनिपातश्च निर्विशेषमदृश्यत  ॥ ०६४  ॥

बाह्यमाभ्यन्तरं चैव चरन्तौ मार्गमुत्तमम् ।
ददृशाते महात्मानौ सपक्षाविव पर्वतौ  ॥ ०६५  ॥

ततो विक्षिपतः खड्गं सौभद्रस्य यशस्विनः ।
शरावरणपक्षान्ते प्रजहार जयद्रथः  ॥ ०६६  ॥

रुक्मपक्षान्तरे सक्तस्तस्मिंश्चर्मणि भास्वरे ।
सिन्धुराजबलोद्धूतः सोऽभज्यत महानसिः  ॥ ०६७  ॥

भग्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट् ।
सोऽदृश्यत निमेषेण स्वरथं पुनरास्थितः ॥ ०६८ ॥

तं कार्ष्णिं समरान्मुक्तमास्थितं रथमुत्तमम् ।
सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ०६९ ॥

ततश्चर्म च खड्गं च समुत्क्षिप्य महाबलः ।
ननादार्जुनदायादः प्रेक्षमाणो जयद्रथम् ॥ ०७० ॥

सिन्धुराजं परित्यज्य सौभद्रः परवीरहा ।
तापयामास तत्सैन्यं भुवनं भास्करो यथा ॥ ०७१ ॥

तस्य सर्वायसीं शक्तिं शल्यः कनकभूषणाम् ।
चिक्षेप समरे घोरां दीप्तामग्निशिखामिव ॥ ०७२ ॥

तामवप्लुत्य जग्राह सकोशं चाकरोदसिम् ।
वैनतेयो यथा कार्ष्णिः पतन्तमुरगोत्तमम् ॥ ०७३ ॥

तस्य लाघवमाज्ञाय सत्त्वं चामिततेजसः ।
सहिताः सर्वराजानः सिंहनादमथानदन् ॥ ०७४ ॥

ततस्तामेव शल्यस्य सौभद्रः परवीरहा ।
मुमोच भुजवीर्येण वैडूर्यविकृताजिराम् ॥ ०७५ ॥

सा तस्य रथमासाद्य निर्मुक्तभुजगोपमा ।
जघान सूतं शल्यस्य रथाच्चैनमपातयत् ॥ ०७६ ॥

ततो विराटद्रुपदौ धृष्टकेतुर्युधिष्ठिरः ।
सात्यकिः केकया भीमो धृष्टद्युम्नशिखण्डिनौ ॥ ०७७ ॥

यमौ च द्रौपदेयाश्च साधु साध्विति चुक्रुशुः ॥ ०७७ ॥

बाणशब्दाश्च विविधाः सिंहनादाश्च पुष्कलाः ।
प्रादुरासन्हर्षयन्तः सौभद्रमपलायिनम् ॥ ०७८ ॥

तन्नामृष्यन्त पुत्रास्ते शत्रोर्विजयलक्षणम् ॥ ०७८ ॥

अथैनं सहसा सर्वे समन्तान्निशितैः शरैः ।
अभ्याकिरन्महाराज जलदा इव पर्वतम् ॥ ०७९ ॥

तेषां च प्रियमन्विच्छन्सूतस्य च पराभवात् ।
आर्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात् ॥ ०८० ॥

---

# अध्याय ०१४

धृतराष्ट्र उवाच ॥

बहूनि सुविचित्राणि द्वंद्वयुद्धानि सञ्जय ।
त्वयोक्तानि निशम्याहं स्पृहयामि सचक्षुषाम् ॥ ००१ ॥

आश्चर्यभूतं लोकेषु कथयिष्यन्ति मानवाः ।
कुरूणां पाण्डवानां च युद्धं देवासुरोपमम् ॥ ००२ ॥

न हि मे तृप्तिरस्तीह श्रृण्वतो युद्धमुत्तमम् ।
तस्मादार्तायनेर्युद्धं सौभद्रस्य च शंस मे ॥ ००३ ॥

सञ्जय उवाच ॥

सादितं प्रेक्ष्य यन्तारं शल्यः सर्वायसीं गदाम् ।
समुत्क्षिप्य नदन्क्रुद्धः प्रचस्कन्द रथोत्तमात्  ॥ ००४  ॥

तं दीप्तमिव कालाग्निं दण्डहस्तमिवान्तकम् ।
जवेनाभ्यपतद्भीमः प्रगृह्य महतीं गदाम्  ॥ ००५  ॥

सौभद्रोऽप्यशनिप्रख्यां प्रगृह्य महतीं गदाम् ।
एह्येहीत्यब्रवीच्छल्यं यत्नाद्भीमेन वारितः  ॥ ००६  ॥

वारयित्वा तु सौभद्रं भीमसेनः प्रतापवान् ।
शल्यमासाद्य समरे तस्थौ गिरिरिवाचलः  ॥ ००७  ॥

तथैव मद्रराजोऽपि भीमं दृष्ट्वा महाबलम् ।
ससाराभिमुखस्तूर्णं शार्दूल इव कुञ्जरम्  ॥ ००८  ॥

ततस्तूर्यनिनादाश्च शङ्खानां च सहस्रशः ।
सिंहनादाश्च सञ्जज्ञुर्भेरीणां च महास्वनाः  ॥ ००९  ॥

पश्यतां शतशो ह्यासीदन्योन्यसमचेतसाम् ।
पाण्डवानां कुरूणां च साधु साध्विति निस्वनः  ॥ ०१०  ॥

न हि मद्राधिपादन्यः सर्वराजसु भारत ।
सोढुमुत्सहते वेगं भीमसेनस्य संयुगे  ॥ ०११  ॥

तथा मद्राधिपस्यापि गदावेगं महात्मनः ।
सोढुमुत्सहते लोके कोऽन्यो युधि वृकोदरात्  ॥ ०१२  ॥

पट्टैर्जाम्बूनदैर्बद्धा बभूव जनहर्षिणी ।
प्रजज्वाल तथाविद्धा भीमेन महती गदा  ॥ ०१३  ॥

तथैव चरतो मार्गान्मण्डलानि च भागशः ।

महाविद्युत्प्रतीकाशा शल्यस्य शुशुभे गदा ॥ ०१४ ॥

तौ वृषाविव नर्दन्तौ मण्डलानि विचेरतुः ।
आवर्जितगदाशृङ्गावुभौ शल्यवृकोदरौ ॥ ०१५ ॥

मण्डलावर्तमार्गेषु गदाविहरणेषु च ।
निर्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः ॥ ०१६ ॥

ताडिता भीमसेनेन शल्यस्य महती गदा ।
साग्निज्वाला महारौद्रा गदाचूर्णमशीर्यत ॥ ०१७ ॥

तथैव भीमसेनस्य द्विषताभिहता गदा ।
वर्षाप्रदोषे खद्योतैर्वृतो वृक्ष इवाबभौ ॥ ०१८ ॥

गदा क्षिप्ता तु समरे मद्रराजेन भारत ।
व्योम संदीपयाना सा ससृजे पावकं बहु ॥ ०१९ ॥

तथैव भीमसेनेन द्विषते प्रेषिता गदा ।
तापयामास तत्सैन्यं महोल्का पतती यथा ॥ ०२० ॥

ते चैवोभे गदे श्रेष्ठे समासाद्य परस्परम् ।
श्वसन्त्यौ नागकन्येव ससृजाते विभावसुम् ॥ ०२१ ॥

नखैरिव महाव्याघ्रौ दन्तैरिव महागजौ ।
तौ विचेरतुरासाद्य गदाभ्यां च परस्परम् ॥ ०२२ ॥

ततो गदाग्राभिहतौ क्षणेन रुधिरोक्षितौ ।
ददृशाते महात्मानौ पुष्पिताविव किंशुकौ ॥ ०२३ ॥

शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः ।
गदाभिघातसंह्रादः शक्राशनिरिवोपमः ॥ ०२४ ॥

गदया मद्रराजेन सव्यदक्षिणमाहतः ।
नाकम्पत तदा भीमो भिद्यमान इवाचलः ॥ ०२५ ॥

तथा भीमगदावेगैस्ताड्यमानो महाबलः ।
धैर्यान्मद्राधिपस्तस्थौ वज्रैर्गिरिरिवाहतः ॥ ०२६ ॥

आपेततुर्महावेगौ समुच्छ्रितमहागदौ ।
पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः ॥ ०२७ ॥

अथाप्लुत्य पदान्यष्टौ संनिपत्य गजाविव ।
सहसा लोहदण्डाभ्यामन्योन्यमभिजघ्नतुः ॥ ०२८ ॥

तौ परस्परवेगाच्च गदाभ्यां च भृशाहतौ ।
युगपत्पेततुर्वीरौ क्षिताविन्द्रध्वजाविव ॥ ०२९ ॥

ततो विह्वलमानं तं निःश्वसन्तं पुनः पुनः ।
शल्यमभ्यपतत्तूर्णं कृतवर्मा महारथः ॥ ०३० ॥

दृष्ट्वा चैनं महाराज गदयाभिनिपीडितम् ।
विचेष्टन्तं यथा नागं मूर्छयाभिपरिप्लुतम् ॥ ०३१ ॥

ततः सगदमारोप्य मद्राणामधिपं रथम् ।
अपोवाह रणात्तूर्णं कृतवर्मा महारथः ॥ ०३२ ॥

क्षीबवद्विह्वलो वीरो निमेषात्पुनरुत्थितः ।
भीमोऽपि सुमहाबाहुर्गदापाणिरदृश्यत ॥ ०३३ ॥

ततो मद्राधिपं दृष्ट्वा तव पुत्राः पराङ्मुखम् ।
सनागरथपत्त्यश्वाः समकम्पन्त मारिष ॥ ०३४ ॥

ते पाण्डवैरर्द्यमानास्तावका जितकाशिभिः ।
भीता दिशोऽन्वपद्यन्त वातनुन्ना घना इव ॥ ०३५ ॥

निर्जित्य धार्तराष्ट्रांस्तु पाण्डवेया महारथाः ।
व्यरोचन्त रणे राजन्दीप्यमाना यशस्विनः ॥ ०३६ ॥

सिंहनादान्भृशं चक्रुः शङ्खान्दध्मुश्च हर्षिताः ।
भेरीश्च वादयामासुर्मृदङ्गांश्चानकैः सह ॥ ०३७ ॥

---

# अध्याय ०१५

सञ्जय उवाच ॥

तद्बलं सुमहद्दीर्णं त्वदीयं प्रेक्ष्य वीर्यवान् ।
दधारैको रणे पाण्डून्वृषसेनोऽस्त्रमायया ॥ ००१ ॥

शरा दश दिशो मुक्ता वृषसेनेन मारिष ।
विचेरुस्ते विनिर्भिद्य नरवाजिरथद्विपान् ॥ ००२ ॥

तस्य दीप्ता महाबाणा विनिश्चेरुः सहस्रशः ।
भानोरिव महाबाहो ग्रीष्मकाले मरीचयः ॥ ००३ ॥

तेनार्दिता महाराज रथिनः सादिनस्तथा ।
निपेतुरुर्व्यां सहसा वातनुन्ना इव द्रुमाः ॥ ००४ ॥

हयौघांश्च रथौघांश्च गजौघांश्च समन्ततः ।
अपातयद्रणे राजञ्शतशोऽथ सहस्रशः ॥ ००५ ॥

दृष्ट्वा तमेवं समरे विचरन्तमभीतवत् ।
सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ००६ ॥

नाकुलिस्तु शतानीको वृषसेनं समभ्ययात् ।
विव्याध चैनं दशभिर्नाराचैर्मर्मभेदिभिः ॥ ००७ ॥

तस्य कर्णात्मजश्चापं छित्त्वा केतुमपातयत् ।
तं भ्रातरं परीप्सन्तो द्रौपदेयाः समभ्ययुः ॥ ००८ ॥

कर्णात्मजं शरव्रातैश्चक्रुश्चादृश्यमञ्जसा ।
तान्नदन्तोऽभ्यधावन्त द्रोणपुत्रमुखा रथाः ॥ ००९ ॥

छादयन्तो महाराज द्रौपदेयान्महारथान् ।
शरैर्नानाविधैस्तूर्णं पर्वताञ्जलदा इव ॥ ०१० ॥

तान्पाण्डवाः प्रत्यगृह्णंस्त्वरिताः पुत्रगृद्धिनः ।
पाञ्चालाः केकया मत्स्याः सृञ्जयाश्चोद्यतायुधाः ॥ ०११ ॥

तद्युद्धमभवद्घोरं तुमुलं लोमहर्षणम् ।
त्वदीयैः पाण्डुपुत्राणां देवानामिव दानवैः ॥ ०१२ ॥

एवमुत्तमसंरम्भा युयुधुः कुरुपाण्डवाः ।
परस्परमुदीक्षन्तः परस्परकृतागसः ॥ ०१३ ॥

तेषां ददृशिरे कोपाद्वपूंष्यमिततेजसाम् ।
युयुत्सूनामिवाकाशे पतत्रिवरभोगिनाम् ॥ ०१४ ॥

भीमकर्णकृपद्रोणद्रौणिपार्षतसात्यकैः ।
बभासे स रणोद्देशः कालसूर्यैरिवोदितैः ॥ ०१५ ॥

तदासीत्तुमुलं युद्धं निघ्नतामितरेतरम् ।

महाबलानां बलिभिर्दानवानां यथा सुरैः ॥ ०१६ ॥

ततो युधिष्ठिरानीकमुद्धूतार्णवनिस्वनम् ।
त्वदीयमवधीत्सैन्यं संप्रद्रुतमहारथम् ॥ ०१७ ॥

तत्प्रभग्नं बलं दृष्ट्वा शत्रुभिर्भृशमर्दितम् ।
अलं द्रुतेन वः शूरा इति द्रोणोऽभ्यभाषत ॥ ०१८ ॥

ततः शोणहयः क्रुद्धश्चतुर्दन्त इव द्विपः ।
प्रविश्य पाण्डवानीकं युधिष्ठिरमुपाद्रवत् ॥ ०१९ ॥

तमविध्यच्छितैर्बाणैः कङ्कपत्रैर्युधिष्ठिरः ।
तस्य द्रोणो धनुश्छित्त्वा तं द्रुतं समुपाद्रवत् ॥ ०२० ॥

चक्ररक्षः कुमारस्तु पाञ्चालानां यशस्करः ।
दधार द्रोणमायान्तं वेलेव सरितां पतिम् ॥ ०२१ ॥

द्रोणं निवारितं दृष्ट्वा कुमारेण द्विजर्षभम् ।
सिंहनादरवो ह्यासीत्साधु साध्विति भाषताम् ॥ ०२२ ॥

कुमारस्तु ततो द्रोणं सायकेन महाहवे ।
विव्याधोरसि सङ्क्रुद्धः सिंहवच्चानदन्मुहुः ॥ ०२३ ॥

संवार्य तु रणे द्रोणः कुमारं वै महाबलः ।
शरैरनेकसाहस्रैः कृतहस्तो जितक्लमः ॥ ०२४ ॥

तं शूरमार्यव्रतिनमस्त्रार्थकृतनिश्रमम् ।
चक्ररक्षमपामृद्नात्कुमारं द्विजसत्तमः ॥ ०२५ ॥

स मध्यं प्राप्य सेनायाः सर्वाः परिचरन्दिशः ।
तव सैन्यस्य गोप्तासीद्भारद्वाजो रथर्षभः ॥ ०२६ ॥

शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् ।
नकुलं पञ्चभिर्विद्ध्वा सहदेवं च सप्तभिः ॥ ०२७ ॥

युधिष्ठिरं द्वादशभिर्द्रौपदेयांस्त्रिभिस्त्रिभिः ।
सात्यकिं पञ्चभिर्विद्ध्वा मत्स्यं च दशभिः शरैः ॥ ०२८ ॥

व्यक्षोभयद्रणे योधान्यथामुख्यानभिद्रवन् ।
अभ्यवर्तत संप्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम् ॥ ०२९ ॥

युगंधरस्ततो राजन्भारद्वाजं महारथम् ।
वारयामास सङ्क्रुद्धं वातोद्धूतमिवार्णवम् ॥ ०३० ॥

युधिष्ठिरं स विद्ध्वा तु शरैः संनतपर्वभिः ।
युगंधरं च भल्लेन रथनीडादपाहरत् ॥ ०३१ ॥

ततो विराटद्रुपदौ केकयाः सात्यकिः शिबिः ।
व्याघ्रदत्तश्च पाञ्चाल्यः सिंहसेनश्च वीर्यवान् ॥ ०३२ ॥

एते चान्ये च बहवः परीप्सन्तो युधिष्ठिरम् ।
आवव्रुस्तस्य पन्थानं किरन्तः सायकान्बहून् ॥ ०३३ ॥

व्याघ्रदत्तश्च पाञ्चाल्यो द्रोणं विव्याध मार्गणैः ।
पञ्चाशद्भिः शितै राजंस्तत उच्चुक्रुशुर्जनाः ॥ ०३४ ॥

त्वरितं सिंहसेनस्तु द्रोणं विद्ध्वा महारथम् ।
प्राहसत्सहसा हृष्टस्त्रासयन्वै यतव्रतम् ॥ ०३५ ॥

ततो विस्फार्य नयने धनुर्ज्यामवमृज्य च ।
तलशब्दं महत्कृत्वा द्रोणस्तं समुपाद्रवत् ॥ ०३६ ॥

ततस्तु सिंहसेनस्य शिरः कायात्सकुण्डलम् ।
व्याघ्रदत्तस्य चाक्रम्य भल्लाभ्यामहरद्बली ॥ ०३७ ॥

तान्प्रमृद्य शरव्रातैः पाण्डवानां महारथान् ।
युधिष्ठिरसमभ्याशे तस्थौ मृत्युरिवान्तकः ॥ ०३८ ॥

ततोऽभवन्महाशब्दो राजन्यौधिष्ठिरे बले ।
हृतो राजेति योधानां समीपस्थे यतव्रते ॥ ०३९ ॥

अब्रुवन्सैनिकास्तत्र दृष्ट्वा द्रोणस्य विक्रमम् ।
अद्य राजा धार्तराष्ट्रः कृतार्थो वै भविष्यति ॥ ०४० ॥

आगमिष्यति नो नूनं धार्तराष्ट्रस्य संयुगे ॥ ०४० ॥

एवं सञ्जल्पतां तेषां तावकानां महारथः ।
आयाज्जवेन कौन्तेयो रथघोषेण नादयन् ॥ ०४१ ॥

शोणितोदां रथावर्तां कृत्वा विशसने नदीम् ।
शूरास्थिचयसङ्कीर्णां प्रेतकूलापहारिणीम् ॥ ०४२ ॥

तां शरौघमहाफेनां प्रासमत्स्यसमाकुलाम् ।
नदीमुत्तीर्य वेगेन कुरून्विद्राव्य पाण्डवः ॥ ०४३ ॥

ततः किरीटी सहसा द्रोणानीकमुपाद्रवत् ।
छादयन्निषुजालेन महता मोहयन्निव ॥ ०४४ ॥

शीघ्रमभ्यस्यतो बाणान्संदधानस्य चानिशम् ।
नान्तरं ददृशे कश्चित्कौन्तेयस्य यशस्विनः ॥ ०४५ ॥

न दिशो नान्तरिक्षं च न द्यौर्नैव च मेदिनी ।
अदृश्यत महाराज बाणभूतमिवाभवत् ॥ ०४६ ॥

नादृश्यत तदा राजंस्तत्र किञ्चन संयुगे ।
बाणान्धकारे महति कृते गाण्डीवधन्वना ॥ ०४७ ॥

सूर्ये चास्तमनुप्राप्ते रजसा चाभिसंवृते ।
नाज्ञायत तदा शत्रुर्न सुहृन्न च किञ्चन ॥ ०४८ ॥

ततोऽवहारं चक्रुस्ते द्रोणदुर्योधनादयः ।
तान्विदित्वा भृशं त्रस्तानयुद्धमनसः परान् ॥ ०४९ ॥

स्वान्यनीकानि बीभत्सुः शनकैरवहारयत् ।
ततोऽभितुष्टुवुः पार्थं प्रहृष्टाः पाण्डुसृञ्जयाः ॥ ०५० ॥

पाञ्चालाश्च मनोज्ञाभिर्वाग्भिः सूर्यमिवर्षयः ॥ ०५० ॥

एवं स्वशिबिरं प्रायाज्जित्वा शत्रून्धनञ्जयः ।
पृष्ठतः सर्वसैन्यानां मुदितो वै सकेशवः ॥ ०५१ ॥

मसारगल्वर्कसुवर्णरूप्यै ;र्वज्रप्रवालस्फटिकैश्च मुख्यैः ।
चित्रे रथे पाण्डुसुतो बभासे ; नक्षत्रचित्रे वियतीव चन्द्रः ॥ ०५२ ॥

---

# संशप्तकवधपर्व

## अध्याय ०१६

सञ्जय उवाच ॥

ते सेने शिबिरं गत्वा न्यविशेतां विशां पते ।
यथाभागं यथान्यायं यथागुल्मं च सर्वशः ॥ ००१ ॥

कृत्वावहारं सैन्यानां द्रोणः परमदुर्मनाः ।
दुर्योधनमभिप्रेक्ष्य सव्रीडमिदमब्रवीत् ॥ ००२ ॥

उक्तमेतन्मया पूर्वं न तिष्ठति धनञ्जये ।
शक्यो ग्रहीतुं सङ्ग्रामे देवैरपि युधिष्ठिरः ॥ ००३ ॥

इति तद्वः प्रयततां कृतं पार्थेन संयुगे ।
मातिशङ्कीर्वचो मह्यमजेयौ कृष्णपाण्डवौ ॥ ००४ ॥

अपनीते तु योगेन केनचिच्छ्वेतवाहने ।
तत एष्यति ते राजन्वशमद्य युधिष्ठिरः ॥ ००५ ॥

कश्चिदाह्वयतां संख्ये देशमन्यं प्रकर्षतु ।
तमजित्वा तु कौन्तेयो न निवर्तेत्कथञ्चन ॥ ००६ ॥

एतस्मिन्नन्तरे शून्ये धर्मराजमहं नृप ।
ग्रहीष्यामि चमूं भित्त्वा धृष्टद्युम्नस्य पश्यतः ॥ ००७ ॥

अर्जुनेन विहीनस्तु यदि नोत्सृजते रणम् ।
मामुपायान्तमालोक्य गृहीतमिति विद्धि तम् ॥ ००८ ॥

एवं ते सहसा राजन्धर्मपुत्रं युधिष्ठिरम् ।
समानेष्यामि सगणं वशमद्य न संशयः ॥ ००९ ॥

यदि तिष्ठति सङ्ग्रामे मुहूर्तमपि पाण्डवः ।
अथापयाति सङ्ग्रामाद्विजयात्तद्विशिष्यते ॥ ०१० ॥

द्रोणस्य तु वचः श्रुत्वा त्रिगर्ताधिपतिस्ततः ।

भ्रातृभिः सहितो राजन्निदं वचनमब्रवीत्  ॥ ०११  ॥

वयं विनिकृता राजन्सदा गाण्डीवधन्वना ।
अनागःस्वपि चागस्कृदस्मासु भरतर्षभ  ॥ ०१२  ॥

ते वयं स्मरमाणास्तान्विनिकारान्पृथग्विधान् ।
क्रोधाग्निना दह्यमाना न शेमहि सदा निशाः  ॥ ०१३  ॥

स नो दिव्यास्त्रसंपन्नश्चक्षुर्विषयमागतः ।
कर्तारः स्म वयं सर्वं यच्चिकीर्षाम हृद्गतम्  ॥ ०१४  ॥

भवतश्च प्रियं यत्स्यादस्माकं च यशस्करम् ।
वयमेनं हनिष्यामो निकृष्यायोधनाद्बहिः  ॥ ०१५  ॥

अद्यास्त्वनर्जुना भूमिरत्रिगर्ताथ वा पुनः ।
सत्यं ते प्रतिजानीमो नैतन्मिथ्या भविष्यति  ॥ ०१६  ॥

एवं सत्यरथश्चोक्त्वा सत्यधर्मा च भारत ।
सत्यवर्मा च सत्येषुः सत्यकर्मा तथैव च  ॥ ०१७  ॥

सहिता भ्रातरः पञ्च रथानामयुतेन च ।
न्यवर्तन्त महाराज कृत्वा शपथमाहवे  ॥ ०१८  ॥

मालवास्तुण्डिकेराश्च रथानामयुतैस्त्रिभिः ।
सुशर्मा च नरव्याघ्रस्त्रिगर्तः प्रस्थलाधिपः  ॥ ०१९  ॥

माचेल्लकैर्ललित्थैश्च सहितो मद्रकैरपि ।
रथानामयुतेनैव सोऽशपद्भ्रातृभिः सह  ॥ ०२०  ॥

नानाजनपदेभ्यश्च रथानामयुतं पुनः ।
समुत्थितं विशिष्टानां संशपार्थमुपागतम्  ॥ ०२१  ॥

ततो ज्वलनमादाय हुत्वा सर्वे पृथक्पृथक् ।
जगृहुः कुशचीराणि चित्राणि कवचानि च ॥ ०२२ ॥

ते च बद्धतनुत्राणा घृताक्ताः कुशचीरिणः ।
मौर्वीमेखलिनो वीराः सहस्रशतदक्षिणाः ॥ ०२३ ॥

यज्वानः पुत्रिणो लोक्याः कृतकृत्यास्तनुत्यजः ।
योक्ष्यमाणास्तदात्मानं यशसा विजयेन च ॥ ०२४ ॥

ब्रह्मचर्यश्रुतिमुखैः क्रतुभिश्चाप्तदक्षिणैः ।
प्राप्य लोकान्सुयुद्धेन क्षिप्रमेव यियासवः ॥ ०२५ ॥

ब्राह्मणांस्तर्पयित्वा च निष्कान्दत्त्वा पृथक्पृथक् ।
गाश्च वासांसि च पुनः समाभाष्य परस्परम् ॥ ०२६ ॥

प्रज्वाल्य कृष्णवर्त्मानमुपागम्य रणे व्रतम् ।
तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः ॥ ०२७ ॥

शृण्वतां सर्वभूतानामुच्चैर्वाचः स्म मेनिरे ।
धृत्वा धनञ्जयवधे प्रतिज्ञां चापि चक्रिरे ॥ ०२८ ॥

ये वै लोकाश्चानृतानां ये चैव ब्रह्मघातिनाम् ।
पानपस्य च ये लोका गुरुदाररतस्य च ॥ ०२९ ॥

ब्रह्मस्वहारिणश्चैव राजपिण्डापहारिणः ।
शरणागतं च त्यजतो याचमानं तथा घ्नतः ॥ ०३० ॥

अगारदाहिनां ये च ये च गां निघ्नतामपि ।
अपचारिणां च ये लोका ये च ब्रह्मद्विषामपि ॥ ०३१ ॥

जायां च ऋतुकाले वै ये मोहादभिगच्छताम् ।
श्राद्धसङ्गतिकानां च ये चाप्यात्मापहारिणाम् ॥ ०३२ ॥

न्यासापहारिणां ये च श्रुतं नाशयतां च ये ।
कोपेन युध्यमानानां ये च नीचानुसारिणाम् ॥ ०३३ ॥

नास्तिकानां च ये लोका येऽग्निहोत्रापितृत्यजाम् ।
तानाप्नुयामहे लोकान्ये च पापकृतामपि ॥ ०३४ ॥

यद्यहत्वा वयं युद्धे निवर्तेम धनञ्जयम् ।
तेन चाभ्यर्दितास्त्रासाद्भवेम हि पराङ्मुखाः ॥ ०३५ ॥

यदि त्वसुकरं लोके कर्म कुर्याम संयुगे ।
इष्टान्पुण्यकृतां लोकान्प्राप्नुयाम न संशयः ॥ ०३६ ॥

एवमुक्त्वा ततो राजंस्तेऽभ्यवर्तन्त संयुगे ।
आह्वयन्तोऽर्जुनं वीराः पितृजुष्टां दिशं प्रति ॥ ०३७ ॥

आहूतस्तैर्नरव्याघ्रैः पार्थः परपुरञ्जयः ।
धर्मराजमिदं वाक्यमपदान्तरमब्रवीत् ॥ ०३८ ॥

आहूतो न निवर्तेयमिति मे व्रतमाहितम् ।
संशप्तकाश्च मां राजन्नाह्वयन्ति पुनः पुनः ॥ ०३९ ॥

एष च भ्रातृभिः सार्धं सुशर्माह्वयते रणे ।
वधाय सगणस्यास्य मामनुज्ञातुमर्हसि ॥ ०४० ॥

नैतच्छक्नोमि संसोढुमाह्वानं पुरुषर्षभ ।
सत्यं ते प्रतिजानामि हतान्विद्धि परान्युधि ॥ ०४१ ॥

युधिष्ठिर उवाच ॥

श्रुतमेतत्त्वया तात यद्द्रोणस्य चिकीर्षितम् ।
यथा तदनृतं तस्य भवेत्तद्वत्समाचर ॥ ०४२ ॥

द्रोणो हि बलवाञ्शूरः कृतास्त्रश्च जितश्रमः ।
प्रतिज्ञातं च तेनैतद्ग्रहणं मे महारथ ॥ ०४३ ॥

अर्जुन उवाच ॥

अयं वै सत्यजिद्राजन्नद्य ते रक्षिता युधि ।
ध्रियमाणे हि पाञ्चाल्ये नाचार्यः काममाप्स्यति ॥ ०४४ ॥

हते तु पुरुषव्याघ्रे रणे सत्यजिति प्रभो ।
सर्वैरपि समेतैर्वा न स्थातव्यं कथञ्चन ॥ ०४५ ॥

सञ्जय उवाच ॥

अनुज्ञातस्ततो राज्ञा परिष्वक्तश्च फल्गुनः ।
प्रेम्णा दृष्टश्च बहुधा आशिषा च प्रयोजितः ॥ ०४६ ॥

विहायैनं ततः पार्थस्त्रिगर्तान्प्रत्ययाद्बली ।
क्षुधितः क्षुद्विघातार्थं सिंहो मृगगणानिव ॥ ०४७ ॥

ततो दौर्योधनं सैन्यं मुदा परमया युतम् ।
गतेऽर्जुने भृशं क्रुद्धं धर्मराजस्य निग्रहे ॥ ०४८ ॥

ततोऽन्योन्येन ते सेने समाजग्मतुरोजसा ।
गङ्गासरय्वोर्वेगेन प्रावृषीवोल्बणोदके ॥ ०४९ ॥

# अध्याय ०१७

सञ्जय उवाच ॥

ततः संशप्तका राजन्समे देशे व्यवस्थिताः ।
व्यूह्यानीकं रथैरेव चन्द्रार्धाख्यं मुदान्विताः ॥ ००१ ॥

ते किरीटिनमायान्तं दृष्ट्वा हर्षेण मारिष ।
उदक्रोशन्नरव्याघ्राः शब्देन महता तदा ॥ ००२ ॥

स शब्दः प्रदिशः सर्वा दिशः खं च समावृणोत् ।
आवृतत्वाच्च लोकस्य नासीत्तत्र प्रतिस्वनः ॥ ००३ ॥

अतीव संप्रहृष्टांस्तानुपलभ्य धनञ्जयः ।
किञ्चिदभ्युत्स्मयन्कृष्णमिदं वचनमब्रवीत् ॥ ००४ ॥

पश्यैतान्देवकीमातर्मुमूर्षूनद्य संयुगे ।
भ्रातॄंस्त्रैगर्तकानेवं रोदितव्ये प्रहर्षितान् ॥ ००५ ॥

अथ वा हर्षकालोऽयं त्रैगर्तानामसंशयम् ।
कुनरैर्दुरवापान्हि लोकान्प्राप्स्यन्त्यनुत्तमान् ॥ ००६ ॥

एवमुक्त्वा महाबाहुर्हृषीकेशं ततोऽर्जुनः ।
आससाद रणे व्यूढां त्रैगर्तानामनीकिनीम् ॥ ००७ ॥

स देवदत्तमादाय शङ्खं हेमपरिष्कृतम् ।
दध्मौ वेगेन महता फल्गुनः पूरयन्दिशः ॥ ००८ ॥

तेन शब्देन वित्रस्ता संशप्तकवरूथिनी ।
निश्चेष्टावस्थिता सङ्ख्ये अश्मसारमयी यथा ॥ ००९ ॥

वाहास्तेषां विवृत्ताक्षाः स्तब्धकर्णशिरोधराः ।
विष्टब्धचरणा मूत्रं रुधिरं च प्रसुस्रुवुः ॥ ०१० ॥

उपलभ्य च ते सञ्ज्ञामवस्थाप्य च वाहिनीम् ।
युगपत्पाण्डुपुत्राय चिक्षिपुः कङ्कपत्रिणः ॥ ०११ ॥

तान्यर्जुनः सहस्राणि दश पञ्चैव चाशुगैः ।
अनागतान्येव शरैश्चिच्छेदाशुपराक्रमः ॥ ०१२ ॥

ततोऽर्जुनं शितैर्बाणैर्दशभिर्दशभिः पुनः ।
प्रत्यविध्यंस्ततः पार्थस्तानविध्यत्त्रिभिस्त्रिभिः ॥ ०१३ ॥

एकैकस्तु ततः पार्थं राजन्विव्याध पञ्चभिः ।
स च तान्प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमी ॥ ०१४ ॥

भूय एव तु संरब्धास्तेऽर्जुनं सहकेशवम् ।
आपूरयञ्शरैस्तीक्ष्णैस्तटाकमिव वृष्टिभिः ॥ ०१५ ॥

ततः शरसहस्राणि प्रापतन्नर्जुनं प्रति ।
भ्रमराणामिव व्राताः फुल्लद्रुमगणे वने ॥ ०१६ ॥

ततः सुबाहुस्त्रिंशद्भिरद्रिसारमयैर्दृढैः ।
अविध्यदिषुभिर्गाढं किरीटे सव्यसाचिनम् ॥ ०१७ ॥

तैः किरीटी किरीटस्थैर्हेमपुङ्खैरजिह्मगैः ।
शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः ॥ ०१८ ॥

हस्तावापं सुबाहोस्तु भल्लेन युधि पाण्डवः ।
चिच्छेद तं चैव पुनः शरवर्षैरवाकिरत् ॥ ०१९ ॥

ततः सुशर्मा दशभिः सुरथश्च किरीटिनम् ।

सुधर्मा सुधनुश्चैव सुबाहुश्च समर्पयन् ॥ ०२० ॥

तांस्तु सर्वान्पृथग्बाणैर्वानरप्रवरध्वजः ।
प्रत्यविध्यद्ध्वजांश्चैषां भल्लैश्चिच्छेद काञ्चनान् ॥ ०२१ ॥

सुधन्वनो धनुश्छित्त्वा हयान्वै न्यवधीच्छरैः ।
अथास्य सशिरस्त्राणं शिरः कायादपाहरत् ॥ ०२२ ॥

तस्मिंस्तु पतिते वीरे त्रस्तास्तस्य पदानुगाः ।
व्यद्रवन्त भयाद्भीता येन दौर्योधनं बलम् ॥ ०२३ ॥

ततो जघान सङ्क्रुद्धो वासविस्तां महाचमूम् ।
शरजालैरविच्छिन्नैस्तमः सूर्य इवांशुभिः ॥ ०२४ ॥

ततो भग्ने बले तस्मिन्विप्रयाते समन्ततः ।
सव्यसाचिनि सङ्क्रुद्धे त्रैगर्तान्भयमाविशत् ॥ ०२५ ॥

ते वध्यमानाः पार्थेन शरैः संनतपर्वभिः ।
अमुह्यंस्तत्र तत्रैव त्रस्ता मृगगणा इव ॥ ०२६ ॥

ततस्त्रिगर्तराट्क्रुद्धस्तानुवाच महारथान् ।
अलं द्रुतेन वः शूरा न भयं कर्तुमर्हथ ॥ ०२७ ॥

शप्त्वा तु शपथान्घोरान्सर्वसैन्यस्य पश्यतः ।
गत्वा दौर्योधनं सैन्यं किं वै वक्ष्यथ मुख्यगाः ॥ ०२८ ॥

नावहास्याः कथं लोके कर्मणानेन संयुगे ।
भवेम सहिताः सर्वे निवर्तध्वं यथाबलम् ॥ ०२९ ॥

एवमुक्तास्तु ते राजन्नुदक्रोशन्मुहुर्मुहुः ।
शङ्खांश्च दध्मिरे वीरा हर्षयन्तः परस्परम् ॥ ०३० ॥

ततस्ते संन्यवर्तन्त संशप्तकगणाः पुनः ।
नारायणाश्च गोपालाः कृत्वा मृत्युं निवर्तनम् ॥ ०३१ ॥

---

# अध्याय ०१८

सञ्जय उवाच ॥

दृष्ट्वा तु संनिवृत्तांस्तान्संशप्तकगणान्पुनः ।
वासुदेवं महात्मानमर्जुनः समभाषत ॥ ००१ ॥

चोदयाश्वान्हृषीकेश संशप्तकगणान्प्रति ।
नैते हास्यन्ति सङ्ग्रामं जीवन्त इति मे मतिः ॥ ००२ ॥

पश्य मेऽस्त्रबलं घोरं बाह्वोरिष्वसनस्य च ।
अद्यैतान्पातयिष्यामि क्रुद्धो रुद्रः पशूनिव ॥ ००३ ॥

ततः कृष्णः स्मितं कृत्वा परिणन्द्य शिवेन तम् ।
प्रावेशयत दुर्धर्षो यत्र यत्रैच्छदर्जुनः ॥ ००४ ॥

बभ्राजे स रथोऽत्यर्थमुह्यमानो रणे तदा ।
उह्यमानमिवाकाशे विमानं पाण्डुरैर्हयैः ॥ ००५ ॥

मण्डलानि ततश्चक्रे गतप्रत्यागतानि च ।
यथा शक्ररथो राजन्युद्धे देवासुरे पुरा ॥ ००६ ॥

अथ नारायणाः क्रुद्धा विविधायुधपाणयः ।

छादयन्तः शरव्रातैः परिवव्रुर्धनञ्जयम् ॥ ००७ ॥

अदृश्यं च मुहूर्तेन चक्रुस्ते भरतर्षभ ।
कृष्णेन सहितं युद्धे कुन्तीपुत्रं धनञ्जयम् ॥ ००८ ॥

क्रुद्धस्तु फल्गुनः संख्ये द्विगुणीकृतविक्रमः ।
गाण्डीवमुपसंमृज्य तूर्णं जग्राह संयुगे ॥ ००९ ॥

बद्ध्वा च भृकुटीं वक्त्रे क्रोधस्य प्रतिलक्षणम् ।
देवदत्तं महाशङ्खं पूरयामास पाण्डवः ॥ ०१० ॥

अथास्त्रमरिसंघघ्नं त्वाष्ट्रमभ्यस्यदर्जुनः ।
ततो रूपसहस्राणि प्रादुरासन्पृथक्पृथक् ॥ ०११ ॥

आत्मनः प्रतिरूपैस्तैर्नानारूपैर्विमोहिताः ।
अन्योन्यमर्जुनं मत्वा स्वमात्मानं च जघ्निरे ॥ ०१२ ॥

अयमर्जुनोऽयं गोविन्द इमौ यादवपाण्डवौ ।
इति ब्रुवाणाः संमूढा जघ्नुरन्योन्यमाहवे ॥ ०१३ ॥

मोहिताः परमास्त्रेण क्षयं जग्मुः परस्परम् ।
अशोभन्त रणे योधाः पुष्पिता इव किंशुकाः ॥ ०१४ ॥

ततः शरसहस्राणि तैर्विमुक्तानि भस्मसात् ।
कृत्वा तदस्त्रं तान्वीराननयद्यमसादनम् ॥ ०१५ ॥

अथ प्रहस्य बीभत्सुर्ललित्थान्मालवानपि ।
माचेल्लकांस्त्रिगर्तांश्च यौधेयांश्चार्दयच्छरैः ॥ ०१६ ॥

ते वध्यमाना वीरेण क्षत्रियाः कालचोदिताः ।
व्यसृजञ्शरवर्षाणि पार्थे नानाविधानि च ॥ ०१७ ॥

ततो नैवार्जुनस्तत्र न रथो न च केशवः ।
प्रत्यदृश्यत घोरेण शरवर्षेण संवृतः ॥ ०१८ ॥

ततस्ते लब्धलक्ष्यत्वादन्योन्यमभिचुक्रुशुः ।
हतौ कृष्णाविति प्रीता वासांस्यादुधुवुस्तदा ॥ ०१९ ॥

भेरीमृदङ्गशङ्खांश्च दध्मुर्वीराः सहस्रशः ।
सिंहनादरवांश्चोग्रांश्चक्रिरे तत्र मारिष ॥ ०२० ॥

ततः प्रसिष्विदे कृष्णः खिन्नश्चार्जुनमब्रवीत् ।
क्वासि पार्थ न पश्ये त्वां कच्चिज्जीवसि शत्रुहन् ॥ ०२१ ॥

तस्य तं मानुषं भावं भावज्ञोऽऽज्ञाय पाण्डवः ।
वायव्यास्त्रेण तैरस्तां शरवृष्टिमपाहरत् ॥ ०२२ ॥

ततः संशप्तकव्रातान्साश्वद्विपरथायुधान् ।
उवाह भगवान्वायुः शुष्कपर्णचयानिव ॥ ०२३ ॥

उह्यमानास्तु ते राजन्बह्वशोभन्त वायुना ।
प्रडीनाः पक्षिणः काले वृक्षेभ्य इव मारिष ॥ ०२४ ॥

तांस्तथा व्याकुलीकृत्य त्वरमाणो धनञ्जयः ।
जघान निशितैर्बाणैः सहस्राणि शतानि च ॥ ०२५ ॥

शिरांसि भल्लैरहरद्बाहूनपि च सायुधान् ।
हस्तिहस्तोपमांश्चोरूञ्शरैरुर्व्यामपातयत् ॥ ०२६ ॥

पृष्ठच्छिन्नान्विचरणान्विमस्तिष्केक्षणाङ्गुलीन् ।
नानाङ्गावयवैर्हीनांश्चकारारीन्धनञ्जयः ॥ ०२७ ॥

गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान् ।
शरैर्विशकलीकुर्वंश्चक्रे व्यश्वरथद्विपान् ॥ ०२८ ॥

मुण्डतालवनानीव तत्र तत्र चकाशिरे ।
छिन्नध्वजरथव्राताः केचित्केचित्क्वचित्क्वचित् ॥ ०२९ ॥

सोत्तरायुधिनो नागाः सपताकाङ्कुशायुधाः ।
पेतुः शक्राशनिहता द्रुमवन्त इवाचलाः ॥ ०३० ॥

चामरापीडकवचाः स्रस्तान्त्रनयनासवः ।
सारोहास्तुरगाः पेतुः पार्थबाणहताः क्षितौ ॥ ०३१ ॥

विप्रविद्धासिनखराश्छिन्नवर्मर्ष्टिशक्तयः ।
पत्तयश्छिन्नवर्माणः कृपणं शेरते हताः ॥ ०३२ ॥

तैर्हतैर्हन्यमानैश्च पतद्भिः पतितैरपि ।
भ्रमद्भिर्निष्टनद्भिश्च घोरमायोधनं बभौ ॥ ०३३ ॥

रजश्च महदुद्भूतं शान्तं रुधिरवृष्टिभिः ।
मही चाप्यभवद्दुर्गा कबन्धशतसङ्कुला ॥ ०३४ ॥

तद्बभौ रौद्रबीभत्सं बीभत्सोर्यानमाहवे ।
आक्रीड इव रुद्रस्य घ्नतः कालात्यये पशून् ॥ ०३५ ॥

ते वध्यमानाः पार्थेन व्याकुलाश्वरथद्विपाः ।
तमेवाभिमुखाः क्षीणाः शक्रस्यातिथितां गताः ॥ ०३६ ॥

सा भूमिर्भरतश्रेष्ठ निहतैस्तैर्महारथैः ।
आस्तीर्णा संबभौ सर्वा प्रेतीभूतैः समन्ततः ॥ ०३७ ॥

एतस्मिन्नन्तरे चैव प्रमत्ते सव्यसाचिनि ।

व्यूढानीकस्ततो द्रोणो युधिष्ठिरमुपाद्रवत् ॥ ०३८ ॥

तं प्रत्यगृह्णंस्त्वरिता व्यूढानीकाः प्रहारिणः ।
युधिष्ठिरं परीप्सन्तस्तदासीत्तुमुलं महत् ॥ ०३९ ॥

---

# अध्याय ०१९

सञ्जय उवाच ॥

परिणाम्य निशां तां तु भारद्वाजो महारथः ।
बहूक्त्वा च ततो राजन्राजानं च सुयोधनम् ॥ ००१ ॥

विधाय योगं पार्थेन संशप्तकगणैः सह ।
निष्क्रान्ते च रणात्पार्थे संशप्तकवधं प्रति ॥ ००२ ॥

व्यूढानीकस्ततो द्रोणः पाण्डवानां महाचमूम् ।
अभ्ययाद्भरतश्रेष्ठ धर्मराजजिघृक्षया ॥ ००३ ॥

व्यूहं दृष्ट्वा सुपर्णं तु भारद्वाजकृतं तदा ।
व्यूहेन मण्डलार्धेन प्रत्यव्यूहद्युधिष्ठिरः ॥ ००४ ॥

मुखमासीत्सुपर्णस्य भारद्वाजो महारथः ।
शिरो दुर्योधनो राजा सोदर्यैः सानुगैः सह ॥ ००५ ॥

चक्षुषी कृतवर्मा च गौतमश्चास्यतां वरः ।
भूतवर्मा क्षेमशर्मा करकर्षश्च वीर्यवान् ॥ ००६ ॥

कलिङ्गाः सिंहलाः प्राच्याः शूराभीरा दशेरकाः ।
शका यवनकाम्बोजास्तथा हंसपदाश्च ये ॥ ००७ ॥

ग्रीवायां शूरसेनाश्च दरदा मद्रकेकयाः ।
गजाश्वरथपत्त्यौघास्तस्थुः शतसहस्रशः ॥ ००८ ॥

भूरिश्रवाः शलः शल्यः सोमदत्तश्च बाह्लिकः ।
अक्षौहिण्या वृता वीरा दक्षिणं पक्षमाश्रिताः ॥ ००९ ॥

विन्दानुविन्दावावन्त्यौ काम्बोजश्च सुदक्षिणः ।
वामं पक्षं समाश्रित्य द्रोणपुत्राग्रगाः स्थिताः ॥ ०१० ॥

पृष्ठे कलिङ्गाः साम्बष्ठा मागधाः पौन्द्रमद्रकाः ।
गान्धाराः शकुनिप्राग्याः पार्वतीया वसातयः ॥ ०११ ॥

पुच्छे वैकर्तनः कर्णः सपुत्रज्ञातिबान्धवः ।
महत्या सेनया तस्थौ नानाध्वजसमुत्थया ॥ ०१२ ॥

जयद्रथो भीमरथः सांयात्रिकसभो जयः ।
भूमिञ्जयो वृषक्राथो नैषधश्च महाबलः ॥ ०१३ ॥

वृता बलेन महता ब्रह्मलोकपुरस्कृताः ।
व्यूहस्योपरि ते राजन्स्थिता युद्धविशारदाः ॥ ०१४ ॥

द्रोणेन विहितो व्यूहः पदात्यश्वरथद्विपैः ।
वातोद्धूतार्णवाकारः प्रवृत्त इव लक्ष्यते ॥ ०१५ ॥

तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ।
सविद्युत्स्तनिता मेघाः सर्वदिग्भ्य इवोष्णगे ॥ ०१६ ॥

तस्य प्राग्ज्योतिषो मध्ये विधिवत्कल्पितं गजम् ।

आस्थितः शुशुभे राजन्नंशुमानुदये यथा ॥ ०१७ ॥

माल्यदामवता राजा श्वेतच्छत्रेण धार्यता ।
कृत्तिकायोगयुक्तेन पौर्णमास्यामिवेन्दुना ॥ ०१८ ॥

नीलाञ्जनचयप्रख्यो मदान्धो द्विरदो बभौ ।
अभिवृष्टो महामेघैर्यथा स्यात्पर्वतो महान् ॥ ०१९ ॥

नानानृपतिभिर्वीरैर्विविधायुधभूषणैः ।
समन्वितः पार्वतीयैः शक्रो देवगणैरिव ॥ ०२० ॥

ततो युधिष्ठिरः प्रेक्ष्य व्यूहं तमतिमानुषम् ।
अजय्यमरिभिः संख्ये पार्षतं वाक्यमब्रवीत् ॥ ०२१ ॥

ब्राह्मणस्य वशं नाहमियामद्य यथा प्रभो ।
पारावतसवर्णाश्व तथा नीतिर्विधीयताम् ॥ ०२२ ॥

धृष्टद्युम्न उवाच ॥

द्रोणस्य यतमानस्य वशं नैष्यसि सुव्रत ।
अहमावारयिष्यामि द्रोणमद्य सहानुगम् ॥ ०२३ ॥

मयि जीवति कौरव्य नोद्वेगं कर्तुमर्हसि ।
न हि शक्तो रणे द्रोणो विजेतुं मां कथञ्चन ॥ ०२४ ॥

सञ्जय उवाच ॥

एवमुक्त्वा किरन्बाणान्द्रुपदस्य सुतो बली ।
पारावतसवर्णाश्वः स्वयं द्रोणमुपाद्रवत् ॥ ०२५ ॥

अनिष्टदर्शनं दृष्ट्वा धृष्टद्युम्नमवस्थितम् ।

क्षणेनैवाभवद्द्रोणो नातिहृष्टमना इव ॥ ०२६ ॥

तं तु संप्रेक्ष्य पुत्रस्ते दुर्मुखः शत्रुकर्शनः ।
प्रियं चिकीर्षन्द्रोणस्य धृष्टद्युम्नमवारयत् ॥ ०२७ ॥

स संप्रहारस्तुमुलः समरूप इवाभवत् ।
पार्षतस्य च शूरस्य दुर्मुखस्य च भारत ॥ ०२८ ॥

पार्षतः शरजालेन क्षिप्रं प्रच्छाद्य दुर्मुखम् ।
भारद्वाजं शरौघेण महता समवारयत् ॥ ०२९ ॥

द्रोणमावारितं दृष्ट्वा भृशायस्तस्तवात्मजः ।
नानालिङ्गैः शरव्रातैः पार्षतं सममोहयत् ॥ ०३० ॥

तयोर्विषक्तयोः संख्ये पाञ्चाल्यकुरुमुख्ययोः ।
द्रोणो यौधिष्ठिरं सैन्यं बहुधा व्यधमच्छरैः ॥ ०३१ ॥

अनिलेन यथाभ्राणि विच्छिन्नानि समन्ततः ।
तथा पार्थस्य सैन्यानि विच्छिन्नानि क्वचित्क्वचित् ॥ ०३२ ॥

मुहूर्तमिव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ॥ ०३३ ॥

नैव स्वे न परे राजन्नज्ञायन्त परस्परम् ।
अनुमानेन सञ्ज्ञाभिर्युद्धं तत्समवर्तत ॥ ०३४ ॥

चूडामणिषु निष्केषु भूषणेष्वसिचर्मसु ।
तेषामादित्यवर्णाभा मरीच्यः प्रचकाशिरे ॥ ०३५ ॥

तत्प्रकीर्णपताकानां रथवारणवाजिनाम् ।
बलाकाशबलाभ्राभं ददृशे रूपमाहवे ॥ ०३६ ॥

नरानेव नरा जघ्नुरुदग्राश्च हया हयान् ।
रथांश्च रथिनो जघ्नुर्वारणा वरवारणान्  ॥ ०३७  ॥

समुच्छ्रितपताकानां गजानां परमद्विपैः ।
क्षणेन तुमुलो घोरः सङ्ग्रामः समवर्तत  ॥ ०३८  ॥

तेषां संसक्तगात्राणां कर्षतामितरेतरम् ।
दन्तसंघातसंघर्षात्सधूमोऽग्निरजायत  ॥ ०३९  ॥

विप्रकीर्णपताकास्ते विषाणजनिताग्नयः ।
बभूवुः खं समासाद्य सविद्युत इवाम्बुदाः  ॥ ०४०  ॥

विक्षरद्भिर्नदद्भिश्च निपतद्भिश्च वारणैः ।
संबभूव मही कीर्णा मेघैर्द्यौरिव शारदी  ॥ ०४१  ॥

तेषामाहन्यमानानां बाणतोमरवृष्टिभिः ।
वारणानां रवो जज्ञे मेघानामिव संप्लवे  ॥ ०४२  ॥

तोमराभिहताः केचिद्बाणैश्च परमद्विपाः ।
वित्रेसुः सर्वभूतानां शब्दमेवापरेऽव्रजन्  ॥ ०४३  ॥

विषाणाभिहताश्चापि केचित्तत्र गजा गजैः ।
चक्रुरार्तस्वरं घोरमुत्पातजलदा इव  ॥ ०४४  ॥

प्रतीपं ह्रियमाणाश्च वारणा वरवारणैः ।
उन्मथ्य पुनराजह्रुः प्रेरिताः परमाङ्कुशैः  ॥ ०४५  ॥

महामात्रा महामात्रैस्ताडिताः शरतोमरैः ।
गजेभ्यः पृथिवीं जग्मुर्मुक्तप्रहरणाङ्कुशाः  ॥ ०४६  ॥

निर्मनुष्याश्च मातङ्गा विनदन्तस्ततस्ततः ।
छिन्नाभ्राणीव संपेतुः संप्रविश्य परस्परम्  ॥ ०४७  ॥

हतान्परिवहन्तश्च यन्त्रिताः परमायुधैः ।
दिशो जग्मुर्महानागाः केचिदेकचरा इव  ॥ ०४८  ॥

ताडितास्ताड्यमानाश्च तोमरर्ष्टिपरश्वधैः ।
पेतुरार्तस्वरं कृत्वा तदा विशसने गजाः  ॥ ०४९  ॥

तेषां शैलोपमैः कायैर्निपतद्भिः समन्ततः ।
आहता सहसा भूमिश्चकम्पे च ननाद च  ॥ ०५०  ॥

सादितैः सगजारोहैः सपताकैः समन्ततः ।
मातङ्गैः शुशुभे भूमिर्विकीर्णैरिव पर्वतैः  ॥ ०५१  ॥

गजस्थाश्च महामात्रा निर्भिन्नहृदया रणे ।
रथिभिः पातिता भल्लैर्विकीर्णाङ्कुशतोमराः  ॥ ०५२  ॥

क्रौञ्चवद्विनदन्तोऽन्ये नाराचाभिहता गजाः ।
परान्स्वांश्चापि मृद्नन्तः परिपेतुर्दिशो दश  ॥ ०५३  ॥

गजाश्वरथसंघानां शरीरौघसमावृता ।
बभूव पृथिवी राजन्मांसशोणितकर्दमा  ॥ ०५४  ॥

प्रमथ्य च विषाणाग्रैः समुत्क्षिप्य च वारणैः ।
सचक्राश्च विचक्राश्च रथैरेव महारथाः  ॥ ०५५  ॥

रथाश्च रथिभिर्हीना निर्मनुष्याश्च वाजिनः ।
हतारोहाश्च मातङ्गा दिशो जग्मुः शरातुराः  ॥ ०५६  ॥

जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा ।

इत्यासीत्तुमुलं युद्धं न प्रज्ञायत किञ्चन ॥ ०५७ ॥

आ गुल्फेभ्योऽवसीदन्त नराः शोणितकर्दमे ।
दीप्यमानैः परिक्षिप्ता दावैरिव महाद्रुमाः ॥ ०५८ ॥

शोणितैः सिच्यमानानि वस्त्राणि कवचानि च ।
छत्राणि च पताकाश्च सर्वं रक्तमदृश्यत ॥ ०५९ ॥

हयौघाश्च रथौघाश्च नरौघाश्च निपातिताः ।
संवृत्ताः पुनरावृत्ता बहुधा रथनेमिभिः ॥ ०६० ॥

स गजौघमहावेगः परासुनरशैवलः ।
रथौघतुमुलावर्तः प्रबभौ सैन्यसागरः ॥ ०६१ ॥

तं वाहनमहानौभिर्योधा जयधनैषिणः ।
अवगाह्यावमज्जन्तो नैव मोहं प्रचक्रिरे ॥ ०६२ ॥

शरवर्षाभिवृष्टेषु योधेष्वजितलक्ष्मसु ।
न हि स्वचित्ततां लेभे कश्चिदाहतलक्षणः ॥ ०६३ ॥

वर्तमाने तथा युद्धे घोररूपे भयङ्करे ।
मोहयित्वा परान्द्रोणो युधिष्ठिरमुपाद्रवत् ॥ ०६४ ॥

---

# अध्याय ०२०

सञ्जय उवाच ॥

ततो युधिष्ठिरो द्रोणं दृष्ट्वान्तिकमुपागतम् ।

महता शरवर्षेण प्रत्यगृह्णादभीतवत् ॥ ००१ ॥

ततो हलहलाशब्द आसीद्यौधिष्ठिरे बले ।
जिघृक्षति महासिंहे गजानामिव यूथपम् ॥ ००२ ॥

दृष्ट्वा द्रोणं ततः शूरः सत्यजित्सत्यविक्रमः ।
युधिष्ठिरं परिप्रेप्सुमाचार्यं समुपाद्रवत् ॥ ००३ ॥

तत आचार्यपाञ्चाल्यौ युयुधाते परस्परम् ।
विक्षोभयन्तौ तत्सैन्यमिन्द्रवैरोचनाविव ॥ ००४ ॥

ततः सत्यजितं तीक्ष्णैर्दशभिर्मर्मभेदिभिः ।
अविध्यच्छीघ्रमाचार्यश्छित्त्वास्य सशरं धनुः ॥ ००५ ॥

स शीघ्रतरमादाय धनुरन्यत्प्रतापवान् ।
द्रोणं सोऽभिजघानाशु विंशद्भिः कङ्कपत्रिभिः ॥ ००६ ॥

ज्ञात्वा सत्यजिता द्रोणं ग्रस्यमानमिवाहवे ।
वृकः शरशतैस्तीक्ष्णैः पाञ्चाल्यो द्रोणमर्दयत् ॥ ००७ ॥

संछाद्यमानं समरे द्रोणं दृष्ट्वा महारथम् ।
चुक्रुशुः पाण्डवा राजन्वस्त्राणि दुधुवुश्च ह ॥ ००८ ॥

वृकस्तु परमक्रुद्धो द्रोणं षष्ट्या स्तनान्तरे ।
विव्याध बलवान्राजंस्तदद्भुतमिवाभवत् ॥ ००९ ॥

द्रोणस्तु शरवर्षेण छाद्यमानो महारथः ।
वेगं चक्रे महावेगः क्रोधादुद्वृत्य चक्षुषी ॥ ०१० ॥

ततः सत्यजितश्चापं छित्त्वा द्रोणो वृकस्य च ।
षड्भिः ससूतं सहयं शरैर्द्रोणोऽवधीद्वृकम् ॥ ०११ ॥

अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम् ।
साश्वं ससूतं विशिखैर्द्रोणं विव्याध सध्वजम् ॥ ०१२ ॥

स तन्न ममृषे द्रोणः पाञ्चाल्येनार्दनं मृधे ।
ततस्तस्य विनाशाय सत्वरं व्यसृजच्छरान् ॥ ०१३ ॥

हयान्ध्वजं धनुर्मुष्टिमुभौ च पार्ष्णिसारथी ।
अवाकिरत्ततो द्रोणः शरवर्षैः सहस्रशः ॥ ०१४ ॥

तथा संछिद्यमानेषु कार्मुकेषु पुनः पुनः ।
पाञ्चाल्यः परमास्त्रज्ञः शोणाश्वं समयोधयत् ॥ ०१५ ॥

स सत्यजितमालक्ष्य तथोदीर्णं महाहवे ।
अर्धचन्द्रेण चिच्छेद शिरस्तस्य महात्मनः ॥ ०१६ ॥

तस्मिन्हते महामात्रे पाञ्चालानां रथर्षभे ।
अपायाज्जवनैरश्वैर्द्रोणात्त्रस्तो युधिष्ठिरः ॥ ०१७ ॥

पाञ्चालाः केकया मत्स्याश्चेदिकारूषकोसलाः ।
युधिष्ठिरमुदीक्षन्तो हृष्टा द्रोणमुपाद्रवन् ॥ ०१८ ॥

ततो युधिष्ठिरप्रेप्सुराचार्यः शत्रुपूगहा ।
व्यधमत्तान्यनीकानि तूलराशिमिवानिलः ॥ ०१९ ॥

निर्दहन्तमनीकानि तानि तानि पुनः पुनः ।
द्रोणं मत्स्यादवरजः शतानीकोऽभ्यवर्तत ॥ ०२० ॥

सूर्यरश्मिप्रतीकाशैः कर्मारपरिमार्जितैः ।
षड्भिः ससूतं सहयं द्रोणं विद्ध्वानदद्भृशम् ॥ ०२१ ॥

तस्य नानदतो द्रोणः शिरः कायात्सकुण्डलम् ।
क्षुरेणापाहरत्तूर्णं ततो मत्स्याः प्रदुद्रुवुः ॥ ०२२ ॥

मत्स्याञ्जित्वाजयच्चेदीन्कारूषान्केकयानपि ।
पाञ्चालान्सृञ्जयान्पाण्डून्भारद्वाजः पुनः पुनः ॥ ०२३ ॥

तं दहन्तमनीकानि क्रुद्धमग्निं यथा वनम् ।
दृष्ट्वा रुक्मरथं क्रुद्धं समकम्पन्त सृञ्जयाः ॥ ०२४ ॥

उत्तमं ह्यादधानस्य धनुरस्याशुकारिणः ।
ज्याघोषो निघ्नतोऽमित्रान्दिक्षु सर्वासु शुश्रुवे ॥ ०२५ ॥

नागानश्वान्पदातींश्च रथिनो गजसादिनः ।
रौद्रा हस्तवता मुक्ताः प्रमथ्नन्ति स्म सायकाः ॥ ०२६ ॥

नानद्यमानः पर्जन्यो मिश्रवातो हिमात्यये ।
अश्मवर्षमिवावर्षत्परेषां भयमादधत् ॥ ०२७ ॥

सर्वा दिशः समचरत्सैन्यं विक्षोभयन्निव ।
बली शूरो महेष्वासो मित्राणामभयङ्करः ॥ ०२८ ॥

तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम् ।
दिक्षु सर्वास्वपश्याम द्रोणस्यामिततेजसः ॥ ०२९ ॥

द्रोणस्तु पाण्डवानीके चकार कदनं महत् ।
यथा दैत्यगणे विष्णुः सुरासुरनमस्कृतः ॥ ०३० ॥

स शूरः सत्यवाक्प्राज्ञो बलवान्सत्यविक्रमः ।
महानुभावः कालान्ते रौद्रीं भीरुविभीषणाम् ॥ ०३१ ॥

कवचोर्मिध्वजावर्तां मर्त्यकूलापहारिणीम् ।

गजवाजिमहाग्राहामसिमीनां दुरासदाम् ॥ ०३२ ॥

वीरास्थिशर्करां रौद्रां भेरीमुरजकच्छपाम् ।
चर्मवर्मप्लवां घोरां केशशैवलशाड्वलाम् ॥ ०३३ ॥

शरौघिणीं धनुःस्रोतां बाहुपन्नगसङ्कुलाम् ।
रणभूमिवहां घोरां कुरुसृञ्जयवाहिनीम् ॥ ०३४ ॥

मनुष्यशीर्षपाषाणां शक्तिमीनां गदोडुपाम् ॥ ०३४ ॥

उष्णीषफेनवसनां निष्कीर्णान्त्रसरीसृपाम् ।
वीरापहारिणीमुग्रां मांसशोणितकर्दमाम् ॥ ०३५ ॥

हस्तिग्राहां केतुवृक्षां क्षत्रियाणां निमज्जनीम् ।
क्रूरां शरीरसंघाटां सादिनक्रां दुरत्ययाम् ॥ ०३६ ॥

द्रोणः प्रावर्तयत्तत्र नदीमन्तकगामिनीम् ॥ ०३६ ॥

क्रव्यादगणसंघुष्टां श्वशृगालगणायुताम् ।
निषेवितां महारौद्रैः पिशिताशैः समन्ततः ॥ ०३७ ॥

तं दहन्तमनीकानि रथोदारं कृतान्तवत् ।
सर्वतोऽभ्यद्रवन्द्रोणं कुन्तीपुत्रपुरोगमाः ॥ ०३८ ॥

तांस्तु शूरान्महेष्वासांस्तावकाभ्युद्यतायुधाः ।
राजानो राजपुत्राश्च समन्तात्पर्यवारयन् ॥ ०३९ ॥

ततो द्रोणः सत्यसंधः प्रभिन्न इव कुञ्जरः ।
अभ्यतीत्य रथानीकं दृढसेनमपातयत् ॥ ०४० ॥

ततो राजानमासाद्य प्रहरन्तमभीतवत् ।

अविध्यन्नवभिः क्षेमं स हतः प्रापतद्रथात्  ॥ ०४१  ॥

स मध्यं प्राप्य सैन्यानां सर्वाः प्रविचरन्दिशः ।
त्राता ह्यभवदन्येषां न त्रातव्यः कथञ्चन  ॥ ०४२  ॥

शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् ।
वसुदानं च भल्लेन प्रेषयद्यमसादनम्  ॥ ०४३  ॥

अशीत्या क्षत्रवर्माणं षड्विंशत्या सुदक्षिणम् ।
क्षत्रदेवं तु भल्लेन रथनीडादपाहरत्  ॥ ०४४  ॥

युधामन्युं चतुःषष्ट्या त्रिंशता चैव सात्यकिम् ।
विद्ध्वा रुक्मरथस्तूर्णं युधिष्ठिरमुपाद्रवत्  ॥ ०४५  ॥

ततो युधिष्ठिरः क्षिप्रं कितवो राजसत्तमः ।
अपायाज्जवनैरश्वैः पाञ्चाल्यो द्रोणमभ्ययात्  ॥ ०४६  ॥

तं द्रोणः सधनुष्कं तु साश्वयन्तारमक्षिणोत् ।
स हतः प्रापतद्भूमौ रथाज्ज्योतिरिवाम्बरात्  ॥ ०४७  ॥

तस्मिन्हते राजपुत्रे पाञ्चालानां यशस्करे ।
हत द्रोणं हत द्रोणमित्यासीत्तुमुलं महत्  ॥ ०४८  ॥

तांस्तथा भृशसङ्क्रुद्धान्पाञ्चालान्मत्स्यकेकयान् ।
सृञ्जयान्पाण्डवांश्चैव द्रोणो व्यक्षोभयद्बली  ॥ ०४९  ॥

सात्यकिं चेकितानं च धृष्टद्युम्नशिखण्डिनौ ।
वार्धक्षेमिं चित्रसेनं सेनाबिन्दुं सुवर्चसम्  ॥ ०५०  ॥

एतांश्चान्यांश्च सुबहून्नानाजनपदेश्वरान् ।
सर्वान्द्रोणोऽजयद्युद्धे कुरुभिः परिवारितः  ॥ ०५१  ॥

तावकास्तु महाराज जयं लब्ध्वा महाहवे ।
पाण्डवेयान्रणे जघ्नुर्द्रवमाणान्समन्ततः  ॥ ०५२  ॥

ते दानवा इवेन्द्रेण वध्यमाना महात्मना ।
पाञ्चालाः केकया मत्स्याः समकम्पन्त भारत  ॥ ०५३  ॥

---

# अध्याय ०२१

धृतराष्ट्र उवाच  ॥

भारद्वाजेन भग्नेषु पाण्डवेषु महामृधे ।
पाञ्चालेषु च सर्वेषु कश्चिदन्योऽभ्यवर्तत  ॥ ००१  ॥

आर्यां युद्धे मतिं कृत्वा क्षत्रियाणां यशस्करीम् ।
असेवितां कापुरुषैः सेवितां पुरुषर्षभैः  ॥ ००२  ॥

स हि वीरो नरः सूत यो भग्नेषु निवर्तते ।
अहो नासीत्पुमान्कश्चिद्दृष्ट्वा द्रोणं व्यवस्थितम्  ॥ ००३  ॥

जृम्भमाणमिव व्याघ्रं प्रभिन्नमिव कुञ्जरम् ।
त्यजन्तमाहवे प्राणान्संनद्धं चित्रयोधिनम्  ॥ ००४  ॥

महेष्वासं नरव्याघ्रं द्विषतामघवर्धनम् ।
कृतज्ञं सत्यनिरतं दुर्योधनहितैषिणम्  ॥ ००५  ॥

भारद्वाजं तथानीके दृष्ट्वा शूरमवस्थितम् ।

के वीराः संन्यवर्तन्त तन्ममाचक्ष्व सञ्जय ॥ ००६ ॥

सञ्जय उवाच ॥

तान्दृष्ट्वा चलितान्संख्ये प्रणुन्नान्द्रोणसायकैः ।
पाञ्चालान्पाण्डवान्मत्स्यान्सृञ्जयांश्चेदिकेकयान् ॥ ००७ ॥

द्रोणचापविमुक्तेन शरौघेणासुहारिणा ।
सिन्धोरिव महौघेन ह्रियमाणान्यथा प्लवान् ॥ ००८ ॥

कौरवाः सिंहनादेन नानावाद्यस्वनेन च ।
रथद्विपनराश्वैश्च सर्वतः पर्यवारयन् ॥ ००९ ॥

तान्पश्यन्सैन्यमध्यस्थो राजा स्वजनसंवृतः ।
दुर्योधनोऽब्रवीत्कर्णं प्रहृष्टः प्रहसन्निव ॥ ०१० ॥

पश्य राधेय पाञ्चालान्प्रणुन्नान्द्रोणसायकैः ।
सिंहेनेव मृगान्वन्यांस्त्रासितान्दृढधन्वना ॥ ०११ ॥

नैते जातु पुनर्युद्धमीहेयुरिति मे मतिः ।
यथा तु भग्ना द्रोणेन वातेनेव महाद्रुमाः ॥ ०१२ ॥

अर्द्यमानाः शरैरेते रुक्मपुङ्खैर्महात्मना ।
पथा नैकेन गच्छन्ति घूर्णमानास्ततस्ततः ॥ ०१३ ॥

संनिरुद्धाश्च कौरव्यैर्द्रोणेन च महात्मना ।
एतेऽन्ये मण्डलीभूताः पावकेनेव कुञ्जराः ॥ ०१४ ॥

भ्रमरैरिव चाविष्टा द्रोणस्य निशितैः शरैः ।
अन्योन्यं समलीयन्त पलायनपरायणाः ॥ ०१५ ॥

एष भीमो दृढक्रोधो हीनः पाण्डवसृञ्जयैः ।
मदीयैरावृतो योधैः कर्ण तर्जयतीव माम् ॥ ०१६ ॥

व्यक्तं द्रोणमयं लोकमद्य पश्यति दुर्मतिः ।
निराशो जीविताननूनमद्य राज्याच्च पाण्डवः ॥ ०१७ ॥

कर्ण उवाच ॥

नैष जातु महाबाहुर्जीवन्नाहवमुत्सृजेत् ।
न चेमान्पुरुषव्याघ्र सिंहनादान्विशक्ष्यते ॥ ०१८ ॥

न चापि पाण्डवा युद्धे भज्येरन्निति मे मतिः ।
शूराश्च बलवन्तश्च कृतास्त्रा युद्धदुर्मदाः ॥ ०१९ ॥

विषाग्निद्यूतसङ्क्लेशान्वनवासं च पाण्डवाः ।
स्मरमाणा न हास्यन्ति सङ्ग्राममिति मे मतिः ॥ ०२० ॥

निकृतो हि महाबाहुरमितौजा वृकोदरः ।
वरान्वरान्हि कौन्तेयो रथोदारान्हनिष्यति ॥ ०२१ ॥

असिना धनुषा शक्त्या हयैर्नागैर्नरै रथैः ।
आयसेन च दण्डेन व्रातान्व्रातान्हनिष्यति ॥ ०२२ ॥

तमेते चानुवर्तन्ते सात्यकिप्रमुखा रथाः ।
पाञ्चालाः केकया मत्स्याः पाण्डवाश्च विशेषतः ॥ ०२३ ॥

शूराश्च बलवन्तश्च विक्रान्ताश्च महारथाः ।
विशेषतश्च भीमेन संरब्धेनाभिचोदिताः ॥ ०२४ ॥

ते द्रोणमभिवर्तन्ते सर्वतः कुरुपुङ्गवाः ।
वृकोदरं परीप्सन्तः सूर्यमभ्रगणा इव ॥ ०२५ ॥

एकायनगता ह्येते पीडयेयुर्यतव्रतम् ।
अरक्ष्यमाणं शलभा यथा दीपं मुमूर्षवः ॥ ०२६ ॥

असंशयं कृतास्त्राश्च पर्याप्ताश्चापि वारणे ॥ ०२६ ॥

अतिभारं त्वहं मन्ये भारद्वाजे समाहितम् ।
ते शीघ्रमनुगच्छामो यत्र द्रोणो व्यवस्थितः ॥ ०२७ ॥

काका इव महानागं मा वै हन्युर्यतव्रतम् ॥ ०२७ ॥

सञ्जय उवाच ॥

राधेयस्य वचः श्रुत्वा राजा दुर्योधनस्तदा ।
भ्रातृभिः सहितो राजन्प्रायाद्द्रोणरथं प्रति ॥ ०२८ ॥

तत्रारावो महानासीदेकं द्रोणं जिघांसताम् ।
पाण्डवानां निवृत्तानां नानावर्णैर्हयोत्तमैः ॥ ०२९ ॥

---

# अध्याय ०२२

धृतराष्ट्र उवाच ॥

सर्वेषामेव मे ब्रूहि रथचिह्नानि सञ्जय ।
ये द्रोणमभ्यवर्तन्त क्रुद्धा भीमपुरोगमाः ॥ ००१ ॥

सञ्जय उवाच ॥

ऋश्यवर्णैर्हयैर्दृष्ट्वा व्यायच्छन्तं वृकोदरम् ।
रजताश्वस्ततः शूरः शैनेयः संन्यवर्तत  ॥ ००२  ॥

दर्शनीयास्तु काम्बोजाः शुकपत्रपरिच्छदाः ।
वहन्तो नकुलं शीघ्रं तावकानभिदुद्रुवुः  ॥ ००३  ॥

कृष्णास्तु मेघसङ्काशाः सहदेवमुदायुधम् ।
भीमवेगा नरव्याघ्रमवहन्वातरंहसः  ॥ ००४  ॥

हेमोत्तमप्रतिच्छन्नैर्हयैर्वातसमैर्जवे ।
अभ्यवर्तन्त सैन्यानि सर्वाण्येव युधिष्ठिरम्  ॥ ००५  ॥

राज्ञस्त्वनन्तरं राजा पाञ्चाल्यो द्रुपदोऽभवत् ।
जातरूपमयच्छत्रः सर्वैः स्वैरभिरक्षितः  ॥ ००६  ॥

ललामैर्हरिभिर्युक्तैः सर्वशब्दक्षमैर्युधि ।
राज्ञां मध्ये महेष्वासः शान्तभीरभ्यवर्तत  ॥ ००७  ॥

तं विराटोऽन्वयात्पश्चात्सह शूरैर्महारथैः ।
केकयाश्च शिखण्डी च धृष्टकेतुस्तथैव च  ॥ ००८  ॥

स्वैः स्वैः सैन्यैः परिवृता मत्स्यराजानमन्वयुः  ॥ ००८  ॥

ते तु पाटलपुष्पाणां समवर्णा हयोत्तमाः ।
वहमाना व्यराजन्त मत्स्यस्यामित्रघातिनः  ॥ ००९  ॥

हारिद्रसमवर्णास्तु जवना हेममालिनः ।
पुत्रं विराटराजस्य सत्वराः समुदावहन्  ॥ ०१०  ॥

इन्द्रगोपकवर्णैस्तु भ्रातरः पञ्च केकयाः ।
जातरूपसमाभासः सर्वे लोहितकध्वजाः  ॥ ०११  ॥

ते हेममालिनः शूराः सर्वे युद्धविशारदाः ।
वर्षन्त इव जीमूताः प्रत्यदृश्यन्त दंशिताः ॥ ०१२ ॥

आमपात्रनिभाकाराः पाञ्चाल्यममितौजसम् ।
दान्तास्ताम्रारुणा युक्ताः शिखण्डिनमुदावहन् ॥ ०१३ ॥

तथा द्वादशसाहस्राः पाञ्चालानां महारथाः ।
तेषां तु षड्सहस्राणि ये शिखण्डिनमन्वयुः ॥ ०१४ ॥

पुत्रं तु शिशुपालस्य नरसिंहस्य मारिष ।
आक्रीडन्तो वहन्ति स्म सारङ्गशबला हयाः ॥ ०१५ ॥

धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
काम्बोजैः शबलैरश्वैरभ्यवर्तत दुर्जयः ॥ ०१६ ॥

बृहत्क्षत्रं तु कैकेयं सुकुमारं हयोत्तमाः ।
पलालधूमवर्णाभाः सैन्धवाः शीघ्रमावहन् ॥ ०१७ ॥

मल्लिकाक्षाः पद्मवर्णा बाह्लिजाताः स्वलङ्कृताः ।
शूरं शिखण्डिनः पुत्रं क्षत्रदेवमुदावहन् ॥ ०१८ ॥

युवानमवहन्युद्धे क्रौञ्चवर्णा हयोत्तमाः ।
काश्यस्याभिभुवः पुत्रं सुकुमारं महारथम् ॥ ०१९ ॥

श्वेतास्तु प्रतिविन्ध्यं तं कृष्णग्रीवा मनोजवाः ।
यन्तुः प्रेष्यकरा राजन्राजपुत्रमुदावहन् ॥ ०२० ॥

सुतसोमं तु यं धौम्यात्पार्थः पुत्रमयाचत ।
माषपुष्पसवर्णास्तमवहन्वाजिनो रणे ॥ ०२१ ॥

सहस्रसोमप्रतिमा बभूवुः ; पुरे कुरूणामुदयेन्दुनाम्नि ।
तस्मिञ्जातः सोमसङ्क्रन्दमध्ये ; यस्मात्तस्मात्सुतसोमोऽभवत्सः ॥ ०२२ ॥

नाकुलिं तु शतानीकं शालपुष्पनिभा हयाः ।
आदित्यतरुणप्रख्याः श्लाघनीयमुदावहन् ॥ ०२३ ॥

काञ्चनप्रतिमैर्योक्त्रैर्मयूरग्रीवसंनिभाः ।
द्रौपदेयं नरव्याघ्रं श्रुतकर्माणमावहन् ॥ ०२४ ॥

श्रुतकीर्तिं श्रुतनिधिं द्रौपदेयं हयोत्तमाः ।
ऊहुः पार्थसमं युद्धे चाषपत्रनिभा हयाः ॥ ०२५ ॥

यमाहुरध्यर्धगुणं कृष्णात्पार्थाच्च संयुगे ।
अभिमन्युं पिशङ्गास्तं कुमारमवहन्रणे ॥ ०२६ ॥

एकस्तु धार्तराष्ट्रेभ्यः पाण्डवान्यः समाश्रितः ।
तं बृहन्तो महाकाया युयुत्सुमवहन्रणे ॥ ०२७ ॥

पलालकाण्डवर्णास्तु वार्धक्षेमिं तरस्विनम् ।
ऊहुः सुतुमुले युद्धे हया हृष्टाः स्वलङ्कृताः ॥ ०२८ ॥

कुमारं शितिपादास्तु रुक्मपत्रैरुरश्छदैः ।
सौचित्तिमवहन्युद्धे यन्तुः प्रेष्यकरा हयाः ॥ ०२९ ॥

रुक्मपृष्ठावकीर्णास्तु कौशेयसदृशा हयाः ।
सुवर्णमालिनः क्षान्ताः श्रेणिमन्तमुदावहन् ॥ ०३० ॥

रुक्ममालाधराः शूरा हेमवर्णाः स्वलङ्कृताः ।
काशिराजं हयश्रेष्ठाः श्लाघनीयमुदावहन् ॥ ०३१ ॥

अस्त्राणां च धनुर्वेदे ब्राह्मे वेदे च पारगम् ।

तं सत्यधृतिमायान्तमरुणाः समुदावहन् ॥ ०३२ ॥

यः स पाञ्चालसेनानीर्द्रोणमंशमकल्पयत् ।
पारावतसवर्णाश्वा धृष्टद्युम्नमुदावहन् ॥ ०३३ ॥

तमन्वयात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान्वसुदानश्च पुत्रः काश्यस्य चाभिभो ॥ ०३४ ॥

युक्तैः परमकाम्बोजैर्जवनैर्हेममालिभिः ।
भीषयन्तो द्विषत्सैन्यं यमवैश्रवणोपमाः ॥ ०३५ ॥

प्रभद्रकास्तु पाञ्चालाः षड्सहस्राण्युदायुधाः ।
नानावर्णैर्हयश्रेष्ठैर्हेमचित्ररथध्वजाः ॥ ०३६ ॥

शरव्रातैर्विधुन्वन्तः शत्रून्विततकार्मुकाः ।
समानमृत्यवो भूत्वा धृष्टद्युम्नं समन्वयुः ॥ ०३७ ॥

बभ्रुकौशेयवर्णास्तु सुवर्णवरमालिनः ।
ऊहुरग्लानमनसश्चेकितानं हयोत्तमाः ॥ ०३८ ॥

इन्द्रायुधसवर्णैस्तु कुन्तिभोजो हयोत्तमैः ।
आयात्सुवश्यैः पुरुजिन्मातुलः सव्यसाचिनः ॥ ०३९ ॥

अन्तरिक्षसवर्णास्तु तारकाचित्रिता इव ।
राजानं रोचमानं ते हयाः संख्ये समावहन् ॥ ०४० ॥

कर्बुराः शितिपादास्तु स्वर्णजालपरिच्छदाः ।
जारासंधिं हयश्रेष्ठाः सहदेवमुदावहन् ॥ ०४१ ॥

ये तु पुष्करनालस्य समवर्णा हयोत्तमाः ।
जवे श्येनसमाश्चित्राः सुदामानमुदावहन् ॥ ०४२ ॥

शशलोहितवर्णास्तु पाण्डुरोद्गतराजयः ।
पाञ्चाल्यं गोपतेः पुत्रं सिंहसेनमुदावहन् ॥ ०४३ ॥

पाञ्चालानां नरव्याघ्रो यः ख्यातो जनमेजयः ।
तस्य सर्षपपुष्पाणां तुल्यवर्णा हयोत्तमाः ॥ ०४४ ॥

माषवर्णास्तु जवना बृहन्तो हेममालिनः ।
दधिपृष्ठाश्चन्द्रमुखाः पाञ्चाल्यमवहन्द्रुतम् ॥ ०४५ ॥

शूराश्च भद्रकाश्चैव शरकाण्डनिभा हयाः ।
पद्मकिञ्जल्कवर्णाभा दण्डधारमुदावहन् ॥ ०४६ ॥

बिभ्रतो हेममालाश्च चक्रवाकोदरा हयाः ।
कोसलाधिपतेः पुत्रं सुक्षत्रं वाजिनोऽवहन् ॥ ०४७ ॥

शबलास्तु बृहन्तोऽश्वा दान्ता जाम्बूनदस्रजः ।
युद्धे सत्यधृतिं क्षैमिमवहन्प्रांशवः शुभाः ॥ ०४८ ॥

एकवर्णेन सर्वेण ध्वजेन कवचेन च ।
अश्वैश्च धनुषा चैव शुक्लैः शुक्लो न्यवर्तत ॥ ०४९ ॥

समुद्रसेनपुत्रं तु सामुद्रा रुद्रतेजसम् ।
अश्वाः शशाङ्कसदृशाश्चन्द्रदेवमुदावहन् ॥ ०५० ॥

नीलोत्पलसवर्णास्तु तपनीयविभूषिताः ।
शैब्यं चित्ररथं युद्धे चित्रमाल्यावहन्हयाः ॥ ०५१ ॥

कलायपुष्पवर्णास्तु श्वेतलोहितराजयः ।
रथसेनं हयश्रेष्ठाः समूहुर्युद्धदुर्मदम् ॥ ०५२ ॥

यं तु सर्वमनुष्येभ्यः प्राहुः शूरतरं नृपम् ।
तं पटच्चरहन्तारं शुकवर्णावहन्हयाः ॥ ०५३ ॥

चित्रायुधं चित्रमाल्यं चित्रवर्मायुधध्वजम् ।
ऊहुः किंशुकपुष्पाणां तुल्यवर्णा हयोत्तमाः ॥ ०५४ ॥

एकवर्णेन सर्वेण ध्वजेन कवचेन च ।
धनुषा रथवाहैश्च नीलैर्नीलोऽभ्यवर्तत ॥ ०५५ ॥

नानारूपै रत्नचित्रैर्वरूथध्वजकार्मुकैः ।
वाजिध्वजपताकाभिश्चित्रैश्चित्रोऽभ्यवर्तत ॥ ०५६ ॥

ये तु पुष्करपत्रस्य तुल्यवर्णा हयोत्तमाः ।
ते रोचमानस्य सुतं हेमवर्णमुदावहन् ॥ ०५७ ॥

योधाश्च भद्रकाराश्च शरदण्डानुदण्डजाः ।
श्वेताण्डाः कुक्कुटाण्डाभा दण्डकेतुमुदावहन् ॥ ०५८ ॥

आटरूषकपुष्पाभा हयाः पाण्ड्यानुयायिनाम् ।
अवहन्रथमुख्यानामयुतानि चतुर्दश ॥ ०५९ ॥

नानारूपेण वर्णेन नानाकृतिमुखा हयाः ।
रथचक्रध्वजं वीरं घटोत्कचमुदावहन् ॥ ०६० ॥

सुवर्णवर्णा धर्मज्ञमनीकस्थं युधिष्ठिरम् ।
राजश्रेष्ठं हयश्रेष्ठाः सर्वतः पृष्ठतोऽन्वयुः ॥ ०६१ ॥

वर्णैश्चोच्चावचैर्दिव्यैः सदश्वानां प्रभद्रकाः ॥ ०६१ ॥

ते यत्ता भीमसेनेन सहिताः काञ्चनध्वजाः ।
प्रत्यदृश्यन्त राजेन्द्र सेन्द्रा इव दिवौकसः ॥ ०६२ ॥

अत्यरोचत तान्सर्वान्धृष्टद्युम्नः समागतान् ।
सर्वाण्यपि च सैन्यानि भारद्वाजोऽत्यरोचत ॥ ०६३ ॥

---

# अध्याय ०२३

धृतराष्ट्र उवाच ॥

व्यथयेयुरिमे सेनां देवानामपि संयुगे ।
आहवे ये न्यवर्तन्त वृकोदरमुखा रथाः ॥ ००१ ॥

संप्रयुक्तः किलैवायं दिष्टैर्भवति पूरुषः ।
तस्मिन्नेव तु सर्वार्था दृश्यन्ते वै पृथग्विधाः ॥ ००२ ॥

दीर्घं विप्रोषितः कालमरण्ये जटिलोऽजिनी ।
अज्ञातश्चैव लोकस्य विजहार युधिष्ठिरः ॥ ००३ ॥

स एव महतीं सेनां समावर्तयदाहवे ।
किमन्यद्दैवसंयोगान्मम पुत्रस्य चाभवत् ॥ ००४ ॥

युक्त एव हि भाग्येन ध्रुवमुत्पद्यते नरः ।
स तथाकृष्यते तेन न यथा स्वयमिच्छति ॥ ००५ ॥

द्यूतव्यसनमासाद्य क्लेशितो हि युधिष्ठिरः ।
स पुनर्भागधेयेन सहायानुपलब्धवान् ॥ ००६ ॥

अर्धं मे केकया लब्धाः काशिकाः कोसलाश्च ये ।

चेदयश्चापरे वङ्गा मामेव समुपाश्रिताः ॥ ००७ ॥

पृथिवी भूयसी तात मम पार्थस्य नो तथा ।
इति मामब्रवीत्सूत मन्दो दुर्योधनस्तदा ॥ ००८ ॥

तस्य सेनासमूहस्य मध्ये द्रोणः सुरक्षितः ।
निहतः पार्षतेनाजौ किमन्यद्भागधेयतः ॥ ००९ ॥

मध्ये राज्ञां महाबाहुं सदा युद्धाभिनन्दिनम् ।
सर्वास्त्रपारगं द्रोणं कथं मृत्युरुपेयिवान् ॥ ०१० ॥

समनुप्राप्तकृच्छ्रोऽहं संमोहं परमं गतः ।
भीष्मद्रोणौ हतौ श्रुत्वा नाहं जीवितुमुत्सहे ॥ ०११ ॥

यन्मा क्षत्ताब्रवीत्तात प्रपश्यन्पुत्रगृद्धिनम् ।
दुर्योधनेन तत्सर्वं प्राप्तं सूत मया सह ॥ ०१२ ॥

नृशंसं तु परं तत्स्यात्त्यक्त्वा दुर्योधनं यदि ।
पुत्रशेषं चिकीर्षेयं कृच्छ्रं न मरणं भवेत् ॥ ०१३ ॥

यो हि धर्मं परित्यज्य भवत्यर्थपरो नरः ।
सोऽस्माच्च हीयते लोकात्क्षुद्रभावं च गच्छति ॥ ०१४ ॥

अद्य चाप्यस्य राष्ट्रस्य हतोत्साहस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ ०१५ ॥

कथं स्यादवशेषं हि धुर्ययोरभ्यतीतयोः ।
यौ नित्यमनुजीवामः क्षमिणौ पुरुषर्षभौ ॥ ०१६ ॥

व्यक्तमेव च मे शंस यथा युद्धमवर्तत ।
केऽयुध्यन्के व्यपाकर्षन्के क्षुद्राः प्राद्रवन्भयात् ॥ ०१७ ॥

धनञ्जयं च मे शंस यद्यच्चक्रे रथर्षभः ।
तस्माद्भयं नो भूयिष्ठं भ्रातृव्याच्च विशेषतः ॥ ०१८ ॥

यथासीच्च निवृत्तेषु पाण्डवेषु च सञ्जय ।
मम सैन्यावशेषस्य संनिपातः सुदारुणः ॥ ०१९ ॥

मामकानां च ये शूराः कांस्तत्र समवारयन् ॥ ०१९ ॥

---

# अध्याय ०२४

सञ्जय उवाच ॥

महद्भैरवमासीन्नः संनिवृत्तेषु पाण्डुषु ।
दृष्ट्वा द्रोणं छाद्यमानं तैर्भास्करमिवाम्बुदैः ॥ ००१ ॥

तैश्चोद्धूतं रजस्तीव्रमवचक्रे चमूं तव ।
ततो हतममन्याम द्रोणं दृष्टिपथे हते ॥ ००२ ॥

तांस्तु शूरान्महेष्वासान्क्रूरं कर्म चिकीर्षतः ।
दृष्ट्वा दुर्योधनस्तूर्णं स्वसैन्यं समचूचुदत् ॥ ००३ ॥

यथाशक्ति यथोत्साहं यथासत्त्वं नराधिपाः ।
वारयध्वं यथायोगं पाण्डवानामनीकिनीम् ॥ ००४ ॥

ततो दुर्मर्षणो भीममभ्यगच्छत्सुतस्तव ।
आराद्दृष्ट्वा किरन्बाणैरिच्छन्द्रोणस्य जीवितम् ॥ ००५ ॥

तं बाणैरवतस्तार क्रुद्धो मृत्युमिवाहवे ।
तं च भीमोऽतुदद्बाणैस्तदासीत्तुमुलं महत्  ॥ ००६  ॥

त ईश्वरसमादिष्टाः प्राज्ञाः शूराः प्रहारिणः ।
बाह्यं मृत्युभयं कृत्वा प्रत्यतिष्ठन्परान्युधि  ॥ ००७  ॥

कृतवर्मा शिनेः पुत्रं द्रोणप्रेप्सुं विशां पते ।
पर्यवारयदायान्तं शूरं समितिशोभनम्  ॥ ००८  ॥

तं शैनेयः शरव्रातैः क्रुद्धः क्रुद्धमवारयत् ।
कृतवर्मा च शैनेयं मत्तो मत्तमिव द्विपम्  ॥ ००९  ॥

सैन्धवः क्षत्रधर्माणमापतन्तं शरौघिणम् ।
उग्रधन्वा महेष्वासं यत्तो द्रोणादवारयत्  ॥ ०१०  ॥

क्षत्रधर्मा सिन्धुपतेश्छित्त्वा केतनकार्मुके ।
नाराचैर्बहुभिः क्रुद्धः सर्वमर्मस्वताडयत्  ॥ ०११  ॥

अथान्यद्धनुरादाय सैन्धवः कृतहस्तवत् ।
विव्याध क्षत्रधर्माणं रणे सर्वायसैः शरैः  ॥ ०१२  ॥

युयुत्सुं पाण्डवार्थाय यतमानं महारथम् ।
सुबाहुर्भ्रातरं शूरं यत्तो द्रोणादवारयत्  ॥ ०१३  ॥

सुबाहोः सधनुर्बाणावस्यतः परिघोपमौ ।
युयुत्सुः शितपीताभ्यां क्षुराभ्यामच्छिनद्भुजौ  ॥ ०१४  ॥

राजानं पाण्डवश्रेष्ठं धर्मात्मानं युधिष्ठिरम् ।
वेलेव सागरं क्षुब्धं मद्रराड्समवारयत्  ॥ ०१५  ॥

तं धर्मराजो बहुभिर्मर्मभिद्भिरवाकिरत् ।
मद्रेशस्तं चतुःषष्ट्या शरैर्विद्ध्वानदद्भृशम् ॥ ०१६ ॥

तस्य नानदतः केतुमुच्चकर्त सकार्मुकम् ।
क्षुराभ्यां पाण्डवश्रेष्ठस्तत उच्चुक्रुशुर्जनाः ॥ ०१७ ॥

तथैव राजा बाह्लीको राजानं द्रुपदं शरैः ।
आद्रवन्तं सहानीकं सहानीको न्यवारयत् ॥ ०१८ ॥

तद्युद्धमभवद्घोरं वृद्धयोः सहसेनयोः ।
यथा महायूथपयोर्द्विपयोः संप्रभिन्नयोः ॥ ०१९ ॥

विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्च्छताम् ।
सहसैन्यौ सहानीकं यथेन्द्राग्नी पुरा बलिम् ॥ ०२० ॥

तदुत्पिञ्जलकं युद्धमासीद्देवासुरोपमम् ।
मत्स्यानां केकयैः सार्धमभीताश्वरथद्विपम् ॥ ०२१ ॥

नाकुलिं तु शतानीकं भूतकर्मा सभापतिः ।
अस्यन्तमिषुजालानि यान्तं द्रोणादवारयत् ॥ ०२२ ॥

ततो नकुलदायादस्त्रिभिर्भल्लैः सुसंशितैः ।
चक्रे विबाहुशिरसं भूतकर्माणमाहवे ॥ ०२३ ॥

सुतसोमं तु विक्रान्तमापतन्तं शरौघिणम् ।
द्रोणायाभिमुखं वीरं विविंशतिरवारयत् ॥ ०२४ ॥

सुतसोमस्तु सङ्क्रुद्धः स्वपितृव्यमजिह्मगैः ।
विविंशतिं शरैर्विद्ध्वा नाभ्यवर्तत दंशितः ॥ ०२५ ॥

अथ भीमरथः शाल्वमाशुगैरायसैः शितैः ।

षड्भिः साश्वनियन्तारमनयद्यमसादनम् ॥ ०२६ ॥

श्रुतकर्माणमायान्तं मयूरसदृशैर्हयैः ।
चैत्रसेनिर्महाराज तव पौत्रो न्यवारयत् ॥ ०२७ ॥

तौ पौत्रौ तव दुर्धर्षौ परस्परवधैषिणौ ।
पितृणामर्थसिद्ध्यर्थं चक्रतुर्युद्धमुत्तमम् ॥ ०२८ ॥

तिष्ठन्तमग्रतो दृष्ट्वा प्रतिविन्ध्यं तमाहवे ।
द्रौणिर्मानं पितुः कुर्वन्मार्गणैः समवारयत् ॥ ०२९ ॥

तं क्रुद्धः प्रतिविव्याध प्रतिविन्ध्यः शितैः शरैः ।
सिंहलाङ्गूललक्ष्माणं पितुरर्थे व्यवस्थितम् ॥ ०३० ॥

प्रवपन्निव बीजानि बीजकाले नरर्षभ ।
द्रौणायनिर्द्रौपदेयं शरवर्षैरवाकिरत् ॥ ०३१ ॥

यस्तु शूरतमो राजन्सेनयोरुभयोर्मतः ।
तं पटच्चरहन्तारं लक्ष्मणः समवारयत् ॥ ०३२ ॥

स लक्ष्मणस्येष्वसनं छित्त्वा लक्ष्म च भारत ।
लक्ष्मणे शरजालानि विसृजन्बह्वशोभत ॥ ०३३ ॥

विकर्णस्तु महाप्राज्ञो याज्ञसेनिं शिखण्डिनम् ।
पर्यवारयदायान्तं युवानं समरे युवा ॥ ०३४ ॥

ततस्तमिषुजालेन याज्ञसेनिः समावृणोत् ।
विधूय तद्बाणजालं बभौ तव सुतो बली ॥ ०३५ ॥

अङ्गदोऽभिमुखः शूरमुत्तमौजसमाहवे ।
द्रोणायाभिमुखं यान्तं वत्सदन्तैरवारयत् ॥ ०३६ ॥

स संप्रहारस्तुमुलस्तयोः पुरुषसिंहयोः ।
सैनिकानां च सर्वेषां तयोश्च प्रीतिवर्धनः ॥ ०३७ ॥

दुर्मुखस्तु महेष्वासो वीरं पुरुजितं बली ।
द्रोणायाभिमुखं यान्तं कुन्तिभोजमवारयत् ॥ ०३८ ॥

स दुर्मुखं भ्रुवोर्मध्ये नाराचेन व्यताडयत् ।
तस्य तद्विबभौ वक्त्रं सनालमिव पङ्कजम् ॥ ०३९ ॥

कर्णस्तु केकयान्भ्रातॄन्पञ्च लोहितकध्वजान् ।
द्रोणायाभिमुखं याताञ्शरवर्षैरवारयत् ॥ ०४० ॥

ते चैनं भृशसङ्क्रुद्धाः शरव्रातैरवाकिरन् ।
स च तांश्छादयामास शरजालैः पुनः पुनः ॥ ०४१ ॥

नैव कर्णो न ते पञ्च ददृशुर्बाणसंवृताः ।
साश्वसूतध्वजरथाः परस्परशराचिताः ॥ ०४२ ॥

पुत्रस्ते दुर्जयश्चैव जयश्च विजयश्च ह ।
नीलं काश्यं जयं शूरास्त्रयस्त्रीन्प्रत्यवारयन् ॥ ०४३ ॥

तद्युद्धमभवद्घोरमीक्षितृप्रीतिवर्धनम् ।
सिंहव्याघ्रतरक्षूणां यथेभमहिषर्षभैः ॥ ०४४ ॥

क्षेमधूर्तिबृहन्तौ तौ भ्रातरौ सात्वतं युधि ।
द्रोणायाभिमुखं यान्तं शरैस्तीक्ष्णैस्ततक्षतुः ॥ ०४५ ॥

तयोस्तस्य च तद्युद्धमत्यद्भुतमिवाभवत् ।
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ॥ ०४६ ॥

राजानं तु तथाम्बष्ठमेकं युद्धाभिनन्दिनम् ।
चेदिराजः शरानस्यन्क्रुद्धो द्रोणादवारयत् ॥ ०४७ ॥

तमम्बष्ठोऽस्थिभेदिन्या निरविध्यच्छलाकया ।
स त्यक्त्वा सशरं चापं रथाद्भूमिमथापतत् ॥ ०४८ ॥

वार्धक्षेमिं तु वार्ष्णेयं कृपः शारद्वतः शरैः ।
अक्षुद्रः क्षुद्रकैर्द्रोणात्क्रुद्धरूपमवारयत् ॥ ०४९ ॥

युध्यन्तौ कृपवार्ष्णेयौ येऽपश्यंश्चित्रयोधिनौ ।
ते युद्धसक्तमनसो नान्या बुबुधिरे क्रियाः ॥ ०५० ॥

सौमदत्तिस्तु राजानं मणिमन्तमतन्द्रितम् ।
पर्यवारयदायान्तं यशो द्रोणस्य वर्धयन् ॥ ०५१ ॥

स सौमदत्तेस्त्वरितश्छित्त्वेष्वसनकेतने ।
पुनः पताकां सूतं च छत्रं चापातयद्रथात् ॥ ०५२ ॥

अथाप्लुत्य रथात्तूर्णं यूपकेतुरमित्रहा ।
साश्वसूतध्वजरथं तं चकर्त वरासिना ॥ ०५३ ॥

रथं च स्वं समास्थाय धनुरादाय चापरम् ।
स्वयं यच्छन्हयात्राजन्व्यधमत्पाण्डवीं चमूम् ॥ ०५४ ॥

मुसलैर्मुद्गरैश्चक्रैर्भिण्डिपालैः परश्वधैः ।
पांसुवाताग्निसलिलैर्भस्मलोष्ठतृणद्रुमैः ॥ ०५५ ॥

आरुजन्प्ररुजन्भञ्जन्निघ्नन्विद्रावयन्क्षिपन् ।
सेनां विभीषयन्नायाद्द्रोणप्रेप्सुर्घटोत्कचः ॥ ०५६ ॥

तं तु नानाप्रहरणैर्नानायुद्धविशेषणैः ।

राक्षसं राक्षसः क्रुद्धः समाजघ्ने ह्यलम्बुसः ॥ ०५७ ॥

तयोस्तदभवद्युद्धं रक्षोग्रामणिमुख्ययोः ।
तादृग्यादृक्पुरा वृत्तं शम्बरामरराजयोः ॥ ०५८ ॥

एवं द्वंद्वशतान्यासन्रथवारणवाजिनाम् ।
पदातीनां च भद्रं ते तव तेषां च सङ्कुलम् ॥ ०५९ ॥

नैतादृशो दृष्टपूर्वः सङ्ग्रामो नैव च श्रुतः ।
द्रोणस्याभावभावेषु प्रसक्तानां यथाभवत् ॥ ०६० ॥

इदं घोरमिदं चित्रमिदं रौद्रमिति प्रभो ।
तत्र युद्धान्यदृश्यन्त प्रततानि बहूनि च ॥ ०६१ ॥

---

# अध्याय ०२५

धृतराष्ट्र उवाच ॥

तेष्वेवं संनिवृत्तेषु प्रत्युद्यातेषु भागशः ।
कथं युयुधिरे पार्था मामकाश्च तरस्विनः ॥ ००१ ॥

किमर्जुनश्चाप्यकरोत्संशप्तकबलं प्रति ।
संशप्तका वा पार्थस्य किमकुर्वत सञ्जय ॥ ००२ ॥

सञ्जय उवाच ॥

तथा तेषु निवृत्तेषु प्रत्युद्यातेषु भागशः ।
स्वयमभ्यद्रवद्भीमं नागानीकेन ते सुतः ॥ ००३ ॥

स नाग इव नागेन गोवृषेणेव गोवृषः ।
समाहूतः स्वयं राज्ञा नागानीकमुपाद्रवत् ॥ ००४ ॥

स युद्धकुशलः पार्थो बाहुवीर्येण चान्वितः ।
अभिनत्कुञ्जरानीकमचिरेणैव मारिष ॥ ००५ ॥

ते गजा गिरिसङ्काशाः क्षरन्तः सर्वतो मदम् ।
भीमसेनस्य नाराचैर्विमुखा विमदीकृताः ॥ ००६ ॥

विधमेदभ्रजालानि यथा वायुः समन्ततः ।
व्यधमत्तान्यनीकानि तथैव पवनात्मजः ॥ ००७ ॥

स तेषु विसृजन्बाणान्भीमो नागेष्वशोभत ।
भुवनेष्विव सर्वेषु गभस्तीनुदितो रविः ॥ ००८ ॥

ते भीमबाणैः शतशः संस्यूता विबभुर्गजाः ।
गभस्तिभिरिवार्कस्य व्योम्नि नानाबलाहकाः ॥ ००९ ॥

तथा गजानां कदनं कुर्वाणमनिलात्मजम् ।
क्रुद्धो दुर्योधनोऽभ्येत्य प्रत्यविध्यच्छितैः शरैः ॥ ०१० ॥

ततः क्षणेन क्षितिपं क्षतजप्रतिमेक्षणः ।
क्षयं निनीषुर्निशितैर्भीमो विव्याध पत्रिभिः ॥ ०११ ॥

स शरार्पितसर्वाङ्गः क्रुद्धो विव्याध पाण्डवम् ।
नाराचैरर्करश्म्याभैर्भीमसेनं स्मयन्निव ॥ ०१२ ॥

तस्य नागं मणिमयं रत्नचित्रं ध्वजे स्थितम् ।
भल्लाभ्यां कार्मुकं चैव क्षिप्रं चिच्छेद पाण्डवः ॥ ०१३ ॥

दुर्योधनं पीड्यमानं दृष्ट्वा भीमेन मारिष ।
चुक्षोभयिषुरभ्यागादङ्गो मातङ्गमास्थितः ॥ ०१४ ॥

तमापतन्तं मातङ्गमम्बुदप्रतिमस्वनम् ।
कुम्भान्तरे भीमसेनो नाराचेनार्दयद्भृशम् ॥ ०१५ ॥

तस्य कायं विनिर्भिद्य ममज्ज धरणीतले ।
ततः पपात द्विरदो वज्राहत इवाचलः ॥ ०१६ ॥

तस्यावर्जितनागस्य म्लेच्छस्यावपतिष्यतः ।
शिरश्चिच्छेद भल्लेन क्षिप्रकारी वृकोदरः ॥ ०१७ ॥

तस्मिन्निपतिते वीरे संप्राद्रवत सा चमूः ।
संभ्रान्ताश्वद्विपरथा पदातीनवमृद्नती ॥ ०१८ ॥

तेष्वनीकेषु सर्वेषु विद्रवत्सु समन्ततः ।
प्राग्ज्योतिषस्ततो भीमं कुञ्जरेण समाद्रवत् ॥ ०१९ ॥

येन नागेन मघवानजयद्दैत्यदानवान् ।
स नागप्रवरो भीमं सहसा समुपाद्रवत् ॥ ०२० ॥

श्रवणाभ्यामथो पद्भ्यां संहतेन करेण च ।
व्यावृत्तनयनः क्रुद्धः प्रदहन्निव पाण्डवम् ॥ ०२१ ॥

ततः सर्वस्य सैन्यस्य नादः समभवन्महान् ।
हा हा विनिहतो भीमः कुञ्जरेणेति मारिष ॥ ०२२ ॥

तेन नादेन वित्रस्ता पाण्डवानामनीकिनी ।
सहसाभ्यद्रवद्राजन्यत्र तस्थौ वृकोदरः ॥ ०२३ ॥

ततो युधिष्ठिरो राजा हतं मत्वा वृकोदरम् ।

भगदत्तं सपाञ्चालः सर्वतः समवारयत् ॥ ०२४ ॥

तं रथै रथिनां श्रेष्ठाः परिवार्य समन्ततः ।
अवाकिरञ्शरैस्तीक्ष्णैः शतशोऽथ सहस्रशः ॥ ०२५ ॥

स विघातं पृषत्कानामङ्कुशेन समाचरन् ।
गजेन पाण्डुपाञ्चालान्व्यधमत्पर्वतेश्वरः ॥ ०२६ ॥

तदद्भुतमपश्याम भगदत्तस्य संयुगे ।
तथा वृद्धस्य चरितं कुञ्जरेण विशां पते ॥ ०२७ ॥

ततो राजा दशार्णानां प्राग्ज्योतिषमुपाद्रवत् ।
तिर्यग्यातेन नागेन समदेनाशुगामिना ॥ ०२८ ॥

तयोर्युद्धं समभवन्नागयोर्भीमरूपयोः ।
सपक्षयोः पर्वतयोर्यथा सद्रुमयोः पुरा ॥ ०२९ ॥

प्राग्ज्योतिषपतेर्नागः संनिपत्यापवृत्य च ।
पार्श्वे दशार्णाधिपतेर्भित्त्वा नागमपातयत् ॥ ०३० ॥

तोमरैः सूर्यरश्म्याभैर्भगदत्तोऽथ सप्तभिः ।
जघान द्विरदस्थं तं शत्रुं प्रचलितासनम् ॥ ०३१ ॥

उपसृत्य तु राजानं भगदत्तं युधिष्ठिरः ।
रथानीकेन महता सर्वतः पर्यवारयत् ॥ ०३२ ॥

स कुञ्जरस्थो रथिभिः शुशुभे सर्वतो वृतः ।
पर्वते वनमध्यस्थो ज्वलन्निव हुताशनः ॥ ०३३ ॥

मण्डलं सर्वतः श्लिष्टं रथिनामुग्रधन्विनाम् ।
किरतां शरवर्षाणि स नागः पर्यवर्तत ॥ ०३४ ॥

ततः प्राग्ज्योतिषो राजा परिगृह्य द्विपर्षभम् ।
प्रेषयामास सहसा युयुधानरथं प्रति ॥ ०३५ ॥

शिनेः पौत्रस्य तु रथं परिगृह्य महाद्विपः ।
अभिचिक्षेप वेगेन युयुधानस्त्वपाक्रमत् ॥ ०३६ ॥

बृहतः सैन्धवानश्वान्समुत्थाप्य तु सारथिः ।
तस्थौ सात्यकिमासाद्य संप्लुतस्तं रथं पुनः ॥ ०३७ ॥

स तु लब्ध्वान्तरं नागस्त्वरितो रथमण्डलात् ।
निश्चक्राम ततः सर्वान्परिचिक्षेप पार्थिवान् ॥ ०३८ ॥

ते त्वाशुगतिना तेन त्रास्यमाना नरर्षभाः ।
तमेकं द्विरदं संख्ये मेनिरे शतशो नृपाः ॥ ०३९ ॥

ते गजस्थेन काल्यन्ते भगदत्तेन पाण्डवाः ।
ऐरावतस्थेन यथा देवराजेन दानवाः ॥ ०४० ॥

तेषां प्रद्रवतां भीमः पाञ्चालानामितस्ततः ।
गजवाजिकृतः शब्दः सुमहान्समजायत ॥ ०४१ ॥

भगदत्तेन समरे काल्यमानेषु पाण्डुषु ।
प्राग्ज्योतिषमभिक्रुद्धः पुनर्भीमः समभ्ययात् ॥ ०४२ ॥

तस्याभिद्रवतो वाहान्हस्तमुक्तेन वारिणा ।
सिक्त्वा व्यत्रासयन्नागस्ते पार्थमहरंस्ततः ॥ ०४३ ॥

ततस्तमभ्ययात्तूर्णं रुचिपर्वाकृतीसुतः ।
समुक्षञ्शरवर्षेण रथस्थोऽन्तकसंनिभः ॥ ०४४ ॥

ततो रुचिरपर्वाणं शरेण नतपर्वणा ।
सुपर्वा पर्वतपतिर्निन्ये वैवस्वतक्षयम् ॥ ०४५ ॥

तस्मिन्निपतिते वीरे सौभद्रो द्रौपदीसुताः ।
चेकितानो धृष्टकेतुर्युयुत्सुश्चार्दयन्द्विपम् ॥ ०४६ ॥

त एनं शरधाराभिर्धाराभिरिव तोयदाः ।
सिषिचुर्भैरवान्नादान्विनदन्तो जिघांसवः ॥ ०४७ ॥

ततः पार्ष्ण्यङ्कुशाङ्गुष्ठैः कृतिना चोदितो द्विपः ।
प्रसारितकरः प्रायात्स्तब्धकर्णेक्षणो द्रुतम् ॥ ०४८ ॥

सोऽधिष्ठाय पदा वाहान्युयुत्सोः सूतमारुजत् ।
पुत्रस्तु तव संभ्रान्तः सौभद्रस्याप्लुतो रथम् ॥ ०४९ ॥

स कुञ्जरस्थो विसृजन्निषूनरिषु पार्थिवः ।
बभौ रश्मीनिवादित्यो भुवनेषु समुत्सृजन् ॥ ०५० ॥

तमार्जुनिर्द्वादशभिर्युयुत्सुर्दशभिः शरैः ।
त्रिभिस्त्रिभिर्द्रौपदेया धृष्टकेतुश्च विव्यधुः ॥ ०५१ ॥

सोऽरियत्नार्पितैर्बाणैराचितो द्विरदो बभौ ।
संस्यूत इव सूर्यस्य रश्मिभिर्जलदो महान् ॥ ०५२ ॥

नियन्तुः शिल्पयत्नाभ्यां प्रेषितोऽरिशरार्दितः ।
परिचिक्षेप तान्नागः स रिपून्सव्यदक्षिणम् ॥ ०५३ ॥

गोपाल इव दण्डेन यथा पशुगणान्वने ।
आवेष्टयत तां सेनां भगदत्तस्तथा मुहुः ॥ ०५४ ॥

क्षिप्रं श्येनाभिपन्नानां वायसानामिव स्वनः ।

बभूव पाण्डवेयानां भृशं विद्रवतां स्वनः ॥ ०५५ ॥

स नागराजः प्रवराङ्कुशाहतः ; पुरा सपक्षोऽद्रिवरो यथा नृप ।
भयं तथा रिपुषु समादधद्भृशं ; वणिग्गणानां क्षुभितो यथार्णवः ॥ ०५६ ॥

ततो ध्वनिर्द्विरदरथाश्वपार्थिवैः ;भयाद्द्रवद्भिर्जनितोऽतिभैरवः ।
क्षितिं वियद्द्यां विदिशो दिशस्तथा ; समावृणोत्पार्थिव संयुगे तदा ॥ ०५७ ॥

स तेन नागप्रवरेण पार्थिवो ; भृशं जगाहे द्विषतामनीकिनीम् ।
पुरा सुगुप्तां विबुधैरिवाहवे ; विरोचनो देववरूथिनीमिव ॥ ०५८ ॥

भृशं ववौ ज्वलनसखो वियद्रजः ; समावृणोन्मुहुरपि चैव सैनिकान् ।
तमेकनागं गणशो यथा गजाः ; समन्ततो द्रुतमिव मेनिरे जनाः ॥ ०५९ ॥

---

# अध्याय ०२६

सञ्जय उवाच ॥

यन्मां पार्थस्य सङ्ग्रामे कर्माणि परिपृच्छसि ।
तच्छृणुष्व महाराज पार्थो यदकरोन्मृधे ॥ ००१ ॥

रजो दृष्ट्वा समुद्भूतं श्रुत्वा च गजनिस्वनम् ।
भज्यतां भगदत्तेन कौन्तेयः कृष्णमब्रवीत् ॥ ००२ ॥

यथा प्राग्ज्योतिषो राजा गजेन मधुसूदन ।
त्वरमाणोऽभ्यतिक्रान्तो ध्रुवं तस्यैष निस्वनः ॥ ००३ ॥

इन्द्रादनवरः संख्ये गजयानविशारदः ।
प्रथमो वा द्वितीयो वा पृथिव्यामिति मे मतिः ॥ ००४ ॥

स चापि द्विरदश्रेष्ठः सदाप्रतिगजो युधि ।
सर्वशब्दातिगः संख्ये कृतकर्मा जितक्लमः ॥ ००५ ॥

सहः शस्त्रनिपातानामग्निस्पर्शस्य चानघ ।
स पाण्डवबलं व्यक्तमद्यैको नाशयिष्यति ॥ ००६ ॥

न चावाभ्यामृतेऽन्योऽस्ति शक्तस्तं प्रतिबाधितुम् ।
त्वरमाणस्ततो याहि यतः प्राग्ज्योतिषाधिपः ॥ ००७ ॥

शक्रसख्याद्द्विपबलैर्वयसा चापि विस्मितम् ।
अद्यैनं प्रेषयिष्यामि बलहन्तुः प्रियातिथिम् ॥ ००८ ॥

वचनादथ कृष्णस्तु प्रययौ सव्यसाचिनः ।
दार्यते भगदत्तेन यत्र पाण्डववाहिनी ॥ ००९ ॥

तं प्रयान्तं ततः पश्चादाह्वयन्तो महारथाः ।
संशप्तकाः समारोहन्सहस्राणि चतुर्दश ॥ ०१० ॥

दशैव तु सहस्राणि त्रिगर्तानां नराधिप ।
चत्वारि तु सहस्राणि वासुदेवस्य येऽनुगाः ॥ ०११ ॥

दार्यमाणां चमूं दृष्ट्वा भगदत्तेन मारिष ।
आहूयमानस्य च तैरभवद्धृदयं द्विधा ॥ ०१२ ॥

किं नु श्रेयस्करं कर्म भवेदिति विचिन्तयन् ।
इतो वा विनिवर्तेयं गच्छेयं वा युधिष्ठिरम् ॥ ०१३ ॥

तस्य बुद्ध्या विचार्यैतदर्जुनस्य कुरूद्वह ।

अभवद्भूयसी बुद्धिः संशप्तकवधे स्थिरा ॥ ०१४ ॥

स संनिवृत्तः सहसा कपिप्रवरकेतनः ।
एको रथसहस्राणि निहन्तुं वासवी रणे ॥ ०१५ ॥

सा हि दुर्योधनस्यासीन्मतिः कर्णस्य चोभयोः ।
अर्जुनस्य वधोपाये तेन द्वैधमकल्पयत् ॥ ०१६ ॥

स तु संवर्तयामास द्वैधीभावेन पाण्डवः ।
रथेन तु रथाग्र्याणामकरोत्तां मृषा तदा ॥ ०१७ ॥

ततः शतसहस्राणि शराणां नतपर्वणाम् ।
व्यसृजन्नर्जुने राजन्संशप्तकमहारथाः ॥ ०१८ ॥

नैव कुन्तीसुतः पार्थो नैव कृष्णो जनार्दनः ।
न हया न रथो राजन्दृश्यन्ते स्म शरैश्चिताः ॥ ०१९ ॥

यदा मोहमनुप्राप्तः सस्वेदश्च जनार्दनः ।
ततस्तान्प्रायशः पार्थो वज्रास्त्रेण निजघ्निवान् ॥ ०२० ॥

शतशः पाणयश्छिन्नाः सेषुज्यातलकार्मुकाः ।
केतवो वाजिनः सूता रथिनश्चापतन्क्षितौ ॥ ०२१ ॥

द्रुमाचलाग्राम्बुधरैः समरूपाः सुकल्पिताः ।
हतारोहाः क्षितौ पेतुर्द्विपाः पार्थशराहताः ॥ ०२२ ॥

विप्रविद्धकुथावल्गाश्छिन्नभाण्डाः परासवः ।
सारोहास्तुरगाः पेतुर्मथिताः पार्थमार्गणैः ॥ ०२३ ॥

सर्ष्टिचर्मासिनखराः समुद्गरपरश्वधाः ।
संछिन्ना बाहवः पेतुर्नृणां भल्लैः किरीटिना ॥ ०२४ ॥

बालादित्याम्बुजेन्दूनां तुल्यरूपाणि मारिष ।
संछिन्नान्यर्जुनशरैः शिरांस्युर्वीं प्रपेदिरे ॥ ०२५ ॥

जज्वालालङ्कृतैः सेना पत्रिभिः प्राणभोजनैः ।
नानालिङ्गैस्तदामित्रान्क्रुद्धे निघ्नति फल्गुने ॥ ०२६ ॥

क्षोभयन्तं तदा सेनां द्विरदं नलिनीमिव ।
धनञ्जयं भूतगणाः साधु साध्वित्यपूजयन् ॥ ०२७ ॥

दृष्ट्वा तत्कर्म पार्थस्य वासवस्येव माधवः ।
विस्मयं परमं गत्वा तलमाहत्य पूजयत् ॥ ०२८ ॥

ततः संशप्तकान्हत्वा भूयिष्ठं ये व्यवस्थिताः ।
भगदत्ताय याहीति पार्थः कृष्णमचोदयत् ॥ ०२९ ॥

---

# अध्याय ०२७

सञ्जय उवाच ॥

यियासतस्ततः कृष्णः पार्थस्याश्वान्मनोजवान् ।
अप्रैषीद्धेमसंछन्नान्द्रोणानीकाय पाण्डुरान् ॥ ००१ ॥

तं प्रयान्तं कुरुश्रेष्ठं स्वांस्त्रातुं द्रोणतापितान् ।
सुशर्मा भ्रातृभिः सार्धं युद्धार्थी पृष्ठतोऽन्वयात् ॥ ००२ ॥

ततः श्वेतहयः कृष्णमब्रवीदजितं जयः ।

एष मां भ्रातृभिः सार्धं सुशर्माह्वयतेऽच्युत ॥ ००३ ॥

दीर्यते चोत्तरेणैतत्सैन्यं नः शत्रुसूदन ।
द्वैधीभूतं मनो मेऽद्य कृतं संशप्तकैरिदम् ॥ ००४ ॥

किं नु संशप्तकान्हन्मि स्वान्रक्षाम्यहितार्दितान् ।
इति मे त्वं मतं वेत्थ तत्र किं सुकृतं भवेत् ॥ ००५ ॥

एवमुक्तस्तु दाशार्हः स्यन्दनं प्रत्यवर्तयत् ।
येन त्रिगर्ताधिपतिः पाण्डवं समुपाह्वयत् ॥ ००६ ॥

ततोऽर्जुनः सुशर्माणं विद्ध्वा सप्तभिराशुगैः ।
ध्वजं धनुश्चास्य तथा क्षुराभ्यां समकृन्तत ॥ ००७ ॥

त्रिगर्ताधिपतेश्चापि भ्रातरं षड्भिरायसैः ।
साश्वं ससूतं त्वरितः पार्थः प्रैषीद्यमक्षयम् ॥ ००८ ॥

ततो भुजगसङ्काशां सुशर्मा शक्तिमायसीम् ।
चिक्षेपार्जुनमादिश्य वासुदेवाय तोमरम् ॥ ००९ ॥

शक्तिं त्रिभिः शरैश्छित्त्वा तोमरं त्रिभिरर्जुनः ।
सुशर्माणं शरव्रातैर्मोहयित्वा न्यवर्तत ॥ ०१० ॥

तं वासवमिवायान्तं भूरिवर्षशरौघिणम् ।
राजंस्तावकसैन्यानां नोग्रं कश्चिदवारयत् ॥ ०११ ॥

ततो धनञ्जयो बाणैस्तत एव महारथान् ।
आयाद्विनिघ्नन्कौरव्यान्दहन्कक्षमिवानलः ॥ ०१२ ॥

तस्य वेगमसह्यं तु कुन्तीपुत्रस्य धीमतः ।
नाशक्नुवंस्ते संसोढुं स्पर्शमग्नेरिव प्रजाः ॥ ०१३ ॥

संवेष्टयन्ननीकानि शरवर्षेण पाण्डवः ।
सुपर्णपातवद्राजन्नायात्प्राग्ज्योतिषं प्रति ॥ ०१४ ॥

यत्तदानामयज्जिष्णुर्भरतानामपायिनाम् ।
धनुः क्षेमकरं संख्ये द्विषतामश्रुवर्धनम् ॥ ०१५ ॥

तदेव तव पुत्रस्य राजन्दुर्द्यूतदेविनः ।
कृते क्षत्रविनाशाय धनुरायच्छदर्जुनः ॥ ०१६ ॥

तथा विक्षोभ्यमाणा सा पार्थेन तव वाहिनी ।
व्यदीर्यत महाराज नौरिवासाद्य पर्वतम् ॥ ०१७ ॥

ततो दश सहस्राणि न्यवर्तन्त धनुष्मताम् ।
मतिं कृत्वा रणे क्रुद्धा वीरा जयपराजये ॥ ०१८ ॥

व्यपेतहृदयत्रास आपद्धर्मातिगो रथः ।
आर्छत्पार्थो गुरुं भारं सर्वभारसहो युधि ॥ ०१९ ॥

यथा नडवनं क्रुद्धः प्रभिन्नः षष्टिहायनः ।
मृद्नीयात्तद्वदायस्तः पार्थोऽमृद्नाच्चमूं तव ॥ ०२० ॥

तस्मिन्प्रमथिते सैन्ये भगदत्तो नराधिपः ।
तेन नागेन सहसा धनञ्जयमुपाद्रवत् ॥ ०२१ ॥

तं रथेन नरव्याघ्रः प्रत्यगृह्णादभीतवत् ।
स संनिपातस्तुमुलो बभूव रथनागयोः ॥ ०२२ ॥

कल्पिताभ्यां यथाशास्त्रं रथेन च गजेन च ।
सङ्ग्रामे चेरतुर्वीरौ भगदत्तधनञ्जयौ ॥ ०२३ ॥

ततो जीमूतसङ्काशान्नागादिन्द्र इवाभिभूः ।
अभ्यवर्षच्छरौघेण भगदत्तो धनञ्जयम् ॥ ०२४ ॥

स चापि शरवर्षं तच्छरवर्षेण वासविः ।
अप्राप्तमेव चिच्छेद भगदत्तस्य वीर्यवान् ॥ ०२५ ॥

ततः प्राग्ज्योतिषो राजा शरवर्षं निवार्य तत् ।
शरैर्जघ्ने महाबाहुं पार्थं कृष्णं च भारत ॥ ०२६ ॥

ततः स शरजालेन महताभ्यवकीर्य तौ ।
चोदयामास तं नागं वधायाच्युतपार्थयोः ॥ ०२७ ॥

तमापतन्तं द्विरदं दृष्ट्वा क्रुद्धमिवान्तकम् ।
चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्दनः ॥ ०२८ ॥

संप्राप्तमपि नेयेष परावृत्तं महाद्विपम् ।
सारोहं मृत्युसात्कर्तुं स्मरन्धर्मं धनञ्जयः ॥ ०२९ ॥

स तु नागो द्विपरथान्हयांश्चारुज्य मारिष ।
प्राहिणोन्मृत्युलोकाय ततोऽक्रुध्यद्धनञ्जयः ॥ ०३० ॥

---

# अध्याय ०२८

धृतराष्ट्र उवाच ॥

तथा क्रुद्धः किमकरोद्भगदत्तस्य पाण्डवः ।
प्राग्ज्योतिषो वा पार्थस्य तन्मे शंस यथातथम् ॥ ००१ ॥

सञ्जय उवाच ॥

प्राग्ज्योतिषेण संसक्तावुभौ दाशार्हपाण्डवौ ।
मृत्योरिवान्तिकं प्राप्तौ सर्वभूतानि मेनिरे ॥ ००२ ॥

तथा हि शरवर्षाणि पातयत्यनिशं प्रभो ।
भगदत्तो गजस्कन्धात्कृष्णयोः स्यन्दनस्थयोः ॥ ००३ ॥

अथ कार्ष्णायसैर्बाणैः पूर्णकार्मुकनिःसृतैः ।
अविध्यद्देवकीपुत्रं हेमपुङ्खैः शिलाशितैः ॥ ००४ ॥

अग्निस्पर्शसमास्तीक्ष्णा भगदत्तेन चोदिताः ।
निर्भिद्य देवकीपुत्रं क्षितिं जग्मुः शरास्ततः ॥ ००५ ॥

तस्य पार्थो धनुश्छित्त्वा शरावापं निहत्य च ।
लाडयन्निव राजानं भगदत्तमयोधयत् ॥ ००६ ॥

सोऽर्करश्मिनिभांस्तीक्ष्णांस्तोमरान्वै चतुर्दश ।
प्रेरयत्सव्यसाची तांस्त्रिधैकैकमथाच्छिनत् ॥ ००७ ॥

ततो नागस्य तद्वर्म व्यधमत्पाकशासनिः ।
शरजालेन स बभौ व्यभ्रः पर्वतराडिव ॥ ००८ ॥

ततः प्राग्ज्योतिषः शक्तिं हेमदण्डामयस्मयीम् ।
व्यसृजद्वासुदेवाय द्विधा तामर्जुनोऽच्छिनत् ॥ ००९ ॥

ततश्छत्रं ध्वजं चैव छित्त्वा राज्ञोऽर्जुनः शरैः ।
विव्याध दशभिस्तूर्णमुत्स्मयन्पर्वताधिपम् ॥ ०१० ॥

सोऽतिविद्धोऽर्जुनशरैः सुपुङ्खैः कङ्कपत्रिभिः ।

भगदत्तस्ततः क्रुद्धः पाण्डवस्य महात्मनः ॥ ०११ ॥

व्यसृजत्तोमरान्मूर्ध्नि श्वेताश्वस्योन्ननाद च ।
तैरर्जुनस्य समरे किरीटं परिवर्तितम् ॥ ०१२ ॥

परिवृत्तं किरीटं तं यमयन्नेव फल्गुनः ।
सुदृष्टः क्रियतां लोक इति राजानमब्रवीत् ॥ ०१३ ॥

एवमुक्तस्तु सङ्क्रुद्धः शरवर्षेण पाण्डवम् ।
अभ्यवर्षत्सगोविन्दं धनुरादाय भास्वरम् ॥ ०१४ ॥

तस्य पार्थो धनुश्छित्त्वा तूणीरान्संनिकृत्य च ।
त्वरमाणो द्विसप्तत्या सर्वमर्मस्वताडयत् ॥ ०१५ ॥

विद्धस्तथाप्यव्यथितो वैष्णवास्त्रमुदीरयन् ।
अभिमन्त्र्याङ्कुशं क्रुद्धो व्यसृजत्पाण्डवोरसि ॥ ०१६ ॥

विसृष्टं भगदत्तेन तदस्त्रं सर्वघातकम् ।
उरसा प्रतिजग्राह पार्थं संछाद्य केशवः ॥ ०१७ ॥

वैजयन्त्यभवन्माला तदस्त्रं केशवोरसि ।
ततोऽर्जुनः क्लान्तमनाः केशवं प्रत्यभाषत ॥ ०१८ ॥

अयुध्यमानस्तुरगान्संयन्तास्मि जनार्दन ।
इत्युक्त्वा पुण्डरीकाक्ष प्रतिज्ञां स्वां न रक्षसि ॥ ०१९ ॥

यद्यहं व्यसनी वा स्यामशक्तो वा निवारणे ।
ततस्त्वयैवं कार्यं स्यान्न तु कार्यं मयि स्थिते ॥ ०२० ॥

सबाणः सधनुश्चाहं ससुरासुरमानवान् ।
शक्तो लोकानिमाञ्जेतुं तच्चापि विदितं तव ॥ ०२१ ॥

ततोऽर्जुनं वासुदेवः प्रत्युवाचार्थवद्वचः ।
श्रृणु गुह्यमिदं पार्थ यथा वृत्तं पुरानघ ॥ ०२२ ॥

चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः ।
आत्मानं प्रविभज्येह लोकानां हितमादधे ॥ ०२३ ॥

एका मूर्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता ।
अपरा पश्यति जगत्कुर्वाणं साध्वसाधुनी ॥ ०२४ ॥

अपरा कुरुते कर्म मानुषं लोकमाश्रिता ।
शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रिकाम् ॥ ०२५ ॥

यासौ वर्षसहस्रान्ते मूर्तिरुत्तिष्ठते मम ।
वरार्हेभ्यो वराञ्श्रेष्ठांस्तस्मिन्काले ददाति सा ॥ ०२६ ॥

तं तु कालमनुप्राप्तं विदित्वा पृथिवी तदा ।
प्रायाचत वरं यं मां नरकार्थाय तं श्रृणु ॥ ०२७ ॥

देवानामसुराणां च अवध्यस्तनयोऽस्तु मे ।
उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि ॥ ०२८ ॥

एवं वरमहं श्रुत्वा जगत्यास्तनये तदा ।
अमोघमस्त्रमददं वैष्णवं तदहं पुरा ॥ ०२९ ॥

अवोचं चैतदस्त्रं वै ह्यमोघं भवतु क्षमे ।
नरकस्याभिरक्षार्थं नैनं कश्चिद्वधिष्यति ॥ ०३० ॥

अनेनास्त्रेण ते गुप्तः सुतः परबलार्दनः ।
भविष्यति दुराधर्षः सर्वलोकेषु सर्वदा ॥ ०३१ ॥

तथेत्युक्त्वा गता देवी कृतकामा मनस्विनी ।
स चाप्यासीद्दुराधर्षो नरकः शत्रुतापनः ॥ ०३२ ॥

तस्मात्प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम् ।
नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ०३३ ॥

तन्मया त्वत्कृतेनैतदन्यथा व्यपनाशितम् ।
वियुक्तं परमास्त्रेण जहि पार्थ महासुरम् ॥ ०३४ ॥

वैरिणं युधि दुर्धर्षं भगदत्तं सुरद्विषम् ।
यथाहं जघ्निवान्पूर्वं हितार्थं नरकं तथा ॥ ०३५ ॥

एवमुक्तस्ततः पार्थः केशवेन महात्मना ।
भगदत्तं शितैर्बाणैः सहसा समवाकिरत् ॥ ०३६ ॥

ततः पार्थो महाबाहुरसंभ्रान्तो महामनाः ।
कुम्भयोरन्तरे नागं नाराचेन समार्पयत् ॥ ०३७ ॥

समासाद्य तु तं नागं बाणो वज्र इवाचलम् ।
अभ्यगात्सह पुङ्खेन वल्मीकमिव पन्नगः ॥ ०३८ ॥

स तु विष्टभ्य गात्राणि दन्ताभ्यामवनिं ययौ ।
नदन्नार्तस्वरं प्राणानुत्ससर्ज महाद्विपः ॥ ०३९ ॥

ततश्चन्द्रार्धबिम्बेन शरेण नतपर्वणा ।
बिभेद हृदयं राज्ञो भगदत्तस्य पाण्डवः ॥ ०४० ॥

स भिन्नहृदयो राजा भगदत्तः किरीटिना ।
शरासनं शरांश्चैव गतासुः प्रमुमोच ह ॥ ०४१ ॥

शिरसस्तस्य विभ्रष्टः पपात च वराङ्कुशः ।

नालताडनविभ्रष्टं पलाशं नलिनादिव ॥ ०४२ ॥

स हेममाली तपनीयभाण्डा ;त्पपात नागाद्गिरिसंनिकाशात् ।
सुपुष्पितो मारुतवेगरुग्णो ; महीधराग्रादिव कर्णिकारः ॥ ०४३ ॥

निहत्य तं नरपतिमिन्द्रविक्रमं ; सखायमिन्द्रस्य तथैन्द्रिराहवे ।
ततोऽपरांस्तव जयकाङ्क्षिणो नरा ;न्बभञ्ज वायुर्बलवान्द्रुमानिव ॥ ०४४ ॥

---

# अध्याय ०२९

सञ्जय उवाच ॥

प्रियमिन्द्रस्य सततं सखायममितौजसम् ।
हत्वा प्राग्ज्योतिषं पार्थः प्रदक्षिणमवर्तत ॥ ००१ ॥

ततो गान्धारराजस्य सुतौ परपुरञ्जयौ ।
आर्छेतामर्जुनं संख्ये भ्रातरौ वृषकाचलौ ॥ ००२ ॥

तौ समेत्यार्जुनं वीरौ पुरः पश्चाच्च धन्विनौ ।
अविध्येतां महावेगैर्निशितैराशुगैर्भृशम् ॥ ००३ ॥

वृषकस्य हयान्सूतं धनुश्छत्रं रथं ध्वजम् ।
तिलशो व्यधमत्पार्थः सौबलस्य शितैः शरैः ॥ ००४ ॥

ततोऽर्जुनः शरव्रातैर्नानाप्रहरणैरपि ।
गान्धारान्व्याकुलांश्चक्रे सौबलप्रमुखान्पुनः ॥ ००५ ॥

ततः पञ्चशतान्वीरान्गान्धारानुद्यतायुधान् ।

प्राहिणोन्मृत्युलोकाय क्रुद्धो बाणैर्धनञ्जयः ॥ ००६ ॥

हताश्वात्तु रथात्तूर्णमवतीर्य महाभुजः ।
आरुरोह रथं भ्रातुरन्यच्च धनुराददे ॥ ००७ ॥

तावेकरथमारूढौ भ्रातरौ वृषकाचलौ ।
शरवर्षेण बीभत्सुमविध्येतां पुनः पुनः ॥ ००८ ॥

स्यालौ तव महात्मानौ राजानौ वृषकाचलौ ।
भृशं निजघ्नतुः पार्थमिन्द्रं वृत्रबलाविव ॥ ००९ ॥

लब्धलक्ष्यौ तु गान्धारावहतां पाण्डवं पुनः ।
निदाघवार्षिकौ मासौ लोकं घर्माम्बुभिर्यथा ॥ ०१० ॥

तौ रथस्थौ नरव्याघ्रौ राजानौ वृषकाचलौ ।
संश्लिष्टाङ्गौ स्थितौ राजञ्जघानैकेषुणार्जुनः ॥ ०११ ॥

तौ रथात्सिंहसङ्काशौ लोहिताक्षौ महाभुजौ ।
गतासू पेततुर्वीरौ सोदर्यावेकलक्षणौ ॥ ०१२ ॥

तयोर्देहौ रथाद्भूमिं गतौ बन्धुजनप्रियौ ।
यशो दश दिशः पुण्यं गमयित्वा व्यवस्थितौ ॥ ०१३ ॥

दृष्ट्वा विनिहतौ संख्ये मातुलावपलायिनौ ।
भृशं मुमुचुरश्रूणि पुत्रास्तव विशां पते ॥ ०१४ ॥

निहतौ भ्रातरौ दृष्ट्वा मायाशतविशारदः ।
कृष्णौ संमोहयन्मायां विदधे शकुनिस्ततः ॥ ०१५ ॥

लगुडायोगुडाश्मानः शतघ्न्यश्च सशक्तयः ।
गदापरिघनिस्त्रिंशशूलमुद्गरपट्टिशाः ॥ ०१६ ॥

सकम्पनर्ष्टिनखरा मुसलानि परश्वधाः ।
क्षुराः क्षुरप्रनालीका वत्सदन्तास्त्रिसंधिनः ॥ ०१७ ॥

चक्राणि विशिखाः प्रासा विविधान्यायुधानि च ।
प्रपेतुः सर्वतो दिग्भ्यः प्रदिग्भ्यश्चार्जुनं प्रति ॥ ०१८ ॥

खरोष्ट्रमहिषाः सिंहा व्याघ्राः सृमरचिल्लिकाः ।
ऋक्षाः सालावृका गृध्राः कपयोऽथ सरीसृपाः ॥ ०१९ ॥

विविधानि च रक्षांसि क्षुधितान्यर्जुनं प्रति ।
सङ्क्रुद्धान्यभ्यधावन्त विविधानि वयांसि च ॥ ०२० ॥

ततो दिव्यास्त्रविच्छूरः कुन्तीपुत्रो धनञ्जयः ।
विसृजन्निषुजालानि सहसा तान्यताडयत् ॥ ०२१ ॥

ते हन्यमानाः शूरेण प्रवरैः सायकैर्दृढैः ।
विरुवन्तो महारावान्विनेशुः सर्वतो हताः ॥ ०२२ ॥

ततस्तमः प्रादुरभूदर्जुनस्य रथं प्रति ।
तस्माच्च तमसो वाचः क्रूराः पार्थमभर्त्सयन् ॥ ०२३ ॥

तत्तमोऽस्त्रेण महता ज्योतिषेणार्जुनोऽवधीत् ।
हते तस्मिञ्जलौघास्तु प्रादुरासन्भयानकाः ॥ ०२४ ॥

अम्भसस्तस्य नाशार्थमादित्यास्त्रमथार्जुनः ।
प्रायुङ्क्ताम्भस्ततस्तेन प्रायशोऽस्त्रेण शोषितम् ॥ ०२५ ॥

एवं बहुविधा मायाः सौबलस्य कृताः कृताः ।
जघानास्त्रबलेनाशु प्रहसन्नर्जुनस्तदा ॥ ०२६ ॥

तथा हतासु मायासु त्रस्तोऽर्जुनशराहतः ।
अपायाज्जवनैरश्वैः शकुनिः प्राकृतो यथा ॥ ०२७ ॥

ततोऽर्जुनोऽस्त्रविच्छैघ्र्यं दर्शयन्नात्मनोऽरिषु ।
अभ्यवर्षच्छरौघेण कौरवाणामनीकिनीम् ॥ ०२८ ॥

सा हन्यमाना पार्थेन पुत्रस्य तव वाहिनी ।
द्वैधीभूता महाराज गङ्गेवासाद्य पर्वतम् ॥ ०२९ ॥

द्रोणमेवान्वपद्यन्त केचित्तत्र महारथाः ।
केचिद्दुर्योधनं राजन्नर्द्यमानाः किरीटिना ॥ ०३० ॥

नापश्याम ततस्त्वेतत्सैन्यं वै तमसावृतम् ।
गाण्डीवस्य च निर्घोषः श्रुतो दक्षिणतो मया ॥ ०३१ ॥

शङ्खदुन्दुभिनिर्घोषं वादित्राणां च निस्वनम् ।
गाण्डीवस्य च निर्घोषो व्यतिक्रम्यास्पृशद्दिवम् ॥ ०३२ ॥

ततः पुनर्दक्षिणतः सङ्ग्रामश्चित्रयोधिनाम् ।
सुयुद्धमर्जुनस्यासीदहं तु द्रोणमन्वगाम् ॥ ०३३ ॥

नानाविधान्यनीकानि पुत्राणां तव भारत ।
अर्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः ॥ ०३४ ॥

तं वासवमिवायान्तं भूरिवर्षशरौघिणम् ।
महेष्वासं नरव्याघ्रं नोग्रं कश्चिदवारयत् ॥ ०३५ ॥

ते हन्यमानाः पार्थेन त्वदीया व्यथिता भृशम् ।
स्वानेव बहवो जघ्नुर्विद्रवन्तस्ततस्ततः ॥ ०३६ ॥

तेऽर्जुनेन शरा मुक्ताः कङ्कपत्रास्तनुच्छिदः ।

शलभा इव संपेतुः संवृण्वाना दिशो दश ॥ ०३७ ॥

तुरगं रथिनं नागं पदातिमपि मारिष ।
विनिर्भिद्य क्षितिं जग्मुर्वल्मीकमिव पन्नगाः ॥ ०३८ ॥

न च द्वितीयं व्यसृजत्कुञ्जराश्वनरेषु सः ।
पृथगेकशरारुग्णा निपेतुस्ते गतासवः ॥ ०३९ ॥

हतैर्मनुष्यैस्तुरगैश्च सर्वतः ; शराभिवृष्टैर्द्विरदैश्च पातितैः ।
तदा श्वगोमायुबडाभिनादितं ; विचित्रमायोधशिरो बभूव ह ॥ ०४० ॥

पिता सुतं त्यजति सुहृद्वरं सुहृ ;त्तथैव पुत्रः पितरं शरातुरः ।
स्वरक्षणे कृतमतयस्तदा जना ;स्त्यजन्ति वाहानपि पार्थपीडिताः ॥ ०४१ ॥

---

# अध्याय ०३०

धृतराष्ट्र उवाच ॥

तेष्वनीकेषु भग्नेषु पाण्डुपुत्रेण सञ्जय ।
चलितानां द्रुतानां च कथमासीन्मनो हि वः ॥ ००१ ॥

अनीकानां प्रभग्नानां व्यवस्थानमपश्यताम् ।
दुष्करं प्रतिसंधानं तन्ममाचक्ष्व सञ्जय ॥ ००२ ॥

सञ्जय उवाच ॥

तथापि तव पुत्रस्य प्रियकामा विशां पते ।
यशः प्रवीरा लोकेषु रक्षन्तो द्रोणमन्वयुः ॥ ००३ ॥

समुद्यतेषु शस्त्रेषु संप्राप्ते च युधिष्ठिरे ।
अकुर्वन्नार्यकर्माणि भैरवे सत्यभीतवत् ॥ ००४ ॥

अन्तरं भीमसेनस्य प्रापतन्नमितौजसः ।
सात्यकेश्चैव शूरस्य धृष्टद्युम्नस्य चाभिभो ॥ ००५ ॥

द्रोणं द्रोणमिति क्रूराः पाञ्चालाः समचोदयन् ।
मा द्रोणमिति पुत्रास्ते कुरून्सर्वानचोदयन् ॥ ००६ ॥

द्रोणं द्रोणमिति ह्येके मा द्रोणमिति चापरे ।
कुरूणां पाण्डवानां च द्रोणद्यूतमवर्तत ॥ ००७ ॥

यं यं स्म भजते द्रोणः पाञ्चालानां रथव्रजम् ।
तत्र तत्र स्म पाञ्चाल्यो धृष्टद्युम्नोऽथ धीयते ॥ ००८ ॥

यथाभागविपर्यासे सङ्ग्रामे भैरवे सति ।
वीराः समासदन्वीरानगच्छन्भीरवः परान् ॥ ००९ ॥

अकम्पनीयाः शत्रूणां बभूवुस्तत्र पाण्डवाः ।
अकम्पयंस्त्वनीकानि स्मरन्तः क्लेशमात्मनः ॥ ०१० ॥

ते त्वमर्षवशं प्राप्ता ह्रीमन्तः सत्त्वचोदिताः ।
त्यक्त्वा प्राणान्न्यवर्तन्त घ्नन्तो द्रोणं महाहवे ॥ ०११ ॥

अयसामिव संपातः शिलानामिव चाभवत् ।
दीव्यतां तुमुले युद्धे प्राणैरमिततेजसाम् ॥ ०१२ ॥

न तु स्मरन्ति सङ्ग्राममपि वृद्धास्तथाविधम् ।
दृष्टपूर्वं महाराज श्रुतपूर्वमथापि वा ॥ ०१३ ॥

प्राकम्पतेव पृथिवी तस्मिन्वीरावसादने ।
प्रवर्तता बलौघेन महता भारपीडिता ॥ ०१४ ॥

घूर्णतो हि बलौघस्य दिवं स्तब्ध्वेव निस्वनः ।
अजातशत्रोः क्रुद्धस्य पुत्रस्य तव चाभवत् ॥ ०१५ ॥

समासाद्य तु पाण्डूनामनीकानि सहस्रशः ।
द्रोणेन चरता संख्ये प्रभग्नानि शितैः शरैः ॥ ०१६ ॥

तेषु प्रमथ्यमानेषु द्रोणेनाद्भुतकर्मणा ।
पर्यवारयदासाद्य द्रोणं सेनापतिः स्वयम् ॥ ०१७ ॥

तदद्भुतमभूद्युद्धं द्रोणपाञ्चाल्ययोस्तदा ।
नैव तस्योपमा काचित्संभवेदिति मे मतिः ॥ ०१८ ॥

ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीम् ।
शरस्फुलिङ्गश्चापार्चिर्दहन्कक्षमिवानलः ॥ ०१९ ॥

तं दहन्तमनीकानि द्रोणपुत्रः प्रतापवान् ।
पूर्वाभिभाषी सुश्लक्ष्णं स्मयमानोऽभ्यभाषत ॥ ०२० ॥

नील किं बहुभिर्दग्धैस्तव योधैः शरार्चिषा ।
मयैकेन हि युध्यस्व क्रुद्धः प्रहर चाशुगैः ॥ ०२१ ॥

तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम् ।
व्याकोशपद्माभमुखं नीलो विव्याध सायकैः ॥ ०२२ ॥

तेनातिविद्धः सहसा द्रौणिर्भल्लैः शितैस्त्रिभिः ।
धनुर्ध्वजं च छत्रं च द्विषतः स न्यकृन्तत ॥ ०२३ ॥

सोत्प्लुत्य स्यन्दनात्तस्मान्नीलश्चर्मवरासिधृक् ।

द्रोणायनेः शिरः कायाद्धर्तुमैच्छत्पतत्रिवत् ॥ ०२४ ॥

तस्योद्यतासेः सुनसं शिरः कायात्सकुण्डलम् ।
भल्लेनापाहरद्द्रौणिः स्मयमान इवानघ ॥ ०२५ ॥

संपूर्णचन्द्राभमुखः पद्मपत्रनिभेक्षणः ।
प्रांशुरुत्पलगर्भाभो निहतो न्यपतत्क्षितौ ॥ ०२६ ॥

ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला ।
आचार्यपुत्रेण हते नीले ज्वलिततेजसि ॥ ०२७ ॥

अचिन्तयंश्च ते सर्वे पाण्डवानां महारथाः ।
कथं नो वासविस्त्रायाच्छत्रुभ्य इति मारिष ॥ ०२८ ॥

दक्षिणेन तु सेनायाः कुरुते कदनं बली ।
संशप्तकावशेषस्य नारायणबलस्य च ॥ ०२९ ॥

---

# अध्याय ०३१

सञ्जय उवाच ॥

प्रतिघातं तु सैन्यस्य नामृष्यत वृकोदरः ।
सोऽभिनद्बाह्लिकं षष्ट्या कर्णं च दशभिः शरैः ॥ ००१ ॥

तस्य द्रोणः शितैर्बाणैस्तीक्ष्णधारैरयस्मयैः ।
जीवितान्तमभिप्रेप्सुर्मर्मण्याशु जघान ह ॥ ००२ ॥

कर्णो द्वादशभिर्बाणैरश्वत्थामा च सप्तभिः ।
षड्भिर्दुर्योधनो राजा तत एनमवाकिरत् ॥ ००३ ॥

भीमसेनोऽपि तान्सर्वान्प्रत्यविध्यन्महाबलः ।
द्रोणं पञ्चाशतेषूणां कर्णं च दशभिः शरैः ॥ ००४ ॥

दुर्योधनं द्वादशभिर्द्रौणिं चाष्टाभिराशुगैः ।
आरावं तुमुलं कुर्वन्नभ्यवर्तत तान्रणे ॥ ००५ ॥

तस्मिन्संत्यजति प्राणान्मृत्युसाधारणीकृते ।
अजातशत्रुस्तान्योधान्भीमं त्रातेत्यचोदयत् ॥ ००६ ॥

ते ययुर्भीमसेनस्य समीपममितौजसः ।
युयुधानप्रभृतयो माद्रीपुत्रौ च पाण्डवौ ॥ ००७ ॥

ते समेत्य सुसंरब्धाः सहिताः पुरुषर्षभाः ।
महेष्वासवरैर्गुप्तं द्रोणानीकं बिभित्सवः ॥ ००८ ॥

समापेतुर्महावीर्या भीमप्रभृतयो रथाः ।
तान्प्रत्यगृह्णादव्यग्रो द्रोणोऽपि रथिनां वरः ॥ ००९ ॥

महाबलानतिरथान्वीरान्समरशोभिनः ।
बाह्यं मृत्युभयं कृत्वा तावकाः पाण्डवान्ययुः ॥ ०१० ॥

सादिनः सादिनोऽभ्यघ्नंस्तथैव रथिनो रथान् ।
आसीच्छक्त्यसिसंपातो युद्धमासीत्परश्वधैः ॥ ०११ ॥

निकृष्टमसियुद्धं च बभूव कटुकोदयम् ।
कुञ्जराणां च संघातैर्युद्धमासीत्सुदारुणम् ॥ ०१२ ॥

अपतत्कुञ्जरादन्यो हयादन्यस्त्ववाक्शिराः ।

नरो बाणेन निर्भिन्नो रथादन्यश्च मारिष ॥ ०१३ ॥

तत्रान्यस्य च संमर्दे पतितस्य विवर्मणः ।
शिरः प्रध्वंसयामास वक्षस्याक्रम्य कुञ्जरः ॥ ०१४ ॥

अपरेऽप्यपराञ्जघ्नुर्वारणाः पतितान्नरान् ।
विषाणैश्चावनिं गत्वा व्यभिन्दन्रथिनो बहून् ॥ ०१५ ॥

नरान्त्रैः केचिदपरे विषाणालग्नसंस्रवैः ।
बभ्रमुः शतशो नागा मृद्नन्तः शतशो नरान् ॥ ०१६ ॥

कांस्यायसतनुत्राणान्नराश्वरथकुञ्जरान् ।
पतितान्पोथयां चक्रुर्द्विपाः स्थूलनडानिव ॥ ०१७ ॥

गृध्रपत्राधिवासांसि शयनानि नराधिपाः ।
ह्रीमन्तः कालसंपक्वाः सुदुःखान्यधिशेरते ॥ ०१८ ॥

हन्ति स्मात्र पिता पुत्रं रथेनाभ्यतिवर्तते ।
पुत्रश्च पितरं मोहान्निर्मर्यादमवर्तत ॥ ०१९ ॥

अक्षो भग्नो ध्वजश्छिन्नश्छत्रमुर्व्यां निपातितम् ।
युगार्धं छिन्नमादाय प्रदुद्राव तथा हयः ॥ ०२० ॥

सासिर्बाहुर्निपतितः शिरश्छिन्नं सकुण्डलम् ।
गजेनाक्षिप्य बलिना रथः सञ्चूर्णितः क्षितौ ॥ ०२१ ॥

रथिना ताडितो नागो नाराचेनापतद्व्यसुः ।
सारोहश्चापतद्वाजी गजेनाताडितो भृशम् ॥ ०२२ ॥

निर्मर्यादं महद्युद्धमवर्तत सुदारुणम् ।
हा तात हा पुत्र सखे क्वासि तिष्ठ क्व धावसि ॥ ०२३ ॥

प्रहराहर जह्येनं स्मितक्ष्वेडितगर्जितैः ।
इत्येवमुच्चरन्त्यः स्म श्रूयन्ते विविधा गिरः ॥ ०२४ ॥

नरस्याश्वस्य नागस्य समसज्जत शोणितम् ।
उपाशाम्यद्रजो भौमं भीरून्कश्मलमाविशत् ॥ ०२५ ॥

आसीत्केशपरामर्शो मुष्टियुद्धं च दारुणम् ।
नखैर्दन्तैश्च शूराणमद्वीपे द्वीपमिच्छताम् ॥ ०२६ ॥

तत्राच्छिद्यत वीरस्य सखङ्गो बाहुरुद्यतः ।
सधनुश्चापरस्यापि सशरः साङ्कुशस्तथा ॥ ०२७ ॥

प्राक्रोशदन्यमन्योऽत्र तथान्यो विमुखोऽद्रवत् ।
अन्यः प्राप्तस्य चान्यस्य शिरः कायादपाहरत् ॥ ०२८ ॥

शब्दमभ्यद्रवच्चान्यः शब्दादन्योऽद्रवद्भृशम् ।
स्वानन्योऽथ परानन्यो जघान निशितैः शरैः ॥ ०२९ ॥

गिरिशृङ्गोपमश्चात्र नाराचेन निपातितः ।
मातङ्गो न्यपतद्भूमौ नदीरोध इवोष्णगे ॥ ०३० ॥

तथैव रथिनं नागः क्षरन्गिरिरिवारुजत् ।
अध्यतिष्ठत्पदा भूमौ सहाश्वं सहसारथिम् ॥ ०३१ ॥

शूरान्प्रहरतो दृष्ट्वा कृतास्त्रान्रुधिरोक्षितान् ।
बहूनप्याविशन्मोहो भीरून्हृदयदुर्बलान् ॥ ०३२ ॥

सर्वमाविग्नमभवन्न प्राज्ञायत किञ्चन ।
सैन्ये च रजसा ध्वस्ते निर्मर्यादमवर्तत ॥ ०३३ ॥

ततः सेनापतिः शीघ्रमयं काल इति ब्रुवन् ।
नित्याभित्वरितानेव त्वरयामास पाण्डवान्  ॥ ०३४  ॥

कुर्वन्तः शासनं तस्य पाण्डवेया यशस्विनः ।
सरो हंसा इवापेतुर्घ्नन्तो द्रोणरथं प्रति  ॥ ०३५  ॥

गृह्णीताद्रवतान्योन्यं विभीता विनिकृन्तत ।
इत्यासीत्तुमुलः शब्दो दुर्धर्षस्य रथं प्रति  ॥ ०३६  ॥

ततो द्रोणः कृपः कर्णो द्रौणी राजा जयद्रथः ।
विन्दानुविन्दाववन्त्यौ शल्यश्चैनानवारयन्  ॥ ०३७  ॥

ते त्वार्यधर्मसंरब्धा दुर्निवार्या दुरासदाः ।
शरार्ता न जुहुर्द्रोणं पाञ्चालाः पाण्डवैः सह  ॥ ०३८  ॥

ततो द्रोणोऽभिसङ्क्रुद्धो विसृजञ्शतशः शरान् ।
चेदिपाञ्चालपाण्डूनामकरोत्कदनं महत्  ॥ ०३९  ॥

तस्य ज्यातलनिर्घोषः शुश्रुवे दिक्षु मारिष ।
वज्रसंघातसङ्काशस्त्रासयन्पाण्डवान्बहून्  ॥ ०४०  ॥

एतस्मिन्नन्तरे जिष्णुर्हत्वा संशप्तकान्बली ।
अभ्ययात्तत्र यत्र स्म द्रोणः पाण्डून्प्रमर्दति  ॥ ०४१  ॥

तं शरौघमहावर्तं शोणितोदं महाह्रदम् ।
तीर्णः संशप्तकान्हत्वा प्रत्यदृश्यत फल्गुनः  ॥ ०४२  ॥

तस्य कीर्तिमतो लक्ष्म सूर्यप्रतिमतेजसः ।
दीप्यमानमपश्याम तेजसा वानरध्वजम्  ॥ ०४३  ॥

संशप्तकसमुद्रं तमुच्छोष्यास्त्रगभस्तिभिः ।

स पाण्डवयुगान्तार्कः कुरूनप्यभ्यतीतपत् ॥ ०४४ ॥

प्रददाह कुरून्सर्वानर्जुनः शस्त्रतेजसा ।
युगान्ते सर्वभूतानि धूमकेतुरिवोत्थितः ॥ ०४५ ॥

तेन बाणसहस्रौघैर्गजाश्वरथयोधिनः ।
ताड्यमानाः क्षितिं जग्मुर्मुक्तशस्त्राः शरार्दिताः ॥ ०४६ ॥

केचिदार्तस्वरं चक्रुर्विनेदुरपरे पुनः ।
पार्थबाणहताः केचिन्निपेतुर्विगतासवः ॥ ०४७ ॥

तेषामुत्पततां कांश्चित्पतितांश्च पराङ्मुखान् ।
न जघानार्जुनो योधान्योधव्रतमनुस्मरन् ॥ ०४८ ॥

ते विशीर्णरथाश्वेभाः प्रायशश्च पराङ्मुखाः ।
कुरवः कर्ण कर्णेति हा हेति च विचुक्रुशुः ॥ ०४९ ॥

तमाधिरथिराक्रन्दं विज्ञाय शरणैषिणाम् ।
मा भैष्टेति प्रतिश्रुत्य ययावभिमुखोऽर्जुनम् ॥ ०५० ॥

स भारतरथश्रेष्ठः सर्वभारतहर्षणः ।
प्रादुश्चक्रे तदाग्नेयमस्त्रमस्त्रविदां वरः ॥ ०५१ ॥

तस्य दीप्तशरौघस्य दीप्तचापधरस्य च ।
शरौघाञ्शरजालेन विदुधाव धनञ्जयः ॥ ०५२ ॥

अस्त्रमस्त्रेण संवार्य प्राणदद्विसृजञ्शरान् ॥ ०५२ ॥

धृष्टद्युम्नश्च भीमश्च सात्यकिश्च महारथः ।
विव्यधुः कर्णमासाद्य त्रिभिस्त्रिभिरजिह्मगैः ॥ ०५३ ॥

अर्जुनास्त्रं तु राधेयः संवार्य शरवृष्टिभिः ।
तेषां त्रयाणां चापानि चिच्छेद विशिखैस्त्रिभिः ॥ ०५४ ॥

ते निकृत्तायुधाः शूरा निर्विषा भुजगा इव ।
रथशक्तीः समुत्क्षिप्य भृशं सिंहा इवानदन् ॥ ०५५ ॥

ता भुजाग्रैर्महावेगा विसृष्टा भुजगोपमाः ।
दीप्यमाना महाशक्त्यो जग्मुराधिरथिं प्रति ॥ ०५६ ॥

ता निकृत्य शितैर्बाणैस्त्रिभिस्त्रिभिरजिह्मगैः ।
ननाद बलवान्कर्णः पार्थाय विसृजञ्शरान् ॥ ०५७ ॥

अर्जुनश्चापि राधेयं विद्ध्वा सप्तभिराशुगैः ।
कर्णादवरजं बाणैर्जघान निशितैस्त्रिभिः ॥ ०५८ ॥

ततः शत्रुञ्जयं हत्वा पार्थः षड्भिरजिह्मगैः ।
जहार सद्यो भल्लेन विपाटस्य शिरो रथात् ॥ ०५९ ॥

पश्यतां धार्तराष्ट्राणामेकेनैव किरीटिना ।
प्रमुखे सूतपुत्रस्य सोदर्या निहतास्त्रयः ॥ ०६० ॥

ततो भीमः समुत्पत्य स्वरथाद्वैनतेयवत् ।
वरासिना कर्णपक्षाञ्जघान दश पञ्च च ॥ ०६१ ॥

पुनः स्वरथमास्थाय धनुरादाय चापरम् ।
विव्याध दशभिः कर्णं सूतमश्वांश्च पञ्चभिः ॥ ०६२ ॥

धृष्टद्युम्नोऽप्यसिवरं चर्म चादाय भास्वरम् ।
जघान चन्द्रवर्माणं बृहत्क्षत्रं च पौरवम् ॥ ०६३ ॥

ततः स्वरथमास्थाय पाञ्चाल्योऽन्यच्च कार्मुकम् ।

आदाय कर्णं विव्याध त्रिसप्तत्या नदन्रणे ॥ ०६४ ॥

शैनेयोऽप्यन्यदादाय धनुरिन्द्रायुधद्युति ।
सूतपुत्रं चतुःषष्ट्या विद्धा सिंह इवानदत् ॥ ०६५ ॥

भल्लभ्यां साधुमुक्ताभ्यां छित्त्वा कर्णस्य कार्मुकम् ।
पुनः कर्णं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ०६६ ॥

ततो दुर्योधनो द्रोणो राजा चैव जयद्रथः ।
निमज्जमानं राधेयमुज्जह्रुः सात्यकार्णवात् ॥ ०६७ ॥

धृष्टद्युम्नश्च भीमश्च सौभद्रोऽर्जुन एव च ।
नकुलः सहदेवश्च सात्यकिं जुगुपू रणे ॥ ०६८ ॥

एवमेष महारौद्रः क्षयार्थं सर्वधन्विनाम् ।
तावकानां परेषां च त्यक्त्वा प्राणानभूद्रणः ॥ ०६९ ॥

पदातिरथनागाश्वैर्गजाश्वरथपत्तयः ।
रथिनो नागपत्त्यश्वै रथपत्ती रथद्विपैः ॥ ०७० ॥

अश्वैरश्वा गजैर्नागा रथिनो रथिभिः सह ।
संसक्ताः समदृश्यन्त पत्तयश्चापि पत्तिभिः ॥ ०७१ ॥

एवं सुकलिलं युद्धमासीत्क्रव्यादहर्षणम् ।
महद्भिस्तैरभीतानां यमराष्ट्रविवर्धनम् ॥ ०७२ ॥

ततो हता नररथवाजिकुञ्जरै ;रनेकशो द्विपरथवाजिपत्तयः ।
गजैर्गजा रथिभिरुदायुधा रथा ; हयैर्हयाः पत्तिगणैश्च पत्तयः ॥ ०७३ ॥

रथैर्द्विपा द्विरदवरैर्महाहया ; हयैर्नरा वररथिभिश्च वाजिनः ।
निरस्तजिह्वादशनेक्षणाः क्षितौ ; क्षयं गताः प्रमथितवर्मभूषणाः ॥ ०७४ ॥

तथा परैर्बहुकरणैर्वरायुधै ;र्हता गताः प्रतिभयदर्शनाः क्षितिम् ।
विपोथिता हयगजपादताडिता ; भृशाकुला रथखुरनेमिभिर्हताः ॥ ०७५ ॥

प्रमोदने श्वापदपक्षिरक्षसां ; जनक्षये वर्तति तत्र दारुणे ।
महाबलास्ते कुपिताः परस्परं ; निषूदयन्तः प्रविचेरुरोजसा ॥ ०७६ ॥

ततो बले भृशलुलिते परस्परं ; निरीक्षमाणे रुधिरौघसंप्लुते ।
दिवाकरेऽस्तङ्गिरिमास्थिते शनै ;रुभे प्रयाते शिबिराय भारत ॥ ०७७ ॥

---

# अभिमन्युवधपर्व

## अध्याय ०३२

सञ्जय उवाच ॥

पूर्वमस्मासु भग्नेषु फल्गुनेनामितौजसा ।
द्रोणे च मोघसङ्कल्पे रक्षिते च युधिष्ठिरे ॥ ००१ ॥

सर्वे विध्वस्तकवचास्तावका युधि निर्जिताः ।
रजस्वला भृशोद्विग्ना वीक्षमाणा दिशो दश ॥ ००२ ॥

अवहारं ततः कृत्वा भारद्वाजस्य संमते ।
लब्धलक्ष्यैः परैर्दीना भृशावहसिता रणे ॥ ००३ ॥

श्लाघमानेषु भूतेषु फल्गुनस्यामितान्गुणान् ।
केशवस्य च सौहार्दे कीर्त्यमानेऽर्जुनं प्रति ॥ ००४ ॥

अभिशस्ता इवाभूवन्ध्यानमूकत्वमास्थिताः ॥ ००४ ॥

ततः प्रभातसमये द्रोणं दुर्योधनोऽब्रवीत् ।
प्रणयादभिमानाच्च द्विषद्वृद्ध्या च दुर्मनाः ॥ ००५ ॥

शृण्वतां सर्वभूतानां संरब्धो वाक्यकोविदः ॥ ००५ ॥

नूनं वयं वध्यपक्षे भवतो ब्रह्मवित्तम ।
तथा हि नाग्रहीः प्राप्तं समीपेऽद्य युधिष्ठिरम् ॥ ००६ ॥

इच्छतस्ते न मुच्येत चक्षुःप्राप्तो रणे रिपुः ।
जिघृक्षतो रक्ष्यमाणः सामरैरपि पाण्डवैः ॥ ००७ ॥

वरं दत्त्वा मम प्रीतः पश्चाद्विकृतवानसि ।
आशाभङ्गं न कुर्वन्ति भक्तस्यार्याः कथञ्चन ॥ ००८ ॥

ततोऽप्रीतस्तथोक्तः स भारद्वाजोऽब्रवीन्नृपम् ।
नार्हसे मान्यथा ज्ञातुं घटमानं तव प्रिये ॥ ००९ ॥

ससुरासुरगन्धर्वाः सयक्षोरगराक्षसाः ।
नालं लोका रणे जेतुं पाल्यमानं किरीटिना ॥ ०१० ॥

विश्वसृग्यत्र गोविन्दः पृतनारिस्तहार्जुनः ।
तत्र कस्य बलं क्रामेदन्यत्र त्र्यम्बकात्प्रभोः ॥ ०११ ॥

सत्यं तु ते ब्रवीम्यद्य नैतज्जात्वन्यथा भवेत् ।
अद्यैषां प्रवरं वीरं पातयिष्ये महारथम् ॥ ०१२ ॥

तं च व्यूहं विधास्यामि योऽभेद्यस्त्रिदशैरपि ।
योगेन केनचिद्राजन्नर्जुनस्त्वपनीयताम् ॥ ०१३ ॥

न ह्यज्ञातमसाध्यं वा तस्य संख्येऽस्ति किञ्चन ।
तेन ह्युपात्तं बलवत्सर्वज्ञानमितस्ततः ॥ ०१४ ॥

द्रोणेन व्याहृते त्वेवं संशप्तकगणाः पुनः ।
आह्वयन्नर्जुनं संख्ये दक्षिणामभितो दिशम् ॥ ०१५ ॥

तत्रार्जुनस्याथ परैः सार्धं समभवद्रणः ।
तादृशो यादृशो नान्यः श्रुतो दृष्टोऽपि वा क्वचित् ॥ ०१६ ॥

ततो द्रोणेन विहितो राजन्व्यूहो व्यरोचत ।
चरन्मध्यंदिने सूर्यः प्रतपन्निव दुर्दृशः ॥ ०१७ ॥

तं चाभिमन्युर्वचनात्पितुर्ज्येष्ठस्य भारत ।
बिभेद दुर्भिदं संख्ये चक्रव्यूहमनेकधा ॥ ०१८ ॥

स कृत्वा दुष्करं कर्म हत्वा वीरान्सहस्रशः ।
षट्सु वीरेषु संसक्तो दौःशासनिवशं गतः ॥ ०१९ ॥

वयं परमसंहृष्टाः पाण्डवाः शोककर्शिताः ।
सौभद्रे निहते राजन्नवहारमकुर्वत ॥ ०२० ॥

धृतराष्ट्र उवाच ॥

पुत्रं पुरुषसिंहस्य सञ्जयाप्राप्तयौवनम् ।
रणे विनिहतं श्रुत्वा भृशं मे दीर्यते मनः ॥ ०२१ ॥

दारुणः क्षत्रधर्मोऽयं विहितो धर्मकर्तृभिः ।
यत्र राज्येप्सवः शूरा बाले शस्त्रमपातयन् ॥ ०२२ ॥

बालमत्यन्तसुखिनं विचरन्तमभीतवत् ।

कृतास्त्रा बहवो जघ्नुर्ब्रूहि गावल्गणे कथम्  ॥ ०२३  ॥

बिभित्सता रथानीकं सौभद्रेणामितौजसा ।
विक्रीडितं यथा संख्ये तन्ममाचक्ष्व सञ्जय  ॥ ०२४  ॥

सञ्जय उवाच  ॥

यन्मां पृच्छसि राजेन्द्र सौभद्रस्य निपातनम् ।
तत्ते कार्त्स्न्येन वक्ष्यामि श‍ृणु राजन्समाहितः  ॥ ०२५  ॥

विक्रीडितं कुमारेण यथानीकं बिभित्सता  ॥ ०२५  ॥

दावाग्न्यभिपरीतानां भूरिगुल्मतृणद्रुमे ।
वनौकसामिवारण्ये त्वदीयानामभूद्भयम्  ॥ ०२६  ॥

---

# अध्याय ०३३

सञ्जय उवाच  ॥

समरेऽत्युग्रकर्माणः कर्मभिर्व्यञ्जितश्रमाः ।
सकृष्णाः पाण्डवाः पञ्च देवैरपि दुरासदाः  ॥ ००१  ॥

सत्त्वकर्मान्वयैर्बुद्ध्या प्रकृत्या यशसा श्रिया ।
नैव भूतो न भविता कृष्णतुल्यगुणः पुमान्  ॥ ००२  ॥

सत्यधर्मपरो दाता विप्रपूजादिभिर्गुणैः ।
सदैव त्रिदिवं प्राप्तो राजा किल युधिष्ठिरः  ॥ ००३  ॥

युगान्ते चान्तको राजञ्जामदग्न्यश्च वीर्यवान् ।
रणस्थो भीमसेनश्च कथ्यन्ते सदृशास्त्रयः ॥ ००४ ॥

प्रतिज्ञाकर्मदक्षस्य रणे गाण्डीवधन्वनः ।
उपमां नाधिगच्छामि पार्थस्य सदृशीं क्षितौ ॥ ००५ ॥

गुरुवात्सल्यमत्यन्तं नैभृत्यं विनयो दमः ।
नकुलेऽप्रातिरूप्यं च शौर्यं च नियतानि षट् ॥ ००६ ॥

श्रुतगाम्भीर्यमाधुर्यसत्त्ववीर्यपराक्रमैः ।
सदृशो देवयोर्वीरः सहदेवः किलाश्विनोः ॥ ००७ ॥

ये च कृष्णे गुणाः स्फीताः पाण्डवेषु च ये गुणाः ।
अभिमन्यौ किलैकस्था दृश्यन्ते गुणसञ्चयाः ॥ ००८ ॥

युधिष्ठिरस्य धैर्येण कृष्णस्य चरितेन च ।
कर्मभिर्भीमसेनस्य सदृशो भीमकर्मणः ॥ ००९ ॥

धनञ्जयस्य रूपेण विक्रमेण श्रुतेन च ।
विनयात्सहदेवस्य सदृशो नकुलस्य च ॥ ०१० ॥

धृतराष्ट्र उवाच ॥

अभिमन्युमहं सूत सौभद्रमपराजितम् ।
श्रोतुमिच्छामि कार्त्स्न्येन कथमायोधने हतः ॥ ०११ ॥

सञ्जय उवाच ॥

चक्रव्यूहो महाराज आचार्येणाभिकल्पितः ।
तत्र शक्रोपमाः सर्वे राजानो विनिवेशिताः ॥ ०१२ ॥

संघातो राजपुत्राणां सर्वेषामभवत्तदा ।
कृताभिसमयाः सर्वे सुवर्णविकृतध्वजाः ॥ ०१३ ॥

रक्ताम्बरधराः सर्वे सर्वे रक्तविभूषणाः ।
सर्वे रक्तपताकाश्च सर्वे वै हेममालिनः ॥ ०१४ ॥

तेषां दशसहस्राणि बभूवुर्दृढधन्विनाम् ।
पौत्रं तव पुरस्कृत्य लक्ष्मणं प्रियदर्शनम् ॥ ०१५ ॥

अन्योन्यसमदुःखास्ते अन्योन्यसमसाहसाः ।
अन्योन्यं स्पर्धमानाश्च अन्योन्यस्य हिते रताः ॥ ०१६ ॥

कर्णदुःशासनकृपैर्वृतो राजा महारथैः ।
देवराजोपमः श्रीमाञ्श्वेतच्छत्राभिसंवृतः ॥ ०१७ ॥

चामरव्यजनाक्षेपैरुदयन्निव भास्करः ॥ ०१७ ॥

प्रमुखे तस्य सैन्यस्य द्रोणोऽवस्थितनायके ।
सिन्धुराजस्तथातिष्ठच्छ्रीमान्मेरुरिवाचलः ॥ ०१८ ॥

सिन्धुराजस्य पार्श्वस्था अश्वत्थामपुरोगमाः ।
सुतास्तव महाराज त्रिंशत्त्रिदशसंनिभाः ॥ ०१९ ॥

गान्धारराजः कितवः शल्यो भूरिश्रवास्तथा ।
पार्श्वतः सिन्धुराजस्य व्यराजन्त महारथाः ॥ ०२० ॥

# अध्याय ०३४

सञ्जय उवाच ॥

तदनीकमनाधृष्यं भारद्वाजेन रक्षितम् ।
पार्थाः समभ्यवर्तन्त भीमसेनपुरोगमाः ॥ ००१ ॥

सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
कुन्तिभोजश्च विक्रान्तो द्रुपदश्च महारथः ॥ ००२ ॥

आर्जुनिः क्षत्रधर्मा च बृहत्क्षत्रश्च वीर्यवान् ।
चेदिपो धृष्टकेतुश्च माद्रीपुत्रौ घटोत्कचः ॥ ००३ ॥

युधामन्युश्च विक्रान्तः शिखण्डी चापराजितः ।
उत्तमौजाश्च दुर्धर्षो विराटश्च महारथः ॥ ००४ ॥

द्रौपदेयाश्च संरब्धाः शैशुपालिश्च वीर्यवान् ।
केकयाश्च महावीर्याः सृञ्जयाश्च सहस्रशः ॥ ००५ ॥

एते चान्ये च सगणाः कृतास्त्रा युद्धदुर्मदाः ।
समभ्यधावन्सहसा भारद्वाजं युयुत्सवः ॥ ००६ ॥

समवेतांस्तु तान्सर्वान्भारद्वाजोऽपि वीर्यवान् ।
असंभ्रान्तः शरौघेण महता समवारयत् ॥ ००७ ॥

महौघाः सलिलस्येव गिरिमासाद्य दुर्भिदम् ।
द्रोणं ते नाभ्यवर्तन्त वेलामिव जलाशयाः ॥ ००८ ॥

पीड्यमानाः शरै राजन्द्रोणचापविनिःसृतैः ।
न शेकुः प्रमुखे स्थातुं भारद्वाजस्य पाण्डवाः ॥ ००९ ॥

तदद्भुतमपश्याम द्रोणस्य भुजयोर्बलम् ।
यदेनं नाभ्यवर्तन्त पाञ्चालाः सृञ्जयैः सह ॥ ०१० ॥

तमायान्तमभिक्रुद्धं द्रोणं दृष्ट्वा युधिष्ठिरः ।
बहुधा चिन्तयामास द्रोणस्य प्रतिवारणम् ॥ ०११ ॥

अशक्यं तु तमन्येन द्रोणं मत्वा युधिष्ठिरः ।
अविषह्यं गुरुं भारं सौभद्रे समवासृजत् ॥ ०१२ ॥

वासुदेवादनवरं फल्गुनाच्चामितौजसम् ।
अब्रवीत्परवीरघ्नमभिमन्युमिदं वचः ॥ ०१३ ॥

एत्य नो नार्जुनो गर्हेद्यथा तात तथा कुरु ।
चक्रव्यूहस्य न वयं विद्म भेदं कथञ्चन ॥ ०१४ ॥

त्वं वार्जुनो वा कृष्णो वा भिन्द्यात्प्रद्युम्न एव वा ।
चक्रव्यूहं महाबाहो पञ्चमोऽन्यो न विद्यते ॥ ०१५ ॥

अभिमन्यो वरं तात याचतां दातुमर्हसि ।
पितृणां मातुलानां च सैन्यानां चैव सर्वशः ॥ ०१६ ॥

धनञ्जयो हि नस्तात गर्हयेदेत्य संयुगात् ।
क्षिप्रमस्त्रं समादाय द्रोणानीकं विशातय ॥ ०१७ ॥

अभिमन्युरुवाच ॥

द्रोणस्य दृढमव्यग्रमनीकप्रवरं युधि ।
पितृणां जयमाकाङ्क्षन्नवगाहे भिनद्मि च ॥ ०१८ ॥

उपदिष्टो हि मे पित्रा योगोऽनीकस्य भेदने ।
नोत्सहे तु विनिर्गन्तुमहं कस्याञ्चिदापदि ॥ ०१९ ॥

युधिष्ठिर उवाच ॥

भिन्ध्यनीकं युधा श्रेष्ठ द्वारं सञ्जनयस्व नः ।
वयं त्वानुगमिष्यामो येन त्वं तात यास्यसि ॥ ०२० ॥

धनञ्जयसमं युद्धे त्वां वयं तात संयुगे ।
प्रणिधायानुयास्यामो रक्षन्तः सर्वतोमुखाः ॥ ०२१ ॥

भीम उवाच ॥

अहं त्वानुगमिष्यामि धृष्टद्युम्नोऽथ सात्यकिः ।
पाञ्चालाः केकया मत्स्यास्तथा सर्वे प्रभद्रकाः ॥ ०२२ ॥

सकृद्भिन्नं त्वया व्यूहं तत्र तत्र पुनः पुनः ।
वयं प्रध्वंसयिष्यामो निघ्नमाना वरान्वरान् ॥ ०२३ ॥

अभिमन्युरुवाच ॥

अहमेतत्प्रवेक्ष्यामि द्रोणानीकं दुरासदम् ।
पतङ्ग इव सङ्क्रुद्धो ज्वलितं जातवेदसम् ॥ ०२४ ॥

तत्कर्माद्य करिष्यामि हितं यद्वंशयोर्द्वयोः ।
मातुलस्य च या प्रीतिर्भविष्यति पितुश्च मे ॥ ०२५ ॥

शिशुनैकेन सङ्ग्रामे काल्यमानानि संघशः ।
अद्य द्रक्ष्यन्ति भूतानि द्विषत्सैन्यानि वै मया ॥ ०२६ ॥

युधिष्ठिर उवाच ॥

एवं ते भाषमाणस्य बलं सौभद्र वर्धताम् ।

यस्त्वमुत्सहसे भेत्तुं द्रोणानीकं सुदुर्भिदम् ॥ ०२७ ॥

रक्षितं पुरुषव्याघ्रैर्महेष्वासैः प्रहारिभिः ।
साध्यरुद्रमरुत्कल्पैर्वस्वग्न्यादित्यविक्रमैः ॥ ०२८ ॥

सञ्जय उवाच ॥

तस्य तद्वचनं श्रुत्वा स यन्तारमचोदयत् ।
सुमित्राश्वान्रणे क्षिप्रं द्रोणानीकाय चोदय ॥ ०२९ ॥

---

# अध्याय ०३५

सञ्जय उवाच ॥

सौभद्रस्तु वचः श्रुत्वा धर्मराजस्य धीमतः ।
अचोदयत यन्तारं द्रोणानीकाय भारत ॥ ००१ ॥

तेन सञ्चोद्यमानस्तु याहि याहीति सारथिः ।
प्रत्युवाच ततो राजन्नभिमन्युमिदं वचः ॥ ००२ ॥

अतिभारोऽयमायुष्मन्नाहितस्त्वयि पाण्डवैः ।
संप्रधार्य क्षमं बुद्ध्या ततस्त्वं योद्धुमर्हसि ॥ ००३ ॥

आचार्यो हि कृती द्रोणः परमास्त्रे कृतश्रमः ।
अत्यन्तसुखसंवृद्धस्त्वं च युद्धविशारदः ॥ ००४ ॥

ततोऽभिमन्युः प्रहसन्सारथिं वाक्यमब्रवीत् ।
सारथे को न्वयं द्रोणः समग्रं क्षत्रमेव वा ॥ ००५ ॥

ऐरावतगतं शक्रं सहामरगणैरहम् ।
योधयेयं रणमुखे न मे क्षत्रेऽद्य विस्मयः ॥ ००६ ॥

न ममैतद्द्विषत्सैन्यं कलामर्हति षोडशीम् ॥ ००६ ॥

अपि विश्वजितं विष्णुं मातुलं प्राप्य सूतज ।
पितरं चार्जुनं संख्ये न भीर्मामुपयास्यति ॥ ००७ ॥

ततोऽभिमन्युस्तां वाचं कदर्थीकृत्य सारथेः ।
याहीत्येवाब्रवीदेनं द्रोणानीकाय माचिरम् ॥ ००८ ॥

ततः सञ्चोदयामास हयानस्य त्रिहायनान् ।
नातिहृष्टमनाः सूतो हेमभाण्डपरिच्छदान् ॥ ००९ ॥

ते प्रेषिताः सुमित्रेण द्रोणानीकाय वाजिनः ।
द्रोणमभ्यद्रवन्राजन्महावेगपराक्रमाः ॥ ०१० ॥

तमुदीक्ष्य तथायान्तं सर्वे द्रोणपुरोगमाः ।
अभ्यवर्तन्त कौरव्याः पाण्डवाश्च तमन्वयुः ॥ ०११ ॥

स कर्णिकारप्रवरोच्छ्रितध्वजः ; सुवर्णवर्मार्जुनिरर्जुनाद्वरः ।
युयुत्सया द्रोणमुखान्महारथा ;न्समासदत्सिंहशिशुर्यथा गजान् ॥ ०१२ ॥

ते विंशतिपदे यत्ताः संप्रहारं प्रचक्रिरे ।
आसीद्गाङ्ग इवावर्तो मुहूर्तमुदधेरिव ॥ ०१३ ॥

शूराणां युध्यमानानां निघ्नतामितरेतरम् ।
सङ्ग्रामस्तुमुलो राजन्प्रावर्तत सुदारुणः ॥ ०१४ ॥

प्रवर्तमाने सङ्ग्रामे तस्मिन्नतिभयङ्करे ।

द्रोणस्य मिषतो व्यूहं भित्त्वा प्राविशदार्जुनिः ॥ ०१५ ॥

तं प्रविष्टं परान्घ्नन्तं शत्रुमध्ये महाबलम् ।
हस्त्यश्वरथपत्त्यौघाः परिवव्रुरुदायुधाः ॥ ०१६ ॥

नानावादित्रनिनदैः क्ष्वेडितोत्क्रुष्टगर्जितैः ।
हुङ्कारैः सिंहनादैश्च तिष्ठ तिष्ठेति निस्वनैः ॥ ०१७ ॥

घोरैर्हलहलाशब्दैर्मा गास्तिष्ठैहि मामिति ।
असावहममुत्रेति प्रवदन्तो मुहुर्मुहुः ॥ ०१८ ॥

बृंहितैः शिञ्जितैर्हासैः खुरनेमिस्वनैरपि ।
संनादयन्तो वसुधामभिदुद्रुवुरार्जुनिम् ॥ ०१९ ॥

तेषामापततां वीरः पूर्वं शीघ्रमथो दृढम् ।
क्षिप्रास्त्रो न्यवधीद्व्रातान्मर्मज्ञो मर्मभेदिभिः ॥ ०२० ॥

ते हन्यमानाश्च तथा नानालिङ्गैः शितैः शरैः ।
अभिपेतुस्तमेवाजौ शलभा इव पावकम् ॥ ०२१ ॥

ततस्तेषां शरीरैश्च शरीरावयवैश्च सः ।
संतस्तार क्षितिं क्षिप्रं कुशैर्वेदिमिवाध्वरे ॥ ०२२ ॥

बद्धगोधाङ्गुलित्राणान्सशरावरकार्मुकान् ।
सासिचर्माङ्कुशाभीशून्सतोमरपरश्वधान् ॥ ०२३ ॥

सगुडायोमुखप्रासान्सर्ष्टितोमरपट्टिशान् ।
सभिण्डिपालपरिघान्सशक्तिवरकम्पनान् ॥ ०२४ ॥

सप्रतोदमहाशङ्खान्सकुन्तान्सकचग्रहान् ।
समुद्गरक्षेपणीयान्सपाशपरिघोपलान् ॥ ०२५ ॥

सकेयूराङ्गदान्बाहून्हृद्यगन्धानुलेपनान् ।
सञ्चिच्छेदार्जुनिर्वृत्तांस्त्वदीयानां सहस्रशः ॥ ०२६ ॥

तैः स्फुरद्भिर्महाराज शुशुभे लोहितोक्षितैः ।
पञ्चास्यैः पन्नगैश्छिन्नैर्गरुडेनेव मारिष ॥ ०२७ ॥

सुनासाननकेशान्तैरव्रणैश्चारुकुण्डलैः ।
संदष्टौष्ठपुटैः क्रोधात्क्षरद्भिः शोणितं बहु ॥ ०२८ ॥

चारुस्रङ्मुकुटोष्णीषैर्मणिरत्नविराजितैः ।
विनालनलिनाकारैर्दिवाकरशशिप्रभैः ॥ ०२९ ॥

हितप्रियंवदैः काले बहुभिः पुण्यगन्धिभिः ।
द्विषच्छिरोभिः पृथिवीमवतस्तार फाल्गुणिः ॥ ०३० ॥

गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान् ।
वीषामुखान्वित्रिवेणून्व्यस्तदण्डकबन्धुरान् ॥ ०३१ ॥

विजङ्घकूबराक्षांश्च विनेमीननरानपि ।
विचक्रोपस्करोपस्थान्भग्नोपकरणानपि ॥ ०३२ ॥

प्रशातितोपकरणान्हतयोधान्सहस्रशः ।
शरैर्विशकलीकुर्वन्दिक्षु सर्वास्वदृश्यत ॥ ०३३ ॥

पुनर्द्विपान्द्विपारोहान्वैजयन्त्यङ्कुशध्वजान् ।
तूणान्वर्माण्यथो कक्ष्या ग्रैवेयानथ कम्बलान् ॥ ०३४ ॥

घण्टाः शुण्डान्विषाणाग्रान्क्षुरपालान्पदानुगान् ।
शरैर्निशितधाराग्रैः शात्रवाणामशातयत् ॥ ०३५ ॥

वनायुजान्पार्वतीयान्काम्बोजारट्टबाह्लिकान् ।
स्थिरवालधिकर्णाक्षाञ्जवनान्साधुवाहिनः ॥ ०३६ ॥

स्वारूढाञ्शिक्षितैर्योधैः शक्त्यृष्टिप्रासयोधिभिः ।
विध्वस्तचामरकुथान्विप्रकीर्णप्रकीर्णकान् ॥ ०३७ ॥

निरस्तजिह्वानयनान्निष्कीर्णान्त्रयकृद्धनान् ।
हतारोहान्भिन्नभाण्डान्क्रव्यादगणमोदनान् ॥ ०३८ ॥

निकृत्तवर्मकवचाञ्शकृन्मूत्रासृगाप्लुतान् ।
निपातयन्नश्ववरांस्तावकान्सोऽभ्यरोचत ॥ ०३९ ॥

एको विष्णुरिवाचिन्त्यः कृत्वा प्राक्कर्म दुष्करम् ।
तथा विमथितं तेन त्र्यङ्गं तव बलं महत् ॥ ०४० ॥

व्यहनत्स पदात्योघांस्त्वदीयानेव भारत ॥ ०४० ॥

एवमेकेन तां सेनां सौभद्रेण शितैः शरैः ।
भृशं विप्रहतां दृष्ट्वा स्कन्देनेवासुरीं चमूम् ॥ ०४१ ॥

त्वदीयास्तव पुत्राश्च वीक्षमाणा दिशो दश ।
संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना लोमहर्षणाः ॥ ०४२ ॥

पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ।
गोत्रनामभिरन्योन्यं क्रन्दन्तो जीवितैषिणः ॥ ०४३ ॥

हतान्पुत्रांस्तथा पितॄन्सुहृत्संबन्धिबान्धवान् ।
प्रातिष्ठन्त समुत्सृज्य त्वरयन्तो हयद्विपान् ॥ ०४४ ॥

# अध्याय ०३६

सञ्जय उवाच ॥

तां प्रभग्नां चमूं दृष्ट्वा सौभद्रेणामितौजसा ।
दुर्योधनो भृशं क्रुद्धः स्वयं सौभद्रमभ्ययात् ॥ ००१ ॥

ततो राजानमावृत्तं सौभद्रं प्रति संयुगे ।
दृष्ट्वा द्रोणोऽब्रवीद्योधान्पर्याप्नुत नराधिपम् ॥ ००२ ॥

पुराभिमन्युर्लक्ष्यं नः पश्यतां हन्ति वीर्यवान् ।
तमाद्रवत मा भैष्ट क्षिप्रं रक्षत कौरवम् ॥ ००३ ॥

ततः कृतज्ञा बलिनः सुहृदो जितकाशिनः ।
त्रास्यमाना भयाद्वीरं परिवव्रुस्तवात्मजम् ॥ ००४ ॥

द्रोणो द्रौणिः कृपः कर्णः कृतवर्मा च सौबलः ।
बृहद्बलो मद्रराजो भूरिर्भूरिश्रवाः शलः ॥ ००५ ॥

पौरवो वृषसेनश्च विसृजन्तः शिताञ्शरान् ।
सौभद्रं शरवर्षेण महता समवाकिरन् ॥ ००६ ॥

संमोहयित्वा तमथ दुर्योधनममोचयन् ।
आस्याद्ग्रासमिवाक्षिप्तं ममृषे नार्जुनात्मजः ॥ ००७ ॥

ताञ्शरौघेण महता साश्वसूतान्महारथान् ।
विमुखीकृत्य सौभद्रः सिंहनादमथानदत् ॥ ००८ ॥

तस्य नादं ततः श्रुत्वा सिंहस्येवामिषैषिणः ।
नामृष्यन्त सुसंरब्धाः पुनर्द्रोणमुखा रथाः ॥ ००९ ॥

त एनं कोष्ठकीकृत्य रथवंशेन मारिष ।
व्यसृजन्निषुजालानि नानालिङ्गानि संघशः ॥ ०१० ॥

तान्यन्तरिक्षे चिच्छेद पौत्रस्तव शितैः शरैः ।
तांश्चैव प्रतिविव्याध तदद्भुतमिवाभवत् ॥ ०११ ॥

ततस्ते कोपितास्तेन शरैराशीविषोपमैः ।
परिवव्रुर्जिघांसन्तः सौभद्रमपलायिनम् ॥ ०१२ ॥

समुद्रमिव पर्यस्तं त्वदीयं तद्बलार्णवम् ।
अभिमन्युर्दधारैको वेलेव मकरालयम् ॥ ०१३ ॥

शूराणां युध्यमानानां निघ्नतामितरेतरम् ।
अभिमन्योः परेषां च नासीत्कश्चित्पराङ्मुखः ॥ ०१४ ॥

तस्मिंस्तु घोरे सङ्ग्रामे वर्तमाने भयङ्करे ।
दुःसहो नवभिर्बाणैरभिमन्युमविध्यत ॥ ०१५ ॥

दुःशासनो द्वादशभिः कृपः शारद्वतस्त्रिभिः ।
द्रोणस्तु सप्तदशभिः शरैराशीविषोपमैः ॥ ०१६ ॥

विविंशतिस्तु विंशत्या कृतवर्मा च सप्तभिः ।
बृहद्बलस्तथाष्टाभिरश्वत्थामा च सप्तभिः ॥ ०१७ ॥

भूरिश्रवास्त्रिभिर्बाणैर्मद्रेशः षड्भिराशुगैः ।
द्वाभ्यां शराभ्यां शकुनिस्त्रिभिर्दुर्योधनो नृपः ॥ ०१८ ॥

स तु तान्प्रतिविव्याध त्रिभिस्त्रिभिरजिह्मगैः ।
नृत्यन्निव महाराज चापहस्तः प्रतापवान् ॥ ०१९ ॥

ततोऽभिमन्युः सङ्क्रुद्धस्ताप्यमानस्तवात्मजैः ।

विदर्शयन्वै सुमहच्छिक्षौरसकृतं बलम् ॥ ०२० ॥

गरुडानिलरंहोभिर्यन्तुर्वाक्यकरैर्हयैः ।
दान्तैरश्मकदायादं त्वरमाणोऽभ्यहारयत् ॥ ०२१ ॥

विव्याध चैनं दशभिर्बाणैस्तिष्ठेति चाब्रवीत् ॥ ०२१ ॥

तस्याभिमन्युर्दशभिर्बाणैः सूतं हयान्ध्वजम् ।
बाहू धनुः शिरश्चोर्व्यां स्मयमानोऽभ्यपातयत् ॥ ०२२ ॥

ततस्तस्मिन्हते वीरे सौभद्रेणाश्मकेश्वरे ।
सञ्चचाल बलं सर्वं पलायनपरायणम् ॥ ०२३ ॥

ततः कर्णः कृपो द्रोणो द्रौणिर्गान्धारराड्गलः ।
शल्यो भूरिश्रवाः क्राथः सोमदत्तो विविंशतिः ॥ ०२४ ॥

वृषसेनः सुषेणश्च कुण्डभेदी प्रतर्दनः ।
वृन्दारको ललित्थश्च प्रबाहुर्दीर्घलोचनः ॥ ०२५ ॥

दुर्योधनश्च सङ्क्रुद्धः शरवर्षैरवाकिरन् ॥ ०२५ ॥

सोऽतिक्रुद्धो महेष्वासैरभिमन्युरजिह्मगैः ।
शरमादत्त कर्णाय परकायावभेदनम् ॥ ०२६ ॥

तस्य भित्त्वा तनुत्राणं देहं निर्भिद्य चाशुगः ।
प्राविशद्धरणीं राजन्वल्मीकमिव पन्नगः ॥ ०२७ ॥

स तेनातिप्रहारेण व्यथितो विह्वलन्निव ।
सञ्चचाल रणे कर्णः क्षितिकम्पे यथाचलः ॥ ०२८ ॥

अथान्यैर्निशितैर्बाणैः सुषेणं दीर्घलोचनम् ।

कुण्डभेदिं च सङ्क्रुद्धस्त्रिभिस्त्रीनवधीद्बली ॥ ०२९ ॥

कर्णस्तं पञ्चविंशत्या नाराचानां समर्पयत् ।
अश्वत्थामा च विंशत्या कृतवर्मा च सप्तभिः ॥ ०३० ॥

स शरार्दितसर्वाङ्गः क्रुद्धः शक्रात्मजात्मजः ।
विचरन्दृश्यते सैन्ये पाशहस्त इवान्तकः ॥ ०३१ ॥

शल्यं च बाणवर्षेण समीपस्थमवाकिरत् ।
उदक्रोशन्महाबाहुस्तव सैन्यानि भीषयन् ॥ ०३२ ॥

ततः स विद्धोऽस्त्रविदा मर्मभिद्भिरजिह्मगैः ।
शल्यो राजन्रथोपस्थे निषसाद मुमोह च ॥ ०३३ ॥

तं हि विद्धं तथा दृष्ट्वा सौभद्रेण यशस्विना ।
संप्राद्रवच्चमूः सर्वा भारद्वाजस्य पश्यतः ॥ ०३४ ॥

प्रेक्षन्तस्तं महाबाहुं रुक्मपुङ्खैः समावृतम् ।
त्वदीयाश्च पलायन्ते मृगाः सिंहार्दिता इव ॥ ०३५ ॥

स तु रणयशसाभिपूज्यमानः ; पितृसुरचारणसिद्धयक्षसंघैः ।
अवनितलगतैश्च भूतसंघै ;रतिविबभौ हुतभुग्यथाज्यसिक्तः ॥ ०३६ ॥

---

# अध्याय ०३७

धृतराष्ट्र उवाच ॥

तथा प्रमथमानं तं महेष्वासमजिह्मगैः ।

आर्जुनिं मामकाः सर्वे के त्वेनं समवाकिरन्  ॥ ००१  ॥

सञ्जय उवाच  ॥

शृणु राजन्कुमारस्य रणे विक्रीडितं महत् ।
बिभित्सतो रथानीकं भारद्वाजेन रक्षितम्  ॥ ००२  ॥

मद्रेशं सादितं दृष्ट्वा सौभाद्रेणाशुगै रणे ।
शल्यादवरजः क्रुद्धः किरन्बाणान्समभ्ययात्  ॥ ००३  ॥

स विद्ध्वा दशभिर्बाणैः साश्वयन्तारमार्जुनिम् ।
उदक्रोशन्महाशब्दं तिष्ठ तिष्ठेति चाब्रवीत्  ॥ ००४  ॥

तस्यार्जुनिः शिरोग्रीवं पाणिपादं धनुर्हयान् ।
छत्रं ध्वजं नियन्तारं त्रिवेणुं शम्युपस्करम्  ॥ ००५  ॥

चक्रे युगेषां तूणीराननुकर्षं च सायकैः ।
पताकां चक्रगोप्तारौ सर्वोपकरणानि च  ॥ ००६  ॥

व्यधमल्लाघवात्तच्च ददृशे नास्य कश्चन  ॥ ००६  ॥

स पपात क्षितौ क्षीणः प्रविद्धाभरणाम्बरः ।
वायुनेव महाचैत्यः संभग्नोऽमिततेजसा  ॥ ००७  ॥

अनुगाश्चास्य वित्रस्ताः प्राद्रवन्सर्वतोदिशम्  ॥ ००७  ॥

आर्जुनेः कर्म तद्दृष्ट्व प्रणेदुश्च समन्ततः ।
नादेन सर्वभूतानि साधु साध्विति भारत  ॥ ००८  ॥

शल्यभ्रातर्यथारुग्णे बहुशस्तस्य सैनिकाः ।
कुलाधिवासनामानि श्रावयन्तोऽर्जुनात्मजम्  ॥ ००९  ॥

अभ्यवर्तन्त सङ्क्रुद्धा विविधायुधपाणयः ।
रथैरश्वैर्गजैश्चान्ये पादातैश्च बलोत्कटाः ॥ ०१० ॥

बाणशब्देन महता खुरनेमिस्वनेन च ।
हुङ्कारैः क्ष्वेडितोत्क्रुष्टैः सिंहनादैः सगर्जितैः ॥ ०११ ॥

ज्यातलत्रस्वनैरन्ये गर्जन्तोऽर्जुननन्दनम् ।
ब्रुवन्तश्च न नो जीवन्मोक्ष्यसे जीवतामिति ॥ ०१२ ॥

तांस्तथा ब्रुवतो दृष्ट्वा सौभद्रः प्रहसन्निव ।
यो यः स्म प्राहरत्पूर्वं तं तं विव्याध पत्रिभिः ॥ ०१३ ॥

संदर्शयिष्यन्नस्त्राणि चित्राणि च लघूनि च ।
आर्जुनिः समरे शूरो मृदुपूर्वमयुध्यत ॥ ०१४ ॥

वासुदेवादुपात्तं यद्यदस्त्रं च धनञ्जयात् ।
अदर्शयत तत्कार्ष्णिः कृष्णाभ्यामविशेषयन् ॥ ०१५ ॥

दूरमस्यन्गुरुं भारं साधयंश्च पुनः पुनः ।
संदधद्विसृजंश्चेषून्निर्विशेषमदृश्यत ॥ ०१६ ॥

चापमण्डलमेवास्य विस्फुरद्दिक्ष्वदृश्यत ।
तमो घ्नतः सुदीप्तस्य सवितुर्मण्डलं यथा ॥ ०१७ ॥

ज्याशब्दः शुश्रुवे तस्य तलशब्दश्च दारुणः ।
महाशनिमुचः काले पयोदस्येव निस्वनः ॥ ०१८ ॥

ह्रीमानमर्षी सौभद्रो मानकृत्प्रियदर्शनः ।
संमिमानयिषुर्वीरानिष्वासांश्चाप्ययुध्यत ॥ ०१९ ॥

मृदुर्भूत्वा महाराज दारुणः समपद्यत ।
वर्षाभ्यतीतो भगवाञ्शरदीव दिवाकरः ॥ ०२० ॥

शरान्विचित्रान्महतो रुक्मपुङ्खाञ्शिलाशितान् ।
मुमोच शतशः क्रुद्धो गभस्तीनिव भास्करः ॥ ०२१ ॥

क्षुरप्रैर्वत्सदन्तैश्च विपाठैश्च महायशाः ।
नाराचैरर्धनाराचैर्भल्लैरञ्जलिकैरपि ॥ ०२२ ॥

अवाकिरद्रथानीकं भारद्वाजस्य पश्यतः ।
ततस्तत्सैन्यमभवद्विमुखं शरपीडितम् ॥ ०२३ ॥

---

# अध्याय ०३८

धृतराष्ट्र उवाच ॥

द्वैधीभवति मे चित्तं ह्रिया तुष्ट्या च सञ्जय ।
मम पुत्रस्य यत्सैन्यं सौभद्रः समवारयत् ॥ ००१ ॥

विस्तरेणैव मे शंस सर्वं गावल्गणे पुनः ।
विक्रीडितं कुमारस्य स्कन्दस्येवासुरैः सह ॥ ००२ ॥

सञ्जय उवाच ॥

हन्त ते संप्रवक्ष्यामि विमर्दमतिदारुणम् ।
एकस्य च बहूनां च यथासीत्तुमुलो रणः ॥ ००३ ॥

अभिमन्युः कृतोत्साहः कृतोत्साहानरिंदमान् ।
रथस्थो रथिनः सर्वांस्तावकानप्यहर्षयत् ॥ ००४ ॥

द्रोणं कर्णं कृपं शल्यं द्रौणिं भोजं बृहद्बलम् ।
दुर्योधनं सौमदत्तिं शकुनिं च महाबलम् ॥ ००५ ॥

नानानृपान्नृपसुतान्सैन्यानि विविधानि च ।
अलातचक्रवत्सर्वांश्चरन्बाणैः समभ्ययात् ॥ ००६ ॥

निघ्नन्नमित्रान्सौभद्रः परमास्त्रः प्रतापवान् ।
अदर्शयत तेजस्वी दिक्षु सर्वासु भारत ॥ ००७ ॥

तद्दृष्ट्वा चरितं तस्य सौभद्रस्यामितौजसः ।
समकम्पन्त सैन्यानि त्वदीयानि पुनः पुनः ॥ ००८ ॥

अथाब्रवीन्महाप्राज्ञो भारद्वाजः प्रतापवान् ।
हर्षेणोत्फुल्लनयनः कृपमाभाष्य सत्वरम् ॥ ००९ ॥

घट्टयन्निव मर्माणि तव पुत्रस्य मारिष ।
अभिमन्युं रणे दृष्ट्वा तदा रणविशारदम् ॥ ०१० ॥

एष गच्छति सौभद्रः पार्थानामग्रतो युवा ।
नन्दयन्सुहृदः सर्वान्राजानं च युधिष्ठिरम् ॥ ०११ ॥

नकुलं सहदेवं च भीमसेनं च पाण्डवम् ।
बन्धून्संबन्धिनश्चान्यान्मध्यस्थान्सुहृदस्तथा ॥ ०१२ ॥

नास्य युद्धे समं मन्ये कञ्चिदन्यं धनुर्धरम् ।
इच्छन्हन्यादिमां सेनां किमर्थमपि नेच्छति ॥ ०१३ ॥

द्रोणस्य प्रीतिसंयुक्तं श्रुत्वा वाक्यं तवात्मजः ।

आर्जुनिं प्रति सङ्क्रुद्धो द्रोणं दृष्ट्वा स्मयन्निव ॥ ०१४ ॥

अथ दुर्योधनः कर्णमब्रवीद्बाह्लिकं कृपम् ।
दुःसासनं मद्रराजं तांस्तांश्चान्यान्महारथान् ॥ ०१५ ॥

सर्वमूर्धावसिक्तानामाचार्यो ब्रह्मवित्तमः ।
अर्जुनस्य सुतं मूढं नाभिहन्तुमिहेच्छति ॥ ०१६ ॥

न ह्यस्य समरे मुच्येदन्तकोऽप्याततायिनः ।
किमङ्ग पुनरेवान्यो मर्त्यः सत्यं ब्रवीमि वः ॥ ०१७ ॥

अर्जुनस्य सुतं त्वेष शिष्यत्वादभिरक्षति ।
पुत्राः शिष्याश्च दयितास्तदपत्यं च धर्मिणाम् ॥ ०१८ ॥

संरक्ष्यमाणो द्रोणेन मन्यते वीर्यमात्मनः ।
आत्मसंभावितो मूढस्तं प्रमथ्नीत माचिरम् ॥ ०१९ ॥

एवमुक्तास्तु ते राज्ञा सात्वतीपुत्रमभ्ययुः ।
संरब्धास्तं जिघांसन्तो भारद्वाजस्य पश्यतः ॥ ०२० ॥

दुःशासनस्तु तच्छ्रुत्वा दुर्योधनवचस्तदा ।
अब्रवीत्कुरुशार्दूलो दुर्योधनमिदं वचः ॥ ०२१ ॥

अहमेनं हनिष्यामि महाराज ब्रवीमि ते ।
मिषतां पाण्डुपुत्राणां पाञ्चालानां च पश्यताम् ॥ ०२२ ॥

ग्रसिष्याम्यद्य सौभद्रं यथा राहुर्दिवाकरम् ॥ ०२२ ॥

उत्क्रुश्य चाब्रवीद्वाक्यं कुरुराजमिदं पुनः ।
श्रुत्वा कृष्णौ मया ग्रस्तं सौभद्रमतिमानिनौ ॥ ०२३ ॥

गमिष्यतः प्रेतलोकं जीवलोकान्न संशयः ॥ ०२३ ॥

तौ च श्रुत्वा मृतौ व्यक्तं पाण्डोः क्षेत्रोद्भवाः सुताः ।
एकाह्ना ससुहृद्वर्गाः क्लैब्याद्धास्यन्ति जीवितम् ॥ ०२४ ॥

तस्मादस्मिन्हते शत्रौ हताः सर्वेऽहितास्तव ।
शिवेन ध्याहि मा राजन्नेष हन्मि रिपुं तव ॥ ०२५ ॥

एवमुक्त्वा नदन्राजन्पुत्रो दुःशासनस्तव ।
सौभद्रमभ्ययात्क्रुद्धः शरवर्षैरवाकिरन् ॥ ०२६ ॥

तमभिक्रुद्धमायान्तं तव पुत्रमरिंदमः ।
अभिमन्युः शरैस्तीक्ष्णैः षड्विंशत्या समर्पयत् ॥ ०२७ ॥

दुःशासनस्तु सङ्क्रुद्धः प्रभिन्न इव कुञ्जरः ।
अयोधयत सौभद्रमभिमन्युश्च तं रणे ॥ ०२८ ॥

तौ मण्डलानि चित्राणि रथाभ्यां सव्यदक्षिणम् ।
चरमाणावयुध्येतां रथशिक्षाविशारदौ ॥ ०२९ ॥

अथ पणवमृदङ्गदुन्दुभीनां ; कृकरमहानकभेरिझर्झराणाम् ।
निनदमतिभृशं नराः प्रचक्रु ;र्लवणजलोद्भवसिंहनादमिश्रम् ॥ ०३० ॥

---

# अध्याय ०३९

सञ्जय उवाच ॥

शरविक्षतगात्रस्तु प्रत्यमित्रमवस्थितम् ।
अभिमन्युः स्मयन्धीमान्दुःशासनमथाब्रवीत्  ॥ ००१  ॥

दिष्ट्या पश्यामि सङ्ग्रामे मानिनं शत्रुमागतम् ।
निष्ठुरं त्यक्तधर्माणमाक्रोशनपरायणम्  ॥ ००२  ॥

यत्सभायां त्वया राज्ञो धृतराष्ट्रस्य शृण्वतः ।
कोपितः परुषैर्वाक्यैर्धर्मराजो युधिष्ठिरः  ॥ ००३  ॥

जयोन्मत्तेन भीमश्च बह्वबद्धं प्रभाषता  ॥ ००३  ॥

परवित्तापहारस्य क्रोधस्याप्रशमस्य च ।
लोभस्य ज्ञाननाशस्य द्रोहस्यात्याहितस्य च  ॥ ००४  ॥

पितॄणां मम राज्यस्य हरणस्योग्रधन्विनाम् ।
तत्त्वामिदमनुप्राप्तं तत्कोपाद्वै महात्मनाम्  ॥ ००५  ॥

सद्यश्चोग्रमधर्मस्य फलं प्राप्नुहि दुर्मते ।
शासितास्म्यद्य ते बाणैः सर्वसैन्यस्य पश्यतः  ॥ ००६  ॥

अद्याहमनृणस्तस्य कोपस्य भविता रणे ।
अमर्षितायाः कृष्णायाः काङ्क्षितस्य च मे पितुः  ॥ ००७  ॥

अद्य कौरव्य भीमस्य भवितास्म्यनृणो युधि ।
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणम्  ॥ ००८  ॥

एवमुक्त्वा महाबाहुर्बाणं दुःशासनान्तकम् ।
संदधे परवीरघ्नः कालाग्न्यनिलवर्चसम्  ॥ ००९  ॥

तस्योरस्तूर्णमासाद्य जत्रुदेशे विभिद्य तम् ।
अथैनं पञ्चविंशत्या पुनश्चैव समर्पयत्  ॥ ०१०  ॥

स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
दुःशासनो महाराज कश्मलं चाविशन्महत् ॥ ०११ ॥

सारथिस्त्वरमाणस्तु दुःशासनमचेतसम् ।
रणमध्यादपोवाह सौभद्रशरपीडितम् ॥ ०१२ ॥

पाण्डवा द्रौपदेयाश्च विराटश्च समीक्ष्य तम् ।
पाञ्चालाः केकयाश्चैव सिंहनादमथानदन् ॥ ०१३ ॥

वादित्राणि च सर्वाणि नानालिङ्गानि सर्वशः ।
प्रावादयन्त संहृष्टाः पाण्डूनां तत्र सैनिकाः ॥ ०१४ ॥

पश्यन्तः स्मयमानाश्च सौभद्रस्य विचेष्टितम् ।
अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं पराजितम् ॥ ०१५ ॥

धर्ममारुतशक्राणामाश्विनोः प्रतिमास्तथा ।
धारयन्तो ध्वजाग्रेषु द्रौपदेया महारथाः ॥ ०१६ ॥

सात्यकिश्चेकितानश्च धृष्टद्युम्नशिखण्डिनौ ।
केकया धृष्टकेतुश्च मत्स्यपाञ्चालसृञ्जयाः ॥ ०१७ ॥

पाण्डवाश्च मुदा युक्ता युधिष्ठिरपुरोगमाः ।
अभ्यवर्तन्त सहिता द्रोणानीकं बिभित्सवः ॥ ०१८ ॥

ततोऽभवन्महद्युद्धं त्वदीयानां परैः सह ।
जयमाकाङ्क्षमाणानां शूराणामनिवर्तिनाम् ॥ ०१९ ॥

दुर्योधनो महाराज राधेयमिदमब्रवीत् ।
पश्य दुःशासनं वीरमभिमन्युवशं गतम् ॥ ०२० ॥

प्रतपन्तमिवादित्यं निघ्नन्तं शात्रवान्रणे ।
सौभद्रमुद्यतास्त्रातुमभिधावन्ति पाण्डवाः ॥ ०२१ ॥

ततः कर्णः शरैस्तीक्ष्णैरभिमन्युं दुरासदम् ।
अभ्यवर्षत सङ्क्रुद्धः पुत्रस्य हितकृत्तव ॥ ०२२ ॥

तस्य चानुचरांस्तीक्ष्णैर्विव्याध परमेषुभिः ।
अवज्ञापूर्वकं वीरः सौभद्रस्य रणाजिरे ॥ ०२३ ॥

अभिमन्युस्तु राधेयं त्रिसप्तत्या शिलीमुखैः ।
अविध्यत्त्वरितो राजन्द्रोणं प्रेप्सुर्महामनाः ॥ ०२४ ॥

तं तदा नाशकत्कश्चिद्द्रोणाद्वारयितुं रणे ।
आरुजन्तं रथश्रेष्ठान्वज्रहस्तमिवासुरान् ॥ ०२५ ॥

ततः कर्णो जयप्रेप्सुर्मानी सर्वधनुर्भृताम् ।
सौभद्रं शतशोऽविध्यदुत्तमास्त्राणि दर्शयन् ॥ ०२६ ॥

सोऽस्त्रैरस्त्रविदां श्रेष्ठो रामशिष्यः प्रतापवान् ।
समरे शत्रुदुर्धर्षमभिमन्युमपीडयत् ॥ ०२७ ॥

स तथा पीड्यमानस्तु राधेयेनास्त्रवृष्टिभिः ।
समरेऽमरसङ्काशः सौभद्रो न व्यषीदत ॥ ०२८ ॥

ततः शिलाशितैस्तीक्ष्णैर्भल्लैः संनतपर्वभिः ।
छित्त्वा धनूंषि शूराणामार्जुनिः कर्णमार्दयत् ॥ ०२९ ॥

स ध्वजं कार्मुकं चास्य छित्त्वा भूमौ न्यपातयत् ॥ ०२९ ॥

ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः ।
सौभद्रमभ्ययात्तूर्णं दृढमुद्यम्य कार्मुकम् ॥ ०३० ॥

तत उच्चुक्रुशुः पार्थास्तेषां चानुचरा जनाः ।
वादित्राणि च सञ्जघ्नुः सौभद्रं चापि तुष्टुवुः ॥ ०३१ ॥

---

# अध्याय ०४०

सञ्जय उवाच ॥

सोऽभिगर्जन्धनुष्पाणिर्ज्यां विकर्षन्पुनः पुनः ।
तयोर्महात्मनोस्तूर्णं रथान्तरमवापतत् ॥ ००१ ॥

सोऽविध्यद्दशभिर्बाणैरभिमन्युं दुरासदम् ।
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ॥ ००२ ॥

पितृपैतामहं कर्म कुर्वाणमतिमानुषम् ।
दृष्ट्वार्दितं शरैः कार्ष्णिं त्वदीया हृषिताभवन् ॥ ००३ ॥

तस्याभिमन्युरायम्य स्मयन्नेकेन पत्रिणा ।
शिरः प्रच्यावयामास स रथात्प्रापतद्भुवि ॥ ००४ ॥

कर्णिकारमिवोद्धूतं वातेन मथितं नगात् ।
भ्रातरं निहतं दृष्ट्वा राजन्कर्णो व्यथां ययौ ॥ ००५ ॥

विमुखीकृत्य कर्णं तु सौभद्रः कङ्कपत्रिभिः ।
अन्यानपि महेष्वासांस्तूर्णमेवाभिदुद्रुवे ॥ ००६ ॥

ततस्तद्विततं जालं हस्त्यश्वरथपत्तिमत् ।

झषः क्रुद्ध इवाभिन्ददभिमन्युर्महायशाः ॥ ००७ ॥

कर्णस्तु बहुभिर्बाणैरर्द्यमानोऽभिमन्युना ।
अपायाज्जवनैरश्वैस्ततोऽनीकमभिद्यत ॥ ००८ ॥

शलभैरिव चाकाशे धाराभिरिव चावृते ।
अभिमन्योः शरै राजन्न प्राज्ञायत किञ्चन ॥ ००९ ॥

तावकानां तु योधानां वध्यतां निशितैः शरैः ।
अन्यत्र सैन्धवाद्राजन्न स्म कश्चिदतिष्ठत ॥ ०१० ॥

सौभद्रस्तु ततः शङ्खं प्रध्माप्य पुरुषर्षभः ।
शीघ्रमभ्यपतत्सेनां भारतीं भरतर्षभ ॥ ०११ ॥

स कक्षेऽग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून् ।
मध्ये भारतसैन्यानामार्जुनिः पर्यवर्तत ॥ ०१२ ॥

रथनागाश्वमनुजानर्दयन्निशितैः शरैः ।
स प्रविश्याकरोद्भूमिं कबन्धगणसङ्कुलाम् ॥ ०१३ ॥

सौभद्रचापप्रभवैर्निकृत्ताः परमेषुभिः ।
स्वानेवाभिमुखान्घ्नन्तः प्राद्रवञ्जीवितार्थिनः ॥ ०१४ ॥

ते घोरा रौद्रकर्माणो विपाठाः पृथवः शिताः ।
निघ्नन्तो रथनागाश्वाञ्जग्मुराशु वसुंधराम् ॥ ०१५ ॥

सायुधाः साङ्गुलित्राणाः सखड्गाः साङ्गदा रणे ।
दृश्यन्ते बाहवश्छिन्ना हेमाभरणभूषिताः ॥ ०१६ ॥

शराश्चापानि खड्गाश्च शरीराणि शिरांसि च ।
सकुण्डलानि स्रग्वीणि भूमावासन्सहस्रशः ॥ ०१७ ॥

अपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा रथैः ॥ ०१८ ॥

शक्तिचापायुधैश्चापि पतितैश्च महाध्वजैः ॥ ०१८ ॥

निहतैः क्षत्रियैरश्वैर्वारणैश्च विशां पते ।
अगम्यकल्पा पृथिवी क्षणेनासीत्सुदारुणा ॥ ०१९ ॥

वध्यतां राजपुत्राणां क्रन्दतामितरेतरम् ।
प्रादुरासीन्महाशब्दो भीरूणां भयवर्धनः ॥ ०२० ॥

स शब्दो भरतश्रेष्ठ दिशः सर्वा व्यनादयत् ॥ ०२० ॥

सौभद्रश्चाद्रवत्सेनां निघ्नन्नश्वरथद्विपान् ।
व्यचरत्स दिशः सर्वाः प्रदिशश्चाहितान्रुजन् ॥ ०२१ ॥

तं तदा नानुपश्याम सैन्येन रजसावृतम् ।
आददानं गजाश्वानां नृणां चायूंषि भारत ॥ ०२२ ॥

क्षणेन भूयोऽपश्याम सूर्यं मध्यंदिने यथा ।
अभिमन्युं महाराज प्रतपन्तं द्विषद्गणान् ॥ ०२३ ॥

स वासवसमः संख्ये वासवस्यात्मजात्मजः ।
अभिमन्युर्महाराज सैन्यमध्ये व्यरोचत ॥ ०२४ ॥

# अध्याय ०४१

धृतराष्ट्र उवाच ॥

बालमत्यन्तसुखिनमवार्यबलदर्पितम् ।
युद्धेषु कुशलं वीरं कुलपुत्रं तनुत्यजम् ॥ ००१ ॥

गाहमानमनीकानि सदश्वैस्तं त्रिहायनैः ।
अपि यौधिष्ठिरात्सैन्यात्कश्चिदन्वपतद्रथी ॥ ००२ ॥

सञ्जय उवाच ॥

युधिष्ठिरो भीमसेनः शिखण्डी सात्यकिर्यमौ ।
धृष्टद्युम्नो विराटश्च द्रुपदश्च सकेकयः ॥ ००३ ॥

धृष्टकेतुश्च संरब्धो मत्स्याश्चान्वपतन्रणे ॥ ००३ ॥

अभ्यद्रवन्परीप्सन्तो व्यूढानीकाः प्रहारिणः ।
तान्दृष्ट्वा द्रवतः शूरांस्त्वदीया विमुखाभवन् ॥ ००४ ॥

ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलम् ।
जामाता तव तेजस्वी विष्टम्भयिषुराद्रवत् ॥ ००५ ॥

सैन्धवस्य महाराज पुत्रो राजा जयद्रथः ।
स पुत्रगृद्धिनः पार्थान्सहसैन्यानवारयत् ॥ ००६ ॥

उग्रधन्वा महेष्वासो दिव्यमस्त्रमुदीरयन् ।
वार्धक्षत्रिरुपासेधत्प्रवणादिव कुञ्जरान् ॥ ००७ ॥

धृतराष्ट्र उवाच ॥

अतिभारमहं मन्ये सैन्धवे सञ्जयाहितम् ।
यदेकः पाण्डवान्क्रुद्धान्पुत्रगृद्धीनवारयत् ॥ ००८ ॥

अत्यद्भुतमिदं मन्ये बलं शौर्यं च सैन्धवे ।
तदस्य ब्रूहि मे वीर्यं कर्म चाग्र्यं महात्मनः ॥ ००९ ॥

किं दत्तं हुतमिष्टं वा सुतप्तमथ वा तपः ।
सिन्धुराजेन येनैकः क्रुद्धान्पार्थानवारयत् ॥ ०१० ॥

सञ्जय उवाच ॥

द्रौपदीहरणे यत्तद्भीमसेनेन निर्जितः ।
मानात्स तप्तवान्राजा वरार्थी सुमहत्तपः ॥ ०११ ॥

इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः संनिवर्त्य सः ।
क्षुत्पिपासातपसहः कृशो धमनिसंततः ॥ ०१२ ॥

देवमाराधयच्छर्वं गृणन्ब्रह्म सनातनम् ॥ ०१२ ॥

भक्तानुकम्पी भगवांस्तस्य चक्रे ततो दयाम् ।
स्वप्नान्तेऽप्यथ चैवाह हरः सिन्धुपतेः सुतम् ॥ ०१३ ॥

वरं वृणीष्व प्रीतोऽस्मि जयद्रथ किमिच्छसि ॥ ०१३ ॥

एवमुक्तस्तु शर्वेण सिन्धुराजो जयद्रथः ।
उवाच प्रणतो रुद्रं प्राञ्जलिर्नियतात्मवान् ॥ ०१४ ॥

पाण्डवेयानहं संख्ये भीमवीर्यपराक्रमान् ।
एको रणे धारयेयं समस्तानिति भारत ॥ ०१५ ॥

एवमुक्तस्तु देवेशो जयद्रथमथाब्रवीत् ।

ददामि ते वरं सौम्य विना पार्थं धनञ्जयम्  ॥ ०१६  ॥

धारयिष्यसि सङ्ग्रामे चतुरः पाण्डुनन्दनान् ।
एवमस्त्विति देवेशमुक्त्वाबुध्यत पार्थिवः  ॥ ०१७  ॥

स तेन वरदानेन दिव्येनास्त्रबलेन च ।
एकः संधारयामास पाण्डवानामनीकिनीम्  ॥ ०१८  ॥

तस्य ज्यातलघोषेण क्षत्रियान्भयमाविशत् ।
परांस्तु तव सैन्यस्य हर्षः परमकोऽभवत्  ॥ ०१९  ॥

दृष्ट्वा तु क्षत्रिया भारं सैन्धवे सर्वमर्पितम् ।
उत्क्रुश्याभ्यद्रवन्राजन्येन यौधिष्ठिरं बलम्  ॥ ०२०  ॥

---

# अध्याय ०४२

सञ्जय उवाच  ॥

यन्मा पृच्छसि राजेन्द्र सिन्धुराजस्य विक्रमम् ।
शृणु तत्सर्वमाख्यास्ये यथा पाण्डूनयोधयत्  ॥ ००१  ॥

तमूहुः सारथेर्वश्याः सैन्धवाः साधुवाहिनः ।
विकुर्वाणा बृहन्तोऽश्वाः श्वसनोपमरंहसः  ॥ ००२  ॥

गन्धर्वनगराकारं विधिवत्कल्पितं रथम् ।
तस्याभ्यशोभयत्केतुर्वाराहो राजतो महान्  ॥ ००३  ॥

श्वेतच्छत्रपताकाभिश्चामरव्यजनेन च ।
स बभौ राजलिङ्गैस्तैस्तारापतिरिवाम्बरे ॥ ००४ ॥

मुक्तावज्रमणिस्वर्णैर्भूषितं तदयस्मयम् ।
वरूथं विबभौ तस्य ज्योतिर्भिः खमिवावृतम् ॥ ००५ ॥

स विस्फार्य महच्चापं किरन्निषुगणान्बहून् ।
तत्खण्डं पूरयामास यद्यदारयदार्जुनिः ॥ ००६ ॥

स सात्यकिं त्रिभिर्बाणैरष्टभिश्च वृकोदरम् ।
धृष्टद्युम्नं तथा षष्ट्या विराटं दशभिः शरैः ॥ ००७ ॥

द्रुपदं पञ्चभिस्तीक्ष्णैर्दशभिश्च शिखण्डिनम् ।
केकयान्पञ्चविंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ००८ ॥

युधिष्ठिरं च सप्तत्या ततः शेषानपानुदत् ।
इषुजालेन महता तदद्भुतमिवाभवत् ॥ ००९ ॥

अथास्य शितपीतेन भल्लेनादिश्य कार्मुकम् ।
चिच्छेद प्रहसन्राजा धर्मपुत्रः प्रतापवान् ॥ ०१० ॥

अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम् ।
विव्याध दशभिः पार्थं तांश्चैवान्यांस्त्रिभिस्त्रिभिः ॥ ०११ ॥

तस्य तल्लाघवं ज्ञात्वा भीमो भल्लैस्त्रिभिः पुनः ।
धनुर्ध्वजं च छत्रं च क्षितौ क्षिप्रमपातयत् ॥ ०१२ ॥

सोऽन्यदादाय बलवान्सज्यं कृत्वा च कार्मुकम् ।
भीमस्यापोथयत्केतुं धनुरश्वांश्च मारिष ॥ ०१३ ॥

स हताश्वादवप्लुत्य छिन्नधन्वा रथोत्तमात् ।

सात्यकेराप्लुतो यानं गिर्यग्रमिव केसरी ॥ ०१४ ॥

ततस्त्वदीयाः संहृष्टाः साधु साध्विति चुक्रुशुः ।
सिन्धुराजस्य तत्कर्म प्रेक्ष्याश्रद्धेयमुत्तमम् ॥ ०१५ ॥

सङ्क्रुद्धान्पाण्डवानेको यद्दधारास्त्रतेजसा ।
तत्तस्य कर्म भूतानि सर्वाण्येवाभ्यपूजयन् ॥ ०१६ ॥

सौभद्रेण हतैः पूर्वं सोत्तरायुधिभिर्द्विपैः ।
पाण्डूनां दर्शितः पन्थाः सैन्धवेन निवारितः ॥ ०१७ ॥

यतमानास्तु ते वीरा मत्स्यपाञ्चालकेकयाः ।
पाण्डवाश्चान्वपद्यन्त प्रत्यैकश्येन सैन्धवम् ॥ ०१८ ॥

यो यो हि यतते भेत्तुं द्रोणानीकं तवाहितः ।
तं तं देववरप्राप्त्या सैन्धवः प्रत्यवारयत् ॥ ०१९ ॥

---

# अध्याय ०४३

सञ्जय उवाच ॥

सैन्धवेन निरुद्धेषु जयगृद्धिषु पाण्डुषु ।
सुघोरमभवद्युद्धं त्वदीयानां परैः सह ॥ ००१ ॥

प्रविश्य त्वार्जुनिः सेनां सत्यसंधो दुरासदाम् ।
व्यक्षोभयत तेजस्वी मकरः सागरं यथा ॥ ००२ ॥

तं तथा शरवर्षेण क्षोभयन्तमरिंदमम् ।
यथाप्रधानाः सौभद्रमभ्ययुः कुरुसत्तमाः ॥ ००३ ॥

तेषां तस्य च संमर्दो दारुणः समपद्यत ।
सृजतां शरवर्षाणि प्रसक्तममितौजसाम् ॥ ००४ ॥

रथव्रजेन संरुद्धस्तैरमित्रैरथार्जुनिः ।
वृषसेनस्य यन्तारं हत्वा चिच्छेद कार्मुकम् ॥ ००५ ॥

तस्य विव्याध बलवाञ्शरैरश्वानजिह्मगैः ।
वातायमानैरथ तैरश्वैरपहृतो रणात् ॥ ००६ ॥

तेनान्तरेणाभिमन्योर्यन्तापासारयद्रथम् ।
रथव्रजास्ततो हृष्टाः साधु साध्विति चुक्रुशुः ॥ ००७ ॥

तं सिंहमिव सङ्क्रुद्धं प्रमथ्नन्तं शरैररीन् ।
आरादायान्तमभ्येत्य वसातीयोऽभ्ययाद्द्रुतम् ॥ ००८ ॥

सोऽभिमन्युं शरैः षष्ट्या रुक्मपुङ्खैरवाकिरत् ।
अब्रवीच्च न मे जीवञ्जीवतो युधि मोक्ष्यसे ॥ ००९ ॥

तमयस्मयवर्माणमिषुणा आशुपातिना ।
विव्याध हृदि सौभद्रः स पपात व्यसुः क्षितौ ॥ ०१० ॥

वसात्यं निहतं दृष्ट्वा क्रुद्धाः क्षत्रियपुङ्गवाः ।
परिवव्रुस्तदा राजंस्तव पौत्रं जिघांसवः ॥ ०११ ॥

विस्फारयन्तश्चापानि नानारूपाण्यनेकशः ।
तद्युद्धमभवद्रौद्रं सौभद्रस्यारिभिः सह ॥ ०१२ ॥

तेषां शरान्सेष्वसनाञ्शरीराणि शिरांसि च ।

सकुण्डलानि स्रग्वीणि क्रुद्धश्चिच्छेद फाल्गुनिः ॥ ०१३ ॥

सखड्गाः साङ्गुलित्राणाः सपट्टिशपरश्वधाः ।
अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ॥ ०१४ ॥

स्रग्भिराभरणैर्वस्त्रैः पतितैश्च महाध्वजैः ।
वर्मभिश्चर्मभिर्हारैर्मुकुटैश्छत्रचामरैः ॥ ०१५ ॥

अपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा युगैः ॥ ०१६ ॥

अनुकर्षैः पताकाभिस्तथा सारथिवाजिभिः ।
रथैश्च भग्नैर्नागैश्च हतैः कीर्णाभवन्मही ॥ ०१७ ॥

निहतैः क्षत्रियैः शूरैर्नानाजनपदेश्वरैः ।
जयगृद्धैर्वृता भूमिर्दारुणा समपद्यत ॥ ०१८ ॥

दिशो विचरतस्तस्य सर्वाश्च प्रदिशस्तथा ।
रणेऽभिमन्योः क्रुद्धस्य रूपमन्तरधीयत ॥ ०१९ ॥

काञ्चनं यद्यदस्यासीद्वर्म चाभरणानि च ।
धनुषश्च शराणां च तदपश्याम केवलम् ॥ ०२० ॥

तं तदा नाशकत्कश्चिच्चक्षुर्भ्यामभिवीक्षितुम् ।
आददानं शरैर्योधान्मध्ये सूर्यमिव स्थितम् ॥ ०२१ ॥

# अध्याय ०४४

सञ्जय उवाच ॥

आददानस्तु शूराणामायूंष्यभवदार्जुनिः ।
अन्तकः सर्वभूतानां प्राणान्काल इवागते ॥ ००१ ॥

स शक्र इव विक्रान्तः शक्रसूनोः सुतो बली ।
अभिमन्युस्तदानीकं लोडयन्बह्वशोभत ॥ ००२ ॥

प्रविश्यैव तु राजेन्द्र क्षत्रियेन्द्रान्तकोपमः ।
सत्यश्रवसमादत्त व्याघ्रो मृगमिवोल्बणम् ॥ ००३ ॥

सत्यश्रवसि चाक्षिप्ते त्वरमाणा महारथाः ।
प्रगृह्य विपुलं शस्त्रमभिमन्युमुपाद्रवन् ॥ ००४ ॥

अहं पूर्वमहं पूर्वमिति क्षत्रियपुङ्गवाः ।
स्पर्धमानाः समाजग्मुर्जिघांसन्तोऽर्जुनात्मजम् ॥ ००५ ॥

क्षत्रियाणामनीकानि प्रद्रुतान्यभिधावताम् ।
जग्रास तिमिरासाद्य क्षुद्रमत्स्यानिवार्णवे ॥ ००६ ॥

ये केचन गतास्तस्य समीपमपलायिनः ।
न ते प्रतिन्यवर्तन्त समुद्रादिव सिन्धवः ॥ ००७ ॥

महाग्राहगृहीतेव वातवेगभयार्दिता ।
समकम्पत सा सेना विभ्रष्टा नौरिवार्णवे ॥ ००८ ॥

अथ रुक्मरथो नाम मद्रेश्वरसुतो बली ।
त्रस्तामाश्वासयन्सेनामत्रस्तो वाक्यमब्रवीत् ॥ ००९ ॥

अलं त्रासेन वः शूरा नैष कश्चिन्मयि स्थिते ।
अहमेनं ग्रहीष्यामि जीवग्राहं न संशयः ॥ ०१० ॥

एवमुक्त्वा तु सौभद्रमभिदुद्राव वीर्यवान् ।
सुकल्पितेनोह्यमानः स्यन्दनेन विराजता ॥ ०११ ॥

सोऽभिमन्युं त्रिभिर्बाणैर्विद्ध्वा वक्षस्यथानदत् ।
त्रिभिश्च दक्षिणे बाहौ सव्ये च निशितैस्त्रिभिः ॥ ०१२ ॥

स तस्येष्वसनं छित्त्वा फाल्गुणिः सव्यदक्षिणौ ।
भुजौ शिरश्च स्वक्षिभ्रु क्षितौ क्षिप्रमपातयत् ॥ ०१३ ॥

दृष्ट्वा रुक्मरथं रुग्णं पुत्रं शल्यस्य मानिनम् ।
जीवग्राहं जिघृक्षन्तं सौभद्रेण यशस्विना ॥ ०१४ ॥

सङ्ग्रामदुर्मदा राजन्राजपुत्राः प्रहारिणः ।
वयस्याः शल्यपुत्रस्य सुवर्णविकृतध्वजाः ॥ ०१५ ॥

तालमात्राणि चापानि विकर्षन्तो महारथाः ।
आर्जुनिं शरवर्षेण समन्तात्पर्यवारयन् ॥ ०१६ ॥

शूरैः शिक्षाबलोपेतैस्तरुणैरत्यमर्षणैः ।
दृष्ट्वैकं समरे शूरं सौभद्रमपराजितम् ॥ ०१७ ॥

छाद्यमानं शरव्रातैर्हृष्टो दुर्योधनोऽभवत् ।
वैवस्वतस्य भवनं गतमेनममन्यत ॥ ०१८ ॥

सुवर्णपुङ्खैरिषुभिर्नानालिङ्गैस्त्रिभिस्त्रिभिः ।
अदृश्यमार्जुनिं चक्रुर्निमेषात्ते नृपात्मजाः ॥ ०१९ ॥

ससूताश्वध्वजं तस्य स्यन्दनं तं च मारिष ।

आचितं समपश्याम श्वाविधं शललैरिव ॥ ०२० ॥

स गाढविद्धः क्रुद्धश्च तोत्त्रैर्गज इवार्दितः ।
गान्धर्वमस्त्रमायच्छद्रथमायां च योजयत् ॥ ०२१ ॥

अर्जुनेन तपस्तप्त्वा गन्धर्वेभ्यो यदाहृतम् ।
तुम्बुरुप्रमुखेभ्यो वै तेनामोहयताहितान् ॥ ०२२ ॥

एकः स शतधा राजन्दृश्यते स्म सहस्रधा ।
अलातचक्रवत्संख्ये क्षिप्रमस्त्राणि दर्शयन् ॥ ०२३ ॥

रथचर्यास्त्रमायाभिर्मोहयित्वा परंतपः ।
बिभेद शतधा राजञ्शरीराणि महीक्षिताम् ॥ ०२४ ॥

प्राणाः प्राणभृतां संख्ये प्रेषिता निशितैः शरैः ।
राजन्प्रापुरमुं लोकं शरीराण्यवनिं ययुः ॥ ०२५ ॥

धनूंष्यश्वान्नियन्तॄंश्च ध्वजान्बाहूंश्च साङ्गदान् ।
शिरांसि च शितैर्भल्लैस्तेषां चिच्छेद फाल्गुनिः ॥ ०२६ ॥

चूतारामो यथा भग्नः पञ्चवर्षफलोपगः ।
राजपुत्रशतं तद्वत्सौभद्रेणापतद्धतम् ॥ ०२७ ॥

क्रुद्धाशीविषसङ्काशान्सुकुमारान्सुखोचितान् ।
एकेन निहतान्दृष्ट्वा भीतो दुर्योधनोऽभवत् ॥ ०२८ ॥

रथिनः कुञ्जरानश्वान्पदातींश्चावमर्दितान् ।
दृष्ट्वा दुर्योधनः क्षिप्रमुपायात्तममर्षितः ॥ ०२९ ॥

तयोः क्षणमिवापूर्णः सङ्ग्रामः समपद्यत ।
अथाभवत्ते विमुखः पुत्रः शरशतार्दितः ॥ ०३० ॥

# अध्याय ०४५

धृतराष्ट्र उवाच ॥

यथा वदसि मे सूत एकस्य बहुभिः सह ।
सङ्ग्रामं तुमुलं घोरं जयं चैव महात्मनः ॥ ००१ ॥

अश्रद्धेयमिवाश्चर्यं सौभद्रस्याथ विक्रमम् ।
किं तु नात्यद्भुतं तेषां येषां धर्मो व्यपाश्रयः ॥ ००२ ॥

दुर्योधनेऽथ विमुखे राजपुत्रशते हते ।
सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः ॥ ००३ ॥

सञ्जय उवाच ॥

संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना लोमहर्षिणः ।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ ००४ ॥

हतान्भ्रातॄन्पितॄन्पुत्रान्सुहृत्संबन्धिबान्धवान् ।
उत्सृज्योत्सृज्य समियुस्त्वरयन्तो हयद्विपान् ॥ ००५ ॥

तान्प्रभग्नांस्तथा दृष्ट्वा द्रोणो द्रौणिर्बृहद्बलः ।
कृपो दुर्योधनः कर्णः कृतवर्माथ सौबलः ॥ ००६ ॥

अभिद्रुताः सुसङ्क्रुद्धाः सौभद्रमपराजितम् ।
तेऽपि पौत्रेण ते राजन्प्रायशो विमुखीकृताः ॥ ००७ ॥

एकस्तु सुखसंवृद्धो बाल्याद्दर्पाच्च निर्भयः ।
इष्वस्त्रविन्महातेजा लक्ष्मणोऽऽर्जुनिमभ्ययात् ॥ ००८ ॥

तमन्वगेवास्य पिता पुत्रगृद्धी न्यवर्तत ।
अनु दुर्योधनं चान्ये न्यवर्तन्त महारथाः ॥ ००९ ॥

तं तेऽभिषिषिचुर्बाणैर्मेघा गिरिमिवाम्बुभिः ।
स च तान्प्रममाथैको विष्वग्वातो यथाम्बुदान् ॥ ०१० ॥

पौत्रं तु तव दुर्धर्षं लक्ष्मणं प्रियदर्शनम् ।
पितुः समीपे तिष्ठन्तं शूरमुद्यतकार्मुकम् ॥ ०११ ॥

अत्यन्तसुखसंवृद्धं धनेश्वरसुतोपमम् ।
आससाद रणे कार्ष्णिर्मत्तो मत्तमिव द्विपम् ॥ ०१२ ॥

लक्ष्मणेन तु सङ्गम्य सौभद्रः परवीरहा ।
शरैः सुनिशितैस्तीक्ष्णैर्बाह्वोरुरसि चार्पितः ॥ ०१३ ॥

सङ्क्रुद्धो वै महाबाहुर्दण्डाहत इवोरगः ।
पौत्रस्तव महाराज तव पौत्रमभाषत ॥ ०१४ ॥

सुदृष्टः क्रियतां लोको अमुं लोकं गमिष्यसि ।
पश्यतां बान्धवानां त्वां नयामि यमसादनम् ॥ ०१५ ॥

एवमुक्त्वा ततो भल्लं सौभद्रः परवीरहा ।
उद्बबर्ह महाबाहुर्निर्मुक्तोरगसंनिभम् ॥ ०१६ ॥

स तस्य भुजनिर्मुक्तो लक्ष्मणस्य सुदर्शनम् ।
सुनसं सुभ्रु केशान्तं शिरोऽहार्षीत्सकुण्डलम् ॥ ०१७ ॥

लक्ष्मणं निहतं दृष्ट्वा हा हेत्युच्चुक्रुशुर्जनाः ॥ ०१७ ॥

ततो दुर्योधनः क्रुद्धः प्रिये पुत्रे निपातिते ।
हतैनमिति चुक्रोश क्षत्रियान्क्षत्रियर्षभः ॥ ०१८ ॥

ततो द्रोणः कृपः कर्णो द्रोणपुत्रो बृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ ०१९ ॥

स तान्विद्ध्वा शितैर्बाणैर्विमुखीकृत्य चार्जुनिः ।
वेगेनाभ्यपतत्क्रुद्धः सैन्धवस्य महद्बलम् ॥ ०२० ॥

आवव्रुस्तस्य पन्थानं गजानीकेन दंशिताः ।
कलिङ्गाश्च निषादाश्च क्राथपुत्रश्च वीर्यवान् ॥ ०२१ ॥

तत्प्रसक्तमिवात्यर्थं युद्धमासीद्विशां पते ॥ ०२१ ॥

ततस्तत्कुञ्जरानीकं व्यधमद्धृष्टमार्जुनिः ।
यथा विवान्नित्यगतिर्जलदाञ्शतशोऽम्बरे ॥ ०२२ ॥

ततः क्राथः शरव्रातैरार्जुनिं समवाकिरत् ।
अथेतरे संनिवृत्ताः पुनर्द्रोणमुखा रथाः ॥ ०२३ ॥

परमास्त्राणि धुन्वानाः सौभद्रमभिदुद्रुवुः ॥ ०२३ ॥

तान्निवार्यार्जुनिर्बाणैः क्राथपुत्रमथार्दयत् ।
शरौघेणाप्रमेयेण त्वरमाणो जिघांसया ॥ ०२४ ॥

सधनुर्बाणकेयूरौ बाहू समुकुटं शिरः ।
छत्रं ध्वजं नियन्तारमश्वांश्चास्य न्यपातयत् ॥ ०२५ ॥

कुलशीलश्रुतबलैः कीर्त्या चास्त्रबलेन च ।

युक्ते तस्मिन्हते वीराः प्रायशो विमुखाभवन् ॥ ०२६ ॥

---

# अध्याय ०४६

धृतराष्ट्र उवाच ॥

तथा प्रविष्टं तरुणं सौभद्रमपराजितम् ।
कुलानुरूपं कुर्वाणं सङ्ग्रामेष्वपलायिनम् ॥ ००१ ॥

आजानेयैः सुबलिभिर्युक्तमश्वैस्त्रिहायनैः ।
प्लवमानमिवाकाशे के शूराः समवारयन् ॥ ००२ ॥

सञ्जय उवाच ॥

अभिमन्युः प्रविश्यैव तावकान्निशितैः शरैः ।
अकरोद्विमुखान्सर्वान्पार्थिवान्पाण्डुनन्दनः ॥ ००३ ॥

तं तु द्रोणः कृपः कर्णो द्रौणिश्च सबृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ ००४ ॥

दृष्ट्वा तु सैन्धवे भारमतिमात्रं समाहितम् ।
सैन्यं तव महाराज युधिष्ठिरमुपाद्रवत् ॥ ००५ ॥

सौभद्रमितरे वीरमभ्यवर्षञ्शराम्बुभिः ।
तालमात्राणि चापानि विकर्षन्तो महारथाः ॥ ००६ ॥

तांस्तु सर्वान्महेष्वासान्सर्वविद्यासु निष्ठितान् ।

व्यष्टम्भयद्रणे बाणैः सौभद्रः परवीरहा ॥ ००७ ॥

द्रोणं पञ्चाशता विद्धा विंशत्या च बृहद्बलम् ।
अशीत्या कृतवर्माणं कृपं षष्ट्या शिलीमुखैः ॥ ००८ ॥

रुक्मपुङ्खैर्महावेगैराकर्णसमचोदितैः ।
अविध्यद्दशभिर्बाणैरश्वत्थामानमार्जुनिः ॥ ००९ ॥

स कर्णं कर्णिना कर्णे पीतेन निशितेन च ।
फाल्गुनिर्द्विषतां मध्ये विव्याध परमेषुणा ॥ ०१० ॥

पातयित्वा कृपस्याश्वांस्तथोभौ पार्ष्णिसारथी ।
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ०११ ॥

ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
पुत्राणां तव वीराणां पश्यतामवधीद्बली ॥ ०१२ ॥

तं द्रौणिः पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ।
वरं वरममित्राणामारुजन्तमभीतवत् ॥ ०१३ ॥

स तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष ।
पश्यतां धार्तराष्ट्राणामश्वत्थामानमार्जुनिः ॥ ०१४ ॥

षष्ट्या शराणां तं द्रौणिस्तिग्मधारैः सुतेजनैः ।
उग्रैर्नाकम्पयद्विद्ध्वा मैनाकमिव पर्वतम् ॥ ०१५ ॥

स तु द्रौणिं त्रिसप्तत्या हेमपुङ्खैरजिह्मगैः ।
प्रत्यविध्यन्महातेजा बलवानपकारिणम् ॥ ०१६ ॥

तस्मिन्द्रोणो बाणशतं पुत्रगृद्धी न्यपातयत् ।
अश्वत्थामा तथाष्टौ च परीप्सन्पितरं रणे ॥ ०१७ ॥

कर्णो द्वाविंशतिं भल्लान्कृतवर्मा चतुर्दश ।
बृहद्बलस्तु पञ्चाशत्कृपः शारद्वतो दश ॥ ०१८ ॥

तांस्तु प्रत्यवधीत्सर्वान्दशभिर्दशभिः शरैः ।
तैरर्द्यमानः सौभद्रः सर्वतो निशितैः शरैः ॥ ०१९ ॥

तं कोसलानामधिपः कर्णिनाताडयद्धृदि ।
स तस्याश्वान्ध्वजं चापं सूतं चापातयत्क्षितौ ॥ ०२० ॥

अथ कोसलराजस्तु विरथः खड्गचर्मधृत् ।
इयेष फाल्गुनेः कायाच्छिरो हर्तुं सकुण्डलम् ॥ ०२१ ॥

स कोसलानां भर्तारं राजपुत्रं बृहद्बलम् ।
हृदि विव्याध बाणेन स भिन्नहृदयोऽपतत् ॥ ०२२ ॥

बभञ्ज च सहस्राणि दश राजन्महात्मनाम् ।
सृजतामशिवा वाचः खड्गकार्मुकधारिणाम् ॥ ०२३ ॥

तथा बृहद्बलं हत्वा सौभद्रो व्यचरद्रणे ।
विष्टम्भयन्महेष्वासान्योधांस्तव शराम्बुभिः ॥ ०२४ ॥

---

# अध्याय ०४७

सञ्जय उवाच ॥

स कर्णं कर्णिना कर्णे पुनर्विव्याध फाल्गुनिः ।

शरैः पञ्चाशता चैनमविध्यत्कोपयन्भृशम्  ॥ ००१  ॥

प्रतिविव्याध राधेयस्तावद्भिरथ तं पुनः ।
स तैराचितसर्वाङ्गो बह्वशोभत भारत  ॥ ००२  ॥

कर्णं चाप्यकरोत्क्रुद्धो रुधिरोत्पीडवाहिनम् ।
कर्णोऽपि विबभौ शूरः शरैश्चित्रोऽसृगाप्लुतः  ॥ ००३  ॥

तावुभौ शरचित्राङ्गौ रुधिरेण समुक्षितौ ।
बभूवतुर्महात्मानौ पुष्पिताविव किंशुकौ  ॥ ००४  ॥

अथ कर्णस्य सचिवान्षड्शूरांश्चित्रयोधिनः ।
साश्वसूतध्वजरथान्सौभद्रो निजघान ह  ॥ ००५  ॥

अथेतरान्महेष्वासान्दशभिर्दशभिः शरैः ।
प्रत्यविध्यदसंभ्रान्तस्तदद्भुतमिवाभवत्  ॥ ००६  ॥

मागधस्य पुनः पुत्रं हत्वा षड्भिरजिह्मगैः ।
साश्वं ससूतं तरुणमश्वकेतुमपातयत्  ॥ ००७  ॥

मार्तिकावतकं भोजं ततः कुञ्जरकेतनम् ।
क्षुरप्रेण समुन्मथ्य ननाद विसृजञ्शरान्  ॥ ००८  ॥

तस्य दौःशासनिर्विद्ध्वा चतुर्भिश्चतुरो हयान् ।
सूतमेकेन विव्याध दशभिश्चार्जुनात्मजम्  ॥ ००९  ॥

ततो दौःशासनिं कार्ष्णिर्विद्ध्वा सप्तभिराशुगैः ।
संरम्भाद्रक्तनयनो वाक्यमुच्चैरथाब्रवीत्  ॥ ०१०  ॥

पिता तवाहवं त्यक्त्वा गतः कापुरुषो यथा ।
दिष्ट्या त्वमपि जानीषे योद्धुं न त्वद्य मोक्ष्यसे  ॥ ०११  ॥

एतावदुक्त्वा वचनं कर्मारपरिमार्जितम् ।
नाराचं विससर्जास्मै तं द्रौणिस्त्रिभिराच्छिनत्  ॥ ०१२  ॥

तस्यार्जुनिर्ध्वजं छित्त्वा शल्यं त्रिभिरताडयत् ।
तं शल्यो नवभिर्बाणैर्गार्ध्रपत्रैरताडयत्  ॥ ०१३  ॥

तस्यार्जुनिर्ध्वजं छित्त्वा उभौ च पार्ष्णिसारथी ।
तं विव्याधायसैः षड्भिः सोऽपक्रामद्रथान्तरम्  ॥ ०१४  ॥

शत्रुञ्जयं चन्द्रकेतुं मेघवेगं सुवर्चसम् ।
सूर्यभासं च पञ्चैतान्हत्वा विव्याध सौबलम्  ॥ ०१५  ॥

तं सौबलस्त्रिभिर्विद्ध्वा दुर्योधनमथाब्रवीत् ।
सर्व एनं प्रमथ्नीमः पुरैकैकं हिनस्ति नः  ॥ ०१६  ॥

अथाब्रवीत्तदा द्रोणं कर्णो वैकर्तनो वृषा ।
पुरा सर्वान्प्रमथ्नाति ब्रूह्यस्य वधमाशु नः  ॥ ०१७  ॥

ततो द्रोणो महेष्वासः सर्वांस्तान्प्रत्यभाषत ।
अस्ति वोऽस्यान्तरं कश्चित्कुमारस्य प्रपश्यति  ॥ ०१८  ॥

अन्वस्य पितरं ह्यद्य चरतः सर्वतोदिशम् ।
शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत  ॥ ०१९  ॥

धनुर्मण्डलमेवास्य रथमार्गेषु दृश्यते ।
संदधानस्य विशिखाञ्शीघ्रं चैव विमुञ्चतः  ॥ ०२०  ॥

आरुजन्निव मे प्राणान्मोहयन्नपि सायकैः ।
प्रहर्षयति मा भूयः सौभद्रः परवीरहा  ॥ ०२१  ॥

अति मा नन्दयत्येष सौभद्रो विचरन्रणे ।
अन्तरं यस्य संरब्धा न पश्यन्ति महारथाः ॥ ०२२ ॥

अस्यतो लघुहस्तस्य दिशः सर्वा महेषुभिः ।
न विशेषं प्रपश्यामि रणे गाण्डीवधन्वनः ॥ ०२३ ॥

अथ कर्णः पुनर्द्रोणमाहार्जुनिशरार्दितः ।
स्थातव्यमिति तिष्ठामि पीड्यमानोऽभिमन्युना ॥ ०२४ ॥

तेजस्विनः कुमारस्य शराः परमदारुणाः ।
क्षिण्वन्ति हृदयं मेऽद्य घोराः पावकतेजसः ॥ ०२५ ॥

तमाचार्योऽब्रवीत्कर्णं शनकैः प्रहसन्निव ।
अभेद्यमस्य कवचं युवा चाशुपराक्रमः ॥ ०२६ ॥

उपदिष्टा मया अस्य पितुः कवचधारणा ।
तामेष निखिलां वेत्ति ध्रुवं परपुरञ्जयः ॥ ०२७ ॥

शक्यं त्वस्य धनुश्छेत्तुं ज्यां च बाणैः समाहितैः ।
अभीशवो हयाश्चैव तथोभौ पार्ष्णिसारथी ॥ ०२८ ॥

एतत्कुरु महेष्वास राधेय यदि शक्यते ।
अथैनं विमुखीकृत्य पश्चात्प्रहरणं कुरु ॥ ०२९ ॥

सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः ।
विरथं विधनुष्कं च कुरुष्वैनं यदीच्छसि ॥ ०३० ॥

तदाचार्यवचः श्रुत्वा कर्णो वैकर्तनस्त्वरन् ।
अस्यतो लघुहस्तस्य पृषत्कैर्धनुराच्छिनत् ॥ ०३१ ॥

अश्वानस्यावधीद्भोजो गौतमः पार्ष्णिसारथी ।

शेषास्तु छिन्नधन्वानं शरवर्षैरवाकिरन् ॥ ०३२ ॥

त्वरमाणास्त्वराकाले विरथं षण्महारथाः ।
शरवर्षैरकरुणा बालमेकमवाकिरन् ॥ ०३३ ॥

स छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।
खड्गचर्मधरः श्रीमानुत्पपात विहायसम् ॥ ०३४ ॥

मार्गैः स कैशिकाद्यैश्च लाघवेन बलेन च ।
आर्जुनिर्व्यचरद्व्योम्नि भृशं वै पक्षिराडिव ॥ ०३५ ॥

मय्येव निपतत्येष सासिरित्यूर्ध्वदृष्टयः ।
विव्यधुस्तं महेष्वासाः समरे छिद्रदर्शिनः ॥ ०३६ ॥

तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुम् ।
राधेयो निशितैर्बाणैर्व्यधमच्चर्म चोत्तमम् ॥ ०३७ ॥

व्यसिचर्मेषुपूर्णाङ्गः सोऽन्तरिक्षात्पुनः क्षितिम् ।
आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत ॥ ०३८ ॥

स चक्ररेणूज्ज्वलशोभिताङ्गो ; बभावतीवोन्नतचक्रपाणिः ।
रणेऽभिमन्युः क्षणदासुभद्रः ; स वासुभद्रानुकृतिं प्रकुर्वन् ॥ ०३९ ॥

स्रुतरुधिरकृतैकरागवक्त्रो ; भ्रुकुटिपुटाकुटिलोऽतिसिंहनादः ।
प्रभुरमितबलो रणेऽभिमन्यु ;नृपवरमध्यगतो भृशं व्यराजत् ॥ ०४० ॥

# अध्याय ०४८

सञ्जय उवाच ॥

विष्णोः स्वसानन्दिकरः स विष्ण्वायुधभूषितः ।
रराजातिरथः संख्ये जनार्दन इवापरः ॥ ००१ ॥

मारुतोद्धूतकेशान्तमुद्यतारिवरायुधम् ।
वपुः समीक्ष्य पृथ्वीशा दुःसमीक्ष्यं सुरैरपि ॥ ००२ ॥

तच्चक्रं भृशमुद्विग्नाः सञ्चिच्छिदुरनेकधा ।
महारथस्ततः कार्ष्णिः सञ्जग्राह महागदाम् ॥ ००३ ॥

विधनुःस्यन्दनासिस्तैर्विचक्रश्चारिभिः कृतः ।
अभिमन्युर्गदापाणिरश्वत्थामानमाद्रवत् ॥ ००४ ॥

स गदामुद्यतां दृष्ट्वा ज्वलन्तीमशनीमिव ।
अपाक्रामद्रथोपस्थाद्विक्रमांस्त्रीन्नरर्षभः ॥ ००५ ॥

तस्याश्वान्गदया हत्वा तथोभौ पार्ष्णिसारथी ।
शराचिताङ्गः सौभद्रः श्वाविद्वत्प्रत्यदृश्यत ॥ ००६ ॥

ततः सुबलदायादं कालकेयमपोथयत् ।
जघान चास्यानुचरान्गान्धारान्सप्तसप्ततिम् ॥ ००७ ॥

पुनर्ब्रह्मवसातीयाञ्जघान रथिनो दश ।
केकयानां रथान्सप्त हत्वा च दश कुञ्जरान् ॥ ००८ ॥

दौःशासनिरथं साश्वं गदया समपोथयत् ॥ ००८ ॥

ततो दौःशासनिः क्रुद्धो गदामुद्यम्य मारिष ।

अभिदुद्राव सौभद्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ००९ ॥

तावुद्यतगदौ वीरावन्योन्यवधकाङ्क्षिणौ ।
भ्रातृव्यौ संप्रजह्राते पुरेव त्र्यम्बकान्तकौ ॥ ०१० ॥

तावन्योन्यं गदाग्राभ्यां संहत्य पतितौ क्षितौ ।
इन्द्रध्वजाविवोत्सृष्टौ रणमध्ये परंतपौ ॥ ०११ ॥

दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः ।
प्रोत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् ॥ ०१२ ॥

गदावेगेन महता व्यायामेन च मोहितः ।
विचेता न्यपतद्भूमौ सौभद्रः परवीरहा ॥ ०१३ ॥

एवं विनिहतो राजन्नेको बहुभिराहवे ॥ ०१३ ॥

क्षोभयित्वा चमूं सर्वां नलिनीमिव कुञ्जरः ।
अशोभत हतो वीरो व्याधैर्वनगजो यथा ॥ ०१४ ॥

तं तथा पतितं शूरं तावकाः पर्यवारयन् ।
दावं दग्ध्वा यथा शान्तं पावकं शिशिरात्यये ॥ ०१५ ॥

विमृद्य तरुशृङ्गाणि संनिवृत्तमिवानिलम् ।
अस्तं गतमिवादित्यं तप्त्वा भारतवाहिनीम् ॥ ०१६ ॥

उपप्लुतं यथा सोमं संशुष्कमिव सागरम् ।
पूर्णचन्द्राभवदनं काकपक्षवृताक्षकम् ॥ ०१७ ॥

तं भूमौ पतितं दृष्ट्वा तावकास्ते महारथाः ।
मुदा परमया युक्ताश्चुक्रुशुः सिंहवन्मुहुः ॥ ०१८ ॥

आसीत्परमको हर्षस्तावकानां विशां पते ।
इतरेषां तु वीराणां नेत्रेभ्यः प्रापतज्जलम्  ॥ ०१९  ॥

अभिक्रोशन्ति भूतानि अन्तरिक्षे विशां पते ।
दृष्ट्वा निपतितं वीरं च्युतं चन्द्रमिवाम्बरात्  ॥ ०२०  ॥

द्रोणकर्णमुखैः षड्भिर्धार्तराष्ट्रैर्महारथैः ।
एकोऽयं निहतः शेते नैष धर्मो मतो हि नः  ॥ ०२१  ॥

तस्मिंस्तु निहते वीरे बह्वशोभत मेदिनी ।
द्यौर्यथा पूर्णचन्द्रेण नक्षत्रगणमालिनी  ॥ ०२२  ॥

रुक्मपुङ्खैश्च संपूर्णा रुधिरौघपरिप्लुता ।
उत्तमाङ्गैश्च वीराणां भ्राजमानैः सकुण्डलैः  ॥ ०२३  ॥

विचित्रैश्च परिस्तोमैः पताकाभिश्च संवृता ।
चामरैश्च कुथाभिश्च प्रविद्धैश्चाम्बरोत्तमैः  ॥ ०२४  ॥

रथाश्वनरनागानामलङ्कारैश्च सुप्रभैः ।
खड्गैश्च निशितैः पीतैर्निर्मुक्तैर्भुजगैरिव  ॥ ०२५  ॥

चापैश्च विशिखैश्छिन्नैः शक्त्यृष्टिप्रासकम्पनैः ।
विविधैरायुधैश्चान्यैः संवृता भूरशोभत  ॥ ०२६  ॥

वाजिभिश्चापि निर्जीवैः स्वपद्भिः शोणितोक्षितैः ।
सारोहैर्विषमा भूमिः सौभद्रेण निपातितैः  ॥ ०२७  ॥

साङ्कुशैः समहामात्रैः सवर्मायुधकेतुभिः ।
पर्वतैरिव विध्वस्तैर्विशिखोन्मथितैर्गजैः  ॥ ०२८  ॥

पृथिव्यामनुकीर्णैश्च व्यश्वसारथियोधिभिः ।

ह्रदैरिव प्रक्षुभितैर्हतनागै रथोत्तमैः ॥ ०२९ ॥

पदातिसंघैश्च हतैर्विविधायुधभूषणैः ।
भीरूणां त्रासजननी घोररूपाभवन्मही ॥ ०३० ॥

तं दृष्ट्वा पतितं भूमौ चन्द्रार्कसदृशद्युतिम् ।
तावकानां परा प्रीतिः पाण्डूनां चाभवद्व्यथा ॥ ०३१ ॥

अभिमन्यौ हते राजञ्शिशुकेऽप्राप्तयौवने ।
संप्राद्रवच्चमूः सर्वा धर्मराजस्य पश्यतः ॥ ०३२ ॥

दीर्यमाणं बलं दृष्ट्वा सौभद्रे विनिपातिते ।
अजातशत्रुः स्वान्वीरानिदं वचनमब्रवीत् ॥ ०३३ ॥

स्वर्गमेष गतः शूरो यो हतो नपराङ्मुखः ।
संस्तम्भयत मा भैष्ट विजेष्यामो रणे रिपून् ॥ ०३४ ॥

इत्येवं स महातेजा दुःखितेभ्यो महाद्युतिः ।
धर्मराजो युधां श्रेष्ठो ब्रुवन्दुःखमपानुदत् ॥ ०३५ ॥

युद्धे ह्याशीविषाकारान्राजपुत्रान्रणे बहून् ।
पूर्वं निहत्य सङ्ग्रामे पश्चादार्जुनिरन्वगात् ॥ ०३६ ॥

हत्वा दशसहस्राणि कौसल्यं च महारथम् ।
कृष्णार्जुनसमः कार्ष्णिः शक्रसद्म गतो ध्रुवम् ॥ ०३७ ॥

रथाश्वनरमातङ्गान्विनिहत्य सहस्रशः ।
अवितृप्तः स सङ्ग्रामादशोच्यः पुण्यकर्मकृत् ॥ ०३८ ॥

वयं तु प्रवरं हत्वा तेषां तैः शरपीडिताः ।
निवेशायाभ्युपायाम सायाह्ने रुधिरोक्षिताः ॥ ०३९ ॥

निरीक्षमाणास्तु वयं परे चायोधनं शनैः ।
अपयाता महाराज ग्लानिं प्राप्ता विचेतसः ॥ ०४० ॥

ततो निशाया दिवसस्य चाशिवः ; शिवारुतः संधिरवर्तताद्भुतः ।
कुशेशयापीडनिभे दिवाकरे ; विलम्बमानेऽस्तमुपेत्य पर्वतम् ॥ ०४१ ॥

वरासिशक्त्यृष्टिवरूथचर्मणां ; विभूषणानां च समाक्षिपन्प्रभाम् ।
दिवं च भूमिं च समानयन्निव ; प्रियां तनुं भानुरुपैति पावकम् ॥ ०४२ ॥

महाभ्रकूटाचलशृङ्गसंनिभै ;र्गजैरनेकैरिव वज्रपातितैः ।
सवैजयन्त्यङ्कुशवर्मयन्तृभि ;र्निपातितैर्निष्टनतीव गौश्चिता ॥ ०४३ ॥

हतेश्वरैश्चूर्णितपत्त्युपस्करै ;र्हताश्वसूतैर्विपताककेतुभिः ।
महारथैर्भूः शुशुभे विचूर्णितैः ; पुरैरिवामित्रहतैर्नराधिप ॥ ०४४ ॥

रथाश्ववृन्दैः सहसादिभिर्हतैः ; प्रविद्धभाण्डाभरणैः पृथग्विधैः ।
निरस्तजिह्वादशनान्त्रलोचनै ;र्धरा बभौ घोरविरूपदर्शना ॥ ०४५ ॥

प्रविद्धवर्माभरणा वरायुधा ; विपन्नहस्त्यश्वरथानुगा नराः ।
महार्हशय्यास्तरणोचिताः सदा ; क्षितावनाथा इव शेरते हताः ॥ ०४६ ॥

अतीव हृष्टाः श्वसृगालवायसा ; बडाः सुपर्णाश्च वृकास्तरक्षवः ।
वयांस्यसृक्पान्यथ रक्षसां गणाः ; पिशाचसंघाश्च सुदारुणा रणे ॥ ०४७ ॥

त्वचो विनिर्भिद्य पिबन्वसामसृ ;क्तथैव मज्जां पिशितानि चाश्नुवन् ।
वपां विलुम्पन्ति हसन्ति गान्ति च ; प्रकर्षमाणाः कुणपान्यनेकशः ॥ ०४८ ॥

शरीरसंघाटवहा असृग्जला ; रथोडुपा कुञ्जरशैलसङ्कटा ।
मनुष्यशीर्षोपलमांसकर्दमा ; प्रविद्धनानाविधशस्त्रमालिनी ॥ ०४९ ॥

महाभया वैतरणीव दुस्तरा ; प्रवर्तिता योधवरैस्तदा नदी ।
उवाह मध्येन रणाजिरं भृशं ; भयावहा जीवमृतप्रवाहिनी ॥ ०५० ॥

पिबन्ति चाश्नन्ति च यत्र दुर्दृशाः ; पिशाचसंघा विविधाः सुभैरवाः ।
सुनन्दिताः प्राणभृतां भयङ्कराः ; समानभक्षाः श्वसृगालपक्षिणः ॥ ०५१ ॥

तथा तदायोधनमुग्रदर्शनं ; निशामुखे पितृपतिराष्ट्रसंनिभम् ।
निरीक्षमाणाः शनकैर्जहुर्नराः ; समुत्थितारुण्डकुलोपसङ्कुलम् ॥ ०५२ ॥

अपेतविध्वस्तमहार्हभूषणं ; निपातितं शक्रसमं महारथम् ।
रणेऽभिमन्युं ददृशुस्तदा जना ; व्यपोढहव्यं सदसीव पावकम् ॥ ०५३ ॥

---

# अध्याय ०४९

सञ्जय उवाच ॥

तस्मिंस्तु निहते वीरे सौभद्रे रथयूथपे ।
विमुक्तरथसंनाहाः सर्वे निक्षिप्तकार्मुकाः ॥ ००१ ॥

उपोपविष्टा राजानं परिवार्य युधिष्ठिरम् ।
तदेव दुःखं ध्यायन्तः सौभद्रगतमानसाः ॥ ००२ ॥

ततो युधिष्ठिरो राजा विललाप सुदुःखितः ।
अभिमन्यौ हते वीरे भ्रातुः पुत्रे महारथे ॥ ००३ ॥

द्रोणानीकमसंबाधं मम प्रियचिकीर्षया ।
भित्त्वा व्यूहं प्रविष्टोऽसौ गोमध्यमिव केसरी ॥ ००४ ॥

यस्य शूरा महेष्वासाः प्रत्यनीकगता रणे ।
प्रभग्ना विनिवर्तन्ते कृतास्त्रा युद्धदुर्मदाः ॥ ००५ ॥

अत्यन्तशत्रुरस्माकं येन दुःशासनः शरैः ।
क्षिप्रं ह्यभिमुखः सङ्ख्ये विसञ्ज्ञो विमुखीकृतः ॥ ००६ ॥

स तीर्त्वा दुस्तरं वीरो द्रोणानीकमहार्णवम् ।
प्राप्य दौःशासनिं कार्ष्णिर्यातो वैवस्वतक्षयम् ॥ ००७ ॥

कथं द्रक्ष्यामि कौन्तेयं सौभद्रे निहतेऽर्जुनम् ।
सुभद्रां वा महाभागां प्रियं पुत्रमपश्यतीम् ॥ ००८ ॥

किं स्विद्वयमपेतार्थमश्लिष्टमसमञ्जसम् ।
तावुभौ प्रतिवक्ष्यामो हृषीकेशधनञ्जयौ ॥ ००९ ॥

अहमेव सुभद्रायाः केशवार्जुनयोरपि ।
प्रियकामो जयाकाङ्क्षी कृतवानिदमप्रियम् ॥ ०१० ॥

न लुब्धो बुध्यते दोषान्मोहाल्लोभः प्रवर्तते ।
मधु लिप्सुर्हि नापश्यं प्रपातमिदमीदृशम् ॥ ०११ ॥

यो हि भोज्ये पुरस्कार्यो यानेषु शयनेषु च ।
भूषणेषु च सोऽस्माभिर्बालो युधि पुरस्कृतः ॥ ०१२ ॥

कथं हि बालस्तरुणो युद्धानामविशारदः ।
सदश्व इव संबाधे विषमे क्षेममर्हति ॥ ०१३ ॥

नो चेद्धि वयमप्येनं महीमनुशयीमहि ।
बीभत्सोः कोपदीप्तस्य दग्धाः कृपणचक्षुषा ॥ ०१४ ॥

अलुब्धो मतिमान्ह्रीमान्क्षमावान्रूपवान्बली ।
वपुष्मान्मानकृद्वीरः प्रियः सत्यपरायणः ॥ ०१५ ॥

यस्य श्लाघन्ति विबुधाः कर्माण्यूर्जितकर्मणः ।
निवातकवचाञ्जघ्ने कालकेयांश्च वीर्यवान् ॥ ०१६ ॥

महेन्द्रशत्रवो येन हिरण्यपुरवासिनः ।
अक्ष्णोर्निमेषमात्रेण पौलोमाः सगणा हताः ॥ ०१७ ॥

परेभ्योऽप्यभयार्थिभ्यो यो ददात्यभयं विभुः ।
तस्यास्माभिर्न शकितस्त्रातुमद्यात्मजो भयात् ॥ ०१८ ॥

भयं तु सुमहत्प्राप्तं धार्तराष्ट्रं महद्बलम् ।
पार्थः पुत्रवधात्क्रुद्धः कौरवाञ्शोषयिष्यति ॥ ०१९ ॥

क्षुद्रः क्षुद्रसहायश्च स्वपक्षक्षयमातुरः ।
व्यक्तं दुर्योधनो दृष्ट्वा शोचन्हास्यति जीवितम् ॥ ०२० ॥

न मे जयः प्रीतिकरो न राज्यं; न चामरत्वं न सुरैः सलोकता ।
इमं समीक्ष्याप्रतिवीर्यपौरुषं; निपातितं देववरात्मजात्मजम् ॥ ०२१ ॥

---

# अध्याय ०५०

सञ्जय उवाच ॥

तस्मिन्नहनि निर्वृत्ते घोरे प्राणभृतां क्षये ।
आदित्येऽस्तङ्गते श्रीमान्संध्याकाल उपस्थिते ॥ ००१ ॥

व्यपयातेषु सैन्येषु वासाय भरतर्षभ ।
हत्वा संशप्तकव्रातान्दिव्यैरस्त्रैः कपिध्वजः ॥ ००२ ॥

प्रायात्स्वशिबिरं जिष्णुर्जैत्रमास्थाय तं रथम् ।
गच्छन्नेव च गोविन्दं सन्नकण्ठोऽभ्यभाषत ॥ ००३ ॥

किं नु मे हृदयं त्रस्तं वाक्यं सज्जति केशव ।
स्पन्दन्ति चाप्यनिष्टानि गात्रं सीदति चाच्युत ॥ ००४ ॥

अनिष्टं चैव मे श्लिष्टं हृदयान्नापसर्पति ।
भुवि यद्दिक्षु चाप्युग्रा उत्पातास्त्रासयन्ति माम् ॥ ००५ ॥

बहुप्रकारा दृश्यन्ते सर्व एवाघशंसिनः ।
अपि स्वस्ति भवेद्राज्ञः सामात्यस्य गुरोर्मम ॥ ००६ ॥

वासुदेव उवाच ॥

व्यक्तं शिवं तव भ्रातुः सामात्यस्य भविष्यति ।
मा शुचः किञ्चिदेवान्यत्तत्रानिष्टं भविष्यति ॥ ००७ ॥

सञ्जय उवाच ॥

ततः संध्यामुपास्यैव वीरौ वीरावसादने ।
कथयन्तौ रणे वृत्तं प्रयातौ रथमास्थितौ ॥ ००८ ॥

ततः स्वशिबिरं प्राप्तौ हतानन्दं हतत्विषम् ।
वासुदेवोऽर्जुनश्चैव कृत्वा कर्म सुदुष्करम् ॥ ००९ ॥

ध्वस्ताकारं समालक्ष्य शिबिरं परवीरहा ।
बीभत्सुरब्रवीत्कृष्णमस्वस्थहृदयस्ततः ॥ ०१० ॥

नाद्य नन्दन्ति तूर्याणि मङ्गल्यानि जनार्दन ।
मिश्रा दुन्दुभिनिर्घोषैः शङ्खाश्चाडम्बरैः सह ॥ ०११ ॥

वीणा वा नाद्य वाद्यन्ते शम्यातालस्वनैः सह ॥ ०११ ॥

मङ्गल्यानि च गीतानि न गायन्ति पठन्ति च ।
स्तुतियुक्तानि रम्याणि ममानीकेषु बन्दिनः ॥ ०१२ ॥

योधाश्चापि हि मां दृष्ट्वा निवर्तन्ते ह्यधोमुखाः ।
कर्माणि च यथापूर्वं कृत्वा नाभिवदन्ति माम् ॥ ०१३ ॥

अपि स्वस्ति भवेदद्य भ्रातृभ्यो मम माधव ।
न हि शुध्यति मे भावो दृष्ट्वा स्वजनमाकुलम् ॥ ०१४ ॥

अपि पाञ्चालराजस्य विराटस्य च मानद ।
सर्वेषां चैव योधानां सामग्र्यं स्यान्ममाच्युत ॥ ०१५ ॥

न च मामद्य सौभद्रः प्रहृष्टो भ्रातृभिः सह ।
रणादायान्तमुचितं प्रत्युद्याति हसन्निव ॥ ०१६ ॥

एवं सङ्कथयन्तौ तौ प्रविष्टौ शिबिरं स्वकम् ।
ददृशाते भृशास्वस्थान्पाण्डवान्नष्टचेतसः ॥ ०१७ ॥

दृष्ट्वा भ्रातॄंश्च पुत्रांश्च विमना वानरध्वजः ।
अपश्यंश्चैव सौभद्रमिदं वचनमब्रवीत् ॥ ०१८ ॥

मुखवर्णोऽप्रसन्नो वः सर्वेषामेव लक्ष्यते ।
न चाभिमन्युं पश्यामि न च मां प्रतिनन्दथ ॥ ०१९ ॥

मया श्रुतश्च द्रोणेन चक्रव्यूहो विनिर्मितः ।

न च वस्तस्य भेत्तास्ति ऋते सौभद्रमाहवे  ॥ ०२० ॥

न चोपदिष्टस्तस्यासीन्मयानीकविनिर्गमः ।
कच्चिन्न बालो युष्माभिः परानीकं प्रवेशितः  ॥ ०२१ ॥

भित्त्वानीकं महेष्वासः परेषां बहुशो युधि ।
कच्चिन्न निहतः शेते सौभद्रः परवीरहा  ॥ ०२२ ॥

लोहिताक्षं महाबाहुं जातं सिंहमिवाद्रिषु ।
उपेन्द्रसदृशं ब्रूत कथमायोधने हतः  ॥ ०२३ ॥

सुकुमारं महेष्वासं वासवस्यात्मजात्मजम् ।
सदा मम प्रियं ब्रूत कथमायोधने हतः  ॥ ०२४ ॥

वार्ष्णेयीदयितं शूरं मया सततलालितम् ।
अम्बायाश्च प्रियं नित्यं कोऽवधीत्कालचोदितः  ॥ ०२५ ॥

सदृशो वृष्णिसिंहस्य केशवस्य महात्मनः ।
विक्रमश्रुतमाहात्म्यैः कथमायोधने हतः  ॥ ०२६ ॥

सुभद्रायाः प्रियं नित्यं द्रौपद्याः केशवस्य च ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम्  ॥ ०२७ ॥

मृदुकुञ्चितकेशान्तं बालं बालमृगेक्षणम् ।
मत्तद्विरदविक्रान्तं शालपोतमिवोद्गतम्  ॥ ०२८ ॥

स्मिताभिभाषिणं दान्तं गुरुवाक्यकरं सदा ।
बाल्येऽप्यबालकर्माणं प्रियवाक्यममत्सरम्  ॥ ०२९ ॥

महोत्साहं महाबाहुं दीर्घराजीवलोचनम् ।
भक्तानुकम्पिनं दान्तं न च नीचानुसारिणम्  ॥ ०३० ॥

कृतज्ञं ज्ञानसंपन्नं कृतास्त्रमनिवर्तिनम् ।
युद्धाभिनन्दिनं नित्यं द्विषतामघवर्धनम्  ॥ ०३१  ॥

स्वेषां प्रियहिते युक्तं पितॄणां जयगृद्धिनम् ।
न च पूर्वप्रहर्तारं सङ्ग्रामे नष्टसंभ्रमम्  ॥ ०३२  ॥

यदि पुत्रं न पश्यामि यास्यामि यमसादनम्  ॥ ०३२  ॥

सुललाटं सुकेशान्तं सुभ्र्वक्षिदशनच्छदम् ।
अपश्यतस्तद्वदनं का शान्तिर्हृदयस्य मे  ॥ ०३३  ॥

तन्त्रीस्वनसुखं रम्यं पुंस्कोकिलसमध्वनिम् ।
अशृण्वतः स्वनं तस्य का शान्तिर्हृदयस्य मे  ॥ ०३४  ॥

रूपं चाप्रतिरूपं तत्त्रिदशेष्वपि दुर्लभम् ।
अपश्यतोऽद्य वीरस्य का शान्तिर्हृदयस्य मे  ॥ ०३५  ॥

अभिवादनदक्षं तं पितॄणां वचने रतम् ।
नाद्याहं यदि पश्यामि का शान्तिर्हृदयस्य मे  ॥ ०३६  ॥

सुकुमारः सदा वीरो महार्हशयनोचितः ।
भूमावनाथवच्छेते नूनं नाथवतां वरः  ॥ ०३७  ॥

शयानं समुपासन्ति यं पुरा परमस्त्रियः ।
तमद्य विप्रविद्धाङ्गमुपासन्त्यशिवाः शिवाः  ॥ ०३८  ॥

यः पुरा बोध्यते सुप्तः सूतमागधबन्दिभिः ।
बोधयन्त्यद्य तं नूनं श्वापदा विकृतैः स्वरैः  ॥ ०३९  ॥

छत्रच्छायासमुचितं तस्य तद्वदनं शुभम् ।

नूनमद्य रजोध्वस्तं रणे रेणुः करिष्यति ॥ ०४० ॥

हा पुत्रकावितृप्तस्य सततं पुत्रदर्शने ।
भाग्यहीनस्य कालेन यथा मे नीयसे बलात् ॥ ०४१ ॥

साद्य संयमनी नूनं सदा सुकृतिनां गतिः ।
स्वभाभिर्भासिता रम्या त्वयात्यर्थं विराजते ॥ ०४२ ॥

नूनं वैवस्वतश्च त्वा वरुणश्च प्रियातिथिः ।
शतक्रतुर्धनेशश्च प्राप्तमर्चन्त्यभीरुकम् ॥ ०४३ ॥

एवं विलप्य बहुधा भिन्नपोतो वणिग्यथा ।
दुःखेन महताविष्टो युधिष्ठिरमपृच्छत ॥ ०४४ ॥

कच्चित्स कदनं कृत्वा परेषां पाण्डुनन्दन ।
स्वर्गतोऽभिमुखः संख्ये युध्यमानो नरर्षभः ॥ ०४५ ॥

स नूनं बहुभिर्यत्तैर्युध्यमानो नरर्षभैः ।
असहायः सहायार्थी मामनुध्यातवान्ध्रुवम् ॥ ०४६ ॥

पीड्यमानः शरैर्बालस्तात साध्वभिधाव माम् ।
इति विप्रलपन्मन्ये नृशंसैर्बहुभिर्हतः ॥ ०४७ ॥

अथ वा मत्प्रसूतश्च स्वस्त्रीयो माधवस्य च ।
सुभद्रायां च संभूतो नैवं वक्तुमिहार्हति ॥ ०४८ ॥

वज्रसारमयं नूनं हृदयं सुदृढं मम ।
अपश्यतो दीर्घबाहुं रक्ताक्षं यन्न दीर्यते ॥ ०४९ ॥

कथं बाले महेष्वासे नृशंसा मर्मभेदिनः ।
स्वस्त्रीये वासुदेवस्य मम पुत्रेऽक्षिपञ्शरान् ॥ ०५० ॥

यो मां नित्यमदीनात्मा प्रत्युद्गम्याभिनन्दति ।
उपयान्तं रिपून्हत्वा सोऽद्य मां किं न पश्यति ॥ ०५१ ॥

नूनं स पतितः शेते धरण्यां रुधिरोक्षितः ।
शोभयन्मेदिनीं गात्रैरादित्य इव पातितः ॥ ०५२ ॥

रणे विनिहतं श्रुत्वा शोकार्ता वै विनङ्क्ष्यति ।
सुभद्रा वक्ष्यते किं मामभिमन्युमपश्यती ॥ ०५३ ॥

द्रौपदी चैव दुःखार्ते ते च वक्ष्यामि किं न्वहम् ॥ ०५३ ॥

वज्रसारमयं नूनं हृदयं यन्न यास्यति ।
सहस्रधा वधूं दृष्ट्वा रुदतीं शोककर्शिताम् ॥ ०५४ ॥

हृष्टानां धार्तराष्ट्राणां सिंहनादो मया श्रुतः ।
युयुत्सुश्चापि कृष्णेन श्रुतो वीरानुपालभन् ॥ ०५५ ॥

अशक्नुवन्तो बीभत्सुं बालं हत्वा महारथाः ।
किं नदध्वमधर्मज्ञाः पार्थे वै दृश्यतां बलम् ॥ ०५६ ॥

किं तयोर्विप्रियं कृत्वा केशवार्जुनयोर्मृधे ।
सिंहवन्नदत प्रीताः शोककाल उपस्थिते ॥ ०५७ ॥

आगमिष्यति वः क्षिप्रं फलं पापस्य कर्मणः ।
अधर्मो हि कृतस्तीव्रः कथं स्यादफलश्चिरम् ॥ ०५८ ॥

इति तान्प्रति भाषन्वै वैश्यापुत्रो महामतिः ।
अपायाच्छस्त्रमुत्सृज्य कोपदुःखसमन्वितः ॥ ०५९ ॥

किमर्थमेतन्नाख्यातं त्वया कृष्ण रणे मम ।

अधक्ष्यं तानहं सर्वांस्तदा क्रूरान्महारथान्  ॥ ०६० ॥

निगृह्य वासुदेवस्तं पुत्राधिभिरभिप्लुतम् ।
मैवमित्यब्रवीत्कृष्णस्तीव्रशोकसमन्वितम्  ॥ ०६१ ॥

सर्वेषामेष वै पन्थाः शूराणामनिवर्तिनाम् ।
क्षत्रियाणां विशेषेण येषां युद्धेन जीविका  ॥ ०६२ ॥

एषा वै युध्यमानानां शूराणामनिवर्तिनाम् ।
विहिता धर्मशास्त्रज्ञैर्गतिर्गतिमतां वर  ॥ ०६३ ॥

ध्रुवं युद्धे हि मरणं शूराणामनिवर्तिनाम् ।
गतः पुण्यकृतां लोकानभिमन्युर्न संशयः  ॥ ०६४ ॥

एतच्च सर्ववीराणां काङ्क्षितं भरतर्षभ ।
सङ्ग्रामेऽभिमुखा मृत्युं प्रप्नुयामेति मानद  ॥ ०६५ ॥

स च वीरान्रणे हत्वा राजपुत्रान्महाबलान् ।
वीरैराकाङ्क्षितं मृत्युं संप्राप्तोऽभिमुखो रणे  ॥ ०६६ ॥

मा शुचः पुरुषव्याघ्र पूर्वैरेष सनातनः ।
धर्मकृद्भिः कृतो धर्मः क्षत्रियाणां रणे क्षयः  ॥ ०६७ ॥

इमे ते भ्रातरः सर्वे दीना भरतसत्तम ।
त्वयि शोकसमाविष्टे नृपाश्च सुहृदस्तव  ॥ ०६८ ॥

एतांस्त्वं वचसा साम्ना समाश्वासय मानद ।
विदितं वेदितव्यं ते न शोकं कर्तुमर्हसि  ॥ ०६९ ॥

एवमाश्वासितः पार्थः कृष्णेनाद्भुतकर्मणा ।
ततोऽब्रवीत्तदा भ्रातृन्सर्वान्पार्थः सगद्गदान्  ॥ ०७० ॥

स दीर्घबाहुः पृथ्वंसो दीर्घराजीवलोचनः ।
अभिमन्युर्यथा वृत्तः श्रोतुमिच्छाम्यहं तथा ॥ ०७१ ॥

सनागस्यन्दनहयान्द्रक्ष्यध्वं निहतान्मया ।
सङ्ग्रामे सानुबन्धांस्तान्मम पुत्रस्य वैरिणः ॥ ०७२ ॥

कथं च वः कृतास्त्राणां सर्वेषां शस्त्रपाणिनाम् ।
सौभद्रो निधनं गच्छेद्वज्रिणापि समागतः ॥ ०७३ ॥

यद्येवमहमज्ञास्यमशक्तान्रक्षणे मम ।
पुत्रस्य पाण्डुपाञ्चालान्मया गुप्तो भवेत्ततः ॥ ०७४ ॥

कथं च वो रथस्थानां शरवर्षाणि मुञ्चताम् ।
नीतोऽभिमन्युर्निधनं कदर्थीकृत्य वः परैः ॥ ०७५ ॥

अहो वः पौरुषं नास्ति न च वोऽस्ति पराक्रमः ।
यत्राभिमन्युः समरे पश्यतां वो निपातितः ॥ ०७६ ॥

आत्मानमेव गर्हेयं यदहं वः सुदुर्बलान् ।
युष्मानाज्ञाय निर्यातो भीरूनकृतनिश्रमान् ॥ ०७७ ॥

आहो स्विद्भूषणार्थाय वर्मशस्त्रायुधानि वः ।
वाचश्च वक्तुं संसत्सु मम पुत्रमरक्षताम् ॥ ०७८ ॥

एवमुक्त्वा ततो वाक्यं तिष्ठंश्चापवरासिमान् ।
न स्माशक्यत बीभत्सुः केनचित्प्रसमीक्षितुम् ॥ ०७९ ॥

तमन्तकमिव क्रुद्धं निःश्वसन्तं मुहुर्मुहुः ।
पुत्रशोकाभिसंतप्तमश्रुपूर्णमुखं तदा ॥ ०८० ॥

नाभिभाष्टुं शक्नुवन्ति द्रष्टुं वा सुहृदोऽर्जुनम् ।
अन्यत्र वासुदेवाद्वा ज्येष्ठाद्वा पाण्डुनन्दनात् ॥ ०८१ ॥

सर्वास्ववस्थासु हितावर्जुनस्य मनोनुगौ ।
बहुमानात्प्रियत्वाच्च तावेनं वक्तुमर्हतः ॥ ०८२ ॥

ततस्तं पुत्रशोकेन भृशं पीडितमानसम् ।
राजीवलोचनं क्रुद्धं राजा वचनमब्रवीत् ॥ ०८३ ॥

---

# अध्याय ०५१

युधिष्ठिर उवाच ॥

त्वयि याते महाबाहो संशप्तकबलं प्रति ।
प्रयत्नमकरोत्तीव्रमाचार्यो ग्रहणे मम ॥ ००१ ॥

व्याढानीकं वयं द्रोणं वरयामः स्म सर्वशः ।
प्रतिव्यूह्य रथानीकं यतमानं तथा रणे ॥ ००२ ॥

स वार्यमाणो रथिभी रक्षितेन मया तथा ।
अस्मानपि जघानाशु पीडयन्निशितैः शरैः ॥ ००३ ॥

ते पीड्यमाना द्रोणेन द्रोणानीकं न शक्नुमः ।
प्रतिवीक्षितुमप्याजौ भेत्तुं तत्कुत एव तु ॥ ००४ ॥

वयं त्वप्रतिमं वीर्ये सर्वे सौभद्रमात्मजम् ।
उक्तवन्तः स्म ते तात भिन्ध्यनीकमिति प्रभो ॥ ००५ ॥

स तथा चोदितोऽस्माभिः सदश्व इव वीर्यवान् ।
असह्यमपि तं भारं वोढुमेवोपचक्रमे ॥ ००६ ॥

स तवास्त्रोपदेशेन वीर्येण च समन्वितः ।
प्राविशत्तद्बलं बालः सुपर्ण इव सागरम् ॥ ००७ ॥

तेऽनुयाता वयं वीरं सात्वतीपुत्रमाहवे ।
प्रवेष्टुकामास्तेनैव येन स प्राविशच्चमूम् ॥ ००८ ॥

ततः सैन्धवको राजा क्षुद्रस्तात जयद्रथः ।
वरदानेन रुद्रस्य सर्वान्नः समवारयत् ॥ ००९ ॥

ततो द्रोणः कृपः कर्णो द्रौणिश्च स बृहद्बलः ।
कृतवर्मा च सौभद्रं षड्रथाः पर्यवारयन् ॥ ०१० ॥

परिवार्य तु तैः सर्वैर्युधि बालो महारथैः ।
यतमानः परं शक्त्या बहुभिर्विरथीकृतः ॥ ०११ ॥

ततो दौःशासनिः क्षिप्रं तथा तैर्विरथीकृतम् ।
संशयं परमं प्राप्य दिष्टान्तेनाभ्ययोजयत् ॥ ०१२ ॥

स तु हत्वा सहस्राणि द्विपाश्वरथसादिनाम् ।
राजपुत्रशतं चाग्र्यं वीरांश्चालक्षितान्बहून् ॥ ०१३ ॥

बृहद्बलं च राजानं स्वर्गेणाजौ प्रयोज्य ह ।
ततः परमधर्मात्मा दिष्टान्तमुपजग्मिवान् ॥ ०१४ ॥

एतावदेव निर्वृत्तमस्माकं शोकवर्धनम् ।
स चैवं पुरुषव्याघ्रः स्वर्गलोकमवाप्तवान् ॥ ०१५ ॥

सञ्जय उवाच ॥

ततोऽर्जुनो वचः श्रुत्वा धर्मराजेन भाषितम् ।
हा पुत्र इति निःश्वस्य व्यथितो न्यपतद्भुवि ॥ ०१६ ॥

विषण्णवदनाः सर्वे परिगृह्य धनञ्जयम् ।
नेत्रैरनिमिषैर्दीनाः प्रत्यवेक्षन्परस्परम् ॥ ०१७ ॥

प्रतिलभ्य ततः सञ्ज्ञां वासविः क्रोधमूर्छितः ।
कम्पमानो ज्वरेणेव निःश्वसंश्च मुहुर्मुहुः ॥ ०१८ ॥

पाणिं पाणौ विनिष्पिष्य श्वसमानोऽश्रुनेत्रवान् ।
उन्मत्त इव विप्रेक्षन्निदं वचनमब्रवीत् ॥ ०१९ ॥

सत्यं वः प्रतिजानामि श्वोऽस्मि हन्ता जयद्रथम् ।
न चेद्वधभयाद्भीतो धार्तराष्ट्रान्प्रहास्यति ॥ ०२० ॥

न चास्माञ्शरणं गच्छेत्कृष्णं वा पुरुषोत्तमम् ।
भवन्तं वा महाराज श्वोऽस्मि हन्ता जयद्रथम् ॥ ०२१ ॥

धार्तराष्ट्रप्रियकरं मयि विस्मृतसौहृदम् ।
पापं बालवधे हेतुं श्वोऽस्मि हन्ता जयद्रथम् ॥ ०२२ ॥

रक्षमाणाश्च तं संख्ये ये मां योत्स्यन्ति केचन ।
अपि द्रोणकृपौ वीरौ छादयिष्यामि ताञ्शरैः ॥ ०२३ ॥

यद्येतदेवं सङ्ग्रामे न कुर्यां पुरुषर्षभाः ।
मा स्म पुण्यकृतां लोकान्प्राप्नुयां शूरसंमतान् ॥ ०२४ ॥

ये लोका मातृहन्तॄणां ये चापि पितृघातिनाम् ।
गुरुदारगामिनां ये च पिशुनानां च ये तथा ॥ ०२५ ॥

साधूनसूयतां ये च ये चापि परिवादिनाम् ।
ये च निक्षेपहर्तॄणां ये च विश्वासघातिनाम्  ॥ ०२६  ॥

भुक्तपूर्वां स्त्रियं ये च निन्दतामघशंसिनाम् ।
ब्रह्मघ्नानां च ये लोका ये च गोघातिनामपि  ॥ ०२७  ॥

पायसं वा यवान्नं वा शाकं कृसरमेव वा ।
संयावापूपमांसानि ये च लोका वृथाश्नताम्  ॥ ०२८  ॥

तानह्नैवाधिगच्छेयं न चेद्धन्यां जयद्रथम्  ॥ ०२८  ॥

वेदाध्यायिनमत्यर्थं संशितं वा द्विजोत्तमम् ।
अवमन्यमानो यान्याति वृद्धान्साधूंस्तथा गुरून्  ॥ ०२९  ॥

स्पृशतां ब्राह्मणं गां च पादेनाग्निं च यां लभेत् ।
याप्सु श्लेष्म पुरीषं वा मूत्रं वा मुञ्चतां गतिः  ॥ ०३०  ॥

तां गच्छेयं गतिं घोरां न चेद्धन्यां जयद्रथम्  ॥ ०३०  ॥

नग्नस्य स्नायमानस्य या च वन्ध्यातिथेर्गतिः ।
उत्कोचिनां मृषोक्तीनां वञ्चकानां च या गतिः  ॥ ०३१  ॥

आत्मापहारिणां या च या च मिथ्याभिशंसिनाम्  ॥ ०३१  ॥

भृत्यैः संदृश्यमानानां पुत्रदाराश्रितैस्तथा ।
असंविभज्य क्षुद्राणां या गतिर्मृष्टमश्नताम्  ॥ ०३२  ॥

तां गच्छेयं गतिं घोरां न चेद्धन्यां जयद्रथम्  ॥ ०३२  ॥

संश्रितं वापि यस्त्यक्त्वा साधुं तद्वचने रतम् ।
न बिभर्ति नृशंसात्मा निन्दते चोपकारिणम्  ॥ ०३३  ॥

अर्हते प्रातिवेश्याय श्राद्धं यो न ददाति च ।
अनर्हते च यो दद्याद्वृषलीपत्युरेव च  ॥ ०३४  ॥

मद्यपो भिन्नमर्यादः कृतघ्नो भ्रातृनिन्दकः ।
तेषां गतिमियां क्षिप्रं न चेद्धन्यां जयद्रथम्  ॥ ०३५  ॥

धर्मादपेता ये चान्ये मया नात्रानुकीर्तिताः ।
ये चानुकीर्तिताः क्षिप्रं तेषां गतिमवाप्नुयाम्  ॥ ०३६  ॥

यदि व्युष्टामिमां रात्रिं श्वो न हन्यां जयद्रथम्  ॥ ०३६  ॥

इमां चाप्यपरां भूयः प्रतिज्ञां मे निबोधत ।
यद्यस्मिन्नहते पापे सूर्योऽस्तमुपयास्यति  ॥ ०३७  ॥

इहैव संप्रवेष्टाहं ज्वलितं जातवेदसम्  ॥ ०३७  ॥

असुरसुरमनुष्याः पक्षिणो वोरगा वा ; पितृरजनिचरा वा ब्रह्मदेवर्षयो वा ।
चरमचरमपीदं यत्परं चापि तस्मा ;त्तदपि मम रिपुं तं रक्षितुं नैव शक्ताः  ॥ ०३८  ॥

यदि विशति रसातलं तदग्र्यं ; वियदपि देवपुरं दितेः पुरं वा ।
तदपि शरशतैरहं प्रभाते ; भृशमभिपत्य रिपोः शिरोऽभिहर्ता  ॥ ०३९  ॥

एवमुक्त्वा विचिक्षेप गाण्डीवं सव्यदक्षिणम् ।
तस्य शब्दमतिक्रम्य धनुःशब्दोऽस्पृशद्दिवम्  ॥ ०४०  ॥

अर्जुनेन प्रतिज्ञाते पाञ्चजन्यं जनार्दनः ।
प्रदध्मौ तत्र सङ्क्रुद्धो देवदत्तं धनञ्जयः  ॥ ०४१  ॥

स पाञ्चजन्योऽच्युतवक्त्रवायुना ; भृशं सुपूर्णोदरनिःसृतध्वनिः ।

जगत्सपातालवियद्दिगीश्वरं ; प्रकम्पयामास युगात्यये यथा ॥ ०४२ ॥

ततो वादित्रघोषाश्च प्रादुरासन्समन्ततः ।
सिंहनादाश्च पाण्डूनां प्रतिज्ञाते महात्मना ॥ ०४३ ॥

---

# प्रतिज्ञापर्व

## अध्याय ०५२

सञ्जय उवाच ॥

श्रुत्वा तु तं महाशब्दं पाण्डूनां पुत्रगृद्धिनाम् ।
चारैः प्रवेदिते तत्र समुत्थाय जयद्रथः ॥ ००१ ॥

शोकसंमूढहृदयो दुःखेनाभिहतो भृशम् ।
मज्जमान इवागाधे विपुले शोकसागरे ॥ ००२ ॥

जगाम समितिं राज्ञां सैन्धवो विमृशन्बहु ।
स तेषां नरदेवानां सकाशे परिदेवयन् ॥ ००३ ॥

अभिमन्योः पितुर्भीतः सव्रीडो वाक्यमब्रवीत् ।
योऽसौ पाण्डोः किल क्षेत्रे जातः शक्रेण कामिना ॥ ००४ ॥

स निनीषति दुर्बुद्धिर्मां किलैकं यमक्षयम् ।
तत्स्वस्ति वोऽस्तु यास्यामि स्वगृहं जीवितेप्सया ॥ ००५ ॥

अथ वा स्थ प्रतिबलास्त्रातुं मां क्षत्रियर्षभाः ।

पार्थेन प्रार्थितं वीरास्ते ददन्तु ममाभयम्  ॥ ००६  ॥

द्रोणदुर्योधनकृपाः कर्णमद्रेशबाह्लिकाः ।
दुःशासनादयः शक्तास्त्रातुमप्यन्तकाद्रितम्  ॥ ००७  ॥

किमङ्ग पुनरेकेन फल्गुनेन जिघांसता ।
न त्रायेयुर्भवन्तो मां समस्ताः पतयः क्षितेः  ॥ ००८  ॥

प्रहर्षं पाण्डवेयानां श्रुत्वा मम महद्भयम् ।
सीदन्तीव च मेऽङ्गानि मुमूर्षोरिव पार्थिवाः  ॥ ००९  ॥

वधो नूनं प्रतिज्ञातो मम गाण्डीवधन्वना ।
तथा हि हृष्टाः क्रोशन्ति शोककालेऽपि पाण्डवाः  ॥ ०१०  ॥

न देवा न च गन्धर्वा नासुरोरगराक्षसाः ।
उत्सहन्तेऽन्यथा कर्तुं कुत एव नराधिपाः  ॥ ०११  ॥

तस्मान्मामनुजानीत भद्रं वोऽस्तु नरर्षभाः ।
अदर्शनं गमिष्यामि न मां द्रक्ष्यन्ति पाण्डवाः  ॥ ०१२  ॥

एवं विलपमानं तं भयाद्व्याकुलचेतसम् ।
आत्मकार्यगरीयस्त्वाद्राजा दुर्योधनोऽब्रवीत्  ॥ ०१३  ॥

न भेतव्यं नरव्याघ्र को हि त्वा पुरुषर्षभ ।
मध्ये क्षत्रियवीराणां तिष्ठन्तं प्रार्थयेद्युधि  ॥ ०१४  ॥

अहं वैकर्तनः कर्णश्चित्रसेनो विविंशतिः ।
भूरिश्रवाः शलः शल्यो वृषसेनो दुरासदः  ॥ ०१५  ॥

पुरुमित्रो जयो भोजः काम्बोजश्च सुदक्षिणः ।
सत्यव्रतो महाबाहुर्विकर्णो दुर्मुखः सहः  ॥ ०१६  ॥

दुःशासनः सुबाहुश्च कलिङ्गश्चाप्युदायुधः ।
विन्दानुविन्दावावन्त्यौ द्रोणो द्रौणिः ससौबलः ॥ ०१७ ॥

त्वं चापि रथिनां श्रेष्ठः स्वयं शूरोऽमितद्युतिः ।
स कथं पाण्डवेयेभ्यो भयं पश्यसि सैन्धव ॥ ०१८ ॥

अक्षौहिण्यो दशैका च मदीयास्तव रक्षणे ।
यत्ता योत्स्यन्ति मा भैस्त्वं सैन्धव व्येतु ते भयम् ॥ ०१९ ॥

एवमाश्वासितो राजन्पुत्रेण तव सैन्धवः ।
दुर्योधनेन सहितो द्रोणं रात्रावुपागमत् ॥ ०२० ॥

उपसङ्ग्रहणं कृत्वा द्रोणाय स विशां पते ।
उपोपविश्य प्रणतः पर्यपृच्छदिदं तदा ॥ ०२१ ॥

निमित्ते दूरपातित्वे लघुत्वे दृढवेधने ।
मम ब्रवीतु भगवान्विशेषं फल्गुनस्य च ॥ ०२२ ॥

विद्याविशेषमिच्छामि ज्ञातुमाचार्य तत्त्वतः ।
ममार्जुनस्य च विभो यथातत्त्वं प्रचक्ष्व मे ॥ ०२३ ॥

द्रोण उवाच ॥

सममाचार्यकं तात तव चैवार्जुनस्य च ।
योगाद्दुःखोचितत्वाच्च तस्मात्त्वत्तोऽधिकोऽर्जुनः ॥ ०२४ ॥

न तु ते युधि संत्रासः कार्यः पार्थात्कथञ्चन ।
अहं हि रक्षिता तात भयात्त्वां नात्र संशयः ॥ ०२५ ॥

न हि मद्बाहुगुप्तस्य प्रभवन्त्यमरा अपि ।

व्यूहिष्यामि च तं व्यूहं यं पार्थो न तरिष्यति ॥ ०२६ ॥

तस्माद्युध्यस्व मा भैस्त्वं स्वधर्ममनुपालय ।
पितृपैतामहं मार्गमनुयाहि नराधिप ॥ ०२७ ॥

अधीत्य विधिवद्वेदानग्नयः सुहुतास्त्वया ।
इष्टं च बहुभिर्यज्ञैर्न ते मृत्युभयाद्भयम् ॥ ०२८ ॥

दुर्लभं मानुषैर्मन्दैर्महाभाग्यमवाप्य तु ।
भुजवीर्यार्जिता.णल्लोकान्दिव्यान्प्राप्स्यस्यनुत्तमान् ॥ ०२९ ॥

कुरवः पाण्डवाश्चैव वृष्णयोऽन्ये च मानवाः ।
अहं च सह पुत्रेण अध्रुवा इति चिन्त्यताम् ॥ ०३० ॥

पर्यायेण वयं सर्वे कालेन बलिना हताः ।
परलोकं गमिष्यामः स्वैः स्वैः कर्मभिरन्विताः ॥ ०३१ ॥

तपस्तप्त्वा तु या.णल्लोकान्प्राप्नुवन्ति तपस्विनः ।
क्षत्रधर्माश्रिताः शूराः क्षत्रियाः प्राप्नुवन्ति तान् ॥ ०३२ ॥

सञ्जय उवाच ॥

एवमाश्वासितो राजन्भारद्वाजेन सैन्धवः ।
अपानुदद्भयं पार्थाद्युद्धाय च मनो दधे ॥ ०३३ ॥

---

# अध्याय ०५३

सञ्जय उवाच ॥

प्रतिज्ञाते तु पार्थेन सिन्धुराजवधे तदा ।
वासुदेवो महाबाहुर्धनञ्जयमभाषत ॥ ००१ ॥

भ्रातॄणां मतमाज्ञाय त्वया वाचा प्रतिश्रुतम् ।
सैन्धवं श्वोऽस्मि हन्तेति तत्साहसतमं कृतम् ॥ ००२ ॥

असंमन्त्र्य मया सार्धमतिभारोऽयमुद्यतः ।
कथं नु सर्वलोकस्य नावहास्या भवेमहि ॥ ००३ ॥

धार्तराष्ट्रस्य शिबिरे मया प्रणिहिताश्चराः ।
त इमे शीघ्रमागम्य प्रवृत्तिं वेदयन्ति नः ॥ ००४ ॥

त्वया वै संप्रतिज्ञाते सिन्धुराजवधे तदा ।
सिंहनादः सवादित्रः सुमहानिह तैः श्रुतः ॥ ००५ ॥

तेन शब्देन वित्रस्ता धार्तराष्ट्राः ससैन्धवाः ।
नाकस्मात्सिंहनादोऽयमिति मत्वा व्यवस्थिताः ॥ ००६ ॥

सुमहाञ्शब्दसंपातः कौरवाणां महाभुज ।
आसीन्नागाश्वपत्तीनां रथघोषश्च भैरवः ॥ ००७ ॥

अभिमन्युवधं श्रुत्वा ध्रुवमार्तो धनञ्जयः ।
रात्रौ निर्यास्यति क्रोधादिति मत्वा व्यवस्थिताः ॥ ००८ ॥

तैर्यतद्भिरियं सत्या श्रुता सत्यवतस्तव ।
प्रतिज्ञा सिन्धुराजस्य वधे राजीवलोचन ॥ ००९ ॥

ततो विमनसः सर्वे त्रस्ताः क्षुद्रमृगा इव ।
आसन्सुयोधनामात्याः स च राजा जयद्रथः ॥ ०१० ॥

अथोत्थाय सहामात्यैर्दीनः शिबिरमात्मनः ।
आयात्सौवीरसिन्धूनामीश्वरो भृशदुःखितः ॥ ०११ ॥

स मन्त्रकाले संमन्त्र्य सर्वा नैःश्रेयसीः क्रियाः ।
सुयोधनमिदं वाक्यमब्रवीद्राजसंसदि ॥ ०१२ ॥

मामसौ पुत्रहन्तेति श्वोऽभियाता धनञ्जयः ।
प्रतिज्ञातो हि सेनाया मध्ये तेन वधो मम ॥ ०१३ ॥

तां न देवा न गन्धर्वा नासुरोरगराक्षसाः ।
उत्सहन्तेऽन्यथा कर्तुं प्रतिज्ञां सव्यसाचिनः ॥ ०१४ ॥

ते मां रक्षत सङ्ग्रामे मा वो मूर्ध्नि धनञ्जयः ।
पदं कृत्वाप्नुयाल्लक्ष्यं तस्मादत्र विधीयताम् ॥ ०१५ ॥

अथ रक्षा न मे संख्ये क्रियते कुरुनन्दन ।
अनुजानीहि मां राजन्गमिष्यामि गृहान्प्रति ॥ ०१६ ॥

एवमुक्तस्त्ववाक्शीर्षो विमनाः स सुयोधनः ।
श्रुत्वाभिशप्तवन्तं त्वां ध्यानमेवान्वपद्यत ॥ ०१७ ॥

तमार्तमभिसंप्रेक्ष्य राजा किल स सैन्धवः ।
मृदु चात्महितं चैव सापेक्षमिदमुक्तवान् ॥ ०१८ ॥

नाहं पश्यामि भवतां तथावीर्यं धनुर्धरम् ।
योऽर्जुनस्यास्त्रमस्त्रेण प्रतिहन्यान्महाहवे ॥ ०१९ ॥

वासुदेवसहायस्य गाण्डीवं धुन्वतो धनुः ।
कोऽर्जुनस्याग्रतस्तिष्ठेत्साक्षादपि शतक्रतुः ॥ ०२० ॥

महेश्वरोऽपि पार्थेन श्रूयते योधितः पुरा ।

पदातिना महातेजा गिरौ हिमवति प्रभुः ॥ ०२१ ॥

दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।
जघानेकरथेनैव देवराजप्रचोदितः ॥ ०२२ ॥

समायुक्तो हि कौन्तेयो वासुदेवेन धीमता ।
सामरानपि लोकांस्त्रीन्निहन्यादिति मे मतिः ॥ ०२३ ॥

सोऽहमिच्छाम्यनुज्ञातुं रक्षितुं वा महात्मना ।
द्रोणेन सहपुत्रेण वीरेण यदि मन्यसे ॥ ०२४ ॥

स राज्ञा स्वयमाचार्यो भृशमाक्रन्दितोऽर्जुन ।
संविधानं च विहितं रथाश्च किल सज्जिताः ॥ ०२५ ॥

कर्णो भूरिश्रवा द्रौणिर्वृषसेनश्च दुर्जयः ।
कृपश्च मद्रराजश्च षडेतेऽस्य पुरोगमाः ॥ ०२६ ॥

शकटः पद्मपश्चार्धो व्यूहो द्रोणेन कल्पितः ।
पद्मकर्णिकमध्यस्थः सूचीपाशे जयद्रथः ॥ ०२७ ॥

स्थास्यते रक्षितो वीरैः सिन्धुराड्युद्धदुर्मदैः ॥ ०२७ ॥

धनुष्यस्त्रे च वीर्ये च प्राणे चैव तथोरसि ।
अविषह्यतमा ह्येते निश्चिताः पार्थ षड्रथाः ॥ ०२८ ॥

एतानजित्वा सगणान्नैव प्राप्यो जयद्रथः ॥ ०२८ ॥

तेषामेकैकशो वीर्यं षण्णां त्वमनुचिन्तय ।
सहिता हि नरव्याघ्रा न शक्या जेतुमञ्जसा ॥ ०२९ ॥

भूयश्च चिन्तयिष्यामि नीतिमात्महिताय वै ।

मन्त्रज्ञैः सचिवैः सार्धं सुहृद्भिः कार्यसिद्धये ॥ ०३० ॥

अर्जुन उवाच ॥

षड्रथान्धार्तराष्ट्रस्य मन्यसे यान्बलाधिकान् ।
तेषां वीर्यं ममार्धेन न तुल्यमिति लक्षये ॥ ०३१ ॥

अस्त्रमस्त्रेण सर्वेषामेतेषां मधुसूदन ।
मया द्रक्ष्यसि निर्भिन्नं जयद्रथवधैषिणा ॥ ०३२ ॥

द्रोणस्य मिषतः सोऽहं सगणस्य विलप्यतः ।
मूर्धानं सिन्धुराजस्य पातयिष्यामि भूतले ॥ ०३३ ॥

यदि साध्याश्च रुद्राश्च वसवश्च सहाश्विनः ।
मरुतश्च सहेन्द्रेण विश्वेदेवास्तथासुराः ॥ ०३४ ॥

पितरः सहगन्धर्वाः सुपर्णाः सागराद्रयः ।
द्यौर्वियत्पृथिवी चेयं दिशश्च सदिगीश्वराः ॥ ०३५ ॥

ग्राम्यारण्यानि भूतानि स्थावराणि चराणि च ।
त्रातारः सिन्धुराजस्य भवन्ति मधुसूदन ॥ ०३६ ॥

तथापि बाणैर्निहतं श्वो द्रष्टासि रणे मया ।
सत्येन ते शपे कृष्ण तथैवायुधमालभे ॥ ०३७ ॥

यश्च गोप्ता महेष्वासस्तस्य पापस्य दुर्मतेः ।
तमेव प्रथमं द्रोणमभियास्यामि केशव ॥ ०३८ ॥

तस्मिन्द्यूतमिदं बद्धं मन्यते स्म सुयोधनः ।
तस्मात्तस्यैव सेनाग्रं भित्त्वा यास्यामि सैन्धवम् ॥ ०३९ ॥

द्रष्टासि श्वो महेष्वासान्नाराचैस्तिग्मतेजनैः ।
शृङ्गाणीव गिरेर्वज्रैर्दार्यमाणान्मया युधि ॥ ०४० ॥

नरनागाश्वदेहेभ्यो विस्रविष्यति शोणितम् ।
पतद्भ्यः पतितेभ्यश्च विभिन्नेभ्यः शितैः शरैः ॥ ०४१ ॥

गाण्डीवप्रेषिता बाणा मनोनिलसमा जवे ।
नृनागाश्वान्विदेहासून्कर्तारश्च सहस्रशः ॥ ०४२ ॥

यमात्कुबेराद्वरुणाद्रुद्रादिन्द्राच्च यन्मया ।
उपात्तमस्त्रं घोरं वै तद्द्रष्टारो नरा युधि ॥ ०४३ ॥

ब्राह्मेणास्त्रेण चास्त्राणि हन्यमानानि संयुगे ।
मया द्रष्टासि सर्वेषां सैन्धवस्याभिरक्षिणाम् ॥ ०४४ ॥

शरवेगसमुत्कृत्तै राज्ञां केशव मूर्धभिः ।
आस्तीर्यमाणां पृथिवीं द्रष्टासि श्वो मया युधि ॥ ०४५ ॥

क्रव्यादांस्तर्पयिष्यामि द्रावयिष्यामि शात्रवान् ।
सुहृदो नन्दयिष्यामि पातयिष्यामि सैन्धवम् ॥ ०४६ ॥

बह्वागस्कृत्कुसंबन्धी पापदेशसमुद्भवः ।
मया सैन्धवको राजा हतः स्वाञ्शोचयिष्यति ॥ ०४७ ॥

सर्वक्षीरान्नभोक्तारः पापाचारा रणाजिरे ।
मया सराजका बाणैर्नुन्ना नङ्क्ष्यन्ति सैन्धवाः ॥ ०४८ ॥

तथा प्रभाते कर्तास्मि यथा कृष्ण सुयोधनः ।
नान्यं धनुर्धरं लोके मंस्यते मत्समं युधि ॥ ०४९ ॥

गाण्डीवं च धनुर्दिव्यं योद्धा चाहं नरर्षभ ।

त्वं च यन्ता हृषीकेश किं नु स्यादजितं मया ॥ ०५० ॥

यथा हि लक्ष्म चन्द्रे वै समुद्रे च यथा जलम् ।
एवमेतां प्रतिज्ञां मे सत्यां विद्धि जनार्दन ॥ ०५१ ॥

मावमंस्था ममास्त्राणि मावमंस्था धनुर्दृढम् ।
मावमंस्था बलं बाह्वोर्मावमंस्था धनञ्जयम् ॥ ०५२ ॥

यथा हि यात्वा सङ्ग्रामे न जीये विजयामि च ।
तेन सत्येन सङ्ग्रामे हतं विद्धि जयद्रथम् ॥ ०५३ ॥

ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु संनतिः ।
श्रीर्ध्रुवा चापि दक्षेषु ध्रुवो नारायणे जयः ॥ ०५४ ॥

सञ्जय उवाच ॥

एवमुक्त्वा हृषीकेशं स्वयमात्मानमात्मना ।
संदिदेशार्जुनो नर्दन्वासविः केशवं प्रभुम् ॥ ०५५ ॥

यथा प्रभातां रजनीं कल्पितः स्याद्रथो मम ।
तथा कार्यं त्वया कृष्ण कार्यं हि महदुद्यतम् ॥ ०५६ ॥

---

# अध्याय ०५४

सञ्जय उवाच ॥

तां निशां दुःखशोकार्तौ श्वसन्ताविव चोरगौ ।

निद्रां नैवोपलेभाते वासुदेवधनञ्जयौ ॥ ००१ ॥

नरनारायणौ क्रुद्धौ ज्ञात्वा देवाः सवासवाः ।
व्यथिताश्चिन्तयामासुः किं स्विदेतद्भविष्यति ॥ ००२ ॥

ववुश्च दारुणा वाता रूक्षा गोराभिशंसिनः ।
सकबन्धस्तथादित्ये परिघः समदृश्यत ॥ ००३ ॥

शुष्काशन्यश्च निष्पेतुः सनिर्घाताः सविद्युतः ।
चचाल चापि पृथिवी सशैलवनकानना ॥ ००४ ॥

चुक्षुभुश्च महाराज सागरा मकरालयाः ।
प्रतिस्रोतः प्रवृत्ताश्च तथा गन्तुं समुद्रगाः ॥ ००५ ॥

रथाश्वनरनागानां प्रवृत्तमधरोत्तरम् ।
क्रव्यादानां प्रमोदार्थं यमराष्ट्रविवृद्धये ॥ ००६ ॥

वाहनानि शकृन्मूत्रे मुमुचू रुरुदुश्च ह ।
तान्दृष्ट्वा दारुणान्सर्वानुत्पाता.ण्ल्लोमहर्षणान् ॥ ००७ ॥

सर्वे ते व्यथिताः सैन्यास्त्वदीया भरतर्षभ ।
श्रुत्वा महाबलस्योग्रां प्रतिज्ञां सव्यसाचिनः ॥ ००८ ॥

अथ कृष्णं महाबाहुरब्रवीत्पाकशासनिः ।
आश्वासय सुभद्रां त्वं भगिनीं स्नुषया सह ॥ ००९ ॥

स्नुषा श्वश्वानघायस्ते विशोके कुरु माधव ।
साम्ना सत्येन युक्तेन वचसाश्वासय प्रभो ॥ ०१० ॥

ततोऽर्जुनगृहं गत्वा वासुदेवः सुदुर्मनाः ।
भगिनीं पुत्रशोकार्तामाश्वासयत दुःखिताम् ॥ ०११ ॥

मा शोकं कुरु वार्ष्णेयि कुमारं प्रति सस्नुषा ।
सर्वेषां प्राणिनां भीरु निष्ठैषा कालनिर्मिता ॥ ०१२ ॥

कुले जतस्य वीरस्य क्षत्रियस्य विशेषतः ।
सदृशं मरणं ह्येतत्तव पुत्रस्य मा शुचः ॥ ०१३ ॥

दिष्ट्या महारथो वीरः पितुस्तुल्यपराक्रमः ।
क्षात्रेण विधिना प्राप्तो वीराभिलषितां गतिम् ॥ ०१४ ॥

जित्वा सुबहुशः शत्रून्प्रेषयित्वा च मृत्यवे ।
गतः पुण्यकृतां लोकान्सर्वकामदुहोऽक्षयान् ॥ ०१५ ॥

तपसा ब्रह्मचर्येण श्रुतेन प्रज्ञयापि च ।
सन्तो यां गतिमिच्छन्ति प्राप्तस्तां तव पुत्रकः ॥ ०१६ ॥

वीरसूर्वीरपत्नी त्वं वीरश्वशुरबान्धवा ।
मा शुचस्तनयं भद्रे गतः स परमां गतिम् ॥ ०१७ ॥

प्राप्स्यते चाप्यसौ क्षुद्रः सैन्धवो बालघातकः ।
अस्यावलेपस्य फलं ससुहृद्गणबान्धवः ॥ ०१८ ॥

व्युष्टायां तु वरारोहे रजन्यां पापकर्मकृत् ।
न हि मोक्ष्यति पार्थात्स प्रविष्टोऽप्यमरावतीम् ॥ ०१९ ॥

श्वः शिरः श्रोष्यसे तस्य सैन्धवस्य रणे हृतम् ।
समन्तपञ्चकाद्बाह्यं विशोका भव मा रुदः ॥ ०२० ॥

क्षत्रधर्मं पुरस्कृत्य गतः शूरः सतां गतिम् ।
यां वयं प्राप्नुयामेह ये चान्ये शस्त्रजीविनः ॥ ०२१ ॥

व्यूढोरस्को महाबाहुरनिवर्ती वरप्रणुत् ।
गतस्तव वरारोहे पुत्रः स्वर्गं ज्वरं जहि ॥ ०२२ ॥

अनु जातश्च पितरं मातृपक्षं च वीर्यवान् ।
सहस्रशो रिपून्हत्वा हतः शूरो महारथः ॥ ०२३ ॥

आश्वासय स्नुषां राज्ञि मा शुचः क्षत्रिये भृषम् ।
श्वः प्रियं सुमहच्छ्रुत्वा विशोका भव नन्दिनि ॥ ०२४ ॥

यत्पार्थेन प्रतिज्ञातं तत्तथा न तदन्यथा ।
चिकीर्षितं हि ते भर्तुर्न भवेज्जातु निष्फलम् ॥ ०२५ ॥

यदि च मनुजपन्नगाः पिशाचा ; रजनिचराः पतगाः सुरासुराश्च ।
रणगतमभियान्ति सिन्धुराजं ; न स भविता सह तैरपि प्रभाते ॥ ०२६ ॥

---

# अध्याय ०५५

सञ्जय उवाच ॥

एतच्छ्रुत्वा वचस्तस्य केशवस्य महात्मनः ।
सुभद्रा पुत्रशोकार्ता विललाप सुदुःखिता ॥ ००१ ॥

हा पुत्र मम मन्दायाः कथं संयुगमेत्य ह ।
निधनं प्राप्तवांस्तात पितृतुल्यपराक्रमः ॥ ००२ ॥

कथमिन्दीवरश्यामं सुदंष्ट्रं चारुलोचनम् ।
मुखं ते दृश्यते वत्स गुण्ठितं रणरेणुना ॥ ००३ ॥

नूनं शूरं निपतितं त्वां पश्यन्त्यनिवर्तिनम् ।
सुशिरोग्रीवबाह्वंसं व्यूढोरस्कं निरूदरम्  ॥ ००४  ॥

चारूपचितसर्वाङ्गं स्वक्षं शस्त्रक्षताचितम् ।
भूतानि त्वा निरीक्षन्ते नूनं चन्द्रमिवोदितम्  ॥ ००५  ॥

शयनीयं पुरा यस्य स्पर्ध्यास्तरणसंवृतम् ।
भूमावद्य कथं शेषे विप्रविद्धः सुखोचितः  ॥ ००६  ॥

योऽन्वास्यत पुरा वीरो वरस्त्रीभिर्महाभुजः ।
कथमन्वास्यते सोऽद्य शिवाभिः पतितो मृधे  ॥ ००७  ॥

योऽस्तूयत पुरा हृष्टैः सूतमागधबन्दिभिः ।
सोऽद्य क्रव्याद्गणैर्घोरैर्विनदद्भिरुपास्यते  ॥ ००८  ॥

पाण्डवेषु च नाथेषु वृष्णिवीरेषु चाभिभो ।
पाञ्चालेषु च वीरेषु हतः केनास्यनाथवत्  ॥ ००९  ॥

अतृप्तदर्शना पुत्र दर्शनस्य तवानघ ।
मन्दभाग्या गमिष्यामि व्यक्तमद्य यमक्षयम्  ॥ ०१०  ॥

विशालाक्षं सुकेशान्तं चारुवाक्यं सुगन्धि च ।
तव पुत्र कदा भूयो मुखं द्रक्ष्यामि निर्व्रणम्  ॥ ०११  ॥

धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम् ।
धिग्वीर्यं वृष्णिवीराणां पाञ्चालानां च धिग्बलम्  ॥ ०१२  ॥

धिक्केकयांस्तथा चेदीन्मत्स्यांश्चैवाथ सृञ्जयान् ।
ये त्वा रणे गतं वीरं न जानन्ति निपातितम्  ॥ ०१३  ॥

अद्य पश्यामि पृथिवीं शून्यामिव हतत्विषम् ।

अभिमन्युमपश्यन्ती शोकव्याकुललोचना ॥ ०१४ ॥

स्वस्रीयं वासुदेवस्य पुत्रं गाण्डीवधन्वनः ।
कथं त्वा विरथं वीरं द्रक्ष्याम्यन्यैर्निपातितम् ॥ ०१५ ॥

हा वीर दृष्टो नष्टश्च धनं स्वप्न इवासि मे ।
अहो ह्यनित्यं मानुष्यं जलबुद्बुदचञ्चलम् ॥ ०१६ ॥

इमां ते तरुणीं भार्यां त्वदाधिभिरभिप्लुताम् ।
कथं संधारयिष्यामि विवत्सामिव धेनुकाम् ॥ ०१७ ॥

अहो ह्यकाले प्रस्थानं कृतवानसि पुत्रक ।
विहाय फलकाले मां सुगृद्धां तव दर्शने ॥ ०१८ ॥

नूनं गतिः कृतान्तस्य प्राज्ञैरपि सुदुर्विदा ।
यत्र त्वं केशवे नाथे सङ्ग्रामेऽनाथवद्धतः ॥ ०१९ ॥

यज्वनां दानशीलानां ब्राह्मणानां कृतात्मनाम् ।
चरितब्रह्मचर्याणां पुण्यतीर्थावगाहिनाम् ॥ ०२० ॥

कृतज्ञानां वदान्यानां गुरुशुश्रूषिणामपि ।
सहस्रदक्षिणानां च या गतिस्तामवाप्नुहि ॥ ०२१ ॥

या गतिर्युध्यमानानां शूराणामनिवर्तिनाम् ।
हत्वारीन्निहतानां च सङ्ग्रामे तां गतिं व्रज ॥ ०२२ ॥

गोसहस्रप्रदातॄणां क्रतुदानां च या गतिः ।
नैवेशिकं चाभिमतं ददतां या गतिः शुभा ॥ ०२३ ॥

ब्रह्मचर्येण यां यान्ति मुनयः संशितव्रता ।
एकपत्न्यश्च यां यान्ति तां गतिं व्रज पुत्रक ॥ ०२४ ॥

राज्ञां सुचरितैर्या च गतिर्भवति शाश्वती ।
चतुराश्रमिणां पुण्यैः पावितानां सुरक्षितैः ॥ ०२५ ॥

दीनानुकम्पिनां या च सततं संविभागिनाम् ।
पैशुन्याच्च निवृत्तानां तां गतिं व्रज पुत्रक ॥ ०२६ ॥

व्रतिनां धर्मशीलानां गुरुशुश्रूषिणामपि ।
अमोघातिथिनां या च तां गतिं व्रज पुत्रक ॥ ०२७ ॥

ऋतुकाले स्वकां पत्नीं गच्छतां या मनस्विनाम् ।
न चान्यदारसेवीनां तां गतिं व्रज पुत्रक ॥ ०२८ ॥

साम्ना ये सर्वभूतानि गच्छन्ति गतमत्सराः ।
नारुंतुदानां क्षमिणां या गतिस्तामवाप्नुहि ॥ ०२९ ॥

मधुमांसनिवृत्तानां मदाद्दम्भात्तथानृतात् ।
परोपतापत्यक्तानां तां गतिं व्रज पुत्रक ॥ ०३० ॥

ह्रीमन्तः सर्वशास्त्रज्ञा ज्ञानतृप्ता जितेन्द्रियाः ।
यां गतिं साधवो यान्ति तां गतिं व्रज पुत्रक ॥ ०३१ ॥

एवं विलपतीं दीनां सुभद्रां शोककर्शिताम् ।
अभ्यपद्यत पाञ्चाली वैराटीसहिता तदा ॥ ०३२ ॥

ताः प्रकामं रुदित्वा च विलप्य च सुदुःखिताः ।
उन्मत्तवत्तदा राजन्विसञ्ज्ञा न्यपतन्क्षितौ ॥ ०३३ ॥

सोपचारस्तु कृष्णस्तां दुःखितां भृशदुःखितः ।
सिक्त्वाम्भसा समाश्वास्य तत्तदुक्त्वा हितं वचः ॥ ०३४ ॥

विसञ्ज्ञकल्पां रुदतीमपविद्धां प्रवेपतीम् ।
भगिनीं पुण्डरीकाक्ष इदं वचनमब्रवीत् ॥ ०३५ ॥

सुभद्रे मा शुचः पुत्रं पाञ्चाल्याश्वासयोत्तराम् ।
गतोऽभिमन्युः प्रथितां गतिं क्षत्रियपुङ्गवः ॥ ०३६ ॥

ये चान्येऽपि कुले सन्ति पुरुषा नो वरानने ।
सर्वे ते वै गतिं यान्तु अभिमन्योर्यशस्विनः ॥ ०३७ ॥

कुर्याम तद्वयं कर्म क्रियासुः सुहृदश्च नः ।
कृतवान्यादृगद्यैकस्तव पुत्रो महारथः ॥ ०३८ ॥

एवमाश्वास्य भगिनीं द्रौपदीमपि चोत्तराम् ।
पार्थस्यैव महाबाहुः पार्श्वमागादरिंदमः ॥ ०३९ ॥

ततोऽभ्यनुज्ञाय नृपान्कृष्णो बन्धूंस्तथाभिभूः ।
विवेशान्तःपुरं राजंस्तेऽन्ये जग्मुर्यथालयम् ॥ ०४० ॥

---

# अध्याय ०५६

सञ्जय उवाच ॥

ततोऽर्जुनस्य भवनं प्रविश्याप्रतिमं विभुः ।
स्पृष्ट्वाम्भः पुण्डरीकाक्षः स्थण्डिले शुभलक्षणे ॥ ००१ ॥

संतस्तार शुभां शय्यां दर्भैर्वैडूर्यसंनिभैः ॥ ००१ ॥

ततो माल्येन विधिवल्लाजैर्गन्धैः सुमङ्गलैः ।

अलञ्चकार तां शय्यां परिवार्यायुधोत्तमैः ॥ ००२ ॥

ततः स्पृष्टोदकं पार्थं विनीताः परिचारकाः ।
दर्शयां नैत्यकं चक्रुर्नैशं त्रैयम्बकं बलिम् ॥ ००३ ॥

ततः प्रीतमनाः पार्थो गन्धैर्माल्यैश्च माधवम् ।
अलङ्कृत्योपहारं तं नैशमस्मै न्यवेदयत् ॥ ००४ ॥

स्मयमानस्तु गोविन्दः फल्गुनं प्रत्यभाषत ।
सुप्यतां पार्थ भद्रं ते कल्याणाय व्रजाम्यहम् ॥ ००५ ॥

स्थापयित्वा ततो द्वाःस्थान्गोप्तॄंश्चात्तायुधान्नरान् ।
दारुकानुगतः श्रीमान्विवेश शिबिरं स्वकम् ॥ ००६ ॥

शिश्ये च शयने शुभ्रे बहुकृत्यं विचिन्तयन् ॥ ००६ ॥

न पाण्डवानां शिबिरे कश्चित्सुष्वाप तां निशाम् ।
प्रजागरः सर्वजनमाविवेश विशां पते ॥ ००७ ॥

पुत्रशोकाभिभूतेन प्रतिज्ञातो महात्मना ।
सहसा सिन्धुराजस्य वधो गाण्डीवधन्वना ॥ ००८ ॥

तत्कथं नु महाबाहुर्वासविः परवीरहा ।
प्रतिज्ञां सफलां कुर्यादिति ते समचिन्तयन् ॥ ००९ ॥

कष्टं हीदं व्यवसितं पाण्डवेन महात्मना ।
पुत्रशोकाभितप्तेन प्रतिज्ञा महती कृता ॥ ०१० ॥

भ्रातरश्चापि विक्रान्ता बहुलानि बलानि च ।
धृतराष्ट्रस्य पुत्रेण सर्वं तस्मै निवेदितम् ॥ ०११ ॥

स हत्वा सैन्धवं संख्ये पुनरेतु धनञ्जयः ।
जित्वा रिपुगणांश्चैव पारयत्वर्जुनो व्रतम्  ॥ ०१२  ॥

अहत्वा सिन्धुराजं हि धूमकेतुं प्रवेक्ष्यति ।
न ह्येतदनृतं कर्तुमर्हः पार्थो धनञ्जयः  ॥ ०१३  ॥

धर्मपुत्रः कथं राजा भविष्यति मृतेऽर्जुने ।
तस्मिन्हि विजयः कृत्स्नः पाण्डवेन समाहितः  ॥ ०१४  ॥

यदि नः सुकृतं किञ्चिद्यदि दत्तं हुतं यदि ।
फलेन तस्य सर्वस्य सव्यसाची जयत्वरीन्  ॥ ०१५  ॥

एवं कथयतां तेषां जयमाशंसतां प्रभो ।
कृच्छ्रेण महता राजन्रजनी व्यत्यवर्तत  ॥ ०१६  ॥

तस्यां रजन्यां मध्ये तु प्रतिबुद्धो जनार्दनः ।
स्मृत्वा प्रतिज्ञां पार्थस्य दारुकं प्रत्यभाषत  ॥ ०१७  ॥

अर्जुनेन प्रतिज्ञातमार्तेन हतबन्धुना ।
जयद्रथं हनिष्यामि श्वोभूत इति दारुक  ॥ ०१८  ॥

तत्तु दुर्योधनः श्रुत्वा मन्त्रिभिर्मन्त्रयिष्यति ।
यथा जयद्रथं पार्थो न हन्यादिति संयुगे  ॥ ०१९  ॥

अक्षौहिण्यो हि ताः सर्वा रक्षिष्यन्ति जयद्रथम् ।
द्रोणश्च सह पुत्रेण सर्वास्त्रविधिपारगः  ॥ ०२०  ॥

एको वीरः सहस्राक्षो दैत्यदानवमर्दिता ।
सोऽपि तं नोत्सहेताजौ हन्तुं द्रोणेन रक्षितम्  ॥ ०२१  ॥

सोऽहं श्वस्तत्करिष्यामि यथा कुन्तीसुतोऽर्जुनः ।

अप्राप्तेऽस्तं दिनकरे हनिष्यति जयद्रथम्  ॥ ०२२  ॥

न हि दारा न मित्राणि ज्ञातयो न च बान्धवाः ।
कश्चिन्नान्यः प्रियतरः कुन्तीपुत्रान्ममार्जुनात्  ॥ ०२३  ॥

अनर्जुनमिमं लोकं मुहूर्तमपि दारुक ।
उदीक्षितुं न शक्तोऽहं भविता न च तत्तथा  ॥ ०२४  ॥

अहं ध्वजिन्यः शत्रूणां सहयाः सरथद्विपाः ।
अर्जुनार्थे हनिष्यामि सकर्णाः ससुयोधनाः  ॥ ०२५  ॥

श्वो निरीक्षन्तु मे वीर्यं त्रयो लोका महाहवे ।
धनञ्जयार्थं समरे पराक्रान्तस्य दारुक  ॥ ०२६  ॥

श्वो नरेन्द्रसहस्राणि राजपुत्रशतानि च ।
साश्वद्विपरथान्याजौ विद्रविष्यन्ति दारुक  ॥ ०२७  ॥

श्वस्तां चक्रप्रमथितां द्रक्ष्यसे नृपवाहिनीम् ।
मया क्रुद्धेन समरे पाण्डवार्थे निपातिताम्  ॥ ०२८  ॥

श्वः सदेवाः सगन्धर्वाः पिशाचोरगराक्षसाः ।
ज्ञास्यन्ति लोकाः सर्वे मां सुहृदं सव्यसाचिनः  ॥ ०२९  ॥

यस्तं द्वेष्टि स मां द्वेष्टि यस्तमनु स मामनु ।
इति सङ्कल्प्यतां बुद्ध्या शरीरार्धं ममार्जुनः  ॥ ०३०  ॥

यथा त्वमप्रभातायामस्यां निशि रथोत्तमम् ।
कल्पयित्वा यथाशास्त्रमादाय व्रतसंयतः  ॥ ०३१  ॥

गदां कौमोदकीं दिव्यां शक्तिं चक्रं धनुः शरान् ।
आरोप्य वै रथे सूत सर्वोपकरणानि च  ॥ ०३२  ॥

स्थानं हि कल्पयित्वा च रथोपस्थे ध्वजस्य मे ।
वैनतेयस्य वीरस्य समरे रथशोभिनः ॥ ०३३ ॥

छत्रं जाम्बूनदैर्जालैरर्कज्वलनसंनिभैः ।
विश्वकर्मकृतैर्दिव्यैरश्वानपि च भूषितान् ॥ ०३४ ॥

बलाहकं मेघपुष्पं सैन्यं सुग्रीवमेव च ।
युक्त्वा वाजिवरान्यत्तः कवची तिष्ठ दारुक ॥ ०३५ ॥

पाञ्चजन्यस्य निर्घोषमार्षभेणैव पूरितम् ।
श्रुत्वा तु भैरवं नादमुपयाया जवेन माम् ॥ ०३६ ॥

एकाह्नाहममर्षं च सर्वदुःखानि चैव ह ।
भ्रातुः पितृष्वसेयस्य व्यपनेष्यामि दारुक ॥ ०३७ ॥

सर्वोपायैर्यतिष्यामि यथा बीभत्सुराहवे ।
पश्यतां धार्तराष्ट्राणां हनिष्यति जयद्रथम् ॥ ०३८ ॥

यस्य यस्य च बीभत्सुर्वधे यत्नं करिष्यति ।
आशंसे सारथे तत्र भवितास्य ध्रुवो जयः ॥ ०३९ ॥

दारुक उवाच ॥

जय एव ध्रुवस्तस्य कुत एव पराजयः ।
यस्य त्वं पुरुषव्याघ्र सारथ्यमुपजग्मिवान् ॥ ०४० ॥

एवं चैतत्करिष्यामि यथा मामनुशाससि ।
सुप्रभातामिमां रात्रिं जयाय विजयस्य हि ॥ ०४१ ॥

# अध्याय ०५७

सञ्जय उवाच ॥

कुन्तीपुत्रस्तु तं मन्त्रं स्मरन्नेव धनञ्जयः ।
प्रतिज्ञामात्मनो रक्षन्मुमोहाचिन्त्यविक्रमः ॥ ००१ ॥

तं तु शोकेन संतप्तं स्वप्ने कपिवरध्वजम् ।
आससाद महातेजा ध्यायन्तं गरुडध्वजः ॥ ००२ ॥

प्रत्युत्थानं तु कृष्णस्य सर्वावस्थं धनञ्जयः ।
नालोपयत धर्मात्मा भक्त्या प्रेम्णा च सर्वदा ॥ ००३ ॥

प्रत्युत्थाय च गोविन्दं स तस्मायासनं ददौ ।
न चासने स्वयं बुद्धिं बीभत्सुर्व्यदधात्तदा ॥ ००४ ॥

ततः कृष्णो महातेजा जानन्पार्थस्य निश्चयम् ।
कुन्तीपुत्रमिदं वाक्यमासीनः स्थितमब्रवीत् ॥ ००५ ॥

मा विषादे मनः पार्थ कृथाः कालो हि दुर्जयः ।
कालः सर्वाणि भूतानि नियच्छति परे विधौ ॥ ००६ ॥

किमर्थं च विषादस्ते तद्ब्रूहि वदतां वर ।
न शोचितव्यं विदुषा शोकः कार्यविनाशनः ॥ ००७ ॥

शोचन्नन्दयते शत्रून्कर्शयत्यपि बान्धवान् ।
क्षीयते च नरस्तस्मान्न त्वं शोचितुमर्हसि ॥ ००८ ॥

इत्युक्तो वासुदेवेन बीभत्सुरपराजितः ।
आबभाषे तदा विद्वानिदं वचनमर्थवत् ॥ ००९ ॥

मया प्रतिज्ञा महती जयद्रथवधे कृता ।
श्वोऽस्मि हन्ता दुरात्मानं पुत्रघ्नमिति केशव ॥ ०१० ॥

मत्प्रतिज्ञाविघातार्थं धार्तराष्ट्रैः किलाच्युत ।
पृष्ठतः सैन्धवः कार्यः सर्वैर्गुप्तो महारथैः ॥ ०११ ॥

दश चैका च ताः कृष्ण अक्षौहिण्यः सुदुर्जयाः ।
प्रतिज्ञायां च हीनायां कथं जीवेत मद्विधः ॥ ०१२ ॥

दुःखोपायस्य मे वीर विकाङ्क्षा परिवर्तते ।
द्रुतं च याति सविता तत एतद्ब्रवीम्यहम् ॥ ०१३ ॥

शोकस्थानं तु तच्छ्रुत्वा पार्थस्य द्विजकेतनः ।
संस्पृश्याम्भस्ततः कृष्णः प्राङ्मुखः समवस्थितः ॥ ०१४ ॥

इदं वाक्यं महातेजा बभाषे पुष्करेक्षणः ।
हितार्थं पाण्डुपुत्रस्य सैन्धवस्य वधे वृतः ॥ ०१५ ॥

पार्थ पाशुपतं नाम परमास्त्रं सनातनम् ।
येन सर्वान्मृधे दैत्याञ्जघ्ने देवो महेश्वरः ॥ ०१६ ॥

यदि तद्विदितं तेऽद्य श्वो हन्तासि जयद्रथम् ।
अथ ज्ञातुं प्रपद्यस्व मनसा वृषभध्वजम् ॥ ०१७ ॥

तं देवं मनसा ध्यायञ्जोषमास्स्व धनञ्जय ।
ततस्तस्य प्रसादात्त्वं भक्तः प्राप्स्यसि तन्महत् ॥ ०१८ ॥

ततः कृष्णवचः श्रुत्वा संस्पृश्याम्भो धनञ्जयः ।

भूमावासीन एकाग्रो जगाम मनसा भवम्  ॥ ०१९  ॥

ततः प्रणिहिते ब्राह्मे मुहूर्ते शुभलक्षणे ।
आत्मानमर्जुनोऽपश्यद्गगने सहकेशवम्  ॥ ०२०  ॥

ज्योतिर्भिश्च समाकीर्णं सिद्धचारणसेवितम् ।
वायुवेगगतिः पार्थः खं भेजे सहकेशवः  ॥ ०२१  ॥

केशवेन गृहीतः स दक्षिणे विभुना भुजे ।
प्रेक्षमाणो बहून्भावाञ्जगामाद्भुतदर्शनान्  ॥ ०२२  ॥

उदीच्यां दिशि धर्मात्मा सोऽपश्यच्छ्वेतपर्वतम् ।
कुबेरस्य विहारे च नलिनीं पद्मभूषिताम्  ॥ ०२३  ॥

सरिच्छ्रेष्ठां च तां गङ्गां वीक्षमाणो बहूदकाम् ।
सदापुष्पफलैर्वृक्षैरुपेतां स्फटिकोपलाम्  ॥ ०२४  ॥

सिंहव्याघ्रसमाकीर्णां नानामृगगणाकुलाम् ।
पुण्याश्रमवतीं रम्यां मनोज्ञाण्डजसेविताम्  ॥ ०२५  ॥

मन्दरस्य प्रदेशांश्च किंनरोद्गीतनादितान् ।
हेमरूप्यमयैः शृङ्गैर्नानौषधिविदीपितान्  ॥ ०२६  ॥

तथा मन्दारवृक्षैश्च पुष्पितैरुपशोभितान्  ॥ ०२६  ॥

स्निग्धाञ्जनचयाकारं संप्राप्तः कालपर्वतम् ।
पुण्यं हिमवतः पादं मणिमन्तं च पर्वतम्  ॥ ०२७  ॥

ब्रह्मतुङ्गं नदीश्चान्यास्तथा जनपदानपि  ॥ ०२७  ॥

सुशृङ्गं शतशृङ्गं च शर्यातिवनमेव च ।

पुण्यमश्वशिरःस्थानं स्थानमाथर्वणस्य च ॥ ०२८ ॥

वृषदंशं च शैलेन्द्रं महामन्दरमेव च ।
अप्सरोभिः समाकीर्णं किंनरैश्चोपशोभितम् ॥ ०२९ ॥

तांश्च शैलान्व्रजन्पार्थः प्रेक्षते सहकेशवः ।
शुभैः प्रस्रवणैर्जुष्टान्हेमधातुविभूषितान् ॥ ०३० ॥

चन्द्ररश्मिप्रकाशाङ्गीं पृथिवीं पुरमालिनीम् ।
समुद्रांश्चाद्भुताकारानपश्यद्बहुलाकरान् ॥ ०३१ ॥

वियद्द्यां पृथिवीं चैव पश्यन्विष्णुपदे व्रजन् ।
विस्मितः सह कृष्णेन क्षिप्तो बाण इवात्यगात् ॥ ०३२ ॥

ग्रहनक्षत्रसोमानां सूर्याग्न्योश्च समत्विषम् ।
अपश्यत तदा पार्थो ज्वलन्तमिव पर्वतम् ॥ ०३३ ॥

समासाद्य तु तं शैलं शैलाग्रे समवस्थितम् ।
तपोनित्यं महात्मानमपश्यद्वृषभध्वजम् ॥ ०३४ ॥

सहस्रमिव सूर्याणां दीप्यमानं स्वतेजसा ।
शूलिनं जटिलं गौरं वल्कलाजिनवाससम् ॥ ०३५ ॥

नयनानां सहस्रैश्च विचित्राङ्गं महौजसम् ।
पार्वत्या सहितं देवं भूतसंघैश्च भास्वरैः ॥ ०३६ ॥

गीतवादित्रसंह्रादैस्ताललास्यसमन्वितम् ।
वल्गितास्फोटितोत्क्रुष्टैः पुण्यगन्धैश्च सेवितम् ॥ ०३७ ॥

स्तूयमानं स्तवैर्दिव्यैर्मुनिभिर्ब्रह्मवादिभिः ।
गोप्तारं सर्वभूतानामिष्वासधरमच्युतम् ॥ ०३८ ॥

वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा क्षितिम् ।
पार्थेन सह धर्मात्मा गृणन्ब्रह्म सनातनम्  ॥ ०३९  ॥

लोकादिं विश्वकर्माणमजमीशानमव्ययम् ।
मनसः परमां योनिं खं वायुं ज्योतिषां निधिम्  ॥ ०४०  ॥

स्रष्टारं वारिधाराणां भुवश्च प्रकृतिं पराम् ।
देवदानवयक्षाणां मानवानां च साधनम्  ॥ ०४१  ॥

योगिनां परमं ब्रह्म व्यक्तं ब्रह्मविदां निधिम् ।
चराचरस्य स्रष्टारं प्रतिहर्तारमेव च  ॥ ०४२  ॥

कालकोपं महात्मानं शक्रसूर्यगुणोदयम् ।
अवन्दत तदा कृष्णो वाङ्मनोबुद्धिकर्मभिः  ॥ ०४३  ॥

यं प्रपश्यन्ति विद्वांसः सूक्ष्माध्यात्मपदैषिणः ।
तमजं कारणात्मानं जग्मतुः शरणं भवम्  ॥ ०४४  ॥

अर्जुनश्चापि तं देवं भूयो भूयोऽभ्यवन्दत ।
ज्ञात्वैकं भूतभव्यादिं सर्वभूतभवोद्भवम्  ॥ ०४५  ॥

ततस्तावागतौ शर्वः प्रोवाच प्रहसन्निव ।
स्वागतं वां नरश्रेष्ठावुत्तिष्ठेतां गतक्लमौ  ॥ ०४६  ॥

किं च वामीप्सितं वीरौ मनसः क्षिप्रमुच्यताम्  ॥ ०४६  ॥

येन कार्येण संप्राप्तौ युवां तत्साधयामि वाम् ।
व्रियतामात्मनः श्रेयस्तत्सर्वं प्रददानि वाम्  ॥ ०४७  ॥

ततस्तद्वचनं श्रुत्वा प्रत्युत्थाय कृताञ्जली ।

वासुदेवार्जुनौ शर्वं तुष्टुवाते महामती ॥ ०४८ ॥

नमो भवाय शर्वाय रुद्राय वरदाय च ।
पशूनां पतये नित्यमुग्राय च कपर्दिने ॥ ०४९ ॥

महादेवाय भीमाय त्र्यम्बकाय च शम्भवे ।
ईशानाय भगघ्नाय नमोऽस्त्वन्धकघातिने ॥ ०५० ॥

कुमारगुरवे नित्यं नीलग्रीवाय वेधसे ।
विलोहिताय धूम्राय व्याधायानपराजिते ॥ ०५१ ॥

नित्यं नीलशिखण्डाय शूलिने दिव्यचक्षुषे ।
हन्त्रे गोप्त्रे त्रिनेत्राय व्याधाय वसुरेतसे ॥ ०५२ ॥

अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च ।
वृषध्वजाय पिङ्गाय जटिने ब्रह्मचारिणे ॥ ०५३ ॥

तप्यमानाय सलिले ब्रह्मण्यायाजिताय च ।
विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते ॥ ०५४ ॥

नमो नमस्ते सेव्याय भूतानां प्रभवे सदा ।
ब्रह्मवक्त्राय शर्वाय शङ्कराय शिवाय च ॥ ०५५ ॥

नमोऽस्तु वाचस्पतये प्रजानां पतये नमः ।
नमो विश्वस्य पतये महतां पतये नमः ॥ ०५६ ॥

नमः सहस्रशिरसे सहस्रभुजमन्यवे ।
सहस्रनेत्रपादाय नमोऽसंख्येयकर्मणे ॥ ०५७ ॥

नमो हिरण्यवर्णाय हिरण्यकवचाय च ।
भक्तानुकम्पिने नित्यं सिध्यतां नौ वरः प्रभो ॥ ०५८ ॥

एवं स्तुत्वा महादेवं वासुदेवः सहार्जुनः ।
प्रसादयामास भवं तदा ह्यस्त्रोपलब्धये ॥ ०५९ ॥

ततोऽर्जुनः प्रीतमना ववन्दे वृषभध्वजम् ।
ददर्शोत्फुल्लनयनः समस्तं तेजसां निधिम् ॥ ०६० ॥

तं चोपहारं स्वकृतं नैशं नैत्यकमात्मनः ।
ददर्श त्र्यम्बकाभ्याशे वासुदेवनिवेदितम् ॥ ०६१ ॥

ततोऽभिपूज्य मनसा शर्वं कृष्णं च पाण्डवः ।
इच्छाम्यहं दिव्यमस्त्रमित्यभाषत शङ्करम् ॥ ०६२ ॥

ततः पार्थस्य विज्ञाय वरार्थे वचनं प्रभुः ।
वासुदेवार्जुनौ देवः स्मयमानोऽभ्यभाषत ॥ ०६३ ॥

सरोऽमृतमयं दिव्यमभ्याशे शत्रुसूदनौ ।
तत्र मे तद्धनुर्दिव्यं शरश्च निहितः पुरा ॥ ०६४ ॥

येन देवारयः सर्वे मया युधि निपातिताः ।
तत आनीयतां कृष्णौ सशरं धनुरुत्तमम् ॥ ०६५ ॥

तथेत्युक्त्वा तु तौ वीरौ तं शर्वं पार्षदैः सह ।
प्रस्थितौ तत्सरो दिव्यं दिव्याश्चर्यशतैर्वृतम् ॥ ०६६ ॥

निर्दिष्टं यद्वृषाङ्केन पुण्यं सर्वार्थसाधकम् ।
तज्जग्मतुरसंभ्रान्तौ नरनारायणावृषी ॥ ०६७ ॥

ततस्तु तत्सरो गत्वा सूर्यमण्डलसंनिभम् ।
नागमन्तर्जले घोरं ददृशातेऽर्जुनाच्युतौ ॥ ०६८ ॥

द्वितीयं चापरं नागं सहस्रशिरसं वरम् ।
वमन्तं विपुलां ज्वालां ददृशातेऽग्निवर्चसम् ॥ ०६९ ॥

ततः कृष्णश्च पार्थश्च संस्पृश्यापः कृताञ्जली ।
तौ नागावुपतस्थाते नमस्यन्तौ वृषध्वजम् ॥ ०७० ॥

गृणन्तौ वेदविदुषौ तद्ब्रह्म शतरुद्रियम् ।
अप्रमेयं प्रणमन्तौ गत्वा सर्वात्मना भवम् ॥ ०७१ ॥

ततस्तौ रुद्रमाहात्म्याद्धित्वा रूपं महोरगौ ।
धनुर्बाणश्च शत्रुघ्नं तद्द्वंद्वं समपद्यत ॥ ०७२ ॥

ततो जगृहतुः प्रीतौ धनुर्बाणं च सुप्रभम् ।
आजह्रतुर्महात्मानौ ददतुश्च महात्मने ॥ ०७३ ॥

ततः पार्श्वाद्वृषाङ्कस्य ब्रह्मचारी न्यवर्तत ।
पिङ्गाक्षस्तपसः क्षेत्रं बलवान्नीललोहितः ॥ ०७४ ॥

स तद्गृह्य धनुःश्रेष्ठं तस्थौ स्थानं समाहितः ।
व्यकर्षच्चापि विधिवत्सशरं धनुरुत्तमम् ॥ ०७५ ॥

तस्य मौर्वीं च मुष्टिं च स्थानं चालक्ष्य पाण्डवः ।
श्रुत्वा मन्त्रं भवप्रोक्तं जग्राहाचिन्त्यविक्रमः ॥ ०७६ ॥

सरस्येव च तं बाणं मुमोचातिबलः प्रभुः ।
चकार च पुनर्वीरस्तस्मिन्सरसि तद्धनुः ॥ ०७७ ॥

ततः प्रीतं भवं ज्ञात्वा स्मृतिमानर्जुनस्तदा ।
वरमारण्यकं दत्तं दर्शनं शङ्करस्य च ॥ ०७८ ॥

मनसा चिन्तयामास तन्मे संपद्यतामिति ॥ ०७८ ॥

तस्य तन्मतमाज्ञाय प्रीतः प्रादाद्वरं भवः ।
तच्च पाशुपतं घोरं प्रतिज्ञायाश्च पारणम्  ॥ ०७९  ॥

संहृष्टरोमा दुर्धर्षः कृतं कार्यममन्यत ।
ववन्दतुश्च संहृष्टौ शिरोभ्यां तौ महेश्वरम्  ॥ ०८०  ॥

अनुज्ञातौ क्षणे तस्मिन्भवेनार्जुनकेशवौ ।
प्राप्तौ स्वशिबिरं वीरौ मुदा परमया युतौ  ॥ ०८१  ॥

इन्द्राविष्णू यथा प्रीतौ जम्भस्य वधकाङ्क्षिणौ  ॥ ०८१  ॥

---

# अध्याय ०५८

सञ्जय उवाच  ॥

तयोः संवदतोरेव कृष्णदारुकयोस्तदा ।
सात्यगाद्रजनी राजन्नथ राजान्वबुध्यत  ॥ ००१  ॥

पठन्ति पाणिस्वनिका मागधा मधुपर्किकाः ।
वैतालिकाश्च सूताश्च तुष्टुवुः पुरुषर्षभम्  ॥ ००२  ॥

नर्तकाश्चाप्यनृत्यन्त जगुर्गीतानि गायकाः ।
कुरुवंशस्तवार्थानि मधुरं रक्तकण्ठिनः  ॥ ००३  ॥

मृदङ्गा झर्झरा भेर्यः पणवानकगोमुखाः ।
आडम्बराश्च शङ्खाश्च दुन्दुभ्यश्च महास्वनाः  ॥ ००४  ॥

एवमेतानि सर्वाणि तथान्यान्यपि भारत ।
वादयन्ति स्म संहृष्टाः कुशलाः साधुशिक्षिताः ॥ ००५ ॥

स मेघसमनिर्घोषो महाञ्शब्दोऽस्पृशद्दिवम् ।
पार्थिवप्रवरं सुप्तं युधिष्ठिरमबोधयत् ॥ ००६ ॥

प्रतिबुद्धः सुखं सुप्तो महार्हे शयनोत्तमे ।
उत्थायावश्यकार्यार्थं ययौ स्नानगृहं ततः ॥ ००७ ॥

ततः शुक्लाम्बराः स्नातास्तरुणाष्टोत्तरं शतम् ।
स्नापकाः काञ्चनैः कुम्भैः पूर्णैः समुपतस्थिरे ॥ ००८ ॥

भद्रासने सूपविष्टः परिधायाम्बरं लघु ।
सस्नौ चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः ॥ ००९ ॥

उत्सादितः कषायेण बलवद्भिः सुशिक्षितैः ।
आप्लुतः साधिवासेन जलेन च सुगन्धिना ॥ ०१० ॥

हरिणा चन्दनेनाङ्गमनुलिप्य महाभुजः ।
स्रग्वी चाक्लिष्टवसनः प्राङ्मुखः प्राञ्जलिः स्थितः ॥ ०११ ॥

जजाप जप्यं कौन्तेयः सतां मार्गमनुष्ठितः ।
ततोऽग्निशरणं दीप्तं प्रविवेश विनीतवत् ॥ ०१२ ॥

समिद्धं स पवित्राभिरग्निमाहुतिभिस्तथा ।
मन्त्रपूताभिरर्चित्वा निश्चक्राम गृहात्ततः ॥ ०१३ ॥

द्वितीयां पुरुषव्याघ्रः कक्ष्यां निष्क्रम्य पार्थिवः ।
तत्र वेदविदो विप्रानपश्यद्ब्राह्मणर्षभान् ॥ ०१४ ॥

दान्तान्वेदव्रतस्नातान्स्नातानवभृथेषु च ।

सहस्रानुचरान्सौरानष्टौ दशशतानि च ॥ ०१५ ॥

अक्षतैः सुमनोभिश्च वाचयित्वा महाभुजः ।
तान्द्विजान्मधुसर्पिर्भ्यां फलैः श्रेष्ठैः सुमङ्गलैः ॥ ०१६ ॥

प्रादात्काञ्चनमेकैकं निष्कं विप्राय पाण्डवः ।
अलङ्कृतं चाश्वशतं वासांसीष्टाश्च दक्षिणाः ॥ ०१७ ॥

तथा गाः कपिला दोग्ध्रीः सर्षभाः पाण्डुनन्दनः ।
हेमशृङ्गी रूप्यखुरा दत्त्वा चक्रे प्रदक्षिणम् ॥ ०१८ ॥

स्वस्तिकान्वर्धमानांश्च नन्द्यावर्तांश्च काञ्चनान् ।
माल्यं च जलकुम्भांश्च ज्वलितं च हुताशनम् ॥ ०१९ ॥

पूर्णान्यक्षतपात्राणि रुचकान्रोचनांस्तथा ।
स्वलङ्कृताः शुभाः कन्या दधिसर्पिर्मधूदकम् ॥ ०२० ॥

मङ्गल्यान्पक्षिणश्चैव यच्चान्यदपि पूजितम् ।
दृष्ट्वा स्पृष्ट्वा च कौन्तेयो बाह्यां कक्ष्यामगात्ततः ॥ ०२१ ॥

ततस्तस्य महाबाहोस्तिष्ठतः परिचारकाः ।
सौवर्णं सर्वतोभद्रं मुक्तावैडूर्यमण्डितम् ॥ ०२२ ॥

परार्ध्यास्तरणास्तीर्णं सोत्तरच्छदमृद्धिमत् ।
विश्वकर्मकृतं दिव्यमुपजह्रुर्वरासनम् ॥ ०२३ ॥

तत्र तस्योपविष्टस्य भूषणानि महात्मनः ।
उपजह्रुर्महार्हाणि प्रेष्याः शुभ्राणि सर्वशः ॥ ०२४ ॥

युक्ताभरणवेषस्य कौन्तेयस्य महात्मनः ।
रूपमासीन्महाराज द्विषतां शोकवर्धनम् ॥ ०२५ ॥

पाण्डरैश्चन्द्ररश्म्याभैर्हेमदण्डैश्च चामरैः ।
दोधूयमानः शुशुभे विद्युद्भिरिव तोयदः ॥ ०२६ ॥

संस्तूयमानः सूतैश्च वन्द्यमानश्च बन्दिभिः ।
उपगीयमानो गन्धर्वैरास्ते स्म कुरुनन्दनः ॥ ०२७ ॥

ततो मुहूर्तादासीत्तु बन्दिनां निस्वनो महान् ।
नेमिघोषश्च रथिनां खुरघोषश्च वाजिनाम् ॥ ०२८ ॥

ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
नराणां पदशब्दैश्च कम्पतीव स्म मेदिनी ॥ ०२९ ॥

ततः शुद्धान्तमासाद्य जानुभ्यां भूतले स्थितः ।
शिरसा वन्दनीयं तमभिवन्द्य जगत्पतिम् ॥ ०३० ॥

कुण्डली बद्धनिस्त्रिंशः संनद्धकवचो युवा ।
अभिप्रणम्य शिरसा द्वाःस्थो धर्मात्मजाय वै ॥ ०३१ ॥

न्यवेदयद्धृषीकेशमुपयातं महात्मने ॥ ०३१ ॥

सोऽब्रवीत्पुरुषव्याघ्रः स्वागतेनैव माधवम् ।
अर्घ्यं चैवासनं चास्मै दीयतां परमार्चितम् ॥ ०३२ ॥

ततः प्रवेश्य वार्ष्णेयमुपवेश्य वरासने ।
सत्कृत्य सत्कृतस्तेन पर्यपृच्छद्युधिष्ठिरः ॥ ०३३ ॥

# अध्याय ०५९

युधिष्ठिर उवाच ॥

सुखेन रजनी व्युष्टा कच्चित्ते मधुसूदन ।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत ॥ ००१ ॥

सञ्जय उवाच ॥

वासुदेवोऽपि तद्युक्तं पर्यपृच्छद्युधिष्ठिरम् ।
ततः क्षत्ता प्रकृतयो न्यवेदयदुपस्थिताः ॥ ००२ ॥

अनुज्ञातश्च राज्ञा स प्रावेशयत तं जनम् ।
विराटं भीमसेनं च धृष्टद्युम्नं च सात्यकिम् ॥ ००३ ॥

शिखण्डिनं यमौ चैव चेकितानं च केकयान् ।
युयुत्सुं चैव कौरव्यं पाञ्चाल्यं चोत्तमौजसम् ॥ ००४ ॥

एते चान्ये च बहवः क्षत्रियाः क्षत्रियर्षभम् ।
उपतस्थुर्महात्मानं विविशुश्चासनेषु ते ॥ ००५ ॥

एकस्मिन्नासने वीरावुपविष्टौ महाबलौ ।
कृष्णश्च युयुधानश्च महात्मानौ महाद्युती ॥ ००६ ॥

ततो युधिष्ठिरस्तेषां शृण्वतां मधुसूदनम् ।
अब्रवीत्पुण्डरीकाक्षमाभाष्य मधुरं वचः ॥ ००७ ॥

एकं त्वां वयमाश्रित्य सहस्राक्षमिवामराः ।
प्रार्थयामो जयं युद्धे शाश्वतानि सुखानि च ॥ ००८ ॥

त्वं हि राज्यविनाशं च द्विषद्भिश्च निराक्रियाम् ।

क्लेशांश्च विविधान्कृष्ण सर्वांस्तानपि वेत्थ नः ॥ ००९ ॥

त्वयि सर्वेश सर्वेषामस्माकं भक्तवत्सल ।
सुखमायत्तमत्यर्थं यात्रा च मधुसूदन ॥ ०१० ॥

स तथा कुरु वार्ष्णेय यथा त्वयि मनो मम ।
अर्जुनस्य यथा सत्या प्रतिज्ञा स्याच्चिकीर्षिता ॥ ०११ ॥

स भवांस्तारयत्वस्माद्दुःखामर्षमहार्णवात् ।
पारं तितीर्षतामद्य प्लवो नो भव माधव ॥ ०१२ ॥

न हि तत्कुरुते संख्ये कार्तवीर्यसमस्त्वपि ।
रथी यत्कुरुते कृष्ण सारथिर्यत्नमास्थितः ॥ ०१३ ॥

वासुदेव उवाच ॥

सामरेष्वपि लोकेषु सर्वेषु न तथाविधः ।
शरासनधरः कश्चिद्यथा पार्थो धनञ्जयः ॥ ०१४ ॥

वीर्यवानस्त्रसंपन्नः पराक्रान्तो महाबलः ।
युद्धशौण्डः सदामर्षी तेजसा परमो नृणाम् ॥ ०१५ ॥

स युवा वृषभस्कन्धो दीर्घबाहुर्महाबलः ।
सिंहर्षभगतिः श्रीमान्द्विषतस्ते हनिष्यति ॥ ०१६ ॥

अहं च तत्करिष्यामि यथा कुन्तीसुतोऽर्जुनः ।
धार्तराष्ट्रस्य सैन्यानि धक्ष्यत्यग्निरिवोत्थितः ॥ ०१७ ॥

अद्य तं पापकर्माणं क्षुद्रं सौभद्रघातिनम् ।
अपुनर्दर्शनं मार्गमिषुभिः क्षेप्स्यतेऽर्जुनः ॥ ०१८ ॥

तस्याद्य गृध्राः श्येनाश्च वडगोमायवस्तथा ।
भक्षयिष्यन्ति मांसानि ये चान्ये पुरुषादकाः ॥ ०१९ ॥

यद्यस्य देवा गोप्तारः सेन्द्राः सर्वे तथाप्यसौ ।
राजधानीं यमस्याद्य हतः प्राप्स्यति सङ्कुले ॥ ०२० ॥

निहत्य सैन्धवं जिष्णुरद्य त्वामुपयास्यति ।
विशोको विज्वरो राजन्भव भूतिपुरस्कृतः ॥ ०२१ ॥

---

# अध्याय ०६०

सञ्जय उवाच ॥

तथा संभाषतां तेषां प्रादुरासीद्धनञ्जयः ।
दिदृक्षुर्भरतश्रेष्ठं राजानं ससुहृद्गणम् ॥ ००१ ॥

तं प्रविष्टं शुभां कक्ष्यामभिवाद्याग्रतः स्थितम् ।
समुत्थायार्जुनं प्रेम्णा सस्वजे पाण्डवर्षभः ॥ ००२ ॥

मूर्ध्नि चैनमुपाघ्राय परिष्वज्य च बाहुना ।
आशिषः परमाः प्रोच्य स्मयमानोऽभ्यभाषत ॥ ००३ ॥

व्यक्तमर्जुन सङ्ग्रामे ध्रुवस्ते विजयो महान् ।
यादृग्रूपा हि ते छाया प्रसन्नश्च जनार्दनः ॥ ००४ ॥

तमब्रवीत्ततो जिष्णुर्महदाश्चर्यमुत्तमम् ।
दृष्टवानस्मि भद्रं ते केशवस्य प्रसादजम् ॥ ००५ ॥

ततस्तत्कथयामास यथादृष्टं धनञ्जयः ।
आश्वासनार्थं सुहृदां त्र्यम्बकेन समागमम् ॥ ००६ ॥

ततः शिरोभिरवनिं स्पृष्ट्वा सर्वे च विस्मिताः ।
नमस्कृत्य वृषाङ्काय साधु साध्वित्यथाब्रुवन् ॥ ००७ ॥

अनुज्ञातास्ततः सर्वे सुहृदो धर्मसूनुना ।
त्वरमाणाः सुसंनद्धा हृष्टा युद्धाय निर्ययुः ॥ ००८ ॥

अभिवाद्य तु राजानं युयुधानाच्युतार्जुनाः ।
हृष्टा विनिर्ययुस्ते वै युधिष्ठिरनिवेशनात् ॥ ००९ ॥

रथेनैकेन दुर्धर्षौ युयुधानजनार्दनौ ।
जग्मतुः सहितौ वीरावर्जुनस्य निवेशनम् ॥ ०१० ॥

तत्र गत्वा हृषीकेशः कल्पयामास सूतवत् ।
रथं रथवरस्याजौ वानरर्षभलक्षणम् ॥ ०११ ॥

स मेघसमनिर्घोषस्तप्तकाञ्चनसप्रभः ।
बभौ रथवरः क्लृप्तः शिशुर्दिवसकृद्यथा ॥ ०१२ ॥

ततः पुरुषशार्दूलः सज्जः सज्जं पुरःसरः ।
कृताह्निकाय पार्थाय न्यवेदयत तं रथम् ॥ ०१३ ॥

तं तु लोके वरः पुंसां किरीटी हेमवर्मभृत् ।
बाणबाणासनी वाहं प्रदक्षिणमवर्तत ॥ ०१४ ॥

ततो विद्यावयोवृद्धैः क्रियावद्भिर्जितेन्द्रियैः ।
स्तूयमानो जयाशीभिरारुरोह महारथम् ॥ ०१५ ॥

जैत्रैः साङ्ग्रामिकैर्मन्त्रैः पूर्वमेव रथोत्तमम् ।

अभिमन्त्रितमर्चिष्मानुदयं भास्करो यथा ॥ ०१६ ॥

स रथे रथिनां श्रेष्ठः काञ्चने काञ्चनावृतः ।
विबभौ विमलोऽर्चिष्मान्मेराविव दिवाकरः ॥ ०१७ ॥

अन्वारुरोहतुः पार्थं युयुधानजनार्दनौ ।
शर्यातेर्यज्ञमायान्तं यथेन्द्रं देवमश्विनौ ॥ ०१८ ॥

अथ जग्राह गोविन्दो रश्मीन्रश्मिवतां वरः ।
मातलिर्वासवस्येव वृत्रं हन्तुं प्रयास्यतः ॥ ०१९ ॥

स ताभ्यां सहितः पार्थो रथप्रवरमास्थितः ।
सहितो बुधशुक्राभ्यां तमो निघ्नन्यथा शशी ॥ ०२० ॥

सैन्धवस्य वधप्रेप्सुः प्रयातः शत्रुपूगहा ।
सहाम्बुपतिमित्राभ्यां यथेन्द्रस्तारकामये ॥ ०२१ ॥

ततो वादित्रनिर्घोषैर्मङ्गल्यैश्च स्तवैः शुभैः ।
प्रयान्तमर्जुनं सूता मागधाश्चैव तुष्टुवुः ॥ ०२२ ॥

सजयाशीः सपुण्याहः सूतमागधनिस्वनः ।
युक्तो वादित्रघोषेण तेषां रतिकरोऽभवत् ॥ ०२३ ॥

तमनुप्रयतो वायुः पुण्यगन्धवहः शुचिः ।
ववौ संहर्षयन्पार्थं द्विषतश्चापि शोषयन् ॥ ०२४ ॥

प्रादुरासन्निमित्तानि विजयाय बहूनि च ।
पाण्डवानां त्वदीयानां विपरीतानि मारिष ॥ ०२५ ॥

दृष्ट्वार्जुनो निमित्तानि विजयाय प्रदक्षिणम् ।
युयुधानं महेष्वासमिदं वचनमब्रवीत् ॥ ०२६ ॥

युयुधानाद्य युद्धे मे दृश्यते विजयो ध्रुवः ।
यथा हीमानि लिङ्गानि दृश्यन्ते शिनिपुङ्गव ॥ ०२७ ॥

सोऽहं तत्र गमिष्यामि यत्र सैन्धवको नृपः ।
यियासुर्यमलोकाय मम वीर्यं प्रतीक्षते ॥ ०२८ ॥

यथा परमकं कृत्यं सैन्धवस्य वधे मम ।
तथैव सुमहत्कृत्यं धर्मराजस्य रक्षणे ॥ ०२९ ॥

स त्वमद्य महाबाहो राजानं परिपालय ।
यथैव हि मया गुप्तस्त्वया गुप्तो भवेत्तथा ॥ ०३० ॥

त्वयि चाहं पराश्वस्य प्रद्युम्ने वा महारथे ।
शक्नुयां सैन्धवं हन्तुमनपेक्षो नरर्षभ ॥ ०३१ ॥

मय्यपेक्षा न कर्तव्या कथञ्चिदपि सात्वत ।
राजन्येव परा गुप्तिः कार्या सर्वात्मना त्वया ॥ ०३२ ॥

न हि यत्र महाबाहुर्वासुदेवो व्यवस्थितः ।
किञ्चिद्व्यापद्यते तत्र यत्राहमपि च ध्रुवम् ॥ ०३३ ॥

एवमुक्तस्तु पार्थेन सात्यकिः परवीरहा ।
तथेत्युक्त्वागमत्तत्र यत्र राजा युधिष्ठिरः ॥ ०३४ ॥

# जयद्रथवधपर्व

## अध्याय ०६१

धृतराष्ट्र उवाच ॥

श्वोभूते किमकार्षुस्ते दुःखशोकसमन्विताः ।
अभिमन्यौ हते तत्र के वायुध्यन्त मामकाः ॥ ००१ ॥

जानन्तस्तस्य कर्माणि कुरवः सव्यसाचिनः ।
कथं तत्किल्बिषं कृत्वा निर्भया ब्रूहि मामकाः ॥ ००२ ॥

पुत्रशोकाभिसंतप्तं क्रुद्धं मृत्युमिवान्तकम् ।
आयान्तं पुरुषव्याघ्रं कथं ददृशुराहवे ॥ ००३ ॥

कपिराजध्वजं संख्ये विधुन्वानं महद्धनुः ।
दृष्ट्वा पुत्रपरिद्यूनं किमकुर्वन्त मामकाः ॥ ००४ ॥

किं नु सञ्जय सङ्ग्रामे वृत्तं दुर्योधनं प्रति ।
परिदेवो महानत्र श्रुतो मे नाभिनन्दनम् ॥ ००५ ॥

बभूवुर्ये मनोग्राह्याः शब्दाः श्रुतिसुखावहाः ।
न श्रूयन्तेऽद्य ते सर्वे सैन्धवस्य निवेशने ॥ ००६ ॥

स्तुवतां नाद्य श्रूयन्ते पुत्राणां शिबिरे मम ।
सूतमागधसंघानां नर्तकानां च सर्वशः ॥ ००७ ॥

शब्देन नादिताभीक्ष्णमभवद्यत्र मे श्रुतिः ।
दीनानामद्य तं शब्दं न शृणोमि समीरितम् ॥ ००८ ॥

निवेशने सत्यधृतेः सोमदत्तस्य सञ्जय ।
आसीनोऽहं पुरा तात शब्दमश्रौषमुत्तमम् ॥ ००९ ॥

तदद्य हीनपुण्योऽहमार्तस्वरनिनादितम् ।
निवेशनं हतोत्साहं पुत्राणां मम लक्षये ॥ ०१० ॥

विविंशतेर्दुर्मुखस्य चित्रसेनविकर्णयोः ।
अन्येषां च सुतानां मे न तथा श्रूयते ध्वनिः ॥ ०११ ॥

ब्राह्मणाः क्षत्रिया वैश्या यं शिष्याः पर्युपासते ।
द्रोणपुत्रं महेष्वासं पुत्राणां मे परायणम् ॥ ०१२ ॥

वितण्डालापसंलापैर्हुतयाचितवन्दितैः ।
गीतैश्च विविधैरिष्टै रमते यो दिवानिशम् ॥ ०१३ ॥

उपास्यमानो बहुभिः कुरुपाण्डवसात्वतैः ।
सूत तस्य गृहे शब्दो नाद्य द्रौणेर्यथा पुरा ॥ ०१४ ॥

द्रोणपुत्रं महेष्वासं गायना नर्तकाश्च ये ।
अत्यर्थमुपतिष्ठन्ति तेषां न श्रूयते ध्वनिः ॥ ०१५ ॥

विन्दानुविन्दयोः सायं शिबिरे यो महाध्वनिः ।
श्रूयते सोऽद्य न तथा केकयानां च वेश्मसु ॥ ०१६ ॥

नित्यप्रमुदितानां च तालगीतस्वनो महान् ।
नृत्यतां श्रूयते तात गणानां सोऽद्य न ध्वनिः ॥ ०१७ ॥

सप्ततन्तून्वितन्वाना यमुपासन्ति याजकाः ।
सौमदत्तिं श्रुतनिधिं तेषां न श्रूयते ध्वनिः ॥ ०१८ ॥

ज्याघोषो ब्रह्मघोषश्च तोमरासिरथध्वनिः ।

द्रोणस्यासीदविरतो गृहे तन्न शृणोम्यहम्  ॥ ०१९  ॥

नानादेशसमुत्थानां गीतानां योऽभवत्स्वनः ।
वादित्रनादितानां च सोऽद्य न श्रूयते महान्  ॥ ०२०  ॥

यदा प्रभृत्युपप्लव्याच्छान्तिमिच्छञ्जनार्दनः ।
आगतः सर्वभूतानामनुकम्पार्थमच्युतः  ॥ ०२१  ॥

ततोऽहमब्रुवं सूत मन्दं दुर्योधनं तदा ।
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः  ॥ ०२२  ॥

कालप्राप्तमहं मन्ये मा त्वं दुर्योधनातिगाः ।
शमे चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम्  ॥ ०२३  ॥

हितार्थमभिजल्पन्तं न तथास्त्यपराजयः  ॥ ०२३  ॥

प्रत्याचष्ट स दाशार्हमृषभं सर्वधन्विनाम् ।
अनुनेयानि जल्पन्तमनयान्नान्वपद्यत  ॥ ०२४  ॥

ततो दुःशासनस्यैव कर्णस्य च मतं द्वयोः ।
अन्ववर्तत हित्वा मां कृष्टः कालेन दुर्मतिः  ॥ ०२५  ॥

न ह्यहं द्यूतमिच्छामि विदुरो न प्रशंसति ।
सैन्धवो नेच्छते द्यूतं भीष्मो न द्यूतमिच्छति  ॥ ०२६  ॥

शल्यो भूरिश्रवाश्चैव पुरुमित्रो जयस्तथा ।
अश्वत्थामा कृपो द्रोणो द्यूतं नेच्छन्ति सञ्जय  ॥ ०२७  ॥

एतेषां मतमाज्ञाय यदि वर्तेत पुत्रकः ।
सज्ञातिमित्रः ससुहृच्चिरं जीवेदनामयः  ॥ ०२८  ॥

श्लक्ष्णा मधुरसंभाषा ज्ञातिमध्ये प्रियंवदाः ।
कुलीनाः संमताः प्राज्ञाः सुखं प्राप्स्यन्ति पाण्डवाः ॥ ०२९ ॥

धर्मापेक्षो नरो नित्यं सर्वत्र लभते सुखम् ।
प्रेत्यभावे च कल्याणं प्रसादं प्रतिपद्यते ॥ ०३० ॥

अर्हन्त्यर्धं पृथिव्यास्ते भोक्तुं सामर्थ्यसाधनाः ।
तेषामपि समुद्रान्ता पितृपैतामही मही ॥ ०३१ ॥

नियुज्यमानाः स्थास्यन्ति पाण्डवा धर्मवर्त्मनि ।
सन्ति नो ज्ञातयस्तात येषां श्रोष्यन्ति पाण्डवाः ॥ ०३२ ॥

शल्यस्य सोमदत्तस्य भीष्मस्य च महात्मनः ।
द्रोणस्याथ विकर्णस्य बाह्लिकस्य कृपस्य च ॥ ०३३ ॥

अन्येषां चैव वृद्धानां भरतानां महात्मनाम् ।
त्वदर्थं ब्रुवतां तात करिष्यन्ति वचो हितम् ॥ ०३४ ॥

कं वा त्वं मन्यसे तेषां यस्त्वा ब्रूयादतोऽन्यथा ।
कृष्णो न धर्मं सञ्जह्यात्सर्वे ते च त्वदन्वयाः ॥ ०३५ ॥

मयापि चोक्तास्ते वीरा वचनं धर्मसंहितम् ।
नान्यथा प्रकरिष्यन्ति धर्मात्मानो हि पाण्डवाः ॥ ०३६ ॥

इत्यहं विलपन्सूत बहुशः पुत्रमुक्तवान् ।
न च मे श्रुतवान्मूढो मन्ये कालस्य पर्ययम् ॥ ०३७ ॥

वृकोदरार्जुनौ यत्र वृष्णिवीरश्च सात्यकिः ।
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः ॥ ०३८ ॥

धृष्टद्युम्नश्च दुर्धर्षः शिखण्डी चापराजितः ।

अश्मकाः केकयाश्चैव क्षत्रधर्मा च सौमकिः ॥ ०३९ ॥

चैद्यश्च चेकितानश्च पुत्रः काश्यस्य चाभिभुः ।
द्रौपदेया विराटश्च द्रुपदश्च महारथः ॥ ०४० ॥

यमौ च पुरुषव्याघ्रौ मन्त्री च मधुसूदनः ॥ ०४० ॥

क एताञ्जातु युध्येत लोकेऽस्मिन्वै जिजीविषुः ।
दिव्यमस्त्रं विकुर्वाणान्संहरेयुररिंदमाः ॥ ०४१ ॥

अन्यो दुर्योधनात्कर्णाच्छकुनेश्चापि सौबलात् ।
दुःशासनचतुर्थानां नान्यं पश्यामि पञ्चमम् ॥ ०४२ ॥

येषामभीशुहस्तः स्याद्विष्वक्सेनो रथे स्थितः ।
संनद्धश्चार्जुनो योद्धा तेषां नास्ति पराजयः ॥ ०४३ ॥

तेषां मम विलापानां न हि दुर्योधनः स्मरेत् ।
हतौ हि पुरुषव्याघ्रौ भीष्मद्रोणौ त्वमात्थ मे ॥ ०४४ ॥

तेषां विदुरवाक्यानामुक्तानां दीर्घदर्शिनाम् ।
दृष्ट्वेमां फलनिर्वृत्तिं मन्ये शोचन्ति पुत्रकाः ॥ ०४५ ॥

हिमात्यये यथा कक्षं शुष्कं वातेरितो महान् ।
अग्निर्दहेत्तथा सेनां मामिकां स धनञ्जयः ॥ ०४६ ॥

आचक्ष्व तद्धि नः सर्वं कुशलो ह्यसि सञ्जय ।
यदुपायात्तु सायाह्ने कृत्वा पार्थस्य किल्बिषम् ॥ ०४७ ॥

अभिमन्यौ हते तात कथमासीन्मनो हि वः ॥ ०४७ ॥

न जातु तस्य कर्माणि युधि गाण्डीवधन्वनः ।

अपकृत्वा महत्तात सोढुं शक्ष्यन्ति मामकाः ॥ ०४८ ॥

किं नु दुर्योधनः कृत्यं कर्णः कृत्यं किमब्रवीत् ।
दुःशासनः सौबलश्च तेषामेवं गते अपि ॥ ०४९ ॥

सर्वेषां समवेतानां पुत्राणां मम सञ्जय ॥ ०४९ ॥

यद्वृत्तं तात सङ्ग्रामे मन्दस्यापनयैर्भृशम् ।
लोभानुगतदुर्बुद्धेः क्रोधेन विकृतात्मनः ॥ ०५० ॥

राज्यकामस्य मूढस्य रागोपहतचेतसः ।
दुर्नीतं वा सुनीतं वा तन्ममाचक्ष्व सञ्जय ॥ ०५१ ॥

---

# अध्याय ०६२

सञ्जय उवाच ॥

हन्त ते संप्रवक्ष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
शुश्रूषस्व स्थिरो भूत्वा तव ह्यपनयो महान् ॥ ००१ ॥

गतोदके सेतुबन्धो यादृक्तादृगयं तव ।
विलापो निष्फलो राजन्मा शुचो भरतर्षभ ॥ ००२ ॥

अनतिक्रमणीयोऽयं कृतान्तस्याद्भुतो विधिः ।
मा शुचो भरतश्रेष्ठ दिष्टमेतत्पुरातनम् ॥ ००३ ॥

यदि हि त्वं पुरा द्यूतात्कुन्तीपुत्रं युधिष्ठिरम् ।

निवर्तयेथाः पुत्रांश्च न त्वां व्यसनमाव्रजेत्  ॥ ००४  ॥

युद्धकाले पुनः प्राप्ते तदैव भवता यदि ।
निवर्तिताः स्युः संरब्धा न त्वां व्यसनमाव्रजेत्  ॥ ००५  ॥

दुर्योधनं चाविधेयं बध्नीतेति पुरा यदि ।
कुरूनचोदयिष्यस्त्वं न त्वां व्यसनमाव्रजेत्  ॥ ००६  ॥

तत्ते बुद्धिव्यभीचारमुपलप्स्यन्ति पाण्डवाः ।
पाञ्चाला वृष्णयः सर्वे ये चान्येऽपि महाजनाः  ॥ ००७  ॥

स कृत्वा पितृकर्म त्वं पुत्रं संस्थाप्य सत्पथे ।
वर्तेथा यदि धर्मेण न त्वां व्यसनमाव्रजेत्  ॥ ००८  ॥

त्वं तु प्राज्ञतमो लोके हित्वा धर्मं सनातनम् ।
दुर्योधनस्य कर्णस्य शकुनेश्चान्वगा मतम्  ॥ ००९  ॥

तत्ते विलपितं सर्वं मया राजन्निशामितम् ।
अर्थे निविशमानस्य विषमिश्रं यथा मधु  ॥ ०१०  ॥

न तथा मन्यते कृष्णो राजानं पाण्डवं पुरा ।
न भीष्मं नैव च द्रोणं यथा त्वां मन्यते नृप  ॥ ०११  ॥

व्यजानत यदा तु त्वां राजधर्मादधश्च्युतम् ।
तदा प्रभृति कृष्णस्त्वां न तथा बहु मन्यते  ॥ ०१२  ॥

परुषाण्युच्यमानांश्च यथा पार्थानुपेक्षसे ।
तस्यानुबन्धः प्राप्तस्त्वां पुत्राणां राज्यकामुकम्  ॥ ०१३  ॥

पितृपैतामहं राज्यमपवृत्तं तदानघ ।
अथ पार्थैर्जितां कृत्स्नां पृथिवीं प्रत्यपद्यथाः  ॥ ०१४  ॥

पाण्डुनावर्जितं राज्यं कौरवाणां यशस्तथा ।
ततश्चाभ्यधिकं भूयः पाण्डवैर्धर्मचारिभिः ॥ ०१५ ॥

तेषां तत्तादृशं कर्म त्वामासाद्य सुनिष्फलम् ।
यत्पित्र्याद्भ्रंशिता राज्यात्त्वयेहामिषगृद्धिना ॥ ०१६ ॥

यत्पुनर्युद्धकाले त्वं पुत्रान्गर्हयसे नृप ।
बहुधा व्याहरन्दोषान्न तदद्योपपद्यते ॥ ०१७ ॥

न हि रक्षन्ति राजानो युध्यन्तो जीवितं रणे ।
चमूं विगाह्य पार्थानां युध्यन्ते क्षत्रियर्षभाः ॥ ०१८ ॥

यां तु कृष्णार्जुनौ सेनां यां सात्यकिवृकोदरौ ।
रक्षेरन्को नु तां युध्येच्चमूमन्यत्र कौरवैः ॥ ०१९ ॥

येषां योद्धा गुडाकेशो येषां मन्त्री जनार्दनः ।
येषां च सात्यकिर्गोप्ता येषां गोप्ता वृकोदरः ॥ ०२० ॥

को हि तान्विषहेद्योद्धुं मर्त्यधर्मा धनुर्धरः ।
अन्यत्र कौरवेयेभ्यो ये वा तेषां पदानुगाः ॥ ०२१ ॥

यावत्तु शक्यते कर्तुमनुरक्तैर्जनाधिपैः ।
क्षत्रधर्मरतैः शूरैस्तावत्कुर्वन्ति कौरवाः ॥ ०२२ ॥

यथा तु पुरुषव्याघ्रैर्युद्धं परमसङ्कटम् ।
कुरूणां पाण्डवैः सार्धं तत्सर्वं शृणु तत्त्वतः ॥ ०२३ ॥

# अध्याय ०६३

सञ्जय उवाच ॥

तस्यां निशायां व्युष्टायां द्रोणः शस्त्रभृतां वरः ।
स्वान्यनीकानि सर्वाणि प्राक्रामद्व्यूहितुं ततः ॥ ००१ ॥

शूराणां गर्जतां राजन्सङ्क्रुद्धानाममर्षिणाम् ।
श्रूयन्ते स्म गिरश्चित्राः परस्परवधैषिणाम् ॥ ००२ ॥

विस्फार्य च धनूंष्याजौ ज्याः करैः परिमृज्य च ।
विनिःश्वसन्तः प्राक्रोशन्क्वेदानीं स धनञ्जयः ॥ ००३ ॥

विकोशान्सुत्सरूनन्ये कृतधारान्समाहितान् ।
पीतानाकाशसङ्काशानसीन्केचिच्च चिक्षिपुः ॥ ००४ ॥

चरन्तस्त्वसिमार्गांश्च धनुर्मार्गांश्च शिक्षया ।
सङ्ग्राममनसः शूरा दृश्यन्ते स्म सहस्रशः ॥ ००५ ॥

सघण्टाश्चन्दनादिग्धाः स्वर्णवज्रविभूषिताः ।
समुत्क्षिप्य गदाश्चान्ये पर्यपृच्छन्त पाण्डवम् ॥ ००६ ॥

अन्ये बलमदोन्मत्ताः परिघैर्बाहुशालिनः ।
चक्रुः संबाधमाकाशमुच्छ्रितेन्द्रध्वजोपमैः ॥ ००७ ॥

नानाप्रहरणैश्चान्ये विचित्रस्रगलङ्कृताः ।
सङ्ग्राममनसः शूरास्तत्र तत्र व्यवस्थिताः ॥ ००८ ॥

क्वार्जुनः क्व च गोविन्दः क्व च मानी वृकोदरः ।
क्व च ते सुहृदस्तेषामाह्वयन्तो रणे तदा ॥ ००९ ॥

ततः शङ्खमुपाध्माय त्वरयन्वाजिनः स्वयम् ।
इतस्ततस्तान्रचयन्द्रोणश्चरति वेगितः ॥ ०१० ॥

तेष्वनीकेषु सर्वेषु स्थितेष्वाहवनन्दिषु ।
भारद्वाजो महाराज जयद्रथमथाब्रवीत् ॥ ०११ ॥

त्वं चैव सौमदत्तिश्च कर्णश्चैव महारथः ।
अश्वत्थामा च शल्यश्च वृषसेनः कृपस्तथा ॥ ०१२ ॥

शतं चाश्वसहस्राणां रथानामयुतानि षट् ।
द्विरदानां प्रभिन्नानां सहस्राणि चतुर्दश ॥ ०१३ ॥

पदातीनां सहस्राणि दंशितान्येकविंशतिः ।
गव्यूतिषु त्रिमात्रेषु मामनासाद्य तिष्ठत ॥ ०१४ ॥

तत्रस्थं त्वां न संसोढुं शक्ता देवाः सवासवाः ।
किं पुनः पाण्डवाः सर्वे समाश्वसिहि सैन्धव ॥ ०१५ ॥

एवमुक्तः समाश्वस्तः सिन्धुराजो जयद्रथः ।
संप्रायात्सह गान्धारैर्वृतस्तैश्च महारथैः ॥ ०१६ ॥

वर्मिभिः सादिभिर्यत्तैः प्रासपाणिभिरास्थितैः ॥ ०१६ ॥

चामरापीडिनः सर्वे जाम्बूनदविभूषिताः ।
जयद्रथस्य राजेन्द्र हयाः साधुप्रवाहिनः ॥ ०१७ ॥

ते चैव सप्तसाहस्रा द्विसाहस्राश्च सैन्धवाः ॥ ०१७ ॥

मत्तानामधिरूढानां हस्त्यारोहैर्विशारदैः ।
नागानां भीमरूपाणां वर्मिणां रौद्रकर्मिणाम् ॥ ०१८ ॥

अध्यर्धेन सहस्रेण पुत्रो दुर्मर्षणस्तव ।
अग्रतः सर्वसैन्यानां योत्स्यमानो व्यवस्थितः ॥ ०१९ ॥

ततो दुःशासनश्चैव विकर्णश्च तवात्मजौ ।
सिन्धुराजार्थसिद्ध्यर्थमग्रानीके व्यवस्थितौ ॥ ०२० ॥

दीर्घो द्वादशगव्यूतिः पश्चार्धे पञ्च विस्तृतः ।
व्यूहः स चक्रशकटो भारद्वाजेन निर्मितः ॥ ०२१ ॥

नानानृपतिभिर्वीरैस्तत्र तत्र व्यवस्थितैः ।
रथाश्वगजपत्त्योघैर्द्रोणेन विहितः स्वयम् ॥ ०२२ ॥

पश्चार्धे तस्य पद्मस्तु गर्भव्यूहः सुदुर्भिदः ।
सूची पद्मस्य मध्यस्थो गूढो व्यूहः पुनः कृतः ॥ ०२३ ॥

एवमेतं महाव्यूहं व्यूह्य द्रोणो व्यवस्थितः ।
सूचीमुखे महेष्वासः कृतवर्मा व्यवस्थितः ॥ ०२४ ॥

अनन्तरं च काम्बोजो जलसंधश्च मारिष ।
दुर्योधनः सहामात्यस्तदनन्तरमेव च ॥ ०२५ ॥

ततः शतसहस्राणि योधानामनिवर्तिनाम् ।
व्यवस्थितानि सर्वाणि शकटे सूचिरक्षिणः ॥ ०२६ ॥

तेषां च पृष्ठतो राज बलेन महता वृतः ।
जयद्रथस्ततो राजन्सूचिपाशे व्यवस्थितः ॥ ०२७ ॥

शकटस्य तु राजेन्द्र भारद्वाजो मुखे स्थितः ।
अनु तस्याभवद्भोजो जुगोपैनं ततः स्वयम् ॥ ०२८ ॥

श्वेतवर्माम्बरोष्णीषो व्यूढोरस्को महाभुजः ।

धनुर्विस्फारयन्द्रोणस्तस्थौ क्रुद्ध इवान्तकः ॥ ०२९ ॥

पताकिनं शोणहयं वेदीकृष्णाजिनध्वजम् ।
द्रोणस्य रथमालोक्य प्रहृष्टाः कुरवोऽभवन् ॥ ०३० ॥

सिद्धचारणसंघानां विस्मयः सुमहानभूत् ।
द्रोणेन विहितं दृष्ट्वा व्यूहं क्षुब्धार्णवोपमम् ॥ ०३१ ॥

सशैलसागरवनां नानाजनपदाकुलाम् ।
ग्रसेद्व्यूहः क्षितिं सर्वामिति भूतानि मेनिरे ॥ ०३२ ॥

बहुरथमनुजाश्वपत्तिनागं ; प्रतिभयनिस्वनमद्भुताभरूपम् ।
अहितहृदयभेदनं महद्वै ; शकटमवेक्ष्य कृतं ननन्द राजा ॥ ०३३ ॥

---

# अध्याय ०६४

सञ्जय उवाच ॥

ततो व्यूढेष्वनीकेषु समुत्क्रुष्टेषु मारिष ।
ताड्यमानासु भेरीषु मृदङ्गेषु नदत्सु च ॥ ००१ ॥

अनीकानां च संह्रादे वादित्राणां च निस्वने ।
प्रध्मापितेषु शङ्खेषु संनादे लोमहर्षणे ॥ ००२ ॥

अभिहारयत्सु शनकैर्भरतेषु युयुत्सुषु ।
रौद्रे मुहूर्ते संप्राप्ते सव्यसाची व्यदृश्यत ॥ ००३ ॥

वडानां वायसानां च पुरस्तात्सव्यसाचिनः ।
बहुलानि सहस्राणि प्राक्रीडंस्तत्र भारत ॥ ००४ ॥

मृगाश्च घोरसंनादाः शिवाश्चाशिवदर्शनाः ।
दक्षिणेन प्रयातानामस्माकं प्राणदंस्तथा ॥ ००५ ॥

सनिर्घाता ज्वलन्त्यश्च पेतुरुल्काः समन्ततः ।
चचाल च मही कृत्स्ना भये घोरे समुत्थिते ॥ ००६ ॥

विष्वग्वाताः सनिर्घाता रूक्षाः शर्करवर्षिणः ।
ववुरायाति कौन्तेये सङ्ग्रामे समुपस्थिते ॥ ००७ ॥

नाकुलिस्तु शतानीको धृष्टद्युम्नश्च पार्षतः ।
पाण्डवानामनीकानि प्राज्ञौ तौ व्यूहतुस्तदा ॥ ००८ ॥

ततो रथसहस्रेण द्विरदानां शतेन च ।
त्रिभिरश्वसहस्रैश्च पदातीनां शतैः शतैः ॥ ००९ ॥

अध्यर्धमात्रे धनुषां सहस्रे तनयस्तव ।
अग्रतः सर्वसैन्यानां स्थित्वा दुर्मर्षणोऽब्रवीत् ॥ ०१० ॥

अद्य गाण्डीवधन्वानं तपन्तं युद्धदुर्मदम् ।
अहमावारयिष्यामि वेलेव मकरालयम् ॥ ०११ ॥

अद्य पश्यन्तु सङ्ग्रामे धनञ्जयममर्षणम् ।
विषक्तं मयि दुर्धर्षमश्मकूटमिवाश्मनि ॥ ०१२ ॥

एवं ब्रुवन्महाराज महात्मा स महामतिः ।
महेष्वासैर्वृतो राजन्महेष्वासो व्यवस्थितः ॥ ०१३ ॥

ततोऽन्तक इव क्रुद्धः सवज्र इव वासवः ।

दण्डपाणिरिवासह्यो मृत्युः कालेन चोदितः ॥ ०१४ ॥

शूलपाणिरिवाक्षोभ्यो वरुणः पाशवानिव ।
युगान्ताग्निरिवार्चिष्मान्प्रधक्ष्यन्वै पुनः प्रजाः ॥ ०१५ ॥

क्रोधामर्षबलोद्धूतो निवातकवचान्तकः ।
जयो जेता स्थितः सत्ये पारयिष्यन्महाव्रतम् ॥ ०१६ ॥

आमुक्तकवचः खड्गी जाम्बूनदकिरीटभृत् ।
शुभ्रवर्माम्बरधरः स्वङ्गदी चारुकुण्डली ॥ ०१७ ॥

रथप्रवरमास्थाय नरो नारायणानुगः ।
विधुन्वन्गाण्डिवं संख्ये बभौ सूर्य इवोदितः ॥ ०१८ ॥

सोऽग्रानीकस्य महत इषुपाते धनञ्जयः ।
व्यवस्थाप्य रथं सज्जं शङ्खं दध्मौ प्रतापवान् ॥ ०१९ ॥

अथ कृष्णोऽप्यसंभ्रान्तः पार्थेन सह मारिष ।
प्राध्मापयत्पाञ्चजन्यं शङ्खप्रवरमोजसा ॥ ०२० ॥

तयोः शङ्खप्रणादेन तव सैन्ये विशां पते ।
आसन्संहृष्टरोमाणः कम्पिता गतचेतसः ॥ ०२१ ॥

यथा त्रसन्ति भूतानि सर्वाण्यशनिनिस्वनात् ।
तथा शङ्खप्रणादेन वित्रेसुस्तव सैनिकाः ॥ ०२२ ॥

प्रसुस्रुवुः शकृन्मूत्रं वाहनानि च सर्वशः ।
एवं सवाहनं सर्वमाविग्नमभवद्बलम् ॥ ०२३ ॥

व्यषीदन्त नरा राजञ्शङ्खशब्देन मारिष ।
विसञ्ज्ञाश्चाभवन्केचित्केचिद्राजन्वितत्रसुः ॥ ०२४ ॥

ततः कपिर्महानादं सह भूतैर्ध्वजालयैः ।
अकरोद्व्यादितास्यश्च भीषयंस्तव सैनिकान् ॥ ०२५ ॥

ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह ।
पुनरेवाभ्यहन्यन्त तव सैन्यप्रहर्षणाः ॥ ०२६ ॥

नानावादित्रसंह्रादैः क्ष्वेडितास्फोटिताकुलैः ।
सिंहनादैः सवादित्रैः समाहूतैर्महारथैः ॥ ०२७ ॥

तस्मिन्सुतुमुले शब्दे भीरूणां भयवर्धने ।
अतीव हृष्टो दाशार्हमब्रवीत्पाकशासनिः ॥ ०२८ ॥

चोदयाश्वान्हृषीकेश यत्र दुर्मर्षणः स्थितः ।
एतद्भित्त्वा गजानीकं प्रवेक्ष्याम्यरिवाहिनीम् ॥ ०२९ ॥

एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।
अचोदयद्धयांस्तत्र यत्र दुर्मर्षणः स्थितः ॥ ०३० ॥

स संप्रहारस्तुमुलः संप्रवृत्तः सुदारुणः ।
एकस्य च बहूनां च रथनागनरक्षयः ॥ ०३१ ॥

ततः सायकवर्षेण पर्जन्य इव वृष्टिमान् ।
परानवाकिरत्पार्थः पर्वतानिव नीरदः ॥ ०३२ ॥

ते चापि रथिनः सर्वे त्वरिताः कृतहस्तवत् ।
अवाकिरन्बाणजालैस्ततः कृष्णधनञ्जयौ ॥ ०३३ ॥

ततः क्रुद्धो महाबाहुर्वार्यमाणः परैर्युधि ।
शिरांसि रथिनां पार्थः कायेभ्योऽपाहरच्छरैः ॥ ०३४ ॥

उद्भ्रान्तनयनैर्वक्रैः संदष्टोष्ठपुटैः शुभैः ।
सकुण्डलशिरस्त्राणैर्वसुधा समकीर्यत ॥ ०३५ ॥

पुण्डरीकवनानीव विध्वस्तानि समन्ततः ।
विनिकीर्णानि योधानां वदनानि चकाशिरे ॥ ०३६ ॥

तपनीयविचित्राणि सिक्तानि रुधिरेण च ।
अदृश्यन्त यथा राजन्मेघसंघाः सविद्युतः ॥ ०३७ ॥

शिरसां पततां राजञ्शब्दोऽभूत्पृथिवीतले ।
कालेन परिपक्वानां तालानां पततामिव ॥ ०३८ ॥

ततः कबन्धः कश्चित्तु धनुरालम्ब्य तिष्ठति ।
कश्चित्खड्गं विनिष्कृष्य भुजेनोद्यम्य तिष्ठति ॥ ०३९ ॥

नाजानन्त शिरांस्युर्व्यां पतितानि नरर्षभाः ।
अमृष्यमाणाः कौन्तेयं सङ्ग्रामे जयगृद्धिनः ॥ ०४० ॥

हयानामुत्तमाङ्गैश्च हस्तिहस्तैश्च मेदिनी ।
बाहुभिश्च शिरोभिश्च वीराणां समकीर्यत ॥ ०४१ ॥

अयं पार्थः कुतः पार्थ एष पार्थ इति प्रभो ।
तव सैन्येषु योधानां पार्थभूतमिवाभवत् ॥ ०४२ ॥

अन्योन्यमपि चाजघ्नुरात्मानमपि चापरे ।
पार्थभूतममन्यन्त जगत्कालेन मोहिताः ॥ ०४३ ॥

निष्टनन्तः सरुधिरा विसञ्ज्ञा गाढवेदनाः ।
शयाना बहवो वीराः कीर्तयन्तः सुहृज्जनम् ॥ ०४४ ॥

सभिण्डिपालाः सप्रासाः सशक्त्यृष्टिपरश्वधाः ।

सनिर्यूहाः सनिस्त्रिंशाः सशरासनतोमराः ॥ ०४५ ॥

सबाणवर्माभरणाः सगदाः साङ्गदा रणे ।
महाभुजगसङ्काशा बाहवः परिघोपमाः ॥ ०४६ ॥

उद्वेष्टन्ति विचेष्टन्ति संवेष्टन्ति च सर्वशः ।
वेगं कुर्वन्ति संरब्धा निकृत्ताः परमेषुभिः ॥ ०४७ ॥

यो यः स्म समरे पार्थं प्रतिसंरभते नरः ।
तस्य तस्यान्तको बाणः शरीरमुपसर्पति ॥ ०४८ ॥

नृत्यतो रथमार्गेषु धनुर्व्यायच्छतस्तथा ।
न कश्चित्तत्र पार्थस्य ददर्शान्तरमण्वपि ॥ ०४९ ॥

यत्तस्य घटमानस्य क्षिप्रं विक्षिपतः शरान् ।
लाघवात्पाण्डुपुत्रस्य व्यस्मयन्त परे जनाः ॥ ०५० ॥

हस्तिनं हस्तियन्तारमश्वमाश्विकमेव च ।
अभिनत्फल्गुनो बाणै रथिनं च ससारथिम् ॥ ०५१ ॥

आवर्तमानमावृत्तं युध्यमानं च पाण्डवः ।
प्रमुखे तिष्ठमानं च न कञ्चिन्न निहन्ति सः ॥ ०५२ ॥

यथोदयन्वै गगने सूर्यो हन्ति महत्तमः ।
तथार्जुनो गजानीकमवधीत्कङ्कपत्रिभिः ॥ ०५३ ॥

हस्तिभिः पतितैर्भिन्नैस्तव सैन्यमदृश्यत ।
अन्तकाले यथा भूमिर्विनिकीर्णैर्महीधरैः ॥ ०५४ ॥

यथा मध्यंदिने सूर्यो दुष्प्रेक्ष्यः प्राणिभिः सदा ।
तथा धनञ्जयः क्रुद्धो दुष्प्रेक्ष्यो युधि शत्रुभिः ॥ ०५५ ॥

तत्तथा तव पुत्रस्य सैन्यं युधि परंतप ।
प्रभग्नं द्रुतमाविग्नमतीव शरपीडितम्  ॥ ०५६  ॥

मारुतेनेव महता मेघानीकं विधूयता ।
प्रकाल्यमानं तत्सैन्यं नाशकत्प्रतिवीक्षितुम्  ॥ ०५७  ॥

प्रतोदैश्चापकोटीभिर्हुङ्कारैः साधुवाहितैः ।
कशापार्ष्ण्यभिघातैश्च वाग्भिरुग्राभिरेव च  ॥ ०५८  ॥

चोदयन्तो हयांस्तूर्णं पलायन्ते स्म तावकाः ।
सादिनो रथिनश्चैव पत्तयश्चार्जुनार्दिताः  ॥ ०५९  ॥

पार्ष्ण्यङ्गुष्ठाङ्कुशैर्नागांश्चोदयन्तस्तथापरे ।
शरैः संमोहिताश्चान्ये तमेवाभिमुखा ययौ  ॥ ०६०  ॥

तव योधा हतोत्साहा विभ्रान्तमनसस्तदा  ॥ ०६०  ॥

---

# अध्याय ०६५

धृतराष्ट्र उवाच  ॥

तस्मिन्प्रभग्ने सैन्याग्रे वध्यमाने किरीटिना ।
के नु तत्र रणे वीराः प्रत्युदीयुर्धनञ्जयम्  ॥ ००१  ॥

आहो स्विच्छकटव्यूहं प्रविष्टा मोघनिश्चयाः ।
द्रोणमाश्रित्य तिष्ठन्तः प्राकारमकुतोभयाः  ॥ ००२  ॥

सञ्जय उवाच ॥

तथार्जुनेन संभग्ने तस्मिंस्तव बले तदा ।
हतवीरे हतोत्साहे पलायनकृतक्षणे ॥ ००३ ॥

पाकशासनिनाभीक्ष्णं वध्यमाने शरोत्तमैः ।
न तत्र कश्चित्सङ्ग्रामे शशाकार्जुनमीक्षितुम् ॥ ००४ ॥

ततस्तव सुतो राजन्दृष्ट्वा सैन्यं तथागतम् ।
दुःशासनो भृशं क्रुद्धो युद्धायार्जुनमभ्ययात् ॥ ००५ ॥

स काञ्चनविचित्रेण कवचेन समावृतः ।
जाम्बूनदशिरस्त्राणः शूरस्तीव्रपराक्रमः ॥ ००६ ॥

नागानीकेन महता ग्रसन्निव महीमिमाम् ।
दुःशासनो महाराज सव्यसाचिनमावृणोत् ॥ ००७ ॥

ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
ज्याक्षेपनिनदैश्चैव विरावेण च दन्तिनाम् ॥ ००८ ॥

भूर्दिशश्चान्तरिक्षं च शब्देनासीत्समावृतम् ।
स मुहूर्तं प्रतिभयो दारुणः समपद्यत ॥ ००९ ॥

तान्दृष्ट्वा पततस्तूर्णमङ्कुशैरभिचोदितान् ।
व्यालम्बहस्तान्संरब्धान्सपक्षानिव पर्वतान् ॥ ०१० ॥

सिंहनादेन महता नरसिंहो धनञ्जयः ।
गजानीकममित्राणामभितो व्यधमच्छरैः ॥ ०११ ॥

महोर्मिणमिवोद्धूतं श्वसनेन महार्णवम् ।

किरीटी तद्गजानीकं प्राविशन्मकरो यथा ॥ ०१२ ॥

काष्ठातीत इवादित्यः प्रतपन्युगसङ्क्षये ।
ददृशे दिक्षु सर्वासु पार्थः परपुरञ्जयः ॥ ०१३ ॥

खुरशब्देन चाश्वानां नेमिघोषेण तेन च ।
तेन चोत्क्रुष्टशब्देन ज्यानिनादेन तेन च ॥ ०१४ ॥

देवदत्तस्य घोषेण गाण्डीवनिनदेन च ॥ ०१४ ॥

मन्दवेगतरा नागा बभूवुस्ते विचेतसः ।
शरैराशीविषस्पर्शैर्निर्भिन्नाः सव्यसाचिना ॥ ०१५ ॥

ते गजा विशिखैस्तीक्ष्णैर्युधि गाण्डीवचोदितैः ।
अनेकशतसाहस्रैः सर्वाङ्गेषु समर्पिताः ॥ ०१६ ॥

आरावं परमं कृत्वा वध्यमानाः किरीटिना ।
निपेतुरनिशं भूमौ छिन्नपक्षा इवाद्रयः ॥ ०१७ ॥

अपरे दन्तवेष्टेषु कुम्भेषु च कटेषु च ।
शरैः समर्पिता नागाः क्रौञ्चवद्व्यनदन्मुहुः ॥ ०१८ ॥

गजस्कन्धगतानां च पुरुषाणां किरीटिना ।
आच्छिद्यन्तोत्तमाङ्गानि भल्लैः संनतपर्वभिः ॥ ०१९ ॥

सकुण्डलानां पततां शिरसां धरणीतले ।
पद्मानामिव संघातैः पार्थश्चक्रे निवेदनम् ॥ ०२० ॥

यन्त्रबद्धा विकवचा व्रणार्ता रुधिरोक्षिताः ।
भ्रमत्सु युधि नागेषु मनुष्या विललम्बिरे ॥ ०२१ ॥

केचिदेकेन बाणेन सुमुक्तेन पतत्रिणा ।
द्वौ त्रयश्च विनिर्भिन्ना निपेतुर्धरणीतले ॥ ०२२ ॥

मौर्वीं धनुर्ध्वजं चैव युगानीषास्तथैव च ।
रथिनां कुट्टयामास भल्लैः संनतपर्वभिः ॥ ०२३ ॥

न संदधन्न चाप्यस्यन्न विमुञ्चन्न चोद्धरन् ।
मण्डलेनैव धनुषा नृत्यन्पार्थः स्म दृश्यते ॥ ०२४ ॥

अतिविद्धाश्च नाराचैर्वमन्तो रुधिरं मुखैः ।
मुहूर्तान्निपतन्त्यन्ये वारणा वसुधातले ॥ ०२५ ॥

उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
अदृश्यन्त महाराज तस्मिन्परमसङ्कुले ॥ ०२६ ॥

सचापाः साङ्गुलित्राणाः सखड्गाः साङ्गदा रणे ।
अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ॥ ०२७ ॥

सूपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
चक्रैर्विमथितैरक्षै भग्नैश्च बहुधा युगैः ॥ ०२८ ॥

वर्मचापशरैश्चैव व्यवकीर्णैस्ततस्ततः ।
स्रग्भिराभरणैर्वस्त्रैः पतितैश्च महाध्वजैः ॥ ०२९ ॥

निहतैर्वारणैरश्वैः क्षत्रियैश्च निपातितैः ।
अदृश्यत मही तत्र दारुणप्रतिदर्शना ॥ ०३० ॥

एवं दुःशासनबलं वध्यमानं किरीटिना ।
संप्राद्रवन्महाराज व्यथितं वै सनायकम् ॥ ०३१ ॥

ततो दुःशासनस्त्रस्तः सहानीकः शरार्दितः ।

द्रोणं त्रातारमाकाङ्क्षञ्शकटव्यूहमभ्यगात्  ॥ ०३२  ॥

---

# अध्याय ०६६

सञ्जय उवाच  ॥

दुःशासनबलं हत्वा सव्यसाची धनञ्जयः ।
सिन्धुराजं परीप्सन्वै द्रोणानीकमुपाद्रवत्  ॥ ००१  ॥

स तु द्रोणं समासाद्य व्यूहस्य प्रमुखे स्थितम् ।
कृताञ्जलिरिदं वाक्यं कृष्णस्यानुमतेऽब्रवीत्  ॥ ००२  ॥

शिवेन ध्याहि मां ब्रह्मन्स्वस्ति चैव वदस्व मे ।
भवत्प्रसादादिच्छामि प्रवेष्टुं दुर्भिदां चमूम्  ॥ ००३  ॥

भवान्पितृसमो मह्यं धर्मराजसमोऽपि च ।
तथा कृष्णसमश्चैव सत्यमेतद्ब्रवीमि ते  ॥ ००४  ॥

अश्वत्थामा यथा तात रक्षणीयस्तवानघ ।
तथाहमपि ते रक्ष्यः सदैव द्विजसत्तम  ॥ ००५  ॥

तव प्रसादादिच्छामि सिन्धुराजानमाहवे ।
निहन्तुं द्विपदां श्रेष्ठ प्रतिज्ञां रक्ष मे विभो  ॥ ००६  ॥

एवमुक्तस्तदाचार्यः प्रत्युवाच स्मयन्निव ।
मामजित्वा न बीभत्सो शक्यो जेतुं जयद्रथः  ॥ ००७  ॥

एतावदुक्त्वा तं द्रोणः शरव्रातैरवाकिरत् ।

सरथाश्वध्वजं तीक्ष्णैः प्रहसन्वै ससारथिम् ॥ ००८ ॥

ततोऽर्जुनः शरव्रातान्द्रोणस्यावार्य सायकैः ।
द्रोणमभ्यर्दयद्बाणैर्घोररूपैर्महत्तरैः ॥ ००९ ॥

विव्याध च रणे द्रोणमनुमान्य विशां पते ।
क्षत्रधर्मं समास्थाय नवभिः सायकैः पुनः ॥ ०१० ॥

तस्येषूनिषुभिश्छित्त्वा द्रोणो विव्याध तावुभौ ।
विषाग्निज्वलनप्रख्यैरिषुभिः कृष्णपाण्डवौ ॥ ०११ ॥

इयेष पाण्डवस्तस्य बाणैश्छेत्तुं शरासनम् ।
तस्य चिन्तयतस्त्वेवं फल्गुनस्य महात्मनः ॥ ०१२ ॥

द्रोणः शरैरसंभ्रान्तो ज्यां चिच्छेदाशु वीर्यवान् ॥ ०१२ ॥

विव्याध च हयानस्य ध्वजं सारथिमेव च ।
अर्जुनं च शरैर्वीरं स्मयमानोऽभ्यवाकिरत् ॥ ०१३ ॥

एतस्मिन्नन्तरे पार्थः सज्जं कृत्वा महद्धनुः ।
विशेषयिष्यन्नाचार्यं सर्वास्त्रविदुषां वरम् ॥ ०१४ ॥

मुमोच षड्शतान्बाणान्गृहीत्वैकमिव द्रुतम् ॥ ०१४ ॥

पुनः सप्त शतानन्यान्सहस्रं चानिवर्तिनाम् ।
चिक्षेपायुतशश्चान्यांस्तेऽघ्नन्द्रोणस्य तां चमूम् ॥ ०१५ ॥

तैः सम्यगस्तैर्बलिना कृतिना चित्रयोधिना ।
मनुष्यवाजिमातङ्गा विद्धाः पेतुर्गतासवः ॥ ०१६ ॥

विद्रुताश्च रणे पेतुः संछिन्नायुधजीविताः ।

रथिनो रथमुख्येभ्यः सहयाः शरपीडिताः ॥ ०१७ ॥

चूर्णिताक्षिप्तदग्धानां वज्रानिलहुताशनैः ।
तुल्यरूपा गजाः पेतुर्गिर्यग्राम्बुदवेश्मनाम् ॥ ०१८ ॥

पेतुरश्वसहस्राणि प्रहतान्यर्जुनेषुभिः ।
हंसा हिमवतः पृष्ठे वारिविप्रहता इव ॥ ०१९ ॥

रथाश्वद्विपपत्त्योघाः सलिलौघा इवाद्भुताः ।
युगान्तादित्यरश्म्याभैः पाण्डवास्तशरैर्हताः ॥ ०२० ॥

तं पाण्डवादित्यशरांशुजालं ; कुरुप्रवीरान्युधि निष्टपन्तम् ।
स द्रोणमेघः शरवर्षवेगैः ; प्राच्छादयन्मेघ इवार्करश्मीन् ॥ ०२१ ॥

अथात्यर्थविसृष्टेन द्विषतामसुभोजिना ।
आजघ्ने वक्षसि द्रोणो नाराचेन धनञ्जयम् ॥ ०२२ ॥

स विह्वलितसर्वाङ्गः क्षितिकम्पे यथाचलः ।
धैर्यमालम्ब्य बीभत्सुर्द्रोणं विव्याध पत्रिभिः ॥ ०२३ ॥

द्रोणस्तु पञ्चभिर्बाणैर्वासुदेवमताडयत् ।
अर्जुनं च त्रिसप्तत्या ध्वजं चास्य त्रिभिः शरैः ॥ ०२४ ॥

विशेषयिष्यञ्शिष्यं च द्रोणो राजन्पराक्रमी ।
अदृश्यमर्जुनं चक्रे निमेषाच्छरवृष्टिभिः ॥ ०२५ ॥

प्रसक्तान्पततोऽद्राक्ष्म भारद्वाजस्य सायकान् ।
मण्डलीकृतमेवास्य धनुश्चादृश्यताद्भुतम् ॥ ०२६ ॥

तेऽभ्ययुः समरे राजन्वासुदेवधनञ्जयौ ।
द्रोणसृष्टाः सुबहवः कङ्कपत्रपरिच्छदाः ॥ ०२७ ॥

तद्दृष्ट्वा तादृशं युद्धं द्रोणपाण्डवयोस्तदा ।
वासुदेवो महाबुद्धिः कार्यवत्तामचिन्तयत् ॥ ०२८ ॥

ततोऽब्रवीद्वासुदेवो धनञ्जयमिदं वचः ।
पार्थ पार्थ महाबाहो न नः कालात्ययो भवेत् ॥ ०२९ ॥

द्रोणमुत्सृज्य गच्छामः कृत्यमेतन्महत्तरम् ।
पार्थश्चाप्यब्रवीत्कृष्णं यथेष्टमिति केशव ॥ ०३० ॥

ततः प्रदक्षिणं कृत्वा द्रोणं प्रायान्महाभुजः ।
परिवृत्तश्च बीभत्सुरगच्छद्विसृजञ्शरान् ॥ ०३१ ॥

ततोऽब्रवीत्स्मयन्द्रोणः क्वेदं पाण्डव गम्यते ।
ननु नाम रणे शत्रुमजित्वा न निवर्तसे ॥ ०३२ ॥

अर्जुन उवाच ॥

गुरुर्भवान्न मे शत्रुः शिष्यः पुत्रसमोऽस्मि ते ।
न चास्ति स पुमा.ण्ल्लोके यस्त्वां युधि पराजयेत् ॥ ०३३ ॥

सञ्जय उवाच ॥

एवं ब्रुवाणो बीभत्सुर्जयद्रथवधोत्सुकः ।
त्वरायुक्तो महाबाहुस्तत्सैन्यं समुपाद्रवत् ॥ ०३४ ॥

तं चक्ररक्षौ पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
अन्वयातां महात्मानौ विशन्तं तावकं बलम् ॥ ०३५ ॥

ततो जयो महाराज कृतवर्मा च सात्त्वतः ।
काम्बोजश्च श्रुतायुश्च धनञ्जयमवारयन् ॥ ०३६ ॥

तेषां दशसहस्राणि रथानामनुयायिनाम् ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ०३७ ॥

माचेल्लका ललित्थाश्च केकया मद्रकास्तथा ।
नारायणाश्च गोपालाः काम्बोजानां च ये गणाः ॥ ०३८ ॥

कर्णेन विजिताः पूर्वं सङ्ग्रामे शूरसंमताः ।
भारद्वाजं पुरस्कृत्य त्यक्तात्मानोऽर्जुनं प्रति ॥ ०३९ ॥

पुत्रशोकाभिसंतप्तं क्रुद्धं मृत्युमिवान्तकम् ।
त्यजन्तं तुमुले प्राणान्संनद्धं चित्रयोधिनम् ॥ ०४० ॥

गाहमानमनीकानि मातङ्गमिव यूथपम् ।
महेष्वासं पराक्रान्तं नरव्याघ्रमवारयन् ॥ ०४१ ॥

ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
अन्योन्यं वै प्रार्थयतां योधानामर्जुनस्य च ॥ ०४२ ॥

जयद्रथवधप्रेप्सुमायान्तं पुरुषर्षभम् ।
न्यवारयन्त सहिताः क्रिया व्याधिमिवोत्थितम् ॥ ०४३ ॥

---

# अध्याय ०६७

सञ्जय उवाच ॥

संनिरुद्धस्तु तैः पार्थो महाबलपराक्रमः ।
द्रुतं समनुयातश्च द्रोणेन रथिनां वरः ॥ ००१ ॥

किरन्निषुगणांस्तिक्ष्णान्स्वरश्मीनिव भास्करः ।
तापयामास तत्सैन्यं देहं व्याधिगणो यथा ॥ ००२ ॥

अश्वो विद्धो ध्वजश्छिन्नः सारोहः पतितो गजः ।
छत्राणि चापविद्धानि रथाश्चक्रैर्विना कृताः ॥ ००३ ॥

विद्रुतानि च सैन्यानि शरार्तानि समन्ततः ।
इत्यासीत्तुमुलं युद्धं न प्राज्ञायत किञ्चन ॥ ००४ ॥

तेषामायच्छतां संख्ये परस्परमजिह्मगैः ।
अर्जुनो ध्वजिनीं राजन्नभीक्ष्णं समकम्पयत् ॥ ००५ ॥

सत्यां चिकीर्षमाणस्तु प्रतिज्ञां सत्यसङ्गरः ।
अभ्यद्रवद्रथश्रेष्ठं शोणाश्वं श्वेतवाहनः ॥ ००६ ॥

तं द्रोणः पञ्चविंशत्या मर्मभिद्भिरजिह्मगैः ।
अन्तेवासिनमाचार्यो महेष्वासं समर्दयत् ॥ ००७ ॥

तं तूर्णमिव बीभत्सुः सर्वशस्त्रभृतां वरः ।
अभ्यधावदिषूनस्यन्निषुवेगविघातकान् ॥ ००८ ॥

तस्याशु क्षिपतो भल्लान्भल्लैः संनतपर्वभिः ।
प्रत्यविध्यदमेयात्मा ब्रह्मास्त्रं समुदीरयन् ॥ ००९ ॥

तदद्भुतमपश्याम द्रोणस्याचार्यकं युधि ।
यतमानो युवा नैनं प्रत्यविध्यद्यदर्जुनः ॥ ०१० ॥

क्षरन्निव महामेघो वारिधाराः सहस्रशः ।
द्रोणमेघः पार्थशैलं ववर्ष शरवृष्टिभिः ॥ ०११ ॥

अर्जुनः शरवर्षं तद्ब्रह्मास्त्रेणैव मारिष ।
प्रतिजग्राह तेजस्वी बाणैर्बाणान्विशातयन् ॥ ०१२ ॥

द्रोणस्तु पञ्चविंशत्या श्वेतवाहनमार्दयत् ।
वासुदेवं च सप्तत्या बाह्वोरुरसि चाशुगैः ॥ ०१३ ॥

पार्थस्तु प्रहसन्धीमानाचार्यं स शरौघिणम् ।
विसृजन्तं शितान्बाणानवारयत तं युधि ॥ ०१४ ॥

अथ तौ वध्यमानौ तु द्रोणेन रथसत्तमौ ।
आवर्जयेतां दुर्धर्षं युगान्ताग्निमिवोत्थितम् ॥ ०१५ ॥

वर्जयन्निशितान्बाणान्द्रोणचापविनिःसृतान् ।
किरीटमाली कौन्तेयो भोजानीकं न्यपातयत् ॥ ०१६ ॥

सोऽन्तरा कृतवर्माणं काम्बोजं च सुदक्षिणम् ।
अभ्ययाद्वर्जयन्द्रोणं मैनाकमिव पर्वतम् ॥ ०१७ ॥

ततो भोजो नरव्याघ्रं दुःसहः कुरुसत्तम ।
अविध्यत्तूर्णमव्यग्रो दशभिः कङ्कपत्रिभिः ॥ ०१८ ॥

तमर्जुनः शितेनाजौ राजन्विव्याध पत्रिणा ।
पुनश्चान्यैस्त्रिभिर्बाणैर्मोहयन्निव सात्वतम् ॥ ०१९ ॥

भोजस्तु प्रहसन्पार्थं वासुदेवं च माधवम् ।
एकैकं पञ्चविंशत्या सायकानां समार्पयत् ॥ ०२० ॥

तस्यार्जुनो धनुश्छित्त्वा विव्याधैनं त्रिसप्तभिः ।
शरैरग्निशिखाकारैः क्रुद्धाशीविषसंनिभैः ॥ ०२१ ॥

अथान्यद्धनुरादाय कृतवर्मा महारथः ।

पञ्चभिः सायकैस्तूर्णं विव्याधोरसि भारत ॥ ०२२ ॥

पुनश्च निशितैर्बाणैः पार्थं विव्याध पञ्चभिः ।
तं पार्थो नवभिर्बाणैराजघान स्तनान्तरे ॥ ०२३ ॥

विषक्तं दृश्य कौन्तेयं कृतवर्मरथं प्रति ।
चिन्तयामास वार्ष्णेयो न नः कालात्ययो भवेत् ॥ ०२४ ॥

ततः कृष्णोऽब्रवीत्पार्थं कृतवर्मणि मा दयाम् ।
कुरुसांबन्धिकं कृत्वा प्रमथ्यैनं विशातय ॥ ०२५ ॥

ततः स कृतवर्माणं मोहयित्वार्जुनः शरैः ।
अभ्यगाज्जवनैरश्वैः काम्बोजानामनीकिनीम् ॥ ०२६ ॥

अमर्षितस्तु हार्दिक्यः प्रविष्टे श्वेतवाहने ।
विधुन्वन्सशरं चापं पाञ्चाल्याभ्यां समागतः ॥ ०२७ ॥

चक्ररक्षौ तु पाञ्चाल्यावर्जुनस्य पदानुगौ ।
पर्यवारयदायान्तौ कृतवर्मा रथेषुभिः ॥ ०२८ ॥

तावविध्यत्ततो भोजः सर्वपारशवैः शरैः ।
त्रिभिरेव युधामन्युं चतुर्भिश्चोत्तमौजसम् ॥ ०२९ ॥

तावप्येनं विव्यधतुर्दशभिर्दशभिः शरैः ।
सञ्चिच्छिदतुरप्यस्य ध्वजं कार्मुकमेव च ॥ ०३० ॥

अथान्यद्धनुरादाय हार्दिक्यः क्रोधमूर्छितः ।
कृत्वा विधनुषौ वीरौ शरवर्षैरवाकिरत् ॥ ०३१ ॥

तावन्ये धनुषी सज्ये कृत्वा भोजं विजघ्नतुः ।
तेनान्तरेण बीभत्सुर्विवेशामित्रवाहिनीम् ॥ ०३२ ॥

न लेभाते तु तौ द्वारं वारितौ कृतवर्मणा ।
धार्तराष्ट्रेष्वनीकेषु यतमानौ नरर्षभौ ॥ ०३३ ॥

अनीकान्यर्दयन्युद्धे त्वरितः श्वेतवाहनः ।
नावधीत्कृतवर्माणं प्राप्तमप्यरिसूदनः ॥ ०३४ ॥

तं दृष्ट्वा तु तथायान्तं शूरो राजा श्रुतायुधः ।
अभ्यद्रवत्सुसङ्क्रुद्धो विधुन्वानो महद्धनुः ॥ ०३५ ॥

स पार्थं त्रिभिरानर्छत्सप्तत्या च जनार्दनम् ।
क्षुरप्रेण सुतीक्ष्णेन पार्थकेतुमताडयत् ॥ ०३६ ॥

तमर्जुनो नवत्या तु शराणां नतपर्वणाम् ।
आजघान भृशं क्रुद्धस्तोत्त्रैरिव महाद्विपम् ॥ ०३७ ॥

स तन्न ममृषे राजन्पाण्डवेयस्य विक्रमम् ।
अथैनं सप्तसप्तत्या नाराचानां समार्पयत् ॥ ०३८ ॥

तस्यार्जुनो धनुश्छित्त्वा शरावापं निकृत्य च ।
आजघानोरसि क्रुद्धः सप्तभिर्नतपर्वभिः ॥ ०३९ ॥

अथान्यद्धनुरादाय स राजा क्रोधमूर्छितः ।
वासविं नवभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ०४० ॥

ततोऽर्जुनः स्मयन्नेव श्रुतायुधमरिंदमः ।
शरैरनेकसाहस्रैः पीडयामास भारत ॥ ०४१ ॥

अश्वांश्चास्यावधीत्तूर्णं सारथिं च महारथः ।
विव्याध चैनं सप्तत्या नाराचानां महाबलः ॥ ०४२ ॥

हताश्वं रथमुत्सृज्य स तु राजा श्रुतायुधः ।
अभ्यद्रवद्रणे पार्थं गदामुद्यम्य वीर्यवान्  ॥ ०४३  ॥

वरुणस्यात्मजो वीरः स तु राजा श्रुतायुधः ।
पर्णाशा जननी यस्य शीततोया महानदी  ॥ ०४४  ॥

तस्य माताब्रवीद्वाक्यं वरुणं पुत्रकारणात् ।
अवध्योऽयं भवेल्लोके शत्रूणां तनयो मम  ॥ ०४५  ॥

वरुणस्त्वब्रवीत्प्रीतो ददाम्यस्मै वरं हितम् ।
दिव्यमस्त्रं सुतस्तेऽयं यनावध्यो भविष्यति  ॥ ०४६  ॥

नास्ति चाप्यमरत्वं वै मनुष्यस्य कथञ्चन ।
सर्वेणावश्यमर्तव्यं जातेन सरितां वरे  ॥ ०४७  ॥

दुर्धर्षस्त्वेष शत्रूणां रणेषु भविता सदा ।
अस्त्रस्यास्य प्रभावाद्वै व्येतु ते मानसो ज्वरः  ॥ ०४८  ॥

इत्युक्त्वा वरुणः प्रादाद्गदां मन्त्रपुरस्कृताम् ।
यामासाद्य दुराधर्षः सर्वलोके श्रुतायुधः  ॥ ०४९  ॥

उवाच चैनं भगवान्पुनरेव जलेश्वरः ।
अयुध्यति न मोक्तव्या सा त्वय्येव पतेदिति  ॥ ०५०  ॥

स तया वीरघातिन्या जनार्दनमताडयत् ।
प्रतिजग्राह तां कृष्णः पीनेनांसेन वीर्यवान्  ॥ ०५१  ॥

नाकम्पयत शौरिं सा विन्ध्यं गिरिमिवानिलः ।
प्रत्यभ्ययात्तं विप्रोढा कृत्येव दुरधिष्ठिता  ॥ ०५२  ॥

जघान चास्थितं वीरं श्रुतायुधममर्षणम् ।

हत्वा श्रुतायुधं वीरं जगतीमन्वपद्यत ॥ ०५३ ॥

हाहाकारो महांस्तत्र सैन्यानां समजायत ।
स्वेनास्त्रेण हतं दृष्ट्वा श्रुतायुधमरिंदमम् ॥ ०५४ ॥

अयुध्यमानाय हि सा केशवाय नराधिप ।
क्षिप्ता श्रुतायुधेनाथ तस्मात्तमवधीद्गदा ॥ ०५५ ॥

यथोक्तं वरुणेनाजौ तथा स निधनं गतः ।
व्यसुश्चाप्यपतद्भूमौ प्रेक्षतां सर्वधन्विनाम् ॥ ०५६ ॥

पतमानस्तु स बभौ पर्णाशायाः प्रियः सुतः ।
संभग्न इव वातेन बहुशाखो वनस्पतिः ॥ ०५७ ॥

ततः सर्वाणि सैन्यानि सेनामुख्याश्च सर्वशः ।
प्राद्रवन्त हतं दृष्ट्वा श्रुतायुधमरिंदमम् ॥ ०५८ ॥

तथ काम्बोजराजस्य पुत्रः शूरः सुदक्षिणः ।
अभ्ययाज्जवनैरश्वैः फल्गुनं शत्रुसूदनम् ॥ ०५९ ॥

तस्य पार्थः शरान्सप्त प्रेषयामास भारत ।
ते तं शूरं विनिर्भिद्य प्राविशन्धरणीतलम् ॥ ०६० ॥

सोऽतिविद्धः शरैस्तीक्ष्णैर्गाण्डीवप्रेषितैर्मृधे ।
अर्जुनं प्रतिविव्याध दशभिः कङ्कपत्रिभिः ॥ ०६१ ॥

वासुदेवं त्रिभिर्विद्ध्वा पुनः पार्थं च पञ्चभिः ।
तस्य पार्थो धनुश्छित्त्वा केतुं चिच्छेद मारिष ॥ ०६२ ॥

भल्लाभ्यां भृशतीक्ष्णाभ्यां तं च विव्याध पाण्डवः ।
स तु पार्थं त्रिभिर्विद्ध्वा सिंहनादमथानदत् ॥ ०६३ ॥

सर्वपारशवीं चैव शक्तिं शूरः सुदक्षिणः ।
सघण्टां प्राहिणोद्घोरां क्रुद्धो गाण्डीवधन्वने ॥ ०६४ ॥

सा ज्वलन्ती महोल्केव तमासाद्य महारथम् ।
सविस्फुलिङ्गा निर्भिद्य निपपात महीतले ॥ ०६५ ॥

तं चतुर्दशभिः पार्थो नाराचैः कङ्कपत्रिभिः ।
साश्वध्वजधनुःसूतं विव्याधाचिन्त्यविक्रमः ॥ ०६६ ॥

रथं चान्यैः सुबहुभिश्चक्रे विशकलं शरैः ॥ ०६६ ॥

सुदक्षिणं तु काम्बोजं मोघसङ्कल्पविक्रमम् ।
बिभेद हृदि बाणेन पृथुधारेण पाण्डवः ॥ ०६७ ॥

स भिन्नमर्मा स्रस्ताङ्गः प्रभ्रष्टमुकुटाङ्गदः ।
पपाताभिमुखः शूरो यन्त्रमुक्त इव ध्वजः ॥ ०६८ ॥

गिरेः शिखरजः श्रीमान्सुशाखः सुप्रतिष्ठितः ।
निर्भग्न इव वातेन कर्णिकारो हिमात्यये ॥ ०६९ ॥

शेते स्म निहतो भूमौ काम्बोजास्तरणोचितः ।
सुदर्शनीयस्ताम्राक्षः कर्णिना स सुदक्षिणः ॥ ०७० ॥

पुत्रः काम्बोजराजस्य पार्थेन विनिपातितः ॥ ०७० ॥

ततः सर्वाणि सैन्यानि व्यद्रवन्त सुतस्य ते ।
हतं श्रुतायुधं दृष्ट्वा काम्बोजं च सुदक्षिणम् ॥ ०७१ ॥

# अध्याय ०६८

सञ्जय उवाच ॥

हते सुदक्षिणे राजन्वीरे चैव श्रुतायुधे ।
जवेनाभ्यद्रवन्पार्थं कुपिताः सैनिकास्तव ॥ ००१ ॥

अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ।
अभ्यवर्षंस्ततो राजञ्शरवर्षैर्धनञ्जयम् ॥ ००२ ॥

तेषां षष्टिशतानार्यान्प्रामथ्नात्पाण्डवः शरैः ।
ते स्म भीताः पलायन्त व्याघ्रात्क्षुद्रमृगा इव ॥ ००३ ॥

ते निवृत्य पुनः पार्थं सर्वतः पर्यवारयन् ।
रणे सपत्नान्निघ्नन्तं जिगीषन्तन्परान्युधि ॥ ००४ ॥

तेषामापततां तूर्णं गाण्डीवप्रेषितैः शरैः ।
शिरांसि पातयामास बाहूंश्चैव धनञ्जयः ॥ ००५ ॥

शिरोभिः पतितैस्तत्र भूमिरासीन्निरन्तरा ।
अभ्रच्छायेव चैवासीद्ध्वाङ्क्षगृध्रवडैर्युधि ॥ ००६ ॥

तेषु तूत्साद्यमानेषु क्रोधामर्षसमन्वितौ ।
श्रुतायुश्चाच्युतायुश्च धनञ्जयमयुध्यताम् ॥ ००७ ॥

बलिनौ स्पर्धिनौ वीरौ कुलजौ बाहुशालिनौ ।
तावेनं शरवर्षाणि सव्यदक्षिणमस्यताम् ॥ ००८ ॥

त्वरायुक्तौ महाराज प्रार्थयानौ महद्यशः ।
अर्जुनस्य वधप्रेप्सू पुत्रार्थे तव धन्विनौ ॥ ००९ ॥

तावर्जुनं सहस्रेण पत्रिणां नतपर्वणाम् ।
पूरयामासतुः क्रुद्धौ तडागं जलदौ यथा ॥ ०१० ॥

श्रुतायुश्च ततः क्रुद्धस्तोमरेण धनञ्जयम् ।
आजघान रथश्रेष्ठः पीतेन निशितेन च ॥ ०११ ॥

सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ।
आजगाम परं मोहं मोहयन्केशवं रणे ॥ ०१२ ॥

एतस्मिन्नेव काले तु सोऽच्युतायुर्महारथः ।
शूलेन भृशतीक्ष्णेन ताडयामास पाण्डवम् ॥ ०१३ ॥

क्षते क्षारं स हि ददौ पाण्डवस्य महात्मनः ।
पार्थोऽपि भृशसंविद्धो ध्वजयष्टिं समाश्रितः ॥ ०१४ ॥

ततः सर्वस्य सैन्यस्य तावकस्य विशां पते ।
सिंहनादो महानासीद्धतं मत्वा धनञ्जयम् ॥ ०१५ ॥

कृष्णश्च भृशसंतप्तो दृष्ट्वा पार्थं विचेतसम् ।
आश्वासयत्सुहृद्याभिर्वाग्भिस्तत्र धनञ्जयम् ॥ ०१६ ॥

ततस्तौ रथिनां श्रेष्ठौ लब्धलक्षौ धनञ्जयम् ।
वासुदेवं च वार्ष्णेयं शरवर्षैः समन्ततः ॥ ०१७ ॥

सचक्रकूबररथं साश्वध्वजपताकिनम् ।
अदृश्यं चक्रतुर्युद्धे तदद्भुतमिवाभवत् ॥ ०१८ ॥

प्रत्याश्वस्तस्तु बीभत्सुः शनकैरिव भारत ।
प्रेतराजपुरं प्राप्य पुनः प्रत्यागतो यथा ॥ ०१९ ॥

संछन्नं शरजालेन रथं दृष्ट्वा सकेशवम् ।

शत्रू चाभिमुखौ दृष्ट्वा दीप्यमानाविवानलौ ॥ ०२० ॥

प्रादुश्चक्रे ततः पार्थः शाक्रमस्त्रं महारथः ।
तस्मादासन्सहस्राणि शराणां नतपर्वणाम् ॥ ०२१ ॥

ते जघ्नुस्तौ महेष्वासौ ताभ्यां सृष्टांश्च सायकान् ।
विचेरुराकाशगताः पार्थबाणविदारिताः ॥ ०२२ ॥

प्रतिहत्य शरांस्तूर्णं शरवेगेन पाण्डवः ।
प्रतस्थे तत्र तत्रैव योधयन्वै महारथान् ॥ ०२३ ॥

तौ च फल्गुनबाणौघैर्विबाहुशिरसौ कृतौ ।
वसुधामन्वपद्येतां वातनुन्नाविव द्रुमौ ॥ ०२४ ॥

श्रुतायुषश्च निधनं वधश्चैवाच्युतायुषः ।
लोकविस्मापनमभूत्समुद्रस्येव शोषणम् ॥ ०२५ ॥

तयोः पदानुगान्हत्वा पुनः पञ्चशतान्रथान् ।
अभ्यगाद्भारतीं सेनां निघ्नन्पार्थो वरान्वरान् ॥ ०२६ ॥

श्रुतायुषं च निहतं प्रेक्ष्य चैवाच्युतायुषम् ।
अयुतायुश्च सङ्क्रुद्धो दीर्घायुश्चैव भारत ॥ ०२७ ॥

पुत्रौ तयोर्नरश्रेष्ठौ कौन्तेयं प्रतिजग्मतुः ।
किरन्तौ विविधान्बाणान्पितृव्यसनकर्शितौ ॥ ०२८ ॥

तावर्जुनो मुहूर्तेन शरैः संनतपर्वभिः ।
प्रेषयत्परमक्रुद्धो यमस्य सदनं प्रति ॥ ०२९ ॥

लोडयन्तमनीकानि द्विपं पद्मसरो यथा ।
नाशक्नुवन्वारयितुं पार्थं क्षत्रियपुङ्गवाः ॥ ०३० ॥

अङ्गास्तु गजवारेण पाण्डवं पर्यवारयन् ।
क्रुद्धाः सहस्रशो राजञ्शिखिता हस्तिसादिनः ॥ ०३१ ॥

दुर्योधनसमादिष्टाः कुञ्जरैः पर्वतोपमैः ।
प्राच्याश्च दाक्षिणात्याश्च कलिङ्गप्रमुखा नृपाः ॥ ०३२ ॥

तेषामापततां शीघ्रं गाण्डीवप्रेषितैः शरैः ।
निचकर्त शिरांस्युग्रौ बाहूनपि सुभूषणान् ॥ ०३३ ॥

तैः शिरोभिर्मही कीर्णा बाहुभिश्च सहाङ्गदैः ।
बभौ कनकपाषाणा भुजगैरिव संवृता ॥ ०३४ ॥

बाहवो विशिखैश्छिन्नाः शिरांस्युन्मथितानि च ।
च्यवमानान्यदृश्यन्त द्रुमेभ्य इव पक्षिणः ॥ ०३५ ॥

शरैः सहस्रशो विद्धा द्विपाः प्रस्रुतशोणिताः ।
व्यदृश्यन्ताद्रयः काले गैरिकाम्बुस्रवा इव ॥ ०३६ ॥

निहताः शेरते स्मान्ये बीभत्सोर्निशितैः शरैः ।
गजपृष्ठगता म्लेच्छा नानाविकृतदर्शनाः ॥ ०३७ ॥

नानावेषधरा राजन्नानाशस्त्रौघसंवृताः ।
रुधिरेणानुलिप्ताङ्गा भान्ति चित्रैः शरैर्हताः ॥ ०३८ ॥

शोणितं निर्वमन्ति स्म द्विपाः पार्थशराहताः ।
सहस्रशश्छिन्नगात्राः सारोहाः सपदानुगाः ॥ ०३९ ॥

चुक्रुशुश्च निपेतुश्च बभ्रमुश्चापरे दिशः ।
भृशं त्रस्ताश्च बहुधा स्वानेन ममृदुर्गजाः ॥ ०४० ॥

सान्तरायुधिका मत्ता द्विपास्तीक्ष्णविषोपमाः ॥ ०४० ॥

विदन्त्यसुरमायां ये सुघोरा घोरचक्षुषः ।
यवनाः पारदाश्चैव शकाश्च सुनिकैः सह ॥ ०४१ ॥

गोयोनिप्रभवा म्लेच्छाः कालकल्पाः प्रहारिणः ।
दार्वाभिसारा दरदाः पुण्ड्राश्च सह बाह्लिकैः ॥ ०४२ ॥

न ते स्म शक्याः संख्यातुं व्राताः शतसहस्रशः ।
वृष्टिस्तथाविधा ह्यासीच्छलभानामिवायतिः ॥ ०४३ ॥

अभ्रच्छायामिव शरैः सैन्ये कृत्वा धनञ्जयः ।
मुण्डार्धमुण्डजटिलानशुचीञ्जटिलाननान् ॥ ०४४ ॥

म्लेच्छानशातयत्सर्वान्समेतानस्त्रमायया ॥ ०४४ ॥

शरैश्च शतशो विद्धास्ते संघाः संघचारिणः ।
प्राद्रवन्त रणे भीता गिरिगह्वरवासिनः ॥ ०४५ ॥

गजाश्वसादिम्लेच्छानां पतितानां शतैः शरैः ।
वडाः कङ्का वृका भूमावपिबन्रुधिरं मुदा ॥ ०४६ ॥

पत्त्यश्वरथनागैश्च प्रच्छन्नकृतसङ्क्रमाम् ।
शरवर्षप्लवां घोरां केशशैवलशाड्वलाम् ॥ ०४७ ॥

प्रावर्तयन्नदीमुग्रां शोणितौघतरङ्गिणीम् ॥ ०४७ ॥

शिरस्त्राणक्षुद्रमत्स्यां युगान्ते कालसंभृताम् ।
अकरोद्गजसंबाधां नदीमुत्तरशोणिताम् ॥ ०४८ ॥

देहेभ्यो राजपुत्राणां नागाश्वरथसादिनाम् ॥ ०४८ ॥

यथा स्थलं च निम्नं च न स्याद्वर्षति वासवे ।
तथासीत्पृथिवी सर्वा शोणितेन परिप्लुता ॥ ०४९ ॥

षट्सहस्रान्वरान्वीरान्पुनर्दशशतान्वरान् ।
प्राहिणोन्मृत्युलोकाय क्षत्रियान्क्षत्रियर्षभः ॥ ०५० ॥

शरैः सहस्रशो विद्धा विधिवत्कल्पिता द्विपाः ।
शेरते भूमिमासाद्य शैला वज्रहता इव ॥ ०५१ ॥

स वाजिरथमातङ्गान्निघ्नन्व्यचरदर्जुनः ।
प्रभिन्न इव मातङ्गो मृद्नन्नडवनं यथा ॥ ०५२ ॥

भूरिद्रुमलतागुल्मं शुष्केन्धनतृणोलपम् ।
निर्दहेदनलोऽरण्यं यथा वायुसमीरितः ॥ ०५३ ॥

सैन्यारण्यं तव तथा कृष्णानिलसमीरितः ।
शरार्चिरदहत्क्रुद्धः पाण्डवाग्निर्धनञ्जयः ॥ ०५४ ॥

शून्यान्कुर्वन्रथोपस्थान्मानवैः संस्तरन्महीम् ।
प्रानृत्यदिव संबाधे चापहस्तो धनञ्जयः ॥ ०५५ ॥

वज्रकल्पैः शरैर्भूमिं कुर्वन्नुत्तरशोणिताम् ।
प्राविशद्भारतीं सेनां सङ्क्रुद्धो वै धनञ्जयः ॥ ०५६ ॥

तं श्रुतायुस्तथाम्बष्ठो व्रजमानं न्यवारयत् ॥ ०५६ ॥

तस्यार्जुनः शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः ।
न्यपातयद्धयाञ्शीघ्रं यतमानस्य मारिष ॥ ०५७ ॥

धनुश्चास्यापरैश्छित्त्वा शरैः पार्थो विचक्रमे ॥ ०५७ ॥

अम्बष्ठस्तु गदां गृह्य क्रोधपर्याकुलेक्षणः ।
आससाद रणे पार्थं केशवं च महारथम् ॥ ०५८ ॥

ततः स प्रहसन्वीरो गदामुद्यम्य भारत ।
रथमावार्य गदया केशवं समताडयत् ॥ ०५९ ॥

गदया ताडितं दृष्ट्वा केशवं परवीरहा ।
अर्जुनो भृशसङ्क्रुद्धः सोऽम्बष्ठं प्रति भारत ॥ ०६० ॥

ततः शरैर्हेमपुङ्खैः सगदं रथिनां वरम् ।
छादयामास समरे मेघः सूर्यमिवोदितम् ॥ ०६१ ॥

ततोऽपरैः शरैश्चापि गदां तस्य महात्मनः ।
अचूर्णयत्तदा पार्थस्तदद्भुतमिवाभवत् ॥ ०६२ ॥

अथ तां पतितां दृष्ट्वा गृह्यान्यां महतीं गदाम् ।
अर्जुनं वासुदेवं च पुनः पुनरताडयत् ॥ ०६३ ॥

तस्यार्जुनः क्षुरप्राभ्यां सगदावुद्यतौ भुजौ ।
चिच्छेदेन्द्रध्वजाकारौ शिरश्चान्येन पत्रिणा ॥ ०६४ ॥

स पपात हतो राजन्वसुधामनुनादयन् ।
इन्द्रध्वज इवोत्सृष्टो यन्त्रनिर्मुक्तबन्धनः ॥ ०६५ ॥

रथानीकावगाढश्च वारणाश्वशतैर्वृतः ।
सोऽदृश्यत तदा पार्थो घनैः सूर्य इवावृतः ॥ ०६६ ॥

# अध्याय ०६९

सञ्जय उवाच ॥

ततः प्रविष्टे कौन्तेये सिन्धुराजजिघांसया ।
द्रोणानीकं विनिर्भिद्य भोजानीकं च दुस्तरम् ॥ ००१ ॥

काम्बोजस्य च दायादे हते राजन्सुदक्षिणे ।
श्रुतायुधे च विक्रान्ते निहते सव्यसाचिना ॥ ००२ ॥

विप्रद्रुतेष्वनीकेषु विध्वस्तेषु समन्ततः ।
प्रभग्नं स्वबलं दृष्ट्वा पुत्रस्ते द्रोणमभ्ययात् ॥ ००३ ॥

त्वरन्नेकरथेनैव समेत्य द्रोणमब्रवीत् ।
गतः स पुरुषव्याघ्रः प्रमथ्येमां महाचमूम् ॥ ००४ ॥

अत्र बुद्ध्या समीक्षस्व किं नु कार्यमनन्तरम् ।
अर्जुनस्य विघाताय दारुणेऽस्मिञ्जनक्षये ॥ ००५ ॥

यथा स पुरुषव्याघ्रो न हन्येत जयद्रथः ।
तथा विधत्स्व भद्रं ते त्वं हि नः परमा गतिः ॥ ००६ ॥

असौ धनञ्जयाग्निर्हि कोपमारुतचोदितः ।
सेनाकक्षं दहति मे वह्निः कक्षमिवोत्थितः ॥ ००७ ॥

अतिक्रान्ते हि कौन्तेये भित्त्वा सैन्यं परंतप ।
जयद्रथस्य गोप्तारः संशयं परमं गताः ॥ ००८ ॥

स्थिरा बुद्धिर्नरेन्द्राणामासीद्ब्रह्मविदां वर ।
नातिक्रमिष्यति द्रोणं जातु जीवन्धनञ्जयः ॥ ००९ ॥

सोऽसौ पार्थो व्यतिक्रान्तो मिषतस्ते महाद्युते ।
सर्वं ह्यद्यातुरं मन्ये नैतदस्ति बलं मम ॥ ०१० ॥

जानामि त्वां महाभाग पाण्डवानां हिते रतम् ।
तथा मुह्यामि च ब्रह्मन्कार्यवत्तां विचिन्तयन् ॥ ०११ ॥

यथाशक्ति च ते ब्रह्मन्वर्तये वृत्तिमुत्तमाम् ।
प्रीणामि च यथाशक्ति तच्च त्वं नावबुध्यसे ॥ ०१२ ॥

अस्मान्न त्वं सदा भक्तानिच्छस्यमितविक्रम ।
पाण्डवान्सततं प्रीणास्यस्माकं विप्रिये रतान् ॥ ०१३ ॥

अस्मानेवोपजीवंस्त्वमस्माकं विप्रिये रतः ।
न ह्यहं त्वां विजानामि मधुदिग्धमिव क्षुरम् ॥ ०१४ ॥

नादास्यच्चेद्वरं मह्यं भवान्पाण्डवनिग्रहे ।
नावारयिष्यं गच्छन्तमहं सिन्धुपतिं गृहान् ॥ ०१५ ॥

मया त्वाशंसमानेन त्वत्तस्त्राणमबुद्धिना ।
आश्वासितः सिन्धुपतिर्मोहाद्दत्तश्च मृत्यवे ॥ ०१६ ॥

यमदंष्ट्रान्तरं प्राप्तो मुच्येतापि हि मानवः ।
नार्जुनस्य वशं प्राप्तो मुच्येताजौ जयद्रथः ॥ ०१७ ॥

स तथा कुरु शोणाश्व यथा रक्ष्येत सैन्धवः ।
मम चार्तप्रलापानां मा क्रुधः पाहि सैन्धवम् ॥ ०१८ ॥

द्रोण उवाच ॥

नाभ्यसूयामि ते वाचमश्वत्थाम्नासि मे समः ।
सत्यं तु ते प्रवक्ष्यामि तज्जुषस्व विशां पते ॥ ०१९ ॥

सारथिः प्रवरः कृष्णः शीघ्राश्चास्य हयोत्तमाः ।
अल्पं च विवरं कृत्वा तूर्णं याति धनञ्जयः ॥ ०२० ॥

किं नु पश्यसि बाणौघान्क्रोशमात्रे किरीटिनः ।
पश्चाद्रथस्य पतितान्क्षिप्ताञ्शीघ्रं हि गच्छतः ॥ ०२१ ॥

न चाहं शीघ्रयानेऽद्य समर्थो वयसान्वितः ।
सेनामुखे च पार्थानामेतद्बलमुपस्थितम् ॥ ०२२ ॥

युधिष्ठिरश्च मे ग्राह्यो मिषतां सर्वधन्विनाम् ।
एवं मया प्रतिज्ञातं क्षत्रमध्ये महाभुज ॥ ०२३ ॥

धनञ्जयेन चोत्सृष्टो वर्तते प्रमुखे मम ।
तस्माद्व्यूहमुखं हित्वा नाहं यास्यामि फल्गुनम् ॥ ०२४ ॥

तुल्याभिजनकर्माणं शत्रुमेकं सहायवान् ।
गत्वा योधय मा भैस्त्वं त्वं ह्यस्य जगतः पतिः ॥ ०२५ ॥

राजा शूरः कृती दक्षो वैरमुत्पाद्य पाण्डवैः ।
वीर स्वयं प्रयाह्याशु यत्र यातो धनञ्जयः ॥ ०२६ ॥

दुर्योधन उवाच ॥

कथं त्वामप्यतिक्रान्तः सर्वशस्त्रभृतां वरः ।
धनञ्जयो मया शक्य आचार्य प्रतिबाधितुम् ॥ ०२७ ॥

अपि शक्यो रणे जेतुं वज्रहस्तः पुरंदरः ।
नार्जुनः समरे शक्यो जेतुं परपुरञ्जयः ॥ ०२८ ॥

येन भोजश्च हार्दिक्यो भवांश्च त्रिदशोपमः ।

अस्त्रप्रतापेन जितौ श्रुतायुश्च निबर्हितः ॥ ०२९ ॥

सुदक्षिणश्च निहतः स च राजा श्रुतायुधः ।
श्रुतायुश्चाच्युतायुश्च म्लेच्छाश्च शतशो हताः ॥ ०३० ॥

तं कथं पाण्डवं युद्धे दहन्तमहितान्बहून् ।
प्रतियोत्स्यामि दुर्धर्षं तन्मे शंसास्त्रकोविद ॥ ०३१ ॥

क्षमं चेन्मन्यसे युद्धं मम तेनाद्य शाधि माम् ।
परवानस्मि भवति प्रेष्यकृद्रक्ष मे यशः ॥ ०३२ ॥

द्रोण उवाच ॥

सत्यं वदसि कौरव्य दुराधर्षो धनञ्जयः ।
अहं तु तत्करिष्यामि यथैनं प्रसहिष्यसि ॥ ०३३ ॥

अद्भुतं चाद्य पश्यन्तु लोके सर्वधनुर्धराः ।
विषक्तं त्वयि कौन्तेयं वासुदेवस्य पश्यतः ॥ ०३४ ॥

एष ते कवचं राजंस्तथा बध्नामि काञ्चनम् ।
यथा न बाणा नास्त्राणि विषहिष्यन्ति ते रणे ॥ ०३५ ॥

यदि त्वां सासुरसुराः सयक्षोरगराक्षसाः ।
योधयन्ति त्रयो लोकाः सनरा नास्ति ते भयम् ॥ ०३६ ॥

न कृष्णो न च कौन्तेयो न चान्यः शस्त्रभृद्रणे ।
शरानर्पयितुं कश्चित्कवचे तव शक्ष्यति ॥ ०३७ ॥

स त्वं कवचमास्थाय क्रुद्धमद्य रणेऽर्जुनम् ।
त्वरमाणः स्वयं याहि न चासौ त्वां सहिष्यते ॥ ०३८ ॥

सञ्जय उवाच ॥

एवमुक्त्वा त्वरन्द्रोणः स्पृष्ट्वाम्भो वर्म भास्वरम् ।
आबबन्धाद्भुततमं जपन्मन्त्रं यथाविधि ॥ ०३९ ॥

रणे तस्मिन्सुमहति विजयाय सुतस्य ते ।
विसिस्मापयिषुर्लोकं विद्यया ब्रह्मवित्तमः ॥ ०४० ॥

द्रोण उवाच ॥

करोतु स्वस्ति ते ब्रह्मा स्वस्ति चापि द्विजातयः ।
सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति भारत ॥ ०४१ ॥

ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः ।
तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वन्तु सर्वशः ॥ ०४२ ॥

स्वस्ति तेऽस्त्वेकपादेभ्यो बहुपादेभ्य एव च ।
स्वस्त्यस्त्वपादकेभ्यश्च नित्यं तव महारणे ॥ ०४३ ॥

स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा ।
लक्ष्मीररुन्धती चैव कुरुतां स्वस्ति तेऽनघ ॥ ०४४ ॥

असितो देवलश्चैव विश्वामित्रस्तथाङ्गिराः ।
वसिष्ठः कश्यपश्चैव स्वस्ति कुर्वन्तु ते नृप ॥ ०४५ ॥

धाता विधाता लोकेशो दिशश्च सदिगीश्वराः ।
स्वस्ति तेऽद्य प्रयच्छन्तु कार्त्तिकेयश्च षण्मुखः ॥ ०४६ ॥

विवस्वान्भगवान्स्वस्ति करोतु तव सर्वशः ।
दिग्गजाश्चैव चत्वारः क्षितिः खं गगनं ग्रहाः ॥ ०४७ ॥

अधस्ताद्धरणीं योऽसौ सदा धारयते नृप ।
स शेषः पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु  ॥ ०४८  ॥

गान्धारे युधि विक्रम्य निर्जिताः सुरसत्तमाः ।
पुरा वृत्रेण दैत्येन भिन्नदेहाः सहस्रशः  ॥ ०४९  ॥

हृततेजोबलाः सर्वे तदा सेन्द्रा दिवौकसः ।
ब्रह्माणं शरणं जग्मुर्वृत्राद्भीता महासुरात्  ॥ ०५०  ॥

देवा ऊचुः  ॥

प्रमर्दितानां वृत्रेण देवानां देवसत्तम ।
गतिर्भव सुरश्रेष्ठ त्राहि नो महतो भयात्  ॥ ०५१  ॥

द्रोण उवाच  ॥

अथ पार्श्वे स्थितं विष्णुं शक्रादींश्च सुरोत्तमान् ।
प्राह तथ्यमिदं वाक्यं विषण्णान्सुरसत्तमान्  ॥ ०५२  ॥

रक्ष्या मे सततं देवाः सहेन्द्राः सद्विजातयः ।
त्वष्टुः सुदुर्धरं तेजो येन वृत्रो विनिर्मितः  ॥ ०५३  ॥

त्वष्ट्रा पुरा तपस्तप्त्वा वर्षायुतशतं तदा ।
वृत्रो विनिर्मितो देवाः प्राप्यानुज्ञां महेश्वरात्  ॥ ०५४  ॥

स तस्यैव प्रसादाद्वै हन्यादेव रिपुर्बली ।
नागत्वा शङ्करस्थानं भगवान्दृश्यते हरः  ॥ ०५५  ॥

दृष्ट्वा हनिष्यथ रिपुं क्षिप्रं गच्छत मन्दरम् ।
यत्रास्ते तपसां योनिर्दक्षयज्ञविनाशनः  ॥ ०५६  ॥

पिनाकी सर्वभूतेशो भगनेत्रनिपातनः ॥ ०५६ ॥

ते गत्वा सहिता देवा ब्रह्मणा सह मन्दरम् ।
अपश्यंस्तेजसां राशिं सूर्यकोटिसमप्रभम् ॥ ०५७ ॥

सोऽब्रवीत्स्वागतं देवा ब्रूत किं करवाण्यहम् ।
अमोघं दर्शनं मह्यं कामप्राप्तिरतोऽस्तु वः ॥ ०५८ ॥

एवमुक्तास्तु ते सर्वे प्रत्यूचुस्तं दिवौकसः ।
तेजो हृतं नो वृत्रेण गतिर्भव दिवौकसाम् ॥ ०५९ ॥

मूर्तीरीक्षष्व नो देव प्रहारैर्जर्जरीकृताः ।
शरणं त्वां प्रपन्नाः स्म गतिर्भव महेश्वर ॥ ०६० ॥

महेश्वर उवाच ॥

विदितं मे यथा देवाः कृत्येयं सुमहाबला ।
त्वष्टुस्तेजोभवा घोरा दुर्निवार्याकृतात्मभिः ॥ ०६१ ॥

अवश्यं तु मया कार्यं साह्यं सर्वदिवौकसाम् ।
ममेदं गात्रजं शक्र कवचं गृह्य भास्वरम् ॥ ०६२ ॥

बधानानेन मन्त्रेण मानसेन सुरेश्वर ॥ ०६२ ॥

द्रोण उवाच ॥

इत्युक्त्वा वरदः प्रादाद्वर्म तन्मन्त्रमेव च ।
स तेन वर्मणा गुप्तः प्रायाद्वृत्रचमूं प्रति ॥ ०६३ ॥

नानाविधैश्च शस्त्रौघैः पात्यमानैर्महारणे ।
न संधिः शक्यते भेत्तुं वर्मबन्धस्य तस्य तु ॥ ०६४ ॥

ततो जघान समरे वृत्रं देवपतिः स्वयम् ।
तं च मत्रमयं बन्धं वर्म चाङ्गिरसे ददौ ॥ ०६५ ॥

अङ्गिराः प्राह पुत्रस्य मन्त्रज्ञस्य बृहस्पतेः ।
बृहस्पतिरथोवाच अग्निवेश्याय धीमते ॥ ०६६ ॥

अग्निवेश्यो मम प्रादात्तेन बध्नामि वर्म ते ।
तवाद्य देहरक्षार्थं मन्त्रेण नृपसत्तम ॥ ०६७ ॥

सञ्जय उवाच ॥

एवमुक्त्वा ततो द्रोणस्तव पुत्रं महाद्युतिः ।
पुनरेव वचः प्राह शनैराचार्यपुङ्गवः ॥ ०६८ ॥

ब्रह्मसूत्रेण बध्नामि कवचं तव पार्थिव ।
हिरण्यगर्भेण यथा बद्धं विष्णोः पुरा रणे ॥ ०६९ ॥

यथा च ब्रह्मणा बद्धं सङ्ग्रामे तारकामये ।
शक्रस्य कवचं दिव्यं तथा बध्नाम्यहं तव ॥ ०७० ॥

बद्धा तु कवचं तस्य मन्त्रेण विधिपूर्वकम् ।
प्रेषयामास राजानं युद्धाय महते द्विजः ॥ ०७१ ॥

स संनद्धो महाबाहुराचार्येण महात्मना ।
रथानां च सहस्रेण त्रिगर्तानां प्रहारिणाम् ॥ ०७२ ॥

तथा दन्तिसहस्रेण मत्तानां वीर्यशालिनाम् ।
अश्वानामयुतेनैव तथान्यैश्च महारथैः ॥ ०७३ ॥

वृतः प्रायान्महाबाहुरर्जुनस्य रथं प्रति ।

नानावादित्रघोषेण यथा वैरोचनिस्तथा ॥ ०७४ ॥

ततः शब्दो महानासीत्सैन्यानां तव भारत ।
अगाधं प्रस्थितं दृष्ट्वा समुद्रमिव कौरवम् ॥ ०७५ ॥

---

# अध्याय ०७०

सञ्जय उवाच ॥

प्रविष्टयोर्महाराज पार्थवार्ष्णेययोस्तदा ।
दुर्योधने प्रयाते च पृष्ठतः पुरुषर्षभे ॥ ००१ ॥

जवेनाभ्यद्रवन्द्रोणं महता निस्वनेन च ।
पाण्डवाः सोमकैः सार्धं ततो युद्धमवर्तत ॥ ००२ ॥

तद्युद्धमभवद्घोरं तुमुलं लोमहर्षणम् ।
पाञ्चालानां कुरूणां च व्यूहस्य पुरतोऽद्भुतम् ॥ ००३ ॥

राजन्कदाचिन्नास्माभिर्दृष्टं तादृङ्न च श्रुतम् ।
यादृङ्मध्यगते सूर्ये युद्धमासीद्विशां पते ॥ ००४ ॥

धृष्टद्युम्नमुखाः पार्था व्यूढानीकाः प्रहारिणः ।
द्रोणस्य सैन्यं ते सर्वे शरवर्षैरवाकिरन् ॥ ००५ ॥

वयं द्रोणं पुरस्कृत्य सर्वशस्त्रभृतां वरम् ।
पार्षतप्रमुखान्पार्थानभ्यवर्षाम सायकैः ॥ ००६ ॥

महामेघाविवोदीर्णौ मिश्रवातौ हिमात्यये ।

सेनाग्रे विप्रकाशेते रुचिरे रथभूषिते ॥ ००७ ॥

समेत्य तु महासेने चक्रतुर्वेगमुत्तमम् ।
जाह्नवीयमुने नद्यौ प्रावृषीवोल्बणोदके ॥ ००८ ॥

नानाशस्त्रपुरोवातो द्विपाश्वरथसंवृतः ।
गदाविद्युन्महारौद्रः सङ्ग्रामजलदो महान् ॥ ००९ ॥

भारद्वाजानिलोद्धूतः शरधारासहस्रवान् ।
अभ्यवर्षन्महारौद्रः पाण्डुसेनाग्निमुद्धतम् ॥ ०१० ॥

समुद्रमिव घर्मान्ते विवान्घोरो महानिलः ।
व्यक्षोभयदनीकानि पाण्डवानां द्विजोत्तमः ॥ ०११ ॥

तेऽपि सर्वप्रयत्नेन द्रोणमेव समाद्रवन् ।
बिभित्सन्तो महासेतुं वार्योघाः प्रबला इव ॥ ०१२ ॥

वारयामास तान्द्रोणो जलौघानचलो यथा ।
पाण्डवान्समरे क्रुद्धान्पाञ्चालांश्च सकेकयान् ॥ ०१३ ॥

अथापरेऽपि राजानः परावृत्य समन्ततः ।
महाबला रणे शूराः पाञ्चालानन्ववारयन् ॥ ०१४ ॥

ततो रणे नरव्याघ्रः पार्षतः पाण्डवैः सह ।
सञ्जघानासकृद्द्रोणं बिभित्सुररिवाहिनीम् ॥ ०१५ ॥

यथैव शरवर्षाणि द्रोणो वर्षति पार्षते ।
तथैव शरवर्षाणि धृष्टद्युम्नोऽभ्यवर्षत ॥ ०१६ ॥

सनिस्त्रिंशपुरोवातः शक्तिप्रासर्ष्टिसंवृतः ।
ज्याविद्युच्चापसंह्रादो धृष्टद्युम्नबलाहकः ॥ ०१७ ॥

शरधाराश्मवर्षाणि व्यसृजत्सर्वतोदिशम् ।
निघ्नन्रथवराश्वौघांश्छादयामास वाहिनीम् ॥ ०१८ ॥

यं यमार्छच्छरैर्द्रोणः पाण्डवानां रथव्रजम् ।
ततस्ततः शरैर्द्रोणमपाकर्षत पार्षतः ॥ ०१९ ॥

तथा तु यतमानस्य द्रोणस्य युधि भारत ।
धृष्टद्युम्नं समासाद्य त्रिधा सैन्यमभिद्यत ॥ ०२० ॥

भोजमेके न्यवर्तन्त जलसंधमथापरे ।
पाण्डवैर्हन्यमानाश्च द्रोणमेवापरेऽव्रजन् ॥ ०२१ ॥

सैन्यान्यघटयद्यानि द्रोणस्तु रथिनां वरः ।
व्यधमच्चापि तान्यस्य धृष्टद्युम्नो महारथः ॥ ०२२ ॥

धार्तराष्ट्रास्त्रिधाभूता वध्यन्ते पाण्डुसृञ्जयैः ।
अगोपाः पशवोऽरण्ये बहुभिः श्वापदैरिव ॥ ०२३ ॥

कालः सङ्ग्रसते योधान्धृष्टद्युम्नेन मोहितान् ।
सङ्ग्रामे तुमुले तस्मिन्निति संमेनिरे जनाः ॥ ०२४ ॥

कुनृपस्य यथा राष्ट्रं दुर्भिक्षव्याधितस्करैः ।
द्राव्यते तद्वदापन्ना पाण्डवैस्तव वाहिनी ॥ ०२५ ॥

अर्करश्मिप्रभिन्नेषु शस्त्रेषु कवचेषु च ।
चक्षूंषि प्रतिहन्यन्ते सैन्येन रजसा तथा ॥ ०२६ ॥

त्रिधाभूतेषु सैन्येषु वध्यमानेषु पाण्डवैः ।
अमर्षितस्ततो द्रोणः पाञ्चालान्व्यधमच्छरैः ॥ ०२७ ॥

मृद्नतस्तान्यनीकानि निघ्नतश्चापि सायकैः ।
बभूव रूपं द्रोणस्य कालाग्नेरिव दीप्यतः ॥ ०२८ ॥

रथं नागं हयं चापि पत्तिनश्च विशां पते ।
एकैकेनेषुणा संख्ये निर्बिभेद महारथः ॥ ०२९ ॥

पाण्डवानां तु सैन्येषु नास्ति कश्चित्स भारत ।
दधार यो रणे बाणान्द्रोणचापच्युताञ्शितान् ॥ ०३० ॥

तत्पच्यमानमर्केण द्रोणसायकतापितम् ।
बभ्राम पार्षतं सैन्यं तत्र तत्रैव भारत ॥ ०३१ ॥

तथैव पार्षतेनापि काल्यमानं बलं तव ।
अभवत्सर्वतो दीप्तं शुष्कं वनमिवाग्निना ॥ ०३२ ॥

वध्यमानेषु सैन्येषु द्रोणपार्षतसायकैः ।
त्यक्त्वा प्राणान्परं शक्त्या प्रायुध्यन्त स्म सैनिकाः ॥ ०३३ ॥

तावकानां परेषां च युध्यतां भरतर्षभ ।
नासीत्कश्चिन्महाराज योऽत्याक्षीत्संयुगं भयात् ॥ ०३४ ॥

भीमसेनं तु कौन्तेयं सोदर्याः पर्यवारयन् ।
विविंशतिश्चित्रसेनो विकर्णश्च महारथः ॥ ०३५ ॥

विन्दानुविन्दावावन्त्यौ क्षेमधूर्तिश्च वीर्यवान् ।
त्रयाणां तव पुत्राणां त्रय एवानुयायिनः ॥ ०३६ ॥

बाह्लीकराजस्तेजस्वी कुलपुत्रो महारथः ।
सहसेनः सहामात्यो द्रौपदेयानवारयत् ॥ ०३७ ॥

शैब्यो गोवासनो राजा योधैर्दशशतावरैः ।

काश्यस्याभिभुवः पुत्रं पराक्रान्तमवारयत् ॥ ०३८ ॥

अजातशत्रुं कौन्तेयं ज्वलन्तमिव पावकम् ।
मद्राणामीश्वरः शल्यो राजा राजानमावृणोत् ॥ ०३९ ॥

दुःशासनस्त्ववस्थाप्य स्वमनीकममर्षणः ।
सात्यकिं प्रययौ क्रुद्धः शूरो रथवरं युधि ॥ ०४० ॥

स्वकेनाहमनीकेन संनद्धकवचावृतः ।
चतुःशतैर्महेष्वासैश्चेकितानमवारयम् ॥ ०४१ ॥

शकुनिस्तु सहानीको माद्रीपुत्रमवारयत् ।
गान्धारकैः सप्तशतैश्चापशक्तिशरासिभिः ॥ ०४२ ॥

विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्छताम् ।
प्राणांस्त्यक्त्वा महेष्वासौ मित्रार्थेऽभ्युद्यतौ युधि ॥ ०४३ ॥

शिखण्डिनं याज्ञसेनिं रुन्धानमपराजितम् ।
बाह्लिकः प्रतिसंयत्तः पराक्रान्तमवारयत् ॥ ०४४ ॥

धृष्टद्युम्नं च पाञ्चाल्यं क्रूरैः सार्धं प्रभद्रकैः ।
आवन्त्यः सह सौवीरैः क्रुद्धरूपमवारयत् ॥ ०४५ ॥

घटोत्कचं तथा शूरं राक्षसं क्रूरयोधिनम् ।
अलायुधोऽद्रवत्तूर्णं क्रुद्धमायान्तमाहवे ॥ ०४६ ॥

अलम्बुसं राक्षसेन्द्रं कुन्तिभोजो महारथः ।
सैन्येन महता युक्तः क्रुद्धरूपमवारयत् ॥ ०४७ ॥

सैन्धवः पृष्ठतस्त्वासीत्सर्वसैन्यस्य भारत ।
रक्षितः परमेष्वासैः कृपप्रभृतिभी रथैः ॥ ०४८ ॥

तस्यास्तां चक्ररक्षौ द्वौ सैन्धवस्य बृहत्तमौ ।
द्रौणिर्दक्षिणतो राजन्सूतपुत्रश्च वामतः ॥ ०४९ ॥

पृष्ठगोपास्तु तस्यासन्सौमदत्तिपुरोगमाः ।
कृपश्च वृषसेनश्च शलः शल्यश्च दुर्जयः ॥ ०५० ॥

नीतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः ।
सैन्धवस्य विधायैवं रक्षां युयुधिरे तदा ॥ ०५१ ॥

---

# अध्याय ०७१

सञ्जय उवाच ॥

राजन्सङ्ग्राममाश्चर्यं शृणु कीर्तयतो मम ।
कुरूणां पाण्डवानां च यथा युद्धमवर्तत ॥ ००१ ॥

भारद्वाजं समासाद्य व्यूहस्य प्रमुखे स्थितम् ।
अयोधयन्रणे पार्था द्रोणानीकं बिभित्सवः ॥ ००२ ॥

रक्षमाणाः स्वकं व्यूहं द्रोणस्यापि च सैनिकाः ।
अयोधयन्रणे पार्थान्प्रार्थयन्तो महद्यशः ॥ ००३ ॥

विन्दानुविन्दावावन्त्यौ विराटं दशभिः शरैः ।
आजघ्नतुः सुसङ्क्रुद्धौ तव पुत्रहितैषिणौ ॥ ००४ ॥

विराटश्च महाराज तावुभौ समरे स्थितौ ।

पराक्रान्तौ पराक्रम्य योधयामास सानुगौ ॥ ००५ ॥

तेषां युद्धं समभवद्दारुणं शोणितोदकम् ।
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ॥ ००६ ॥

बाह्लीकं रभसं युद्धे याज्ञसेनिर्महाबलः ।
आजघ्ने विशिखैस्तीक्ष्णैर्घोरैर्मर्मास्थिभेदिभिः ॥ ००७ ॥

बाह्लीको याज्ञसेनिं तु हेमपुङ्खैः शिलाशितैः ।
आजघान भृशं क्रुद्धो नवभिर्नतपर्वभिः ॥ ००८ ॥

तद्युद्धमभवद्घोरं शरशक्तिसमाकुलम् ।
भीरूणां त्रासजननं शूराणां हर्षवर्धनम् ॥ ००९ ॥

ताभ्यां तत्र शरैर्मुक्तैरन्तरिक्षं दिशस्तथा ।
अभवत्संवृतं सर्वं न प्राज्ञायत किञ्चन ॥ ०१० ॥

शैब्यो गोवासनो युद्धे काश्यपुत्रं महारथम् ।
ससैन्यो योधयामास गजः प्रतिगजं यथा ॥ ०११ ॥

बाह्लीकराजः संरब्धो द्रौपदेयान्महारथान् ।
मनः पञ्चेन्द्रियाणीव शुशुभे योधयन्रणे ॥ ०१२ ॥

अयोधयंस्ते च भृशं तं शरौघैः समन्ततः ।
इन्द्रियार्था यथा देहं शश्वद्देहभृतां वर ॥ ०१३ ॥

वार्ष्णेयं सात्यकिं युद्धे पुत्रो दुःशासनस्तव ।
आजघ्ने सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः ॥ ०१४ ॥

सोऽतिविद्धो बलवता महेष्वासेन धन्विना ।
ईषन्मूर्छां जगामाशु सात्यकिः सत्यविक्रमः ॥ ०१५ ॥

समाश्वस्तस्तु वार्ष्णेयस्तव पुत्रं महारथम् ।
विव्याध दशभिस्तूर्णं सायकैः कङ्कपत्रिभिः ॥ ०१६ ॥

तावन्योन्यं दृढं विद्धावन्योन्यशरविक्षतौ ।
रेजतुः समरे राजन्पुष्पिताविव किंशुकौ ॥ ०१७ ॥

अलम्बुसस्तु सङ्क्रुद्धः कुन्तिभोजशरार्दितः ।
अशोभत परं लक्ष्म्या पुष्पाढ्य इव किंशुकः ॥ ०१८ ॥

कुन्तिभोजं ततो रक्षो विद्ध्वा बहुभिरायसैः ।
अनदद्भैरवं नादं वाहिन्याः प्रमुखे तव ॥ ०१९ ॥

ततस्तौ समरे शूरौ योधयन्तौ परस्परम् ।
ददृशुः सर्वभूतानि शक्रजम्भौ यथा पुरा ॥ ०२० ॥

शकुनिं रभसं युद्धे कृतवैरं च भारत ।
माद्रीपुत्रौ च संरब्धौ शरैरर्दयतां मृधे ॥ ०२१ ॥

तन्मूलः स महाराज प्रावर्तत जनक्षयः ।
त्वया सञ्जनितोऽत्यर्थं कर्णेन च विवर्धितः ॥ ०२२ ॥

उद्धुक्षितश्च पुत्रेण तव क्रोधहुताशनः ।
य इमां पृथिवीं राजन्दग्धुं सर्वां समुद्यतः ॥ ०२३ ॥

शकुनिः पाण्डुपुत्राभ्यां कृतः स विमुखः शरैः ।
नाभ्यजानत कर्तव्यं युधि किञ्चित्पराक्रमम् ॥ ०२४ ॥

विमुखं चैनमालोक्य माद्रीपुत्रौ महारथौ ।
ववर्षतुः पुनर्बाणैर्यथा मेघौ महागिरिम् ॥ ०२५ ॥

स वध्यमानो बहुभिः शरैः संनतपर्वभिः ।
संप्रायाज्जवनैरश्वैर्द्रोणानीकाय सौबलः ॥ ०२६ ॥

घटोत्कचस्तथा शूरं राक्षसं तमलायुधम् ।
अभ्ययाद्रभसं युद्धे वेगमास्थाय मध्यमम् ॥ ०२७ ॥

तयोर्युद्धं महाराज चित्ररूपमिवाभवत् ।
यादृशं हि पुरा वृत्तं रामरावणयोर्मृधे ॥ ०२८ ॥

ततो युधिष्ठिरो राजा मद्रराजानमाहवे ।
विद्ध्वा पञ्चाशता बाणैः पुनर्विव्याध सप्तभिः ॥ ०२९ ॥

ततः प्रववृते युद्धं तयोरत्यद्भुतं नृप ।
यथा पूर्वं महद्युद्धं शम्बरामरराजयोः ॥ ०३० ॥

विविंशतिश्चित्रसेनो विकर्णश्च तवात्मजः ।
अयोधयन्भीमसेनं महत्या सेनया वृताः ॥ ०३१ ॥

---

# अध्याय ०७२

सञ्जय उवाच ॥

तथा तस्मिन्प्रवृत्ते तु सङ्ग्रामे लोमहर्षणे ।
कौरवेयांस्त्रिधाभूतान्पाण्डवाः समुपाद्रवन् ॥ ००१ ॥

जलसंधं महाबाहुर्भीमसेनो न्यवारयत् ।

युधिष्ठिरः सहानीकः कृतवर्माणमाहवे ॥ ००२ ॥

किरन्तं शरवर्षाणि रोचमान इवांशुमान् ।
धृष्टद्युम्नो महाराज द्रोणमभ्यद्रवद्रणे ॥ ००३ ॥

ततः प्रववृते युद्धं त्वरतां सर्वधन्विनाम् ।
कुरूणां सोमकानां च सङ्क्रुद्धानां परस्परम् ॥ ००४ ॥

सङ्क्षये तु तथा भूते वर्तमाने महाभये ।
द्वंद्वीभूतेषु सैन्येषु युध्यमानेष्वभीतवत् ॥ ००५ ॥

द्रोणः पाञ्चालपुत्रेण बली बलवता सह ।
विचिक्षेप पृषत्कौघांस्तदद्भुतमिवाभवत् ॥ ००६ ॥

पुण्डरीकवनानीव विध्वस्तानि समन्ततः ।
चक्राते द्रोणपाञ्चाल्यौ नृणां शीर्षाण्यनेकशः ॥ ००७ ॥

विनिकीर्णानि वीराणामनीकेषु समन्ततः ।
वस्त्राभरणशस्त्राणि ध्वजवर्मायुधानि च ॥ ००८ ॥

तपनीयविचित्राङ्गाः संसिक्ता रुधिरेण च ।
संसक्ता इव दृश्यन्ते मेघसंघाः सविद्युतः ॥ ००९ ॥

कुञ्जराश्वनरान्संख्ये पातयन्तः पतत्रिभिः ।
तालमात्राणि चापानि विकर्षन्तो महारथाः ॥ ०१० ॥

असिचर्माणि चापानि शिरांसि कवचानि च ।
विप्रकीर्यन्त शूराणां संप्रहारे महात्मनाम् ॥ ०११ ॥

उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
अदृश्यन्त महाराज तस्मिन्परमसङ्कुले ॥ ०१२ ॥

गृध्राः कङ्का वडाः श्येना वायसा जम्बुकास्तथा ।
बहवः पिशिताशाश्च तत्रादृश्यन्त मारिष ॥ ०१३ ॥

भक्षयन्तः स्म मांसानि पिबन्तश्चापि शोणितम् ।
विलुम्पन्तः स्म केशांश्च मज्जाश्च बहुधा नृप ॥ ०१४ ॥

आकर्षन्तः शरीराणि शरीरावयवांस्तथा ।
नराश्वगजसंघानां शिरांसि च ततस्ततः ॥ ०१५ ॥

कृतास्त्रा रणदीक्षाभिर्दीक्षिताः शरधारिणः ।
रणे जयं प्रार्थयन्तो भृशं युयुधिरे तदा ॥ ०१६ ॥

असिमार्गान्बहुविधान्विचेरुस्तावका रणे ।
ऋष्टिभिः शक्तिभिः प्रासैः शूलतोमरपट्टिशैः ॥ ०१७ ॥

गदाभिः परिघैश्चान्ये व्यायुधाश्च भुजैरपि ।
अन्योन्यं जघ्निरे क्रुद्धा युद्धरङ्गगता नराः ॥ ०१८ ॥

रथिनो रथिभिः सार्धमश्वारोहाश्च सादिभिः ।
मातङ्गा वरमातङ्गैः पदाताश्च पदातिभिः ॥ ०१९ ॥

क्षीबा इवान्ये चोन्मत्ता रङ्गेष्विव च चारणाः ।
उच्चुक्रुशुस्तथान्योन्यं जघ्नुरन्योन्यमाहवे ॥ ०२० ॥

वर्तमाने तथा युद्धे निर्मर्यादे विशां पते ।
धृष्टद्युम्नो हयानश्वैर्द्रोणस्य व्यत्यमिश्रयत् ॥ ०२१ ॥

ते हया साध्वशोभन्त विमिश्रा वातरंहसः ।
पारावतसवर्णाश्च रक्तशोणाश्च संयुगे ॥ ०२२ ॥

हयाः शुशुभिरे राजन्मेघा इव सविद्युतः ॥ ०२२ ॥

धृष्टद्युम्नश्च संप्रेक्ष्य द्रोणमभ्याशमागतम् ।
असिचर्मादद वीरो धनुरुत्सृज्य भारत ॥ ०२३ ॥

चिकीर्षुर्दुष्करं कर्म पार्षतः परवीरहा ।
ईषया समतिक्रम्य द्रोणस्य रथमाविशत् ॥ ०२४ ॥

अतिष्ठद्युगमध्ये स युगसंनहनेषु च ।
जघानार्धेषु चाश्वानां तत्सैन्यान्यभ्यपूजयन् ॥ ०२५ ॥

खड्गेन चरतस्तस्य शोणाश्वानधितिष्ठतः ।
न ददर्शान्तरं द्रोणस्तदद्भुतमिवाभवत् ॥ ०२६ ॥

यथा श्येनस्य पतनं वनेष्वामिषगृद्धिनः ।
तथैवासीदभीसारस्तस्य द्रोणं जिघांसतः ॥ ०२७ ॥

ततः शरशतेनास्य शतचन्द्रं समाक्षिपत् ।
द्रोणो द्रुपदपुत्रस्य खड्गं च दशभिः शरैः ॥ ०२८ ॥

हयांश्चैव चतुःषष्ट्या शराणां जघ्निवान्बली ।
ध्वजं छत्रं च भल्लाभ्यां तथोभौ पार्ष्णिसारथी ॥ ०२९ ॥

अथास्मै त्वरितो बाणमपरं जीवितान्तकम् ।
आकर्णपूर्णं चिक्षेप वज्रं वज्रधरो यथा ॥ ०३० ॥

तं चतुर्दशभिर्बाणैर्बाणं चिच्छेद सात्यकिः ।
ग्रस्तमाचार्यमुख्येन धृष्टद्युम्नममोचयत् ॥ ०३१ ॥

सिंहेनेव मृगं ग्रस्तं नरसिंहेन मारिष ।
द्रोणेन मोचयामास पाञ्चाल्यं शिनिपुङ्गवः ॥ ०३२ ॥

सात्यकिं प्रेक्ष्य गोप्तारं पाञ्चाल्यस्य महाहवे ।
शराणां त्वरितो द्रोणः षड्विंशत्या समर्पयत् ॥ ०३३ ॥

ततो द्रोणं शिनेः पौत्रो ग्रसन्तमिव सृञ्जयान् ।
प्रत्यविध्यच्छितैर्बाणैः षड्विंशत्या स्तनान्तरे ॥ ०३४ ॥

ततः सर्वे रथास्तूर्णं पाञ्चाला जयगृद्धिनः ।
सात्वताभिसृते द्रोणे धृष्टद्युम्नममोचयन् ॥ ०३५ ॥

---

# अध्याय ०७३

धृतराष्ट्र उवाच ॥

बाणे तस्मिन्निकृत्ते तु धृष्टद्युम्ने च मोक्षिते ।
तेन वृष्णिप्रवीरेण युयुधानेन सञ्जय ॥ ००१ ॥

अमर्षितो महेष्वासः सर्वशस्त्रभृतां वरः ।
नरव्याघ्रः शिनेः पौत्रे द्रोणः किमकरोद्युधि ॥ ००२ ॥

सञ्जय उवाच ॥

संप्रद्रुतः क्रोधविषो व्यादितास्यशरासनः ।
तीक्ष्णधारेषुदशनः शितनाराचदंष्ट्रवान् ॥ ००३ ॥

संरम्भामर्षताम्राक्षो महाहिरिव निःश्वसन् ।
नरवीरप्रमुदितैः शोणैरश्वैर्महाजवैः ॥ ००४ ॥

उत्पतद्भिरिवाकाशं क्रमद्भिरिव सर्वतः ।
रुक्मपुङ्खाञ्शरानस्यन्युयुधानमुपाद्रवत् ॥ ००५ ॥

शरपातमहावर्षं रथघोषबलाहकम् ।
कार्मुकाकर्षविक्षिप्तं नाराचबहुविद्युतम् ॥ ००६ ॥

शक्तिखड्गाशनिधरं क्रोधवेगसमुत्थितम् ।
द्रोणमेघमनावार्यं हयमारुतचोदितम् ॥ ००७ ॥

दृष्ट्वैवाभिपतन्तं तं शूरः परपुरञ्जयः ।
उवाच सूतं शैनेयः प्रहसन्युद्धदुर्मदः ॥ ००८ ॥

एतं वै ब्राह्मणं क्रूरं स्वकर्मण्यनवस्थितम् ।
आश्रयं धार्तराष्ट्रस्य राज्ञो दुःखभयावहम् ॥ ००९ ॥

शीघ्रं प्रजवितैरश्वैः प्रत्युद्याहि प्रहृष्टवत् ।
आचार्यं राजपुत्राणां सततं शूरमानिनम् ॥ ०१० ॥

ततो रजतसङ्काशा माधवस्य हयोत्तमाः ।
द्रोणस्याभिमुखाः शीघ्रमगच्छन्वातरंहसः ॥ ०११ ॥

इषुजालावृतं घोरमन्धकारमनन्तरम् ।
अनाधृष्यमिवान्येषां शूराणामभवत्तदा ॥ ०१२ ॥

ततः शीघ्रास्त्रविदुषोर्द्रोणसात्वतयोस्तदा ।
नान्तरं शरवृष्टीनां दृश्यते नरसिंहयोः ॥ ०१३ ॥

इषूणां संनिपातेन शब्दो धाराभिघातजः ।
शुश्रुवे शक्रमुक्तानामशनीनामिव स्वनः ॥ ०१४ ॥

नाराचैरतिविद्धानां शराणां रूपमाबभौ ।

आशीविषविदष्टानां सर्पाणामिव भारत ॥ ०१५ ॥

तयोर्ज्यातलनिर्घोषो व्यश्रूयत सुदारुणः ।
अजस्रं शैलशृङ्गाणां वज्रेणाहन्यतामिव ॥ ०१६ ॥

उभयोस्तौ रथौ राजंस्ते चाश्वास्तौ च सारथी ।
रुक्मपुङ्खैः शरैश्छन्नाश्चित्ररूपा बभुस्तदा ॥ ०१७ ॥

निर्मलानामजिह्मानां नाराचानां विशां पते ।
निर्मुक्ताशीविषाभानां संपातोऽभूत्सुदारुणः ॥ ०१८ ॥

उभयोः पतिते छत्रे तथैव पतितौ ध्वजौ ।
उभौ रुधिरसिक्ताङ्गावुभौ च विजयैषिणौ ॥ ०१९ ॥

स्रवद्भिः शोणितं गात्रैः प्रस्रुताविव वारणौ ।
अन्योन्यमभिविध्येतां जीवितान्तकरैः शरैः ॥ ०२० ॥

गर्जितोत्क्रुष्टसंनादाः शङ्खदुन्दुभिनिस्वनाः ।
उपारमन्महाराज व्याजहार न कश्चन ॥ ०२१ ॥

तूष्णींभूतान्यनीकानि योधा युद्धादुपारमन् ।
ददृशे द्वैरथं ताभ्यां जातकौतूहलो जनः ॥ ०२२ ॥

रथिनो हस्तियन्तारो हयारोहाः पदातयः ।
अवैक्षन्ताचलैर्नेत्रैः परिवार्य रथर्षभौ ॥ ०२३ ॥

हस्त्यनीकान्यतिष्ठन्त तथानीकानि वाजिनाम् ।
तथैव रथवाहिन्यः प्रतिव्यूह्य व्यवस्थिताः ॥ ०२४ ॥

मुक्ताविद्रुमचित्रैश्च मणिकाञ्चनभूषितैः ।
ध्वजैराभरणैश्चित्रैः कवचैश्च हिरण्मयैः ॥ ०२५ ॥

वैजयन्तीपताकाभिः परिस्तोमाङ्गकम्बलैः ।
विमलैर्निशितैः शस्त्रैर्हयानां च प्रकीर्णकैः ॥ ०२६ ॥

जातरूपमयीभिश्च राजतीभिश्च मूर्धसु ।
गजानां कुम्भमालाभिर्दन्तवेष्टैश्च भारत ॥ ०२७ ॥

सबलाकाः सखद्योताः सैरावतशतह्रदाः ।
अदृश्यन्तोष्णपर्याये मेघानामिव वागुराः ॥ ०२८ ॥

अपश्यन्नस्मदीयाश्च ते च यौधिष्ठिराः स्थिताः ।
तद्युद्धं युयुधानस्य द्रोणस्य च महात्मनः ॥ ०२९ ॥

विमानाग्रगता देवा ब्रह्मशक्रपुरोगमाः ।
सिद्धचारणसंघाश्च विद्याधरमहोरगाः ॥ ०३० ॥

गतप्रत्यागताक्षेपैश्चित्रैः शस्त्रविघातिभिः ।
विविधैर्विस्मयं जग्मुस्तयोः पुरुषसिंहयोः ॥ ०३१ ॥

हस्तलाघवमस्त्रेषु दर्शयन्तौ महाबलौ ।
अन्योन्यं समविध्येतां शरैस्तौ द्रोणसात्यकी ॥ ०३२ ॥

ततो द्रोणस्य दाशार्हः शरांश्चिच्छेद संयुगे ।
पत्रिभिः सुदृढैराशु धनुश्चैव महाद्युते ॥ ०३३ ॥

निमेषान्तरमात्रेण भारद्वाजोऽपरं धनुः ।
सज्यं चकार तच्चाशु चिच्छेदास्य स सात्यकिः ॥ ०३४ ॥

ततस्त्वरन्पुनर्द्रोणो धनुर्हस्तो व्यतिष्ठत ।
सज्यं सज्यं पुनश्चास्य चिच्छेद निशितैः शरैः ॥ ०३५ ॥

ततोऽस्य संयुगे द्रोणो दृष्ट्वा कर्मातिमानुषम् ।
युयुधानस्य राजेन्द्र मनसेदमचिन्तयत् ॥ ०३६ ॥

एतदस्त्रबलं रामे कार्तवीर्ये धनञ्जये ।
भीष्मे च पुरुषव्याघ्रे यदिदं सात्वतां वरे ॥ ०३७ ॥

तं चास्य मनसा द्रोणः पूजयामास विक्रमम् ।
लाघवं वासवस्येव संप्रेक्ष्य द्विजसत्तमः ॥ ०३८ ॥

तुतोषास्त्रविदां श्रेष्ठस्तथा देवाः सवासवाः ।
न तामालक्षयामासुर्लघुतां शीघ्रकारिणः ॥ ०३९ ॥

देवाश्च युयुधानस्य गन्धर्वाश्च विशां पते ।
सिद्धचारणसंघाश्च विदुर्द्रोणस्य कर्म तत् ॥ ०४० ॥

ततोऽन्यद्धनुरादाय द्रोणः क्षत्रियमर्दनः ।
अस्त्रैरस्त्रविदां श्रेष्ठो योधयामास भारत ॥ ०४१ ॥

तस्यास्त्राण्यस्त्रमायाभिः प्रतिहन्य स सात्यकिः ।
जघान निशितैर्बाणैस्तदद्भुतमिवाभवत् ॥ ०४२ ॥

तस्यातिमानुषं कर्म दृष्ट्वान्यैरसमं रणे ।
युक्तं योगेन योगज्ञास्तावकाः समपूजयन् ॥ ०४३ ॥

यदस्त्रमस्यति द्रोणस्तदेवास्यति सात्यकिः ।
तमाचार्योऽप्यसंभ्रान्तोऽयोधयच्छत्रुतापनः ॥ ०४४ ॥

ततः क्रुद्धो महाराज धनुर्वेदस्य पारगः ।
वधाय युयुधानस्य दिव्यमस्त्रमुदैरयत् ॥ ०४५ ॥

तदाग्नेयं महाघोरं रिपुघ्नमुपलक्ष्य सः ।

अस्त्रं दिव्यं महेष्वासो वारुणं समुदैरयत् ॥ ०४६ ॥

हाहाकारो महानासीद्दृष्ट्वा दिव्यास्त्रधारिणौ ।
न विचेरुस्तदाकाशे भूतान्याकाशगान्यपि ॥ ०४७ ॥

अस्त्रे ते वारुणाग्नेये ताभ्यां बाणसमाहिते ।
न तावदभिषज्येते व्यावर्तदथ भास्करः ॥ ०४८ ॥

ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ।
नकुलः सहदेवश्च पर्यरक्षन्त सात्यकिम् ॥ ०४९ ॥

धृष्टद्युम्नमुखैः सार्धं विराटश्च सकेकयः ।
मत्स्याः शाल्वेयसेनाश्च द्रोणमाजग्मुरञ्जसा ॥ ०५० ॥

दुःशासनं पुरस्कृत्य राजपुत्राः सहस्रशः ।
द्रोणमभ्युपपद्यन्त सपत्नैः परिवारितम् ॥ ०५१ ॥

ततो युद्धमभूद्राजंस्तव तेषां च धन्विनाम् ।
रजसा संवृते लोके शरजालसमावृते ॥ ०५२ ॥

सर्वमाविग्नमभवन्न प्राज्ञायत किञ्चन ।
सैन्येन रजसा ध्वस्ते निर्मर्यादमवर्तत ॥ ०५३ ॥

---

# अध्याय ०७४

सञ्जय उवाच ॥

परिवर्तमाने त्वादित्ये तत्र सूर्यस्य रश्मिभिः ।

रजसा कीर्यमाणाश्च मन्दीभूताश्च सैनिकाः ॥ ००१ ॥

तिष्ठतां युध्यमानानां पुनरावर्ततामपि ।
भज्यतां जयतां चैव जगाम तदहः शनैः ॥ ००२ ॥

तथा तेषु विषक्तेषु सैन्येषु जयगृद्धिषु ।
अर्जुनो वासुदेवश्च सैन्धवायैव जग्मतुः ॥ ००३ ॥

रथमार्गप्रमाणं तु कौन्तेयो निशितैः शरैः ।
चकार तत्र पन्थानं ययौ येन जनार्दनः ॥ ००४ ॥

यत्र यत्र रथो याति पाण्डवस्य महात्मनः ।
तत्र तत्रैव दीर्यन्ते सेनास्तव विशां पते ॥ ००५ ॥

रथशिक्षां तु दाशार्हो दर्शयामास वीर्यवान् ।
उत्तमाधममध्यानि मण्डलानि विदर्शयन् ॥ ००६ ॥

ते तु नामाङ्किताः पीताः कालज्वलनसंनिभाः ।
स्नायुनद्धाः सुपर्वाणः पृथवो दीर्घगामिनः ॥ ००७ ॥

वैणवायस्मयशराः स्वायता विविधाननाः ।
रुधिरं पतगैः सार्धं प्राणिनां पपुराहवे ॥ ००८ ॥

रथस्थितः क्रोशमात्रे यानस्यत्यर्जुनः शरान् ।
रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान् ॥ ००९ ॥

तार्क्ष्यमारुतरंहोभिर्वाजिभिः साधुवाहिभिः ।
तथागच्छद्धृषीकेशः कृत्स्नं विस्मापयञ्जगत् ॥ ०१० ॥

न तथा गच्छति रथस्तपनस्य विशां पते ।
नेन्द्रस्य न च रुद्रस्य नापि वैश्रवणस्य च ॥ ०११ ॥

नान्यस्य समरे राजन्गतपूर्वस्तथा रथः ।
यथा ययावर्जुनस्य मनोभिप्रायशीघ्रगः ॥ ०१२ ॥

प्रविश्य तु रणे राजन्केशवः परवीरहा ।
सेनामध्ये हयांस्तूर्णं चोदयामास भारत ॥ ०१३ ॥

ततस्तस्य रथौघस्य मध्यं प्राप्य हयोत्तमाः ।
कृच्छ्रेण रथमूहुस्तं क्षुत्पिपासाश्रमान्विताः ॥ ०१४ ॥

क्षताश्च बहुभिः शस्त्रैर्युद्धशौण्डैरनेकशः ।
मण्डलानि विचित्राणि विचेरुस्ते मुहुर्मुहुः ॥ ०१५ ॥

हतानां वाजिनागानां रथानां च नरैः सह ।
उपरिष्टादतिक्रान्ताः शैलाभानां सहस्रशः ॥ ०१६ ॥

एतस्मिन्नन्तरे वीरावावन्त्यौ भ्रातरौ नृप ।
सहसेनौ समार्छेतां पाण्डवं क्लान्तवाहनम् ॥ ०१७ ॥

तावर्जुनं चतुःषष्ट्या सप्तत्या च जनार्दनम् ।
शराणां च शतेनाश्वानविध्येतां मुदान्वितौ ॥ ०१८ ॥

तावर्जुनो महाराज नवभिर्नतपर्वभिः ।
आजघान रणे क्रुद्धो मर्मज्ञो मर्मभेदिभिः ॥ ०१९ ॥

ततस्तौ तु शरौघेण बीभत्सुं सहकेशवम् ।
आच्छादयेतां संरब्धौ सिंहनादं च नेदतुः ॥ ०२० ॥

तयोस्तु धनुषी चित्रे भल्लाभ्यां श्वेतवाहनः ।
चिच्छेद समरे तूर्णं ध्वजौ च कनकोज्ज्वलौ ॥ ०२१ ॥

अथान्ये धनुषी राजन्प्रगृह्य समरे तदा ।
पाण्डवं भृशसङ्क्रुद्धावर्दयामासतुः शरैः ॥ ०२२ ॥

तयोस्तु भृशसङ्क्रुद्धः शराभ्यां पाण्डुनन्दनः ।
चिच्छेद धनुषी तूर्णं भूय एव धनञ्जयः ॥ ०२३ ॥

तथान्यैर्विशिखैस्तूर्णं हेमपुङ्खैः शिलाशितैः ।
जघानाश्वान्सपदातांस्तथोभौ पार्ष्णिसारथी ॥ ०२४ ॥

ज्येष्ठस्य च शिरः कायात्क्षुरप्रेण न्यकृन्तत ।
स पपात हतः पृथ्व्यां वातरुग्ण इव द्रुमः ॥ ०२५ ॥

विन्दं तु निहतं दृष्ट्वा अनुविन्दः प्रतापवान् ।
हताश्वं रथमुत्सृज्य गदां गृह्य महाबलः ॥ ०२६ ॥

अभ्यद्रवत सङ्ग्रामे भ्रातुर्वधमनुस्मरन् ।
गदया गदिनां श्रेष्ठो नृत्यन्निव महारथः ॥ ०२७ ॥

अनुविन्दस्तु गदया ललाटे मधुसूदनम् ।
स्पृष्ट्वा नाकम्पयत्क्रुद्धो मैनाकमिव पर्वतम् ॥ ०२८ ॥

तस्यार्जुनः शरैः षड्भिर्ग्रीवां पादौ भुजौ शिरः ।
निचकर्त स संछिन्नः पपाताद्रिचयो यथा ॥ ०२९ ॥

ततस्तौ निहतौ दृष्ट्वा तयो राजन्पदानुगाः ।
अभ्यद्रवन्त सङ्क्रुद्धाः किरन्तः शतशः शरान् ॥ ०३० ॥

तानर्जुनः शरैस्तूर्णं निहत्य भरतर्षभ ।
व्यरोचत यथा वह्निर्दावं दग्ध्वा हिमात्यये ॥ ०३१ ॥

तयोः सेनामतिक्रम्य कृच्छ्रान्निर्याद्धनञ्जयः ।

विबभौ जलदान्भित्त्वा दिवाकर इवोदितः ॥ ०३२ ॥

तं दृष्ट्वा कुरवस्त्रस्ताः प्रहृष्टाश्चाभवन्पुनः ।
अभ्यवर्षंस्तदा पार्थं समन्ताद्भरतर्षभ ॥ ०३३ ॥

श्रान्तं चैनं समालक्ष्य ज्ञात्वा दूरे च सैन्धवम् ।
सिंहनादेन महता सर्वतः पर्यवारयन् ॥ ०३४ ॥

तांस्तु दृष्ट्वा सुसंरब्धानुत्स्मयन्पुरुषर्षभः ।
शनकैरिव दाशार्हमर्जुनो वाक्यमब्रवीत् ॥ ०३५ ॥

शरार्दिताश्च ग्लानाश्च हया दूरे च सैन्धवः ।
किमिहानन्तरं कार्यं ज्यायिष्ठं तव रोचते ॥ ०३६ ॥

ब्रूहि कृष्ण यथातत्त्वं त्वं हि प्राज्ञतमः सदा ।
भवन्नेत्रा रणे शत्रून्विजेष्यन्तीह पाण्डवाः ॥ ०३७ ॥

मम त्वनन्तरं कृत्यं यद्वै तत्संनिबोध मे ।
हयान्विमुच्य हि सुखं विशल्यान्कुरु माधव ॥ ०३८ ॥

एवमुक्तस्तु पार्थेन केशवः प्रत्युवाच तम् ।
ममाप्येतन्मतं पार्थ यदिदं ते प्रभाषितम् ॥ ०३९ ॥

अर्जुन उवाच ॥

अहमावारयिष्यामि सर्वसैन्यानि केशव ।
त्वमप्यत्र यथान्यायं कुरु कार्यमनन्तरम् ॥ ०४० ॥

सञ्जय उवाच ॥

सोऽवतीर्य रथोपस्थादसंभ्रान्तो धनञ्जयः ।

गाण्डीवं धनुरादाय तस्थौ गिरिरिवाचलः ॥ ०४१ ॥

तमभ्यधावन्क्रोशन्तः क्षत्रिया जयकाङ्क्षिणः ।
इदं छिद्रमिति ज्ञात्वा धरणीस्थं धनञ्जयम् ॥ ०४२ ॥

तमेकं रथवंशेन महता पर्यवारयन् ।
विकर्षन्तश्च चापानि विसृजन्तश्च सायकान् ॥ ०४३ ॥

अस्त्राणि च विचित्राणि क्रुद्धास्तत्र व्यदर्शयन् ।
छादयन्तः शरैः पार्थं मेघा इव दिवाकरम् ॥ ०४४ ॥

अभ्यद्रवन्त वेगेन क्षत्रियाः क्षत्रियर्षभम् ।
रथसिंहं रथोदाराः सिंहं मत्ता इव द्विपाः ॥ ०४५ ॥

तत्र पार्थस्य भुजयोर्महद्बलमदृश्यत ।
यत्क्रुद्धो बहुलाः सेनाः सर्वतः समवारयत् ॥ ०४६ ॥

अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतो विभुः ।
इषुभिर्बहुभिस्तूर्णं सर्वानेव समावृणोत् ॥ ०४७ ॥

तत्रान्तरिक्षे बाणानां प्रगाढानां विशां पते ।
संघर्षेण महार्चिष्मान्पावकः समजायत ॥ ०४८ ॥

तत्र तत्र महेष्वासैः श्वसद्भिः शोणितोक्षितैः ।
हयैर्नागैश्च संभिन्नैर्नदद्भिश्चारिकर्शनैः ॥ ०४९ ॥

संरब्धैश्चारिभिर्वीरैः प्रार्थयद्भिर्जयं मृधे ।
एकस्थैर्बहुभिः क्रुद्धैरूष्मेव समजायत ॥ ०५० ॥

शरोर्मिणं ध्वजावर्तं नागनक्रं दुरत्ययम् ।
पदातिमत्स्यकलिलं शङ्खदुन्दुभिनिस्वनम् ॥ ०५१ ॥

असंख्येयमपारं च रजोऽऽभीलमतीव च ।
उष्णीषकमठच्छन्नं पताकाफेनमालिनम् ॥ ०५२ ॥

रथसागरमक्षोभ्यं मातङ्गाङ्गशिलाचितम् ।
वेलाभूतस्तदा पार्थः पत्रिभिः समवारयत् ॥ ०५३ ॥

ततो जनार्दनः संख्ये प्रियं पुरुषसत्तमम् ।
असंभ्रान्तो महाबाहुरर्जुनं वाक्यमब्रवीत् ॥ ०५४ ॥

उदपानमिहाश्वानां नालमस्ति रणेऽर्जुन ।
परीप्सन्ते जलं चेमे पेयं न त्ववगाहनम् ॥ ०५५ ॥

इदमस्तीत्यसंभ्रान्तो ब्रुवन्नस्त्रेण मेदिनीम् ।
अभिहत्यार्जुनश्चक्रे वाजिपानं सरः शुभम् ॥ ०५६ ॥

शरवंशं शरस्थूणं शराच्छादनमद्भुतम् ।
शरवेश्माकरोत्पार्थस्त्वष्टेवाद्भुतकर्मकृत् ॥ ०५७ ॥

ततः प्रहस्य गोविन्दः साधु साध्वित्यथाब्रवीत् ।
शरवेश्मनि पार्थेन कृते तस्मिन्महारणे ॥ ०५८ ॥

---

# अध्याय ०७५

सञ्जय उवाच ॥

सलिले जनिते तस्मिन्कौन्तेयेन महात्मना ।

निवारिते द्विषत्सैन्ये कृते च शरवेश्मनि ॥ ००१ ॥

वासुदेवो रथात्तूर्णमवतीर्य महाद्युतिः ।
मोचयामास तुरगान्वितुन्नान्कङ्कपत्रिभिः ॥ ००२ ॥

अदृष्टपूर्वं तद्दृष्ट्वा सिंहनादो महानभूत् ।
सिद्धचारणसंघानां सैनिकानां च सर्वशः ॥ ००३ ॥

पदातिनं तु कौन्तेयं युध्यमानं नरर्षभाः ।
नाशक्नुवन्वारयितुं तदद्भुतमिवाभवत् ॥ ००४ ॥

आपतत्सु रथौघेषु प्रभूतगजवाजिषु ।
नासंभ्रमत्तदा पार्थस्तदस्य पुरुषानति ॥ ००५ ॥

व्यसृजन्त शरौघांस्ते पाण्डवं प्रति पार्थिवाः ।
न चाव्यथत धर्मात्मा वासविः परवीरहा ॥ ००६ ॥

स तानि शरजालानि गदाः प्रासांश्च वीर्यवान् ।
आगतानग्रसत्पार्थः सरितः सागरो यथा ॥ ००७ ॥

अस्त्रवेगेन महता पार्थो बाहुबलेन च ।
सर्वेषां पार्थिवेन्द्राणामग्रसत्ताञ्शरोत्तमान् ॥ ००८ ॥

तत्तु पार्थस्य विक्रान्तं वासुदेवस्य चोभयोः ।
अपूजयन्महाराज कौरवाः परमाद्भुतम् ॥ ००९ ॥

किमद्भुततरं लोके भविताप्यथ वाप्यभूत् ।
यदश्वान्पार्थगोविन्दौ मोचयामासतू रणे ॥ ०१० ॥

भयं विपुलमस्मासु तावधत्तां नरोत्तमौ ।
तेजो विदधतुश्चोग्रं विस्रब्धौ रणमूर्धनि ॥ ०११ ॥

अथोत्स्मयन्हृषीकेशः स्त्रीमध्य इव भारत ।
अर्जुनेन कृते संख्ये शरगर्भगृहे तदा ॥ ०१२ ॥

उपावर्तयदव्यग्रस्तानश्वान्पुष्करेक्षणः ।
मिषतां सर्वसैन्यानां त्वदीयानां विशां पते ॥ ०१३ ॥

तेषां श्रमं च ग्लानिं च वेपथुं वमथुं व्रणान् ।
सर्वं व्यपानुदत्कृष्णः कुशलो ह्यश्वकर्मणि ॥ ०१४ ॥

शल्यानुद्धृत्य पाणिभ्यां परिमृज्य च तान्हयान् ।
उपावृत्य यथान्यायं पाययामास वारि सः ॥ ०१५ ॥

स ता.ण्ल्लब्धोदकान्स्नाताञ्जग्धान्नान्विगतक्लमान् ।
योजयामास संहृष्टः पुनरेव रथोत्तमे ॥ ०१६ ॥

स तं रथवरं शौरिः सर्वशस्त्रभृतां वरः ।
समास्थाय महातेजाः सार्जुनः प्रययौ द्रुतम् ॥ ०१७ ॥

रथं रथवरस्याजौ युक्तं लब्धोदकैर्हयैः ।
दृष्ट्वा कुरुबलश्रेष्ठाः पुनर्विमनसोऽभवन् ॥ ०१८ ॥

विनिःश्वसन्तस्ते राजन्भग्नदंष्ट्रा इवोरगाः ।
धिगहो धिग्गतः पार्थः कृष्णश्चेत्यब्रुवन्पृथक् ॥ ०१९ ॥

सर्वक्षत्रस्य मिषतो रथेनैकेन दंशितौ ।
बालक्रीडनकेनेव कदर्थीकृत्य नो बलम् ॥ ०२० ॥

क्रोशतां यतमानानामसंसक्तौ परंतपौ ।
दर्शयित्वात्मनो वीर्यं प्रयातौ सर्वराजसु ॥ ०२१ ॥

तौ प्रयातौ पुनर्दृष्ट्वा तदान्ये सैनिकाब्रुवन् ।
त्वरध्वं कुरवः सर्वे वधे कृष्णकिरीटिनोः ॥ ०२२ ॥

रथं युक्त्वा हि दाशार्हो मिषतां सर्वधन्विनाम् ।
जयद्रथाय यात्येष कदर्थीकृत्य नो रणे ॥ ०२३ ॥

तत्र केचिन्मिथो राजन्समभाषन्त भूमिपाः ।
अदृष्टपूर्वं सङ्ग्रामे तद्दृष्ट्वा महदद्भुतम् ॥ ०२४ ॥

सर्वसैन्यानि राजा च धृतराष्ट्रोऽत्ययं गतः ।
दुर्योधनापराधेन क्षत्रं कृत्स्ना च मेदिनी ॥ ०२५ ॥

विलयं समनुप्राप्ता तच्च राजा न बुध्यते ।
इत्येवं क्षत्रियास्तत्र ब्रुवन्त्यन्ये च भारत ॥ ०२६ ॥

सिन्धुराजस्य यत्कृत्यं गतस्य यमसादनम् ।
तत्करोतु वृथादृष्टिर्धार्तराष्ट्रोऽनुपायवित् ॥ ०२७ ॥

ततः शीघ्रतरं प्रायात्पाण्डवः सैन्धवं प्रति ।
निवर्तमाने तिग्मांशौ हृष्टैः पीतोदकैर्हयैः ॥ ०२८ ॥

तं प्रयान्तं महाबाहुं सर्वशस्त्रभृतां वरम् ।
नाशक्नुवन्वारयितुं योधाः क्रुद्धमिवान्तकम् ॥ ०२९ ॥

विद्राव्य तु ततः सैन्यं पाण्डवः शत्रुतापनः ।
यथा मृगगणान्सिंहः सैन्धवार्थे व्यलोडयत् ॥ ०३० ॥

गाहमानस्त्वनीकानि तूर्णमश्वानचोदयत् ।
बलाकवर्णान्दाशार्हः पाञ्चजन्यं व्यनादयत् ॥ ०३१ ॥

कौन्तेयेनाग्रतः सृष्टा न्यपतन्पृष्ठतः शराः ।

तूर्णात्तूर्णतरं ह्यश्वास्तेऽवहन्वातरंहसः ॥ ०३२ ॥

वातोद्धूतपताकान्तं रथं जलदनिस्वनम् ।
घोरं कपिध्वजं दृष्ट्वा विषण्णा रथिनोऽभवन् ॥ ०३३ ॥

दिवाकरेऽथ रजसा सर्वतः संवृते भृशम् ।
शरार्ताश्च रणे योधा न कृष्णौ शेकुरीक्षितुम् ॥ ०३४ ॥

ततो नृपतयः क्रुद्धाः परिवव्रुर्धनञ्जयम् ।
क्षत्रिया बहवश्चान्ये जयद्रथवधैषिणम् ॥ ०३५ ॥

अपनीयत्सु शल्येषु धिष्ठितं पुरुषर्षभम् ।
दुर्योधनस्त्वगात्पार्थं त्वरमाणो महाहवे ॥ ०३६ ॥

---

# अध्याय ०७६

सञ्जय उवाच ॥

स्रंसन्त इव मज्जानस्तावकानां भयान्नृप ।
तौ दृष्ट्वा समतिक्रान्तौ वासुदेवधनञ्जयौ ॥ ००१ ॥

सर्वे तु प्रतिसंरब्धा ह्रीमन्तः सत्त्वचोदिताः ।
स्थिरीबूता महात्मानः प्रत्यगच्छन्धनञ्जयम् ॥ ००२ ॥

ये गताः पाण्डवं युद्धे क्रोधामर्षसमन्विताः ।
तेऽद्यापि न निवर्तन्ते सिन्धवः सागरादिव ॥ ००३ ॥

असन्तस्तु न्यवर्तन्त वेदेभ्य इव नास्तिकाः ।
नरकं भजमानास्ते प्रत्यपद्यन्त किल्बिषम् ॥ ००४ ॥

तावतीत्य रथानीकं विमुक्तौ पुरुषर्षभौ ।
ददृशाते यथा राहोरास्यान्मुक्तौ प्रभाकरौ ॥ ००५ ॥

मत्स्याविव महाजालं विदार्य विगतज्वरौ ।
तथा कृष्णावदृश्येतां सेनाजालं विदार्य तत् ॥ ००६ ॥

विमुक्तौ शस्त्रसंबाधाद्द्रोणानीकात्सुदुर्भिदात् ।
अदृश्येतां महात्मानौ कालसूर्याविवोदितौ ॥ ००७ ॥

अस्त्रसंबाधनिर्मुक्तौ विमुक्तौ शस्त्रसङ्कटात् ।
अदृश्येतां महात्मानौ शत्रुसंबाधकारिणौ ॥ ००८ ॥

विमुक्तौ ज्वलनस्पर्शान्मकरास्याज्झषाविव ।
व्यक्षोभयेतां सेनां तौ समुद्रं मकराविव ॥ ००९ ॥

तावकास्तव पुत्राश्च द्रोणानीकस्थयोस्तयोः ।
नैतौ तरिष्यतो द्रोणमिति चक्रुस्तदा मतिम् ॥ ०१० ॥

तौ तु दृष्ट्वा व्यतिक्रान्तौ द्रोणानीकं महाद्युती ।
नाशशंसुर्महाराज सिन्धुराजस्य जीवितम् ॥ ०११ ॥

आशा बलवती राजन्पुत्राणामभवत्तव ।
द्रोणहार्दिक्ययोः कृष्णौ न मोक्ष्येते इति प्रभो ॥ ०१२ ॥

तामाशां विफलां कृत्वा निस्तीर्णौ तौ परंतपौ ।
द्रोणानीकं महाराज भोजानीकं च दुस्तरम् ॥ ०१३ ॥

अथ दृष्ट्वा व्यतिक्रान्तौ ज्वलिताविव पावकौ ।

निराशाः सिन्धुराजस्य जीवितं नाशशंसिरे ॥ ०१४ ॥

मिथश्च समभाषेतामभीतौ भयवर्धनौ ।
जयद्रथवधे वाचस्तास्ताः कृष्णधनञ्जयौ ॥ ०१५ ॥

असौ मध्ये कृतः षड्भिर्धार्तराष्ट्रैर्महारथैः ।
चक्षुर्विषयसंप्राप्तो न नौ मोक्ष्यति सैन्धवः ॥ ०१६ ॥

यद्यस्य समरे गोप्ता शक्रो देवगणैः सह ।
तथाप्येनं हनिष्याव इति कृष्णावभाषताम् ॥ ०१७ ॥

इति कृष्णौ महाबाहू मिथः कथयतां तदा ।
सिन्धुराजमवेक्षन्तौ तत्पुत्रास्तव शुश्रुवुः ॥ ०१८ ॥

अतीत्य मरुधन्वेव प्रयान्तौ तृषितौ गजौ ।
पीत्वा वारि समाश्वस्तौ तथैवास्तामरिंदमौ ॥ ०१९ ॥

व्याघ्रसिंहगजाकीर्णानतिक्रम्येव पर्वतान् ।
अदृश्येतां महाबाहू यथा मृत्युजरातिगौ ॥ ०२० ॥

तथा हि मुखवर्णोऽयमनयोरिति मेनिरे ।
तावका दृश्य मुक्तौ तौ विक्रोशन्ति स्म सर्वतः ॥ ०२१ ॥

द्रोणादाशीविषाकाराज्ज्वलितादिव पावकात् ।
अन्येभ्यः पार्थिवेभ्यश्च भास्वन्ताविव भास्करौ ॥ ०२२ ॥

तौ मुक्तौ सागरप्रख्याद्द्रोणानीकादरिंदमौ ।
अदृश्येतां मुदा युक्तौ समुत्तीर्यार्णवं यथा ॥ ०२३ ॥

शस्त्रौघान्महतो मुक्तौ द्रोणहार्दिक्यरक्षितान् ।
रोचमानावदृश्येतामिन्द्राग्न्योः सदृशौ रणे ॥ ०२४ ॥

उद्भिन्नरुधिरौ कृष्णौ भारद्वाजस्य सायकैः ।
शितैश्चितौ व्यरोचेतां कर्णिकारैरिवाचलौ ॥ ०२५ ॥

द्रोणग्राहह्रदान्मुक्तौ शक्त्याशीविषसङ्कटात् ।
अयःशरोग्रमकरात्क्षत्रियप्रवराम्भसः ॥ ०२६ ॥

ज्याघोषतलनिर्ह्रादाद्गदानिस्त्रिंशविद्युतः ।
द्रोणास्त्रमेघान्निर्मुक्तौ सूर्येन्दू तिमिरादिव ॥ ०२७ ॥

बाहुभ्यामिव संतीर्णौ सिन्धुषष्ठाः समुद्रगाः ।
तपान्ते सरितः पूर्णा महाग्राहसमाकुलाः ॥ ०२८ ॥

इति कृष्णौ महेष्वासौ यशसा लोकविश्रुतौ ।
सर्वभूतान्यमन्यन्त द्रोणास्त्रबलविस्मयात् ॥ ०२९ ॥

जयद्रथं समीपस्थमवेक्षन्तौ जिघांसया ।
रुरुं निपाने लिप्सन्तौ व्याघ्रवत्तावतिष्ठताम् ॥ ०३० ॥

यथा हि मुखवर्णोऽयमनयोरिति मेनिरे ।
तव योधा महाराज हतमेव जयद्रथम् ॥ ०३१ ॥

लोहिताक्षौ महाबाहू संयत्तौ कृष्णपाण्डवौ ।
सिन्धुराजमभिप्रेक्ष्य हृष्टौ व्यनदतां मुहुः ॥ ०३२ ॥

शौरेरभीशुहस्तस्य पार्थस्य च धनुष्मतः ।
तयोरासीत्प्रतिभ्राजः सूर्यपावकयोरिव ॥ ०३३ ॥

हर्ष एव तयोरासीद्द्रोणानीकप्रमुक्तयोः ।
समीपे सैन्धवं दृष्ट्वा श्येनयोरामिषं यथा ॥ ०३४ ॥

तौ तु सैन्धवमालोक्य वर्तमानमिवान्तिके ।
सहसा पेततुः क्रुद्धौ क्षिप्रं श्येनाविवामिषे ॥ ०३५ ॥

तौ तु दृष्ट्वा व्यतिक्रान्तौ हृषीकेशधनञ्जयौ ।
सिन्धुराजस्य रक्षार्थं पराक्रान्तः सुतस्तव ॥ ०३६ ॥

द्रोणेनाबद्धकवचो राजा दुर्योधनस्तदा ।
ययावेकरथेनाजौ हयसंस्कारवित्प्रभो ॥ ०३७ ॥

कृष्णपार्थौ महेष्वासौ व्यतिक्रम्याथ ते सुतः ।
अग्रतः पुण्डरीकाक्षं प्रतीयाय नराधिप ॥ ०३८ ॥

ततः सर्वेषु सैन्येषु वादित्राणि प्रहृष्टवत् ।
प्रावाद्यन्समतिक्रान्ते तव पुत्रे धनञ्जयम् ॥ ०३९ ॥

सिंहनादरवाश्चासञ्शङ्खदुन्दुभिमिश्रिताः ।
दृष्ट्वा दुर्योधनं तत्र कृष्णयोः प्रमुखे स्थितम् ॥ ०४० ॥

ये च ते सिन्धुराजस्य गोप्तारः पावकोपमाः ।
ते प्रहृष्यन्त समरे दृष्ट्वा पुत्रं तवाभिभो ॥ ०४१ ॥

दृष्ट्वा दुर्योधनं कृष्णस्त्वतिक्रान्तं सहानुगम् ।
अब्रवीदर्जुनं राजन्प्राप्तकालमिदं वचः ॥ ०४२ ॥

---

# अध्याय ०७७

वासुदेव उवाच ॥

सुयोधनमतिक्रान्तमेनं पश्य धनञ्जय ।
आपद्गतमिमं मन्ये नास्त्यस्य सदृशो रथः ॥ ००१ ॥

दूरपाती महेष्वासः कृतास्त्रो युद्धदुर्मदः ।
दृढास्त्रश्चित्रयोधी च धार्तराष्ट्रो महाबलः ॥ ००२ ॥

अत्यन्तसुखसंवृद्धो मानितश्च महारथैः ।
कृती च सततं पार्थ नित्यं द्वेष्टि च पाण्डवान् ॥ ००३ ॥

तेन युद्धमहं मन्ये प्राप्तकालं तवानघ ।
अत्र वो द्यूतमायातं विजयायेतराय वा ॥ ००४ ॥

अत्र क्रोधविषं पार्थ विमुञ्च चिरसंभृतम् ।
एष मूलमनर्थानां पाण्डवानां महारथः ॥ ००५ ॥

सोऽयं प्राप्तस्तवाक्षेपं पश्य साफल्यमात्मनः ।
कथं हि राजा राज्यार्थी त्वया गच्छेत संयुगम् ॥ ००६ ॥

दिष्ट्या त्विदानीं संप्राप्त एष ते बाणगोचरम् ।
स यथा जीवितं जह्यात्तथा कुरु धनञ्जय ॥ ००७ ॥

ऐश्वर्यमदसंमूढो नैष दुःखमुपेयिवान् ।
न च ते संयुगे वीर्यं जानाति पुरुषर्षभ ॥ ००८ ॥

त्वां हि लोकास्त्रयः पार्थ ससुरासुरमानुषाः ।
नोत्सहन्ते रणे जेतुं किमुतैकः सुयोधनः ॥ ००९ ॥

स दिष्ट्या समनुप्राप्तस्तव पार्थ रथान्तिकम् ।
जह्येनं वै महाबाहो यथा वृत्रं पुरंदरः ॥ ०१० ॥

एष ह्यनर्थे सततं पराक्रान्तस्तवानघ ।

निकृत्या धर्मराजं च द्यूते वञ्चितवानयम्  ॥ ०११  ॥

बहूनि सुनृशंसानि कृतान्येतेन मानद ।
युष्मासु पापमतिना अपापेष्वेव नित्यदा  ॥ ०१२  ॥

तमनार्यं सदा क्षुद्रं पुरुषं कामचारिणम् ।
आर्यां युद्धे मतिं कृत्वा जहि पार्थाविचारयन्  ॥ ०१३  ॥

निकृत्या राज्यहरणं वनवासं च पाण्डव ।
परिक्लेशं च कृष्णाया हृदि कृत्वा पराक्रम  ॥ ०१४  ॥

दिष्ट्यैष तव बाणानां गोचरे परिवर्तते ।
प्रतिघाताय कार्यस्य दिष्ट्या च यततेऽग्रतः  ॥ ०१५  ॥

दिष्ट्या जानाति सङ्ग्रामे योद्धव्यं हि त्वया सह ।
दिष्ट्या च सफलाः पार्थ सर्वे कामा हि कामिताः  ॥ ०१६  ॥

तस्माज्जहि रणे पार्थ धार्तराष्ट्रं कुलाधमम् ।
यथेन्द्रेण हतः पूर्वं जम्भो देवासुरे मृधे  ॥ ०१७  ॥

अस्मिन्हते त्वया सैन्यमनाथं भिद्यतामिदम् ।
वैरस्यास्यास्त्ववभृथो मूलं छिन्धि दुरात्मनाम्  ॥ ०१८  ॥

सञ्जय उवाच  ॥

तं तथेत्यब्रवीत्पार्थः कृत्यरूपमिदं मम ।
सर्वमन्यदनादृत्य गच्छ यत्र सुयोधनः  ॥ ०१९  ॥

येनैतद्दीर्घकालं नो भुक्तं राज्यमकण्टकम् ।
अप्यस्य युधि विक्रम्य छिन्द्यां मूर्धानमाहवे  ॥ ०२०  ॥

अपि तस्या अनर्हायाः परिक्लेशस्य माधव ।
कृष्णायाः शक्नुयां गन्तुं पदं केशप्रधर्षणे ॥ ०२१ ॥

इत्येवं वादिनौ हृष्टौ कृष्णौ श्वेतान्हयोत्तमान् ।
प्रेषयामासतुः संख्ये प्रेप्सन्तौ तं नराधिपम् ॥ ०२२ ॥

तयोः समीपं संप्राप्य पुत्रस्ते भरतर्षभ ।
न चकार भयं प्राप्ते भये महति मारिष ॥ ०२३ ॥

तदस्य क्षत्रियास्तत्र सर्व एवाभ्यपूजयन् ।
यदर्जुनहृषीकेशौ प्रत्युद्यातोऽविचारयन् ॥ ०२४ ॥

ततः सर्वस्य सैन्यस्य तावकस्य विशां पते ।
महान्नादो ह्यभूत्तत्र दृष्ट्वा राजानमाहवे ॥ ०२५ ॥

तस्मिञ्जनसमुन्नादे प्रवृत्ते भैरवे सति ।
कदर्थीकृत्य ते पुत्रः प्रत्यमित्रमवारयत् ॥ ०२६ ॥

आवारितस्तु कौन्तेयस्तव पुत्रेण धन्विना ।
संरम्भमगमद्भूयः स च तस्मिन्परंतपः ॥ ०२७ ॥

तौ दृष्ट्वा प्रतिसंरब्धौ दुर्योधनधनञ्जयौ ।
अभ्यवैक्षन्त राजानो भीमरूपाः समन्ततः ॥ ०२८ ॥

दृष्ट्वा तु पार्थं संरब्धं वासुदेवं च मारिष ।
प्रहसन्निव पुत्रस्ते योद्धुकामः समाह्वयत् ॥ ०२९ ॥

ततः प्रहृष्टो दाशार्हः पाण्डवश्च धनञ्जयः ।
व्याक्रोशेतां महानादं दध्मतुश्चाम्बुजोत्तमौ ॥ ०३० ॥

तौ हृष्टरूपौ संप्रेक्ष्य कौरवेयाश्च सर्वशः ।

निराशाः समपद्यन्त पुत्रस्य तव जीविते ॥ ०३१ ॥

शोकमीयुः परं चैव कुरवः सर्व एव ते ।
अमन्यन्त च पुत्रं ते वैश्वानरमुखे हुतम् ॥ ०३२ ॥

तथा तु दृष्ट्वा योधास्ते प्रहृष्टौ कृष्णपाण्डवौ ।
हतो राजा हतो राजेत्यूचुरेवं भयार्दिताः ॥ ०३३ ॥

जनस्य संनिनादं तु श्रुत्वा दुर्योधनोऽब्रवीत् ।
व्येतु वो भीरहं कृष्णौ प्रेषयिष्यामि मृत्यवे ॥ ०३४ ॥

इत्युक्त्वा सैनिकान्सर्वाञ्जयापेक्षी नराधिपः ।
पार्थमाभाष्य संरम्भादिदं वचनमब्रवीत् ॥ ०३५ ॥

पार्थ यच्छिक्षितं तेऽस्त्रं दिव्यं मानुषमेव च ।
तद्दर्शय मयि क्षिप्रं यदि जातोऽसि पाण्डुना ॥ ०३६ ॥

यद्बलं तव वीर्यं च केशवस्य तथैव च ।
तत्कुरुष्व मयि क्षिप्रं पश्यामस्तव पौरुषम् ॥ ०३७ ॥

अस्मत्परोक्षं कर्माणि प्रवदन्ति कृतानि ते ।
स्वामिसत्कारयुक्तानि यानि तानीह दर्शय ॥ ०३८ ॥

---

# अध्याय ०७८

सञ्जय उवाच ॥

एवमुक्त्वार्जुनं राजा त्रिभिर्मर्मातिगैः शरैः ।
प्रत्यविध्यन्महावेगैश्चतुर्भिश्चतुरो हयान् ॥ ००१ ॥

वासुदेवं च दशभिः प्रत्यविध्यत्स्तनान्तरे ।
प्रतोदं चास्य भल्लेन छित्त्वा भूमावपातयत् ॥ ००२ ॥

तं चतुर्दशभिः पार्थश्चित्रपुङ्खैः शिलाशितैः ।
अविध्यत्तूर्णमव्यग्रस्तेऽस्याभ्रश्यन्त वर्मणः ॥ ००३ ॥

तेषां वैफल्यमालोक्य पुनर्नव च पञ्च च ।
प्राहिणोन्निशितान्बाणांस्ते चाभ्रश्यन्त वर्मणः ॥ ००४ ॥

अष्टाविंशत्तु तान्बाणानस्तान्विप्रेक्ष्य निष्फलान् ।
अब्रवीत्परवीरघ्नः कृष्णोऽर्जुनमिदं वचः ॥ ००५ ॥

अदृष्टपूर्वं पश्यामि शिलानामिव सर्पणम् ।
त्वया संप्रेषिताः पार्थ नार्थं कुर्वन्ति पत्रिणः ॥ ००६ ॥

कच्चिद्गाण्डीवतः प्राणास्तथैव भरतर्षभ ।
मुष्टिश्च ते यथापूर्वं भुजयोश्च बलं तव ॥ ००७ ॥

न चेद्विधेरयं कालः प्राप्तः स्यादद्य पश्चिमः ।
तव चैवास्य शत्रोश्च तन्ममाचक्ष्व पृच्छतः ॥ ००८ ॥

विस्मयो मे महान्पार्थ तव दृष्ट्वा शरानिमान् ।
व्यर्थान्निपततः संख्ये दुर्योधनरथं प्रति ॥ ००९ ॥

वज्राशनिसमा घोराः परकायावभेदिनः ।
शराः कुर्वन्ति ते नार्थं पार्थ काद्य विडम्बना ॥ ०१० ॥

अर्जुन उवाच ॥

द्रोणेनैषा मतिः कृष्ण धार्तराष्ट्रे निवेशिता ।
अन्ते विहितमस्त्राणामेतत्कवचधारणम्  ॥ ०११  ॥

अस्मिन्नन्तर्हितं कृष्ण त्रैलोक्यमपि वर्मणि ।
एको द्रोणो हि वेदैतदहं तस्माच्च सत्तमात्  ॥ ०१२  ॥

न शक्यमेतत्कवचं बाणैर्भेत्तुं कथञ्चन ।
अपि वज्रेण गोविन्द स्वयं मघवता युधि  ॥ ०१३  ॥

जानंस्त्वमपि वै कृष्ण मां विमोहयसे कथम् ।
यद्वृत्तं त्रिषु लोकेषु यच्च केशव वर्तते  ॥ ०१४  ॥

तथा भविष्यद्यच्चैव तत्सर्वं विदितं तव ।
न त्वेवं वेद वै कश्चिद्यथा त्वं मधुसूदन  ॥ ०१५  ॥

एष दुर्योधनः कृष्ण द्रोणेन विहितामिमाम् ।
तिष्ठत्यभीतवत्संख्ये बिभ्रत्कवचधारणाम्  ॥ ०१६  ॥

यत्त्वत्र विहितं कार्यं नैष तद्वेत्ति माधव ।
स्त्रीवदेष बिभर्त्येतां युक्तां कवचधारणाम्  ॥ ०१७  ॥

पश्य बाह्वोश्च मे वीर्यं धनुषश्च जनार्दन ।
पराजयिष्ये कौरव्यं कवचेनापि रक्षितम्  ॥ ०१८  ॥

इदमङ्गिरसे प्रादाद्देवेशो वर्म भास्वरम् ।
पुनर्ददौ सुरपतिर्मह्यं वर्म ससङ्ग्रहम्  ॥ ०१९  ॥

दैवं यद्यस्य वर्मैतद्ब्रह्मणा वा स्वयं कृतम् ।
नैतद्गोप्स्यति दुर्बुद्धिमद्य बाणहतं मया  ॥ ०२०  ॥

सञ्जय उवाच ॥

एवमुक्त्वार्जुनो बाणानभिमन्त्र्य व्यकर्षयत् ।
विकृष्यमाणांस्तेनैवं धनुर्मध्यगताञ्शरान् ॥ ०२१ ॥

तानस्यास्त्रेण चिच्छेद द्रौणिः सर्वास्त्रघातिना ॥ ०२१ ॥

तान्निकृत्तानिषून्दृष्ट्वा दूरतो ब्रह्मवादिना ।
न्यवेदयत्केशवाय विस्मितः श्वेतवाहनः ॥ ०२२ ॥

नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन ।
अस्त्रं मामेव हन्याद्धि पश्य त्वद्य बलं मम ॥ ०२३ ॥

ततो दुर्योधनः कृष्णौ नवभिर्नतपर्वभिः ।
अविध्यत रणे राजञ्शरैराशीविषोपमैः ॥ ०२४ ॥

भूय एवाभ्यवर्षच्च समरे कृष्णपाण्डवौ ॥ ०२४ ॥

शरवर्षेण महता ततोऽहृष्यन्त तावकाः ।
चक्रुर्वादित्रनिनदान्सिंहनादरवांस्तथा ॥ ०२५ ॥

ततः क्रुद्धो रणे पार्थः सृक्कणी परिसंलिहन् ।
नापश्यत ततोऽस्याङ्गं यन्न स्याद्वर्मरक्षितम् ॥ ०२६ ॥

ततोऽस्य निशितैर्बाणैः सुमुक्तैरन्तकोपमैः ।
हयांश्चकार निर्देहानुभौ च पार्ष्णिसारथी ॥ ०२७ ॥

धनुरस्याच्छिनच्चित्रं हस्तावापं च वीर्यवान् ।
रथं च शकलीकर्तुं सव्यसाची प्रचक्रमे ॥ ०२८ ॥

दुर्योधनं च बाणाभ्यां तीक्ष्णाभ्यां विरथीकृतम् ।

अविध्यद्धस्ततलयोरुभयोरर्जुनस्तदा ॥ ०२९ ॥

तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा परमधन्विनः ।
समापेतुः परीप्सन्तो धनञ्जयशरार्दितम् ॥ ०३० ॥

ते रथैर्बहुसाहस्रैः कल्पितैः कुञ्जरैर्हयैः ।
पदात्योघैश्च संरब्धैः परिवव्रुर्धनञ्जयम् ॥ ०३१ ॥

अथ नार्जुनगोविन्दौ रथो वापि व्यदृश्यत ।
अस्त्रवर्षेण महता जनौघैश्चापि संवृतौ ॥ ०३२ ॥

ततोऽर्जुनोऽस्त्रवीर्येण निजघ्ने तां वरूथिनीम् ।
तत्र व्यङ्गीकृताः पेतुः शतशोऽथ रथद्विपाः ॥ ०३३ ॥

ते हता हन्यमानाश्च न्यगृह्णंस्तं रथोत्तमम् ।
स रथस्तम्भितस्तस्थौ क्रोशमात्रं समन्ततः ॥ ०३४ ॥

ततोऽर्जुनं वृष्णिवीरस्त्वरितो वाक्यमब्रवीत् ।
धनुर्विस्फारयात्यर्थमहं ध्मास्यामि चाम्बुजम् ॥ ०३५ ॥

ततो विस्फार्य बलवद्गाण्डीवं जघ्निवान्रिपून् ।
महता शरवर्षेण तलशब्देन चार्जुनः ॥ ०३६ ॥

पाञ्चजन्यं च बलवद्दध्मौ तारेण केशवः ।
रजसा ध्वस्तपक्ष्मान्तः प्रस्विन्नवदनो भृशम् ॥ ०३७ ॥

तस्य शङ्खस्य नादेन धनुषो निस्वनेन च ।
निःसत्त्वाश्च ससत्त्वाश्च क्षितौ पेतुस्तदा जनाः ॥ ०३८ ॥

तैर्विमुक्तो रथो रेजे वाय्वीरित इवाम्बुदः ।
जयद्रथस्य गोप्तारस्ततः क्षुब्धाः सहानुगाः ॥ ०३९ ॥

ते दृष्ट्वा सहसा पार्थं गोप्तारः सैन्धवस्य तु ।
चक्रुर्नादान्बहुविधान्कम्पयन्तो वसुंधराम् ॥ ०४० ॥

बाणशब्दरवांश्चोग्रान्विमिश्राञ्शङ्खनिस्वनैः ।
प्रादुश्चक्रुर्महात्मानः सिंहनादरवानपि ॥ ०४१ ॥

तं श्रुत्वा निनदं घोरं तावकानां समुत्थितम् ।
प्रदध्मतुस्तदा शङ्खौ वासुदेवधनञ्जयौ ॥ ०४२ ॥

तेन शब्देन महता पूरितेयं वसुंधरा ।
सशैला सार्णवद्वीपा सपाताला विशां पते ॥ ०४३ ॥

स शब्दो भरतश्रेष्ठ व्याप्य सर्वा दिशो दश ।
प्रतिसस्वान तत्रैव कुरुपाण्डवयोर्बले ॥ ०४४ ॥

तावका रथिनस्तत्र दृष्ट्वा कृष्णधनञ्जयौ ।
संरम्भं परमं प्राप्तास्त्वरमाणा महारथाः ॥ ०४५ ॥

अथ कृष्णौ महाभागौ तावका दृश्य दंशितौ ।
अभ्यद्रवन्त सङ्क्रुद्धास्तदद्भुतमिवाभवत् ॥ ०४६ ॥

---

# अध्याय ०७९

सञ्जय उवाच ॥

तावकास्तु समीक्ष्यैव वृष्ण्यन्धककुरूत्तमौ ।
प्रागत्वरञ्जिघांसन्तस्तथैव विजयः परान् ॥ ००१ ॥

सुवर्णचित्रैर्वैयाघ्रैः स्वनवद्भिर्महारथैः ।
दीपयन्तो दिशः सर्वा ज्वलद्भिरिव पावकैः ॥ ००२ ॥

रुक्मपृष्ठैश्च दुष्प्रेक्ष्यैः कार्मुकैः पृथिवीपते ।
कूजद्भिरतुलान्नादान्रोषितैरुरगैरिव ॥ ००३ ॥

भूरिश्रवाः शलः कर्णो वृषसेनो जयद्रथः ।
कृपश्च मद्रराजश्च द्रौणिश्च रथिनां वरः ॥ ००४ ॥

ते पिबन्त इवाकाशमश्वैरष्टौ महारथाः ।
व्यराजयन्दश दिशो वैयाघ्रैर्हेमचन्द्रकैः ॥ ००५ ॥

ते दंशिताः सुसंरब्धा रथैर्मेघौघनिस्वनैः ।
समावृण्वन्दिशः सर्वाः पार्थं च विशिखैः शितैः ॥ ००६ ॥

कौलूतका हयाश्चित्रा वहन्तस्तान्महारथान् ।
व्यशोभन्त तदा शीघ्रा दीपयन्तो दिशो दश ॥ ००७ ॥

आजानेयैर्महावेगैर्नानादेशसमुत्थितैः ।
पार्वतीयैर्नदीजैश्च सैन्धवैश्च हयोत्तमैः ॥ ००८ ॥

कुरुयोधवरा राजंस्तव पुत्रं परीप्सवः ।
धनञ्जयरथं शीघ्रं सर्वतः समुपाद्रवन् ॥ ००९ ॥

ते प्रगृह्य महाशङ्खान्दध्मुः पुरुषसत्तमाः ।
पूरयन्तो दिवं राजन्पृथिवीं च ससागराम् ॥ ०१० ॥

तथैव दध्मतुः शङ्खौ वासुदेवधनञ्जयौ ।
प्रवरौ सर्वभूतानां सर्वशङ्खवरौ भुवि ॥ ०११ ॥

देवदत्तं च कौन्तेयः पाञ्चजन्यं च केशवः ॥ ०११ ॥

शब्दस्तु देवदत्तस्य धनञ्जयसमीरितः ।
पृथिवीं चान्तरिक्षं च दिशश्चैव समावृणोत् ॥ ०१२ ॥

तथैव पाञ्चजन्योऽपि वासुदेवसमीरितः ।
सर्वशब्दानतिक्रम्य पूरयामास रोदसी ॥ ०१३ ॥

तस्मिंस्तथा वर्तमाने दारुणे नादसङ्कुले ।
भीरूणां त्रासजनने शूराणां हर्षवर्धने ॥ ०१४ ॥

प्रवादितासु भेरीषु झर्झरेष्वानकेषु च ।
मृदङ्गेषु च राजेन्द्र वाद्यमानेष्वनेकशः ॥ ०१५ ॥

महारथसमाख्याता दुर्योधनहितैषिणः ।
अमृष्यमाणास्तं शब्दं क्रुद्धाः परमधन्विनः ॥ ०१६ ॥

नानादेश्या महीपालाः स्वसैन्यपरिरक्षिणः ॥ ०१६ ॥

अमर्षिता महाशङ्खान्दध्मुर्वीरा महारथाः ।
कृते प्रतिकरिष्यन्तः केशवस्यार्जुनस्य च ॥ ०१७ ॥

बभूव तव तत्सैन्यं शङ्खशब्दसमीरितम् ।
उद्विग्नरथनागाश्वमस्वस्थमिव चाभिभो ॥ ०१८ ॥

तत्प्रयुक्तमिवाकाशं शूरैः शङ्खनिनादितम् ।
बभूव भृशमुद्विग्नं निर्घातैरिव नादितम् ॥ ०१९ ॥

स शब्दः सुमहान्राजन्दिशः सर्वा व्यनादयत् ।
त्रासयामास तत्सैन्यं युगान्त इव संभृतः ॥ ०२० ॥

ततो दुर्योधनोऽष्टौ च राजानस्ते महारथाः ।
जयद्रथस्य रक्षार्थं पाण्डवं पर्यवारयन् ॥ ०२१ ॥

ततो द्रौणिस्त्रिसप्तत्या वासुदेवमताडयत् ।
अर्जुनं च त्रिभिर्भल्लैर्ध्वजमश्वांश्च पञ्चभिः ॥ ०२२ ॥

तमर्जुनः पृषत्कानां शतैः षड्भिरताडयत् ।
अत्यर्थमिव सङ्क्रुद्धः प्रतिविद्धे जनार्दने ॥ ०२३ ॥

कर्णं द्वादशभिर्विद्ध्वा वृषसेनं त्रिभिस्तथा ।
शल्यस्य सशरं चापं मुष्टौ चिच्छेद वीर्यवान् ॥ ०२४ ॥

गृहीत्वा धनुरन्यत्तु शल्यो विव्याध पाण्डवम् ।
भूरिश्रवास्त्रिभिर्बाणैर्हेमपुङ्खैः शिलाशितैः ॥ ०२५ ॥

कर्णो द्वात्रिंशता चैव वृषसेनश्च पञ्चभिः ।
जयद्रथस्त्रिसप्तत्या कृपश्च दशभिः शरैः ॥ ०२६ ॥

मद्रराजश्च दशभिर्विव्यधुः फल्गुनं रणे ॥ ०२६ ॥

ततः शराणां षष्ट्या तु द्रौणिः पार्थमवाकिरत् ।
वासुदेवं च सप्तत्या पुनः पार्थं च पञ्चभिः ॥ ०२७ ॥

प्रहसंस्तु नरव्याघ्रः श्वेताश्वः कृष्णसारथिः ।
प्रत्यविध्यत्स तान्सर्वान्दर्शयन्पाणिलाघवम् ॥ ०२८ ॥

कर्णं द्वादशभिर्विद्ध्वा वृषसेनं त्रिभिः शरैः ।
शल्यस्य समरे चापं मुष्टिदेशे न्यकृन्तत ॥ ०२९ ॥

सौमदत्तिं त्रिभिर्विद्ध्वा शल्यं च दशभिः शरैः ।
शितैरग्निशिखाकारैर्द्रौणिं विव्याध चाष्टभिः ॥ ०३० ॥

गौतमं पञ्चविंशत्या शैन्धवं च शतेन ह ।
पुनर्द्रौणिं च सप्तत्या शराणां सोऽभ्यताडयत् ॥ ०३१ ॥

भूरिश्रवास्तु सङ्क्रुद्धः प्रतोदं चिच्छिदे हरेः ।
अर्जुनं च त्रिसप्तत्या बाणानामाजघान ह ॥ ०३२ ॥

ततः शरशतैस्तीक्ष्णैस्तानरीञ्श्वेतवाहनः ।
प्रत्यषेधद्द्रुतं क्रुद्धो महावातो घनानिव ॥ ०३३ ॥

---

# अध्याय ०८०

धृतराष्ट्र उवाच ॥

ध्वजान्बहुविधाकारान्भ्राजमानानतिश्रिया ।
पार्थानां मामकानां च तान्ममाचक्ष्व सञ्जय ॥ ००१ ॥

सञ्जय उवाच ॥

ध्वजान्बहुविधाकाराञ्शृणु तेषां महात्मनाम् ।
रूपतो वर्णतश्चैव नामतश्च निबोध मे ॥ ००२ ॥

तेषां तु रथमुख्यानां रथेषु विविधा ध्वजाः ।
प्रत्यदृश्यन्त राजेन्द्र ज्वलिता इव पावकाः ॥ ००३ ॥

काञ्चनाः काञ्चनापीडाः काञ्चनस्रगलङ्कृताः ।
काञ्चनानीव शृङ्गाणि काञ्चनस्य महागिरेः ॥ ००४ ॥

ते ध्वजाः संवृतास्तेषां पताकाभिः समन्ततः ।
नानावर्णविरागाभिर्विबभुः सर्वतो वृताः ॥ ००५ ॥

पताकाश्च ततस्तास्तु श्वसनेन समीरिताः ।
नृत्यमानाः व्यदृश्यन्त रङ्गमध्ये विलासिकाः ॥ ००६ ॥

इन्द्रायुधसवर्णाभाः पताका भरतर्षभ ।
दोधूयमाना रथिनां शोभयन्ति महारथान् ॥ ००७ ॥

सिंहलाङ्गूलमुग्रास्यं धजं वानरलक्षणम् ।
धनञ्जयस्य सङ्ग्रामे प्रत्यपश्याम भैरवम् ॥ ००८ ॥

स वानरवरो राजन्पताकाभिरलङ्कृतः ।
त्रासयामास तत्सैन्यं ध्वजो गाण्डीवधन्वनः ॥ ००९ ॥

तथैव सिंहलाङ्गूलं द्रोणपुत्रस्य भारत ।
ध्वजाग्रं समपश्याम बालसूर्यसमप्रभम् ॥ ०१० ॥

काञ्चनं पवनोद्धूतं शक्रध्वजसमप्रभम् ।
नन्दनं कौरवेन्द्राणां द्रौणेर्लक्षणमुच्छ्रितम् ॥ ०११ ॥

हस्तिकक्ष्या पुनर्हैमी बभूवाधिरथेर्ध्वजे ।
आहवे खं महाराज ददृशे पूरयन्निव ॥ ०१२ ॥

पताकी काञ्चनस्रग्वी ध्वजः कर्णस्य संयुगे ।
नृत्यतीव रथोपस्थे श्वसनेन समीरितः ॥ ०१३ ॥

आचार्यस्य च पाण्डूनां ब्राह्मणस्य यशस्विनः ।
गोवृषो गौतमस्यासीत्कृपस्य सुपरिष्कृतः ॥ ०१४ ॥

स तेन भ्राजते राजन्गोवृषेण महारथः ।
त्रिपुरघ्नरथो यद्वद्गोवृषेण विराजते ॥ ०१५ ॥

मयूरो वृषसेनस्य काञ्चनो मणिरत्नवान् ।
व्याहरिष्यन्निवातिष्ठत्सेनाग्रमपि शोभयन् ॥ ०१६ ॥

तेन तस्य रथो भाति मयूरेण महात्मनः ।
यथा स्कन्दस्य राजेन्द्र मयूरेण विराजता ॥ ०१७ ॥

मद्रराजस्य शल्यस्य ध्वजाग्रेऽग्निशिखामिव ।
सौवर्णीं प्रतिपश्याम सीतामप्रतिमां शुभाम् ॥ ०१८ ॥

सा सीता भ्राजते तस्य रथमास्थाय मारिष ।
सर्वबीजविरूढेव यथा सीता श्रिया वृता ॥ ०१९ ॥

वराहः सिन्धुराजस्य राजतोऽभिविराजते ।
ध्वजाग्रेऽलोहितार्काभो हेमजालपरिष्कृतः ॥ ०२० ॥

शुशुभे केतुना तेन राजतेन जयद्रथः ।
यथा देवासुरे युद्धे पुरा पूषा स्म शोभते ॥ ०२१ ॥

सौमदत्तेः पुनर्यूपो यज्ञशीलस्य धीमतः ।
ध्वजः सूर्य इवाभाति सोमश्चात्र प्रदृश्यते ॥ ०२२ ॥

स यूपः काञ्चनो राजन्सौमदत्तेर्विराजते ।
राजसूये मखश्रेष्ठे यथा यूपः समुच्छ्रितः ॥ ०२३ ॥

शलस्य तु महाराज राजतो द्विरदो महान् ।
केतुः काञ्चनचित्राङ्गैर्मयूरैरुपशोभितः ॥ ०२४ ॥

स केतुः शोभयामास सैन्यं ते भरतर्षभ ।
यथा श्वेतो महानागो देवराजचमूं तथा ॥ ०२५ ॥

नागो मणिमयो राज्ञो ध्वजः कनकसंवृतः ।
किङ्किणीशतसंह्रादो भ्राजंश्चित्रे रथोत्तमे ॥ ०२६ ॥

व्यभ्राजत भृशं राजन्पुत्रस्तव विशां पते ।
ध्वजेन महता संख्ये कुरूणामृषभस्तदा ॥ ०२७ ॥

नवैते तव वाहिन्यामुच्छ्रिताः परमध्वजाः ।
व्यदीपयंस्ते पृतनां युगान्तादित्यसंनिभाः ॥ ०२८ ॥

दशमस्त्वर्जुनस्यासीदेक एव महाकपिः ।
अदीप्यतार्जुनो येन हिमवानिव वह्निना ॥ ०२९ ॥

ततश्चित्राणि शुभ्राणि सुमहान्ति महारथाः ।
कार्मुकाण्याददुस्तूर्णमर्जुनार्थे परंतपाः ॥ ०३० ॥

तथैव धनुरायच्छत्पार्थः शत्रुविनाशनः ।
गाण्डीवं दिव्यकर्मा तद्राजन्दुर्मन्त्रिते तव ॥ ०३१ ॥

तवापराधाद्धि नरा निहता बहुधा युधि ।
नानादिग्भ्यः समाहूताः सहयाः सरथद्विपाः ॥ ०३२ ॥

तेषामासीद्व्यतिक्षेपो गर्जतामितरेतरम् ।
दुर्योधनमुखानां च पाण्डूनामृषभस्य च ॥ ०३३ ॥

तत्राद्भुतं परं चक्रे कौन्तेयः कृष्णसारथिः ।
यदेको बहुभिः सार्धं समागच्छदभीतवत् ॥ ०३४ ॥

अशोभत महाबाहुर्गाण्डीवं विक्षिपन्धनुः ।

जिगीषुस्तान्नरव्याघ्राञ्जिघांसुश्च जयद्रथम् ॥ ०३५ ॥

तत्रार्जुनो महाराज शरैर्मुक्तैः सहस्रशः ।
अदृश्यानकरोद्योधांस्तावकाञ्शत्रुतापनः ॥ ०३६ ॥

ततस्तेऽपि नरव्याघ्राः पार्थं सर्वे महारथाः ।
अदृश्यं समरे चक्रुः सायकौघैः समन्ततः ॥ ०३७ ॥

संवृते नरसिंहैस्तैः कुरूणामृषभेऽर्जुने ।
महानासीत्समुद्धूतस्तस्य सैन्यस्य निस्वनः ॥ ०३८ ॥

---

# अध्याय ०८१

धृतराष्ट्र उवाच ॥

अर्जुने सैन्धवं प्राप्ते भारद्वाजेन संवृताः ।
पाञ्चालाः कुरुभिः सार्धं किमकुर्वत सञ्जय ॥ ००१ ॥

सञ्जय उवाच ॥

अपराह्णे महाराज सङ्ग्रामे लोमहर्षणे ।
पाञ्चालानां कुरूणां च द्रोणे द्यूतमवर्तत ॥ ००२ ॥

पाञ्चाला हि जिघांसन्तो द्रोणं संहृष्टचेतसः ।
अभ्यवर्षन्त गर्जन्तः शरवर्षाणि मारिष ॥ ००३ ॥

ततः सुतुमुलस्तेषां सङ्ग्रामोऽवर्तताद्भुतः ।
पाञ्चालानां कुरूणां च घोरो देवासुरोपमः ॥ ००४ ॥

सर्वे द्रोणरथं प्राप्य पाञ्चालाः पण्डवैः सह ।
तदनीकं बिभित्सन्तो महास्त्राणि व्यदर्शयन् ॥ ००५ ॥

द्रोणस्य रथपर्यन्तं रथिनो रथमास्थिताः ।
कम्पयन्तोऽभ्यवर्तन्त वेगमास्थाय मध्यमम् ॥ ००६ ॥

तमभ्यगाद्बृहत्क्षत्रः केकयानां महारथः ।
प्रवपन्निशितान्बाणान्महेन्द्राशनिसंनिभान् ॥ ००७ ॥

तं तु प्रत्युदियाच्छीघ्रं क्षेमधूर्तिर्महायशाः ।
विमुञ्चन्निशितान्बाणाञ्शतशोऽथ सहस्रशः ॥ ००८ ॥

धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
त्वरितोऽभ्यद्रवद्द्रोणं महेन्द्र इव शम्बरम् ॥ ००९ ॥

तमापतन्तं सहसा व्यादितास्यमिवान्तकम् ।
वीरधन्वा महेष्वासस्त्वरमाणः समभ्ययात् ॥ ०१० ॥

युधिष्ठिरं महाराज जिगीषुं समवस्थितम् ।
सहानीकं ततो द्रोणो न्यवारयत वीर्यवान् ॥ ०११ ॥

नकुलं कुशलं युद्धे पराक्रान्तं पराक्रमी ।
अभ्यगच्छत्समायान्तं विकर्णस्ते सुतः प्रभो ॥ ०१२ ॥

सहदेवं तथायान्तं दुर्मुखः शत्रुकर्शनः ।
शरैरनेकसाहस्रैः समवाकिरदाशुगैः ॥ ०१३ ॥

सात्यकिं तु नरव्याघ्रं व्याघ्रदत्तस्त्ववारयत् ।
शरैः सुनिशितैस्तीक्ष्णैः कम्पयन्वै मुहुर्मुहुः ॥ ०१४ ॥

द्रौपदेयान्नरव्याघ्रान्मुञ्चतः सायकोत्तमान् ।
संरब्धान्रथिनां श्रेष्ठान्सौमदत्तिरवारयत् ॥ ०१५ ॥

भीमसेनं तथा क्रुद्धं भीमरूपो भयानकम् ।
प्रत्यवारयदायान्तमार्ष्यश्रृङ्गिर्महारथः ॥ ०१६ ॥

तयोः समभवद्युद्धं नरराक्षसयोर्मृधे ।
यादृगेव पुरा वृत्तं रामरावणयोर्नृप ॥ ०१७ ॥

ततो युधिष्ठिरो द्रोणं नवत्या नतपर्वणाम् ।
आजघ्ने भरतश्रेष्ठ सर्वमर्मसु भारत ॥ ०१८ ॥

तं द्रोणः पञ्चविंशत्या निजघान स्तनान्तरे ।
रोषितो भरतश्रेष्ठ कौन्तेयेन यशस्विना ॥ ०१९ ॥

भूय एव तु विंशत्या सायकानां समाचिनोत् ।
साश्वसूतध्वजं द्रोणः पश्यतां सर्वधन्विनाम् ॥ ०२० ॥

ताञ्शरान्द्रोणमुक्तांस्तु शरवर्षेण पाण्डवः ।
अवारयत धर्मात्मा दर्शयन्पाणिलाघवम् ॥ ०२१ ॥

ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य संयुगे ।
चिच्छेद सहसा धन्वी धनुस्तस्य महात्मनः ॥ ०२२ ॥

अथैनं छिन्नधन्वानं त्वरमाणो महारथः ।
शरैरनेकसाहस्रैः पुरयामास सर्वतः ॥ ०२३ ॥

अदृश्यं दृश्य राजानं भारद्वाजस्य सायकैः ।
सर्वभूतान्यमन्यन्त हतमेव युधिष्ठिरम् ॥ ०२४ ॥

केचिच्चैनममन्यन्त तथा वै विमुखीकृतम् ।

हृतो राजेति राजेन्द्र ब्राह्मणेन यशस्विना ॥ ०२५ ॥

स कृच्छ्रं परमं प्राप्तो धर्मराजो युधिष्ठिरः ।
त्यक्त्वा तत्कार्मुकं छिन्नं भारद्वाजेन संयुगे ॥ ०२६ ॥

आददेऽन्यद्धनुर्दिव्यं भारघ्नं वेगवत्तरम् ॥ ०२६ ॥

ततस्तान्सायकान्सर्वान्द्रोणमुक्तान्सहस्रशः ।
चिच्छेद समरे वीरस्तदद्भुतमिवाभवत् ॥ ०२७ ॥

छित्त्वा च ताञ्शरान्राजा क्रोधसंरक्तलोचनः ।
शक्तिं जग्राह समरे गिरीणामपि दारणीम् ॥ ०२८ ॥

स्वर्णदण्डां महाघोरामष्टघण्टां भयावहाम् ॥ ०२८ ॥

समुत्क्षिप्य च तां हृष्टो ननाद बलवद्बली ।
नादेन सर्वभूतानि त्रासयन्निव भारत ॥ ०२९ ॥

शक्तिं समुद्यतां दृष्ट्वा धर्मराजेन संयुगे ।
स्वस्ति द्रोणाय सहसा सर्वभूतान्यथाब्रुवन् ॥ ०३० ॥

सा राजभुजनिर्मुक्ता निर्मुक्तोरगसंनिभा ।
प्रज्वालयन्ती गगनं दिशश्च विदिशस्तथा ॥ ०३१ ॥

द्रोणान्तिकमनुप्राप्ता दीप्तास्या पन्नगी यथा ॥ ०३१ ॥

तामापतन्तीं सहसा प्रेक्ष्य द्रोणो विशां पते ।
प्रादुश्चक्रे ततो ब्राह्ममस्त्रमस्त्रविदां वरः ॥ ०३२ ॥

तदस्त्रं भस्मसात्कृत्वा तां शक्तिं घोरदर्शनाम् ।
जगाम स्यन्दनं तूर्णं पाण्डवस्य यशस्विनः ॥ ०३३ ॥

ततो युधिष्ठिरो राजा द्रोणास्त्रं तत्समुद्यतम् ।
अशामयन्महाप्राज्ञो ब्रह्मास्त्रेणैव भारत ॥ ०३४ ॥

विव्याध च रणे द्रोणं पञ्चभिर्नतपर्वभिः ।
क्षुरप्रेण च तीक्ष्णेन चिच्छेदास्य महद्धनुः ॥ ०३५ ॥

तदपास्य धनुश्छिन्नं द्रोणः क्षत्रियमर्दनः ।
गदां चिक्षेप सहसा धर्मपुत्राय मारिष ॥ ०३६ ॥

तामापतन्तीं सहसा गदां दृष्ट्वा युधिष्ठिरः ।
गदामेवाग्रहीत्क्रुद्धश्चिक्षेप च परंतपः ॥ ०३७ ॥

ते गदे सहसा मुक्ते समासाद्य परस्परम् ।
संघर्षात्पावकं मुक्त्वा समेयातां महीतले ॥ ०३८ ॥

ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य मारिष ।
चतुर्भिर्निशितैस्तीक्ष्णैर्हयाञ्जघ्ने शरोत्तमैः ॥ ०३९ ॥

धनुश्चैकेन बाणेन चिच्छेदेन्द्रध्वजोपमम् ।
केतुमेकेन चिच्छेद पाण्डवं चार्दयत्त्रिभिः ॥ ०४० ॥

हताश्वात्तु रथात्तूर्णमवप्लुत्य युधिष्ठिरः ।
तस्थावूर्ध्वभुजो राजा व्यायुधो भरतर्षभ ॥ ०४१ ॥

विरथं तं समालोक्य व्यायुधं च विशेषतः ।
द्रोणो व्यमोहयच्छत्रून्सर्वसैन्यानि चाभिभो ॥ ०४२ ॥

मुञ्चन्निषुगणांस्तीक्ष्णा.ण्लघुहस्तो दृढव्रतः ।
अभिदुद्राव राजानं सिंहो मृगमिवोल्बणः ॥ ०४३ ॥

तमभिद्रुतमालोक्य द्रोणेनामित्रघातिना ।
हा हेति सहसा शब्दः पाण्डूनां समजायत ॥ ०४४ ॥

हतो राजा हतो राजा भारद्वाजेन मारिष ।
इत्यासीत्सुमहाञ्शब्दः पाण्डुसैन्यस्य सर्वतः ॥ ०४५ ॥

ततस्त्वरितमारुह्य सहदेवरथं नृपः ।
अपायाज्जवनैरश्वैः कुन्तीपुत्रो युधिष्ठिरः ॥ ०४६ ॥

---

# अध्याय ०८२

सञ्जय उवाच ॥

बृहत्क्षत्रमथायान्तं केकयं दृढविक्रमम् ।
क्षेमधूर्तिर्महाराज विव्याधोरसि मार्गणैः ॥ ००१ ॥

बृहत्क्षत्रस्तु तं राजा नवत्या नतपर्वणाम् ।
आजघ्ने त्वरितो युद्धे द्रोणानीकबिभित्सया ॥ ००२ ॥

क्षेमधूर्तिस्तु सङ्क्रुद्धः केकयस्य महात्मनः ।
धनुश्चिच्छेद भल्लेन पीतेन निशितेन च ॥ ००३ ॥

अथैनं छिन्नधन्वानं शरेण नतपर्वणा ।
विव्याध हृदये तूर्णं प्रवरं सर्वधन्विनाम् ॥ ००४ ॥

अथान्यद्धनुरादाय बृहत्क्षत्रो हसन्निव ।
व्यश्वसूतध्वजं चक्रे क्षेमधूर्तिं महारथम् ॥ ००५ ॥

ततोऽपरेण भल्लेन पीतेन निशितेन च ।
जहार नृपतेः कायाच्छिरो ज्वलितकुण्डलम् ॥ ००६ ॥

तच्छिन्नं सहसा तस्य शिरः कुञ्चितमूर्धजम् ।
सकिरीटं महीं प्राप्य बभौ ज्योतिरिवाम्बरात् ॥ ००७ ॥

तं निहत्य रणे हृष्टो बृहत्क्षत्रो महारथः ।
सहसाभ्यपतत्सैन्यं तावकं पार्थकारणात् ॥ ००८ ॥

धृष्टकेतुमथायान्तं द्रोणहेतोः पराक्रमी ।
वीरधन्वा महेष्वासो वारयामास भारत ॥ ००९ ॥

तौ परस्परमासाद्य शरदंष्ट्रौ तरस्विनौ ।
शरैरनेकसाहस्रैरन्योन्यमभिजघ्नतुः ॥ ०१० ॥

तावुभौ नरशार्दूलौ युयुधाते परस्परम् ।
महावने तीव्रमदौ वारणाविव यूथपौ ॥ ०११ ॥

गिरिगह्वरमासाद्य शार्दूलाविव रोषितौ ।
युयुधाते महावीर्यौ परस्परजिघांसया ॥ ०१२ ॥

तद्युद्धमासीत्तुमुलं प्रेक्षणीयं विशां पते ।
सिद्धचारणसंघानां विस्मयाद्भुतदर्शनम् ॥ ०१३ ॥

वीरधन्वा ततः क्रुद्धो धृष्टकेतोः शरासनम् ।
द्विधा चिच्छेद भल्लेन प्रहसन्निव भारत ॥ ०१४ ॥

तदुत्सृज्य धनुश्छिन्नं चेदिराजो महारथः ।
शक्तिं जग्राह विपुलां रुक्मदण्डामयस्मयीम् ॥ ०१५ ॥

तां तु शक्तिं महावीर्यां दोर्भ्यामायम्य भारत ।
चिक्षेप सहसा यत्तो वीरधन्वरथं प्रति  ॥ ०१६  ॥

स तया वीरघातिन्या शक्त्या त्वभिहतो भृशम् ।
निर्भिन्नहृदयस्तूर्णं निपपात रथान्महीम्  ॥ ०१७  ॥

तस्मिन्विनिहते शूरे त्रिगर्तानां महारथे ।
बलं तेऽभज्यत विभो पाण्डवेयैः समन्ततः  ॥ ०१८  ॥

सहदेवे ततः षष्टिं सायकान्दुर्मुखोऽक्षिपत् ।
ननाद च महानादं तर्जयन्पाण्डवं रणे  ॥ ०१९  ॥

मद्रेयस्तु ततः क्रुद्धो दुर्मुखं दशभिः शरैः ।
भ्राता भ्रातरमायान्तं विव्याध प्रहसन्निव  ॥ ०२०  ॥

तं रणे रभसं दृष्ट्वा सहदेवं महाबलम् ।
दुर्मुखो नवभिर्बाणैस्ताडयामास भारत  ॥ ०२१  ॥

दुर्मुखस्य तु भल्लेन छित्त्वा केतुं महाबलः ।
जघान चतुरो वाहांश्चतुर्भिर्निशितैः शरैः  ॥ ०२२  ॥

अथापरेण भल्लेन पीतेन निशितेन च ।
चिच्छेद सारथेः कायाच्छिरो ज्वलितकुण्डलम्  ॥ ०२३  ॥

क्षुरप्रेण च तीक्ष्णेन कौरव्यस्य महद्धनुः ।
सहदेवो रणे छित्त्वा तं च विव्याध पञ्चभिः  ॥ ०२४  ॥

हताश्वं तु रथं त्यक्त्वा दुर्मुखो विमनास्तदा ।
आरुरोह रथं राजन्निरमित्रस्य भारत  ॥ ०२५  ॥

सहदेवस्ततः क्रुद्धो निरमित्रं महाहवे ।

जघान पृतनामध्ये भल्लेन परवीरहा ॥ ०२६ ॥

स पपात रथोपस्थान्निरमित्रो जनेश्वरः ।
त्रिगर्तराजस्य सुतो व्यथयंस्तव वाहिनीम् ॥ ०२७ ॥

तं तु हत्वा महाबाहुः सहदेवो व्यरोचत ।
यथा दाशरथी रामः खरं हत्वा महाबलम् ॥ ०२८ ॥

हाहाकारो महानासीत्त्रिगर्तानां जनेश्वर ।
राजपुत्रं हतं दृष्ट्वा निरमित्रं महाबलम् ॥ ०२९ ॥

नकुलस्ते सुतं राजन्विकर्णं पृथुलोचनम् ।
मुहूर्ताज्जितवान्संख्ये तदद्भुतमिवाभवत् ॥ ०३० ॥

सात्यकिं व्याघ्रदत्तस्तु शरैः संनतपर्वभिः ।
चक्रेऽदृश्यं साश्वसूतं सध्वजं पृतनान्तरे ॥ ०३१ ॥

तान्निवार्य शराञ्शूरः शैनेयः कृतहस्तवत् ।
साश्वसूतध्वजं बाणैर्व्याघ्रदत्तमपातयत् ॥ ०३२ ॥

कुमारे निहते तस्मिन्मगधस्य सुते प्रभो ।
मागधाः सर्वतो यत्ता युयुधानमुपाद्रवन् ॥ ०३३ ॥

विसृजन्तः शरांश्चैव तोमरांश्च सहस्रशः ।
भिण्डिपालांस्तथा प्रासान्मुद्गरान्मुसलानपि ॥ ०३४ ॥

अयोधयन्रणे शूराः सात्वतं युद्धदुर्मदम् ।
तांस्तु सर्वान्स बलवान्सात्यकिर्युद्धदुर्मदः ॥ ०३५ ॥

नातिकृच्छ्राद्धसन्नेव विजिग्ये पुरुषर्षभ ॥ ०३५ ॥

मागधान्द्रवतो दृष्ट्वा हतशेषान्समन्ततः ।
बलं तेऽभज्यत विभो युयुधानशरार्दितम् ॥ ०३६ ॥

नाशयित्वा रणे सैन्यं त्वदीयं माधवोत्तमः ।
विधुन्वानो धनुःश्रेष्ठं व्यभ्राजत महायशाः ॥ ०३७ ॥

भज्यमानं बलं राजन्सात्वतेन महात्मना ।
नाभ्यवर्तत युद्धाय त्रासितं दीर्घबाहुना ॥ ०३८ ॥

ततो द्रोणो भृशं क्रुद्धः सहसोद्वृत्य चक्षुषी ।
सात्यकिं सत्यकर्माणं स्वयमेवाभिदुद्रुवे ॥ ०३९ ॥

---

# अध्याय ०८३

सञ्जय उवाच ॥

द्रौपदेयान्महेष्वासान्सौमदत्तिर्महायशाः ।
एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ॥ ००१ ॥

ते पीडिता भृशं तेन रौद्रेण सहसा विभो ।
प्रमूढा नैव विविदुर्मृधे कृत्यं स्म किञ्चन ॥ ००२ ॥

नाकुलिस्तु शतानीकः सौमदत्तिं नरर्षभम् ।
द्वाभ्यां विद्ध्वानदद्धृष्टः शराभ्यां शत्रुतापनः ॥ ००३ ॥

तथेतरे रणे यत्तास्त्रिभिस्त्रिभिरजिह्मगैः ।
विव्यधुः समरे तूर्णं सौमदत्तिममर्षणम् ॥ ००४ ॥

स तान्प्रति महाराज चिक्षिपे पञ्च सायकान् ।
एकैकं हृदि चाजघ्ने एकैकेन महायशाः ॥ ००५ ॥

ततस्ते भ्रातरः पञ्च शरैर्विद्धा महात्मना ।
परिवार्य रथैर्वीरं विव्यधुः सायकैर्भृशम् ॥ ००६ ॥

आर्जुनिस्तु हयांस्तस्य चतुर्भिर्निशितैः शरैः ।
प्रेषयामास सङ्क्रुद्धो यमस्य सदनं प्रति ॥ ००७ ॥

भैमसेनिर्धनुश्छित्त्वा सौमदत्तेर्महात्मनः ।
ननाद बलवन्नादं विव्याध च शितैः शरैः ॥ ००८ ॥

यौधिष्ठिरो ध्वजं तस्य छित्त्वा भूमावपातयत् ।
नाकुलिश्चाश्वयन्तारं रथनीडादपाहरत् ॥ ००९ ॥

साहदेविस्तु तं ज्ञात्वा भ्रातृभिर्विमुखीकृतम् ।
क्षुरप्रेण शिरो राजन्निचकर्त महामनाः ॥ ०१० ॥

तच्छिरो न्यपतद्भूमौ तपनीयविभूषितम् ।
भ्राजयन्तं रणोद्देशं बालसूर्यसमप्रभम् ॥ ०११ ॥

सौमदत्तेः शिरो दृष्ट्वा निपतत्तन्महात्मनः ।
वित्रस्तास्तावका राजन्प्रदुद्रुवुरनेकधा ॥ ०१२ ॥

अलम्बुसस्तु समरे भीमसेनं महाबलम् ।
योधयामास सङ्क्रुद्धो लक्ष्मणं रावणिर्यथा ॥ ०१३ ॥

संप्रयुद्धौ रणे दृष्ट्वा तावुभौ नरराक्षसौ ।
विस्मयः सर्वभूतानां प्रहर्षश्चाभवत्तदा ॥ ०१४ ॥

आर्ष्यश्टृङ्गिं ततो भीमो नवभिर्निशितैः शरैः ।

विव्याध प्रहसन्राजन्राक्षसेन्द्रममर्षणम् ॥ ०१५ ॥

तद्रक्षः समरे विद्धं कृत्वा नादं भयावहम् ।
अभ्यद्रवत्ततो भीमं ये च तस्य पदानुगाः ॥ ०१६ ॥

स भीमं पञ्चभिर्विद्ध्वा शरैः संनतपर्वभिः ।
भीमानुगाञ्जघानाशु रथांस्त्रिंशदरिंदमः ॥ ०१७ ॥

पुनश्चतुःशतान्हत्वा भीमं विव्याध पत्रिणा ॥ ०१७ ॥

सोऽतिविद्धस्तदा भीमो राक्षसेन महाबलः ।
निषसाद रथोपस्थे मूर्छयाभिपरिप्लुतः ॥ ०१८ ॥

प्रतिलभ्य ततः सञ्ज्ञां मारुतिः क्रोधमूर्छितः ।
विकृष्य कार्मुकं घोरं भारसाधनमुत्तमम् ॥ ०१९ ॥

अलम्बुसं शरैस्तीक्ष्णैरर्दयामास सर्वतः ॥ ०१९ ॥

स विद्धो बहुभिर्बाणैर्नीलाञ्जनचयोपमः ।
शुशुभे सर्वतो राजन्प्रदीप्त इव किंशुकः ॥ ०२० ॥

स वध्यमानः समरे भीमचापच्युतैः शरैः ।
स्मरन्भ्रातृवधं चैव पाण्डवेन महात्मना ॥ ०२१ ॥

घोरं रूपमथो कृत्वा भीमसेनमभाषत ।
तिष्ठेदानीं रणे पार्थ पश्य मेऽद्य पराक्रमम् ॥ ०२२ ॥

बको नाम सुदुर्बुद्धे राक्षसप्रवरो बली ।
परोक्षं मम तद्वृत्तं यद्भ्राता मे हतस्त्वया ॥ ०२३ ॥

एवमुक्त्वा ततो भीममन्तर्धानगतस्तदा ।

महाता शरवर्षेण भृशं तं समवाकिरत्  ॥ ०२४  ॥

भीमस्तु समरे राजन्नदृश्ये राक्षसे तदा ।
आकाशं पूरयामास शरैः संनतपर्वभिः  ॥ ०२५  ॥

स वध्यमानो भीमेन निमेषाद्रथमास्थितः ।
जगाम धरणीं क्षुद्रः खं चैव सहसागमत्  ॥ ०२६  ॥

उच्चावचानि रूपाणि चकार सुबहूनि च ।
उच्चावचास्तथा वाचो व्याजहार समन्ततः  ॥ ०२७  ॥

तेन पाण्डवसैन्यानां मृदिता युधि वारणाः ।
हयाश्च बहवो राजन्पत्तयश्च तथा पुनः  ॥ ०२८  ॥

रथेभ्यो रथिनः पेतुस्तस्य नुन्नाः स्म सायकैः  ॥ ०२८  ॥

शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम् ।
छत्रहंसां कर्दमिनीं बाहुपन्नगसङ्कुलाम्  ॥ ०२९  ॥

नदीं प्रवर्तयामास रक्षोगणसमाकुलाम् ।
वहन्तीं बहुधा राजंश्चेदिपाञ्चालसृञ्जयान्  ॥ ०३०  ॥

तं तथा समरे राजन्विचरन्तमभीतवत् ।
पाण्डवा भृशसंविग्नाः प्रापश्यंस्तत्स्य विक्रमम्  ॥ ०३१  ॥

तावकानां तु सैन्यानां प्रहर्षः समजायत ।
वादित्रनिनदश्चोग्रः सुमहा.ण्ल्लोमहर्षणः  ॥ ०३२  ॥

तं श्रुत्वा निनदं घोरं तव सैन्यस्य पाण्डवः ।
नामृष्यत यथा नागस्तलशब्दं समीरितम्  ॥ ०३३  ॥

ततः क्रोधाभिताम्राक्षो निर्दहन्निव पावकः ।
संदधे त्वाष्ट्रमस्त्रं स स्वयं त्वष्टेव मारिष ॥ ०३४ ॥

ततः शरसहस्राणि प्रादुरासन्समन्ततः ।
तैः शरैस्तव सैन्यस्य विद्रावः सुमहानभूत् ॥ ०३५ ॥

तदस्त्रं प्रेषितं तेन भीमसेनेन संयुगे ।
राक्षसस्य महामायां हत्वा राक्षसमार्दयत् ॥ ०३६ ॥

स वध्यमानो बहुधा भीमसेनेन राक्षसः ।
संत्यज्य संयुगे भीमं द्रोणानीकमुपाद्रवत् ॥ ०३७ ॥

तस्मिंस्तु निर्जिते राजन्राक्षसेन्द्रे महात्मना ।
अनादयन्सिंहनादैः पाण्डवाः सर्वतोदिशम् ॥ ०३८ ॥

अपूजयन्मारुतिं च संहृष्टास्ते महाबलम् ।
प्रह्लादं समरे जित्वा यथा शक्रं मरुद्गणाः ॥ ०३९ ॥

---

# अध्याय ०८४

सञ्जय उवाच ॥

अलम्बुसं तथा युद्धे विचरन्तमभीतवत् ।
हैडिम्बः प्रययौ तूर्णं विव्याध च शितैः शरैः ॥ ००१ ॥

तयोः प्रतिभयं युद्धमासीद्राक्षससिंहयोः ।
कुर्वतोर्विविधा मायाः शक्रशम्बरयोरिव ॥ ००२ ॥

अलम्बुसो भृशं क्रुद्धो घटोत्कचमताडयत् ।
घटोत्कचस्तु विंशत्या नाराचानां स्तनान्तरे ॥ ००३ ॥

अलम्बुसमथो विद्ध्वा सिंहवद्व्यनदन्मुहुः ॥ ००३ ॥

तथैवालम्बुसो राजन्हैडिम्बं युद्धदुर्मदम् ।
विद्ध्वा विद्ध्वानदद्धृष्टः पूरयन्खं समन्ततः ॥ ००४ ॥

तथा तौ भृशसङ्क्रुद्धौ राक्षसेन्द्रौ महाबलौ ।
निर्विशेषमयुध्येतां मायाभिरितरेतरम् ॥ ००५ ॥

मायाशतसृजौ दृप्तौ मोहयन्तौ परस्परम् ।
मायायुद्धे सुकुशलौ मायायुद्धमयुध्यताम् ॥ ००६ ॥

यां यां घटोत्कचो युद्धे मायां दर्शयते नृप ।
तां तामलम्बुसो राजन्माययैव निजघ्निवान् ॥ ००७ ॥

तं तथा युध्यमानं तु मायायुद्धविशारदम् ।
अलम्बुसं राक्षसेन्द्रं दृष्ट्वाक्रुध्यन्त पाण्डवाः ॥ ००८ ॥

त एनं भृशसङ्क्रुद्धाः सर्वतः प्रवरा रथैः ।
अभ्यद्रवन्त सङ्क्रुद्धा भीमसेनादयो नृप ॥ ००९ ॥

त एनं कोष्ठकीकृत्य रथवंशेन मारिष ।
सर्वतो व्यकिरन्बाणैरुल्काभिरिव कुञ्जरम् ॥ ०१० ॥

स तेषामस्त्रवेगं तं प्रतिहत्यास्त्रमायया ।
तस्माद्रथव्रजान्मुक्तो वनदाहादिव द्विपः ॥ ०११ ॥

स विस्फार्य धनुर्घोरमिन्द्राशनिसमस्वनम् ।

मारुतिं पञ्चविंशत्या भैमसेनिं च पञ्चभिः ॥ ०१२ ॥

युधिष्ठिरं त्रिभिर्विद्ध्वा सहदेवं च सप्तभिः ॥ ०१२ ॥

नकुलं च त्रिसप्तत्या द्रुपदेयांश्च मारिष ।
पञ्चभिः पञ्चभिर्विद्ध्वा घोरं नादं ननाद ह ॥ ०१३ ॥

तं भीमसेनो नवभिः सहदेवश्च पञ्चभिः ।
युधिष्ठिरः शतेनैव राक्षसं प्रत्यविध्यत ॥ ०१४ ॥

नकुलश्च चतुःषष्ट्या द्रौपदेयास्त्रिभिस्त्रिभिः ॥ ०१४ ॥

हैडिम्बो राक्षसं विद्ध्वा युद्धे पञ्चाशता शरैः ।
पुनर्विव्याध सप्तत्या ननाद च महाबलः ॥ ०१५ ॥

सोऽतिविद्धो महेष्वासः सर्वतस्तैर्महारथैः ।
प्रतिविव्याध तान्सर्वान्पञ्चभिः पञ्चभिः शरैः ॥ ०१६ ॥

तं क्रुद्धं राक्षसं युद्धे प्रतिक्रुद्धस्तु राक्षसः ।
हैडिम्बो भरतश्रेष्ठ शरैर्विव्याध सप्तभिः ॥ ०१७ ॥

सोऽतिविद्धो बलवता राक्षसेन्द्रो महाबलः ।
व्यसृजत्सायकांस्तूर्णं स्वर्णपुङ्खाञ्शिलाशितान् ॥ ०१८ ॥

ते शरा नतपर्वाणो विविशू राक्षसं तदा ।
रुषिताः पन्नगा यद्वद्गिरिमुग्रा महाबलाः ॥ ०१९ ॥

ततस्ते पाण्डवा राजन्समन्तान्निशिताञ्शरान् ।
प्रेषयामासुरुद्विग्ना हैडिम्बश्च घटोत्कचः ॥ ०२० ॥

स वध्यमानः समरे पाण्डवैर्जितकाशिभिः ।

दग्धाद्रिकूटशृङ्गाभं भिन्नाञ्जनचयोपमम्  ॥ ०२१  ॥

समुत्क्षिप्य च बाहुभ्यामाविध्य च पुनः पुनः ।
निष्पिपेष क्षितौ क्षिप्रं पूर्णकुम्भमिवाश्मनि  ॥ ०२२  ॥

बललाघवसंपन्नः संपन्नो विक्रमेण च ।
भैमसेनी रणे क्रुद्धः सर्वसैन्यान्यभीषयत्  ॥ ०२३  ॥

स विस्फुटितसर्वाङ्गश्चूर्णितास्थिविभूषणः ।
घटोत्कचेन वीरेण हतः सालकटङ्कटः  ॥ ०२४  ॥

ततः सुमनसः पार्था हते तस्मिन्निशाचरे ।
चुक्रुशुः सिंहनादांश्च वासांस्यादुधुवुश्च ह  ॥ ०२५  ॥

तावकाश्च हतं दृष्ट्वा राक्षसेन्द्रं महाबलम् ।
अलम्बुसं भीमरूपं विशीर्णमिव पर्वतम्  ॥ ०२६  ॥

हाहाकारमकुर्वन्त सैन्यानि भरतर्षभ  ॥ ०२६  ॥

जनाश्च तद्ददृशिरे रक्षः कौतूहलान्विताः ।
यदृच्छया निपतितं भूमावङ्गारकं यथा  ॥ ०२७  ॥

घटोत्कचस्तु तद्धत्वा रक्षो बलवतां वरम् ।
मुमोच बलवन्नादं बलं हत्वेव वासवः  ॥ ०२८  ॥

स पूज्यमानः पितृभिः सबान्धवै ;र्घटोत्कचः कर्मणि दुष्करे कृते ।
रिपुं निहत्याभिननन्द वै तदा ; अलम्बुसं पक्वमलम्बुसं यथा  ॥ ०२९  ॥

ततो निनादः सुमहान्समुत्थितः ; सशङ्खनानाविधबाणघोषवान् ।
निशम्य तं प्रत्यनदंस्तु कौरवा ;स्ततो ध्वनिर्भुवनमथास्पृशद्भृशम्  ॥ ०३०  ॥

# अध्याय ०८५

धृतराष्ट्र उवाच ॥

भारद्वाजं कथं युद्धे युयुधानोऽभ्यवारयत् ।
सञ्जयाचक्ष्व तत्त्वेन परं कौतूहलं हि मे ॥ ००१ ॥

सञ्जय उवाच ॥

शृणु राजन्महाप्राज्ञ सङ्ग्रामं लोमहर्षणम् ।
द्रोणस्य पाण्डवैः सार्धं युयुधानपुरोगमैः ॥ ००२ ॥

वध्यमानं बलं दृष्ट्वा युयुधानेन मारिष ।
अभ्यद्रवत्स्वयं द्रोणः सात्यकिं सत्यविक्रमम् ॥ ००३ ॥

तमापतन्तं सहसा भारद्वाजं महारथम् ।
सात्यकिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ००४ ॥

द्रोणोऽपि युधि विक्रान्तो युयुधानं समाहितः ।
अविध्यत्पञ्चभिस्तूर्णं हेमपुङ्खैः शिलाशितैः ॥ ००५ ॥

ते वर्म भित्त्वा सुदृढं द्विषत्पिशितभोजनाः ।
अभ्यगुर्धरणीं राजञ्श्वसन्त इव पन्नगाः ॥ ००६ ॥

दीर्घबाहुरभिक्रुद्धस्तोत्त्रार्दित इव द्विपः ।
द्रोणं पञ्चाशताविध्यन्नाराचैरग्निसंनिभैः ॥ ००७ ॥

भारद्वाजो रणे विद्धो युयुधानेन सत्वरम् ।

सात्यकिं बहुभिर्बाणैर्यतमानमविध्यत ॥ ००८ ॥

ततः क्रुद्धो महेष्वासो भूय एव महाबलः ।
सात्वतं पीडयामास शतेन नतपर्वणा ॥ ००९ ॥

स वध्यमानः समरे भारद्वाजेन सात्यकिः ।
नाभ्यपद्यत कर्तव्यं किञ्चिदेव विशां पते ॥ ०१० ॥

विषण्णवदनश्चापि युयुधानोऽभवन्नृप ।
भारद्वाजं रणे दृष्ट्वा विसृजन्तं शिताञ्शरान् ॥ ०११ ॥

तं तु संप्रेक्ष्य ते पुत्राः सैनिकाश्च विशां पते ।
प्रहृष्टमनसो भूत्वा सिंहवद्व्यनदन्मुहुः ॥ ०१२ ॥

तं श्रुत्वा निनदं घोरं पीड्यमानं च माधवम् ।
युधिष्ठिरोऽब्रवीद्राजन्सर्वसैन्यानि भारत ॥ ०१३ ॥

एष वृष्णिवरो वीरः सात्यकिः सत्यकर्मकृत् ।
ग्रस्यते युधि वीरेण भानुमानिव राहुणा ॥ ०१४ ॥

अभिद्रवत गच्छध्वं सात्यकिर्यत्र युध्यते ॥ ०१४ ॥

धृष्टद्युम्नं च पाञ्चाल्यमिदमाह जनाधिप ।
अभिद्रव द्रुतं द्रोणं किं नु तिष्ठसि पार्षत ॥ ०१५ ॥

न पश्यसि भयं घोरं द्रोणान्नः समुपस्थितम् ॥ ०१५ ॥

असौ द्रोणो महेष्वासो युयुधानेन संयुगे ।
क्रीडते सूत्रबद्धेन पक्षिणा बालको यथा ॥ ०१६ ॥

तत्रैव सर्वे गच्छन्तु भीमसेनमुखा रथाः ।

त्वयैव सहिता यत्ता युयुधानरथं प्रति ॥ ०१७ ॥

पृष्ठतोऽनुगमिष्यामि त्वामहं सहसैनिकः ।
सात्यकिं मोक्षयस्वाद्य यमदंष्ट्रान्तरं गतम् ॥ ०१८ ॥

एवमुक्त्वा ततो राजा सर्वसैन्येन पाण्डवः ।
अभ्यद्रवद्रणे द्रोणं युयुधानस्य कारणात् ॥ ०१९ ॥

तत्रारावो महानासीद्द्रोणमेकं युयुत्सताम् ।
पाण्डवानां च भद्रं ते सृञ्जयानां च सर्वशः ॥ ०२० ॥

ते समेत्य नरव्याघ्रा भारद्वाजं महारथम् ।
अभ्यवर्षञ्शरैस्तीक्ष्णैः कङ्कबर्हिणवाजितैः ॥ ०२१ ॥

स्मयन्नेव तु तान्वीरान्द्रोणः प्रत्यग्रहीत्स्वयम् ।
अतिथीनागतान्यद्वत्सलिलेनासनेन च ॥ ०२२ ॥

तर्पितास्ते शरैस्तस्य भारद्वाजस्य धन्विनः ।
आतिथेयगृहं प्राप्य नृपतेऽतिथयो यथा ॥ ०२३ ॥

भारद्वाजं च ते सर्वे न शेकुः प्रतिवीक्षितुम् ।
मध्यंदिनमनुप्राप्तं सहस्रांशुमिव प्रभो ॥ ०२४ ॥

तांस्तु सर्वान्महेष्वासान्द्रोणः शस्त्रभृतां वरः ।
अतापयच्छरव्रातैर्गभस्तिभिरिवांशुमान् ॥ ०२५ ॥

वध्यमाना रणे राजन्पाण्डवाः सृञ्जयास्तथा ।
त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः ॥ ०२६ ॥

द्रोणस्य च व्यदृश्यन्त विसर्पन्तो महाशराः ।
घभस्तय इवार्कस्य प्रतपन्तः समन्ततः ॥ ०२७ ॥

तस्मिन्द्रोणेन निहताः पाञ्चालाः पञ्चविंशतिः ।
महारथसमाख्याता धृष्टद्युम्नस्य संमताः ॥ ०२८ ॥

पाण्डूनां सर्वसैन्येषु पाञ्चालानां तथैव च ।
द्रोणं स्म ददृशुः शूरं विनिघ्नन्तं वरान्वरान् ॥ ०२९ ॥

केकयानां शतं हत्वा विद्राव्य च समन्ततः ।
द्रोणस्तस्थौ महाराज व्यादितास्य इवान्तकः ॥ ०३० ॥

पाञ्चालान्सृञ्जयान्मत्स्यान्केकयान्पाण्डवानपि ।
द्रोणोऽजयन्महाबाहुः शतशोऽथ सहस्रशः ॥ ०३१ ॥

तेषां समभवच्छब्दो वध्यतां द्रोणसायकैः ।
वनौकसामिवारण्ये दह्यतां धूमकेतुना ॥ ०३२ ॥

तत्र देवाः सगन्धर्वाः पितरश्चाब्रुवन्नृप ।
एते द्रवन्ति पाञ्चालाः पाण्डवाश्च ससैनिकाः ॥ ०३३ ॥

तं तथा समरे द्रोणं निघ्नन्तं सोमकान्रणे ।
न चाप्यभिययुः केचिदपरे नैव विव्यधुः ॥ ०३४ ॥

वर्तमाने तथा रौद्रे तस्मिन्वीरवरक्षये ।
अशृणोत्सहसा पार्थः पाञ्चजन्यस्य निस्वनम् ॥ ०३५ ॥

पूरितो वासुदेवेन शङ्खराड्वनते भृशम् ।
युध्यमानेषु वीरेषु सैन्धवस्याभिरक्षिषु ॥ ०३६ ॥

नदत्सु धार्तराष्ट्रेषु विजयस्य रथं प्रति ॥ ०३६ ॥

गाण्डीवस्य च निर्घोषे विप्रनष्टे समन्ततः ।

कश्मलाभिहतो राजा चिन्तयामास पाण्डवः ॥ ०३७ ॥

न नूनं स्वस्ति पार्थस्य यथा नदति शङ्खराट् ।
कौरवाश्च यथा हृष्टा विनदन्ति मुहुर्मुहुः ॥ ०३८ ॥

एवं सञ्चिन्तयित्वा तु व्याकुलेनान्तरात्मना ।
अजातशत्रुः कौन्तेयः सात्वतं प्रत्यभाषत ॥ ०३९ ॥

बाष्पगद्गदया वाचा मुह्यमानो मुहुर्मुहुः ।
कृत्यस्यानन्तरापेक्षी शैनेयं शिनिपुङ्गवम् ॥ ०४० ॥

यः स धर्मः पुरा दृष्टः सद्भिः शैनेय शाश्वतः ।
सांपराये सुहृत्कृत्ये तस्य कालोऽयमागतः ॥ ०४१ ॥

सर्वेष्वपि च योधेषु चिन्तयञ्शिनिपुङ्गव ।
त्वत्तः सुहृत्तमं कञ्चिन्नाभिजानामि सात्यके ॥ ०४२ ॥

यो हि प्रीतमना नित्यं यश्च नित्यमनुव्रतः ।
स कार्ये सांपराये तु नियोज्य इति मे मतिः ॥ ०४३ ॥

यथा च केशवो नित्यं पाण्डवानां परायणम् ।
तथा त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रमः ॥ ०४४ ॥

सोऽहं भारं समाधास्ये त्वयि तं वोढुमर्हसि ।
अभिप्रायं च मे नित्यं न वृथा कर्तुमर्हसि ॥ ०४५ ॥

स त्वं भ्रातुर्वयस्यस्य गुरोरपि च संयुगे ।
कुरु कृच्छ्रे सहायार्थमर्जुनस्य नरर्षभ ॥ ०४६ ॥

त्वं हि सत्यव्रतः शूरो मित्राणामभयङ्करः ।
लोके विख्यायसे वीर कर्मभिः सत्यवागिति ॥ ०४७ ॥

यो हि शैनेय मित्रार्थे युध्यमानस्त्यजेत्तनुम् ।
पृथिवीं वा द्विजातिभ्यो यो दद्यात्सममेव तत्  ॥ ०४८  ॥

श्रुताश्च बहवोऽस्माभी राजानो ये दिवं गताः ।
दत्त्वेमां पृथिवीं कृत्स्नां ब्राह्मणेभ्यो यथाविधि  ॥ ०४९  ॥

एवं त्वामपि धर्मात्मन्प्रयाचेऽहं कृताञ्जलिः ।
पृथिवीदानतुल्यं स्यादधिकं वा फलं विभो  ॥ ०५०  ॥

एक एव सदा कृष्णो मित्राणामभयङ्करः ।
रणे संत्यजति प्राणान्द्वितीयस्त्वं च सात्यके  ॥ ०५१  ॥

विक्रान्तस्य च वीरस्य युद्धे प्रार्थयतो यशः ।
शूर एव सहायः स्यान्नेतरः प्राकृतो जनः  ॥ ०५२  ॥

ईदृशे तु परामर्दे वर्तमानस्य माधव ।
त्वदन्यो हि रणे गोप्ता विजयस्य न विद्यते  ॥ ०५३  ॥

श्लाघन्नेव हि कर्माणि शतशस्तव पाण्डवः ।
मम सञ्जनयन्हर्षं पुनः पुनरकीर्तयत्  ॥ ०५४  ॥

लघ्वस्त्रश्चित्रयोधी च तथा लघुपराक्रमः ।
प्राज्ञः सर्वास्त्रविच्छूरो मुह्यते न च संयुगे  ॥ ०५५  ॥

महास्कन्धो महोरस्को महाबाहुर्महाधनुः ।
महाबलो महावीर्यः स महात्मा महारथः  ॥ ०५६  ॥

शिष्यो मम सखा चैव प्रियोऽस्याहं प्रियश्च मे ।
युयुधानः सहायो मे प्रमथिष्यति कौरवान्  ॥ ०५७  ॥

अस्मदर्थं च राजेन्द्र संनह्येद्यदि केशवः ।
रामो वाप्यनिरुद्धो वा प्रद्युम्नो वा महारथः ॥ ०५८ ॥

गदो वा सारणो वापि साम्बो वा सह वृष्णिभिः ।
सहायार्थं महाराज सङ्ग्रामोत्तममूर्धनि ॥ ०५९ ॥

तथाप्यहं नरव्याघ्रं शैनेयं सत्यविक्रमम् ।
साहाय्ये विनियोक्ष्यामि नास्ति मेऽन्यो हि तत्समः ॥ ०६० ॥

इति द्वैतवने तात मामुवाच धनञ्जयः ।
परोक्षं त्वद्गुणांस्तथ्यान्कथयन्नार्यसंसदि ॥ ०६१ ॥

तस्य त्वमेवं सङ्कल्पं न वृथा कर्तुमर्हसि ।
धनञ्जयस्य वार्ष्णेय मम भीमस्य चोभयोः ॥ ०६२ ॥

यच्चापि तीर्थानि चरन्नगच्छं द्वारकां प्रति ।
तत्राहमपि ते भक्तिमर्जुनं प्रति दृष्टवान् ॥ ०६३ ॥

न तत्सौहृदमन्येषु मया शैनेय लक्षितम् ।
यथा त्वमस्मान्भजसे वर्तमानानुपप्लवे ॥ ०६४ ॥

सोऽभिजात्या च भक्त्या च सख्यस्याचार्यकस्य च ।
सौहृदस्य च वीर्यस्य कुलीनत्वस्य माधव ॥ ०६५ ॥

सत्यस्य च महाबाहो अनुकम्पार्थमेव च ।
अनुरूपं महेष्वास कर्म त्वं कर्तुमर्हसि ॥ ०६६ ॥

सोयोधनो हि सहसा गतो द्रोणेन दंशितः ।
पूर्वमेव तु यातास्ते कौरवाणां महारथाः ॥ ०६७ ॥

सुमहान्निनदश्चैव श्रूयते विजयं प्रति ।

स शैनेय जवेनात्र गन्तुमर्हसि माधव ॥ ०६८ ॥

भीमसेनो वयं चैव संयत्ताः सहसैनिकाः ।
द्रोणमावारयिष्यामो यदि त्वां प्रति यास्यति ॥ ०६९ ॥

पश्य शैनेय सैन्यानि द्रवमाणानि संयुगे ।
महान्तं च रणे शब्दं दीर्यमाणां च भारतीम् ॥ ०७० ॥

महामारुतवेगेन समुद्रमिव पर्वसु ।
धार्तराष्ट्रबलं तात विक्षिप्तं सव्यसाचिना ॥ ०७१ ॥

रथैर्विपरिधावद्भिर्मनुष्यैश्च हयैश्च ह ।
सैन्यं रजःसमुद्धूतमेतत्संपरिवर्तते ॥ ०७२ ॥

संवृतः सिन्धुसौवीरैर्नखरप्रासयोधिभिः ।
अत्यन्तापचितैः शूरैः फल्गुनः परवीरहा ॥ ०७३ ॥

नैतद्बलमसंवार्य शक्यो हन्तुं जयद्रथः ।
एते हि सैन्धवस्यार्थे सर्वे संत्यक्तजीविताः ॥ ०७४ ॥

शरशक्तिध्वजवनं हयनागसमाकुलम् ।
पश्यैतद्धार्तराष्ट्राणामनीकं सुदुरासदम् ॥ ०७५ ॥

शृणु दुन्दुभिनिर्घोषं शङ्खशब्दांश्च पुष्कलान् ।
सिंहनादरवांश्चैव रथनेमिस्वनांस्तथा ॥ ०७६ ॥

नागानां शृणु शब्दं च पत्तीनां च सहस्रशः ।
सादिनां द्रवतां चैव शृणु कम्पयतां महीम् ॥ ०७७ ॥

पुरस्तात्सैन्धवानीकं द्रोणानीकस्य पृष्ठतः ।
बहुत्वाद्धि नरव्याघ्र देवेन्द्रमपि पीडयेत् ॥ ०७८ ॥

अपर्यन्ते बले मग्नो जह्यादपि च जीवितम् ।
तस्मिंश्च निहते युद्धे कथं जीवेत मादृशः ॥ ०७९ ॥

सर्वथाहमनुप्राप्तः सुकृच्छ्रं बत जीवितम् ॥ ०७९ ॥

श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः ।
लघ्वस्त्रश्चित्रयोधी च प्रविष्टस्तात भारतीम् ॥ ०८० ॥

सूर्योदये महाबाहुर्दिवसश्चातिवर्तते ।
तन्न जानामि वार्ष्णेय यदि जीवति वा न वा ॥ ०८१ ॥

कुरूणां चापि तत्सैन्यं सागरप्रतिमं महत् ॥ ०८१ ॥

एक एव च बीभत्सुः प्रविष्टस्तात भारतीम् ।
अविषह्यां महाबाहुः सुरैरपि महामृधे ॥ ०८२ ॥

न च मे वर्तते बुद्धिरद्य युद्धे कथञ्चन ।
द्रोणोऽपि रभसो युद्धे मम पीडयते बलम् ॥ ०८३ ॥

प्रत्यक्षं ते महाबाहो यथासौ चरति द्विजः ॥ ०८३ ॥

युगपच्च समेतानां कार्याणां त्वं विचक्षणः ।
महार्थं लघुसंयुक्तं कर्तुमर्हसि माधव ॥ ०८४ ॥

तस्य मे सर्वकार्येषु कार्यमेतन्मतं सदा ।
अर्जुनस्य परित्राणं कर्तव्यमिति संयुगे ॥ ०८५ ॥

नाहं शोचामि दाशार्हं गोप्तारं जगतः प्रभुम् ।
स हि शक्तो रणे तात त्री.ण्ल्लोकानपि सङ्गतान् ॥ ०८६ ॥

विजेतुं पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते ।
किं पुनर्धार्तराष्ट्रस्य बलमेतत्सुदुर्बलम् ॥ ०८७ ॥

अर्जुनस्त्वेव वार्ष्णेय पीडितो बहुभिर्युधि ।
प्रजह्यात्समरे प्राणांस्तस्माद्विन्दामि कश्मलम् ॥ ०८८ ॥

तस्य त्वं पदवीं गच्छ गच्छेयुस्त्वादृशा यथा ।
तादृशस्येदृशे काले मादृशेनाभिचोदितः ॥ ०८९ ॥

रणे वृष्णिप्रवीराणां द्वावेवातिरथौ स्मृतौ ।
प्रद्युम्नश्च महाबाहुस्त्वं च सात्वत विश्रुतः ॥ ०९० ॥

अस्त्रे नारायणसमः सङ्कर्षणसमो बले ।
वीरतायां नरव्याघ्र धनञ्जयसमो ह्यसि ॥ ०९१ ॥

भीष्मद्रोणावतिक्रम्य सर्वयुद्धविशारदम् ।
त्वामद्य पुरुषव्याघ्रं लोके सन्तः प्रचक्षते ॥ ०९२ ॥

नासाध्यं विद्यते लोके सात्यकेरिति माधव ।
तत्त्वां यदभिवक्ष्यामि तत्कुरुष्व महाबल ॥ ०९३ ॥

संभावना हि लोकस्य तव पार्थस्य चोभयोः ।
नान्यथा तां महाबाहो संप्रकर्तुमिहार्हसि ॥ ०९४ ॥

परित्यज्य प्रियान्प्राणान्रणे विचर वीरवत् ।
न हि शैनेय दाशार्हा रणे रक्षन्ति जीवितम् ॥ ०९५ ॥

अयुद्धमनवस्थानं सङ्ग्रामे च पलायनम् ।
भीरूणामसतां मार्गो नैष दाशार्हसेवितः ॥ ०९६ ॥

तवार्जुनो गुरुस्तात धर्मात्मा शिनिपुङ्गव ।

वासुदेवो गुरुश्चापि तव पार्थस्य धीमतः ॥ ०९७ ॥

कारणद्वयमेतद्धि जानानस्त्वाहमब्रुवम् ।
मावमंस्था वचो मह्यं गुरुस्तव गुरोर्ह्यहम् ॥ ०९८ ॥

वासुदेवमतं चैतन्मम चैवार्जुनस्य च ।
सत्यमेतन्मयोक्तं ते याहि यत्र धनञ्जयः ॥ ०९९ ॥

एतद्वचनमाज्ञाय मम सत्यपराक्रम ।
प्रविशैतद्बलं तात धार्तराष्ट्रस्य दुर्मतेः ॥ १०० ॥

प्रविश्य च यथान्यायं सङ्गम्य च महारथैः ।
यथार्हमात्मनः कर्म रणे सात्वत दर्शय ॥ १०१ ॥

---

# अध्याय ०८६

सञ्जय उवाच ॥

प्रीतियुक्तं च हृद्यं च मधुराक्षरमेव च ।
कालयुक्तं च चित्रं च स्वतया चाभिभाषितम् ॥ ००१ ॥

धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः ।
सात्यकिर्भरतश्रेष्ठ प्रत्युवाच युधिष्ठिरम् ॥ ००२ ॥

श्रुतं ते गदतो वाक्यं सर्वमेतन्मयाच्युत ।
न्याययुक्तं च चित्रं च फल्गुनार्थे यशस्करम् ॥ ००३ ॥

एवंविधे तथा काले मदृशं प्रेक्ष्य संमतम् ।

वक्तुमर्हसि राजेन्द्र यथा पार्थं तथैव माम् ॥ ००४ ॥

न मे धनञ्जयस्यार्थे प्राणा रक्ष्याः कथञ्चन ।
त्वत्प्रयुक्तः पुनरहं किं न कुर्यां महाहवे ॥ ००५ ॥

लोकत्रयं योधयेयं सदेवासुरमानुषम् ।
त्वत्प्रयुक्तो नरेन्द्रेह किमुतैतत्सुदुर्बलम् ॥ ००६ ॥

सुयोधनबलं त्वद्य योधयिष्ये समन्ततः ।
विजेष्ये च रणे राजन्सत्यमेतद्ब्रवीमि ते ॥ ००७ ॥

कुशल्यहं कुशलिनं समासाद्य धनञ्जयम् ।
हते जयद्रथे राजन्पुनरेष्यामि तेऽन्तिकम् ॥ ००८ ॥

अवश्यं तु मया सर्वं विज्ञाप्यस्त्वं नराधिप ।
वासुदेवस्य यद्वाक्यं फल्गुनस्य च धीमतः ॥ ००९ ॥

दृढं त्वभिपरीतोऽहमर्जुनेन पुनः पुनः ।
मध्ये सर्वस्य सैन्यस्य वासुदेवस्य शृण्वतः ॥ ०१० ॥

अद्य माधव राजानमप्रमत्तोऽनुपालय ।
आर्यां युद्धे मतिं कृत्वा यावद्धन्मि जयद्रथम् ॥ ०११ ॥

त्वयि वाहं महाबाहो प्रद्युम्ने वा महारथे ।
नृपं निक्षिप्य गच्छेयं निरपेक्षो जयद्रथम् ॥ ०१२ ॥

जानीषे हि रणे द्रोणं रभसं श्रेष्ठसंमतम् ।
प्रतिज्ञा चापि ते नित्यं श्रुता द्रोणस्य माधव ॥ ०१३ ॥

ग्रहणं धर्मराजस्य भारद्वाजोऽनुगृध्यति ।
शक्तश्चापि रणे द्रोणो निगृहीतुं युधिष्ठिरम् ॥ ०१४ ॥

एवं त्वयि समाधाय धर्मराजं नरोत्तमम् ।
अहमद्य गमिष्यामि सैन्धवस्य वधाय हि ॥ ०१५ ॥

जयद्रथमहं हत्वा ध्रुवमेष्यामि माधव ।
धर्मराजं यथा द्रोणो निगृह्णीयाद्रणे बलात् ॥ ०१६ ॥

निगृहीते नरश्रेष्ठे भारद्वाजेन माधव ।
सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत् ॥ ०१७ ॥

एवं गते नरश्रेष्ठ पाण्डवे सत्यवादिनि ।
अस्माकं गमनं व्यक्तं वनं प्रति भवेत्पुनः ॥ ०१८ ॥

सोऽयं मम जयो व्यक्तं व्यर्थ एव भविष्यति ।
यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरम् ॥ ०१९ ॥

स त्वमद्य महाबाहो प्रियार्थं मम माधव ।
जयार्थं च यशोर्थं च रक्ष राजानमाहवे ॥ ०२० ॥

स भवान्मयि निक्षेपो निक्षिप्तः सव्यसाचिना ।
भारद्वाजाद्भयं नित्यं पश्यमानेन ते प्रभो ॥ ०२१ ॥

तस्यापि च महाबाहो नित्यं पश्यति संयुगे ।
नान्यं हि प्रतियोद्धारं रौक्मिणेयादृते प्रभो ॥ ०२२ ॥

मां वापि मन्यते युद्धे भारद्वाजस्य धीमतः ॥ ०२२ ॥

सोऽहं संभावनां चैतामाचार्यवचनं च तत् ।
पृष्ठतो नोत्सहे कर्तुं त्वां वा त्यक्तुं महीपते ॥ ०२३ ॥

आचार्यो लघुहस्तत्वादभेद्यकवचावृतः ।

उपलभ्य रणे क्रीडेद्यथा शकुनिना शिशुः ॥ ०२४ ॥

यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वजः ।
तस्मै त्वां विसृजेयं वै स त्वां रक्षेद्यथार्जुनः ॥ ०२५ ॥

कुरु त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यः प्रतीयाद्रणे द्रोणं यावद्गच्छामि पाण्डवम् ॥ ०२६ ॥

मा च ते भयमद्यास्तु राजन्नर्जुनसंभवम् ।
न स जातु महाबाहुर्भारमुद्यम्य सीदति ॥ ०२७ ॥

ये च सौवीरका योधास्तथा सैन्धवपौरवाः ।
उदीच्या दाक्षिणात्याश्च ये चान्येऽपि महारथाः ॥ ०२८ ॥

ये च कर्णमुखा राजन्नथोदाराः प्रकीर्तिताः ।
एतेऽर्जुनस्य क्रुद्धस्य कलां नार्हन्ति षोडशीम् ॥ ०२९ ॥

उद्युक्ता पृथिवी सर्वा ससुरासुरमानुषा ।
सराक्षसगणा राजन्सकिंनरमहोरगा ॥ ०३० ॥

जङ्गमाः स्थावरैः सार्धं नालं पार्थस्य संयुगे ।
एवं ज्ञात्वा महाराज व्येतु ते भीर्धनञ्जये ॥ ०३१ ॥

यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ ।
न तत्र कर्मणो व्यापत्कथञ्चिदपि विद्यते ॥ ०३२ ॥

दैवं कृतास्त्रतां योगममर्षमपि चाहवे ।
कृतज्ञतां दयां चैव भ्रातुस्त्वमनुचिन्तय ॥ ०३३ ॥

मयि चाप्यपयाते वै गच्छमानेऽर्जुनं प्रति ।
द्रोणे चित्रास्त्रतां संख्ये राजंस्त्वमनुचिन्तय ॥ ०३४ ॥

आचार्यो हि भृशं राजन्निग्रहे तव गृध्यति ।
प्रतिज्ञामात्मनो रक्षन्सत्यां कर्तुं च भारत ॥ ०३५ ॥

कुरुष्वाद्यात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यस्याहं प्रत्ययात्पार्थ गच्छेयं फल्गुनं प्रति ॥ ०३६ ॥

न ह्यहं त्वा महाराज अनिक्षिप्य महाहवे ।
क्वचिद्यास्यामि कौरव्य सत्यमेतद्ब्रवीमि ते ॥ ०३७ ॥

एतद्विचार्य बहुशो बुद्ध्या बुद्धिमतां वर ।
दृष्ट्वा श्रेयः परं बुद्ध्या ततो राजन्प्रशाधि माम् ॥ ०३८ ॥

युधिष्ठिर उवाच ॥

एवमेतन्महाबाहो यथा वदसि माधव ।
न तु मे शुध्यते भावः श्वेताश्वं प्रति मारिष ॥ ०३९ ॥

करिष्ये परमं यत्नमात्मनो रक्षणं प्रति ।
गच्छ त्वं समनुज्ञातो यत्र यातो धनञ्जयः ॥ ०४० ॥

आत्मसंरक्षणं संख्ये गमनं चार्जुनं प्रति ।
विचार्यैतद्द्वयं बुद्ध्या गमनं तत्र रोचये ॥ ०४१ ॥

स त्वमातिष्ठ यानाय यत्र यातो धनञ्जयः ।
ममापि रक्षणं भीमः करिष्यति महाबलः ॥ ०४२ ॥

पार्षतश्च ससोदर्यः पार्थिवाश्च महाबलाः ।
द्रौपदेयाश्च मां तात रक्षिष्यन्ति न संशयः ॥ ०४३ ॥

केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः ।

विराटो द्रुपदश्चैव शिखण्डी च महारथः ॥ ०४४ ॥

धृष्टकेतुश्च बलवान्कुन्तिभोजश्च मारिष ।
नकुलः सहदेवश्च पाञ्चालाः सृञ्जयास्तथा ॥ ०४५ ॥

एते समाहितास्तात रक्षिष्यन्ति न संशयः ॥ ०४५ ॥

न द्रोणः सह सैन्येन कृतवर्मा च संयुगे ।
समासादयितुं शक्तो न च मां धर्षयिष्यति ॥ ०४६ ॥

धृष्टद्युम्नश्च समरे द्रोणं क्रुद्धं परंतपः ।
वारयिष्यति विक्रम्य वेलेव मकरालयम् ॥ ०४७ ॥

यत्र स्थास्यति सङ्ग्रामे पार्षतः परवीरहा ।
न द्रोणसैन्यं बलवत्क्रामेत्तत्र कथञ्चन ॥ ०४८ ॥

एष द्रोणविनाशाय समुत्पन्नो हुताशनात् ।
कवची स शरी खड्गी धन्वी च वरभूषणः ॥ ०४९ ॥

विश्रब्धो गच्छ शैनेय मा कार्षीर्मयि संभ्रमम् ।
धृष्टद्युम्नो रणे क्रुद्धो द्रोणमावारयिष्यति ॥ ०५० ॥

---

# अध्याय ०८७

सञ्जय उवाच ॥

धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः ।
पार्थाच्च भयमाशङ्कन्परित्यागान्महीपतेः ॥ ००१ ॥

अपवादं ह्यात्मनश्च लोकाद्रक्षन्विशेषतः ।
न मां भीत इति ब्रूयुरायान्तं फल्गुनं प्रति ॥ ००२ ॥

निश्चित्य बहुधैवं स सात्यकिर्युद्धदुर्मदः ।
धर्मराजमिदं वाक्यमब्रवीत्पुरुषर्षभ ॥ ००३ ॥

कृतां चेन्मन्यसे रक्षां स्वस्ति तेऽस्तु विशां पते ।
अनुयास्यामि बीभत्सुं करिष्ये वचनं तव ॥ ००४ ॥

न हि मे पाण्डवात्कश्चित्त्रिषु लोकेषु विद्यते ।
यो वै प्रियतरो राजन्सत्यमेतद्ब्रवीमि ते ॥ ००५ ॥

तस्याहं पदवीं यास्ये संदेशात्तव मानद ।
त्वत्कृते न च मे किञ्चिदकर्तव्यं कथञ्चन ॥ ००६ ॥

यथा हि मे गुरोर्वाक्यं विशिष्टं द्विपदां वर ।
तथा तवापि वचनं विशिष्टतरमेव मे ॥ ००७ ॥

प्रिये हि तव वर्तेते भ्रातरौ कृष्णपाण्डवौ ।
तयोः प्रिये स्थितं चैव विद्धि मां राजपुङ्गव ॥ ००८ ॥

तवाज्ञां शिरसा गृह्य पाण्डवार्थमहं प्रभो ।
भित्त्वेदं दुर्भिदं सैन्यं प्रयास्ये नरसत्तम ॥ ००९ ॥

द्रोणानीकं विशाम्येष क्रुद्धो झष इवार्णवम् ।
तत्र यास्यामि यत्रासौ राजन्राजा जयद्रथः ॥ ०१० ॥

यत्र सेनां समाश्रित्य भीतस्तिष्ठति पाण्डवात् ।
गुप्तो रथवरश्रेष्ठैर्द्रौणिकर्णकृपादिभिः ॥ ०११ ॥

इतस्त्रियोजनं मन्ये तमध्वानं विशां पते ।
यत्र तिष्ठति पार्थोऽसौ जयद्रथवधोद्यतः ॥ ०१२ ॥

त्रियोजनगतस्यापि तस्य यास्याम्यहं पदम् ।
आसैन्धववधाद्राजन्सुदृढेनान्तरात्मना ॥ ०१३ ॥

अनादिष्टस्तु गुरुणा को नु युध्येत मानवः ।
आदिष्टस्तु त्वया राजन्को न युध्येत मादृशः ॥ ०१४ ॥

अभिजानामि तं देशं यत्र यास्याम्यहं प्रभो ॥ ०१४ ॥

हुडशक्तिगदाप्रासखड्गचर्मर्ष्टितोमरम् ।
इष्वस्त्रवरसंबाधं क्षोभयिष्ये बलार्णवम् ॥ ०१५ ॥

यदेतत्कुञ्जरानीकं साहस्त्रमनुपश्यसि ।
कुलमञ्जनकं नाम यत्रैते वीर्यशालिनः ॥ ०१६ ॥

आस्थिता बहुभिर्म्लेच्छैर्युद्धशौण्डैः प्रहारिभिः ।
नागा मेघनिभा राजन्क्षरन्त इव तोयदाः ॥ ०१७ ॥

नैते जातु निवर्तेरन्प्रेषिता हस्तिसादिभिः ।
अन्यत्र हि वधादेषां नास्ति राजन्पराजयः ॥ ०१८ ॥

अथ यान्रथिनो राजन्समन्तादनुपश्यसि ।
एते रुक्मरथा नाम राजपुत्रा महारथाः ॥ ०१९ ॥

रथेष्वस्त्रेषु निपुणा नागेषु च विशां पते ।
धनुर्वेदे गताः पारं मुष्टियुद्धे च कोविदाः ॥ ०२० ॥

गदायुद्धविशेषज्ञा नियुद्धकुशलास्तथा ।
खड्गप्रहरणे युक्ताः संपाते चासिचर्मणोः ॥ ०२१ ॥

शूराश्च कृतविद्याश्च स्पर्धन्ते च परस्परम् ।
नित्यं च समरे राजन्विजिगीषन्ति मानवान् ॥ ०२२ ॥

कर्णेन विजिता राजन्दुःशासनमनुव्रताः ।
एतांस्तु वासुदेवोऽपि रथोदारान्प्रशंसति ॥ ०२३ ॥

सततं प्रियकामाश्च कर्णस्यैते वशे स्थिताः ।
तस्यैव वचनाद्राजन्निवृत्ताः श्वेतवाहनात् ॥ ०२४ ॥

ते न क्षता न च श्रान्ता दृढावरणकार्मुकाः ।
मदर्थं विष्ठिता नूनं धार्तराष्ट्रस्य शासनात् ॥ ०२५ ॥

एतान्प्रमथ्य सङ्ग्रामे प्रियार्थं तव कौरव ।
प्रयास्यामि ततः पश्चात्पदवीं सव्यसाचिनः ॥ ०२६ ॥

यांस्त्वेतानपरान्राजन्नागान्सप्तशतानि च ।
प्रेक्षसे वर्मसंछन्नान्किरातैः समधिष्ठितान् ॥ ०२७ ॥

किरातराजो यान्प्रादाद्गृहीतः सव्यसाचिना ।
स्वलङ्कृतांस्तथा प्रेष्यानिच्छञ्जीवितमात्मनः ॥ ०२८ ॥

आसन्नेते पुरा राजंस्तव कर्मकरा दृढम् ।
त्वामेवाद्य युयुत्सन्ते पश्य कालस्य पर्ययम् ॥ ०२९ ॥

तेषामेते महामात्राः किराता युद्धदुर्मदाः ।
हस्तिशिक्षाविदश्चैव सर्वे चैवाग्नियोनयः ॥ ०३० ॥

एते विनिर्जिताः सर्वे सङ्ग्रामे सव्यसाचिना ।
मदर्थमद्य संयत्ता दुर्योधनवशानुगाः ॥ ०३१ ॥

एतान्भित्त्वा शरै राजन्किरातान्युद्धदुर्मदान् ।
सैन्धवस्य वधे युक्तमनुयास्यामि पाण्डवम् ॥ ०३२ ॥

ये त्वेते सुमहानागा अञ्जनस्य कुलोद्भवाः ।
कर्कशाश्च विनीताश्च प्रभिन्नकरटामुखाः ॥ ०३३ ॥

जाम्बूनदमयैः सर्वैर्वर्मभिः सुविभूषिताः ।
लब्धलक्ष्या रणे राजन्नैरावणसमा युधि ॥ ०३४ ॥

उत्तरात्पर्वतादेते तीक्ष्णैर्दस्युभिरास्थिताः ।
कर्कशैः प्रवरैर्योधैः कार्ष्णायसतनुच्छदैः ॥ ०३५ ॥

सन्ति गोयोनयश्चात्र सन्ति वानरयोनयः ।
अनेकयोनयश्चान्ये तथा मानुषयोनयः ॥ ०३६ ॥

अनीकमसतामेतद्धूमवर्णमुदीर्यते ।
म्लेच्छानां पापकर्तॄणां हिमवद्दुर्गवासिनाम् ॥ ०३७ ॥

एतद्दुर्योधनो लब्ध्वा समग्रं नागमण्डलम् ।
कृपं च सौमदत्तिं च द्रोणं च रथिनां वरम् ॥ ०३८ ॥

सिन्धुराजं तथा कर्णमवमन्यत पाण्डवान् ।
कृतार्थमथ चात्मानं मन्यते कालचोदितः ॥ ०३९ ॥

ते च सर्वेऽनुसंप्राप्ता मम नाराचगोचरम् ।
न विमोक्ष्यन्ति कौन्तेय यद्यपि स्युर्मनोजवाः ॥ ०४० ॥

तेन संभाविता नित्यं परवीर्योपजीविना ।
विनाशमुपयास्यन्ति मच्छरौघनिपीडिताः ॥ ०४१ ॥

ये त्वेते रथिनो राजन्दृश्यन्ते काञ्चनध्वजाः ।

एते दुर्वारणा नाम काम्बोजा यदि ते श्रुताः ॥ ०४२ ॥

शूराश्च कृतविद्याश्च धनुर्वेदे च निष्ठिताः ।
संहताश्च भृशं ह्येते अन्योन्यस्य हितैषिणः ॥ ०४३ ॥

अक्षौहिण्यश्च संरब्धा धार्तराष्ट्रस्य भारत ।
यत्ता मदर्थं तिष्ठन्ति कुरुवीराभिरक्षिताः ॥ ०४४ ॥

अप्रमत्ता महाराज मामेव प्रत्युपस्थिताः ।
तांस्त्वहं प्रमथिष्यामि तृणानीव हुताशनः ॥ ०४५ ॥

तस्मात्सर्वानुपासङ्गान्सर्वोपकरणानि च ।
रथे कुर्वन्तु मे राजन्यथावद्रथकल्पकाः ॥ ०४६ ॥

अस्मिंस्तु खलु सङ्ग्रामे ग्राह्यं विविधमायुधम् ।
यथोपदिष्टमाचार्यैः कार्यः पञ्चगुणो रथः ॥ ०४७ ॥

काम्बोजैर्हि समेष्यामि क्रुद्धैराशीविषोपमैः ।
नानाशस्त्रसमावापैर्विविधायुधयोधिभिः ॥ ०४८ ॥

किरातैश्च समेष्यामि विषकल्पैः प्रहारिभिः ।
लालितैः सततं राज्ञा दुर्योधनहितैषिभिः ॥ ०४९ ॥

शकैश्चापि समेष्यामि शक्रतुल्यपराक्रमैः ।
अग्निकल्पैर्दुराधर्षैः प्रदीप्तैरिव पावकैः ॥ ०५० ॥

तथान्यैर्विविधैर्योधैः कालकल्पैर्दुरासदैः ।
समेष्यामि रणे राजन्बहुभिर्युद्धदुर्मदैः ॥ ०५१ ॥

तस्माद्वै वाजिनो मुख्या विश्रान्ताः शुभलक्षणाः ।
उपावृत्ताश्च पीताश्च पुनर्युज्यन्तु मे रथे ॥ ०५२ ॥

तस्य सर्वानुपासङ्गान्सर्वोपकरणानि च ।
रथे प्रास्थापयद्राजा शस्त्राणि विविधानि च ॥ ०५३ ॥

ततस्तान्सर्वतो मुक्त्वा सदश्वांश्चतुरो जनाः ।
रसवत्पाययामासुः पानं मदसमीरिणम् ॥ ०५४ ॥

पीतोपवृत्तान्स्नातांश्च जग्धान्नान्समलङ्कृतान् ।
विनीतशल्यांस्तुरगांश्चतुरो हेममालिनः ॥ ०५५ ॥

तान्यत्तान्रुक्मवर्णाभान्विनीताञ्शीघ्रगामिनः ।
संहृष्टमनसोऽव्यग्रान्विधिवत्कल्पिते रथे ॥ ०५६ ॥

महाध्वजेन सिंहेन हेमकेसरमालिना ।
संवृते केतनैर्हैमैर्मणिविद्रुमचित्रितैः ॥ ०५७ ॥

पाण्डुराभ्रप्रकाशाभिः पताकाभिरलङ्कृते ॥ ०५७ ॥

हेमदण्डोच्छ्रितच्छत्रे बहुशस्त्रपरिच्छदे ।
योजयामास विधिवद्धेमभाण्डविभूषितान् ॥ ०५८ ॥

दारुकस्यानुजो भ्राता सूतस्तस्य प्रियः सखा ।
न्यवेदयद्रथं युक्तं वासवस्येव मातलिः ॥ ०५९ ॥

ततः स्नातः शुचिर्भूत्वा कृतकौतुकमङ्गलः ।
स्नातकानां सहस्रस्य स्वर्णनिष्कानदापयत् ॥ ०६० ॥

आशीर्वादैः परिष्वक्तः सात्यकिः श्रीमतां वरः ॥ ०६० ॥

ततः स मधुपर्कार्हः पीत्वा कैलावतं मधु ।
लोहिताक्षो बभौ तत्र मदविह्वललोचनः ॥ ०६१ ॥

आलभ्य वीरकांस्यं च हर्षेण महतान्वितः ।
द्विगुणीकृततेजा हि प्रज्वलन्निव पावकः ॥ ०६२ ॥

उत्सङ्गे धनुरादाय सशरं रथिनां वरः ॥ ०६२ ॥

कृतस्वस्त्ययनो विप्रैः कवची समलङ्कृतः ।
लाजैर्गन्धैस्तथा माल्यैः कन्याभिश्चाभिनन्दितः ॥ ०६३ ॥

युधिष्ठिरस्य चरणावभिवाद्य कृताञ्जलिः ।
तेन मूर्धन्युपाघ्रात आरुरोह महारथम् ॥ ०६४ ॥

ततस्ते वाजिनो हृष्टाः सुपुष्टा वातरंहसः ।
अजय्या जैत्रमूहुस्तं विकुर्वन्तः स्म सैन्धवाः ॥ ०६५ ॥

अथ हर्षपरीताङ्गः सात्यकिर्भीममब्रवीत् ।
त्वं भीम रक्ष राजानमेतत्कार्यतमं हि ते ॥ ०६६ ॥

अहं भित्त्वा प्रवेक्ष्यामि कालपक्कमिदं बलम् ।
आयत्यां च तदात्वे च श्रेयो राज्ञोऽभिरक्षणम् ॥ ०६७ ॥

जानीषे मम वीर्यं त्वं तव चाहमरिंदम ।
तस्माद्भीम निवर्तस्व मम चेदिच्छसि प्रियम् ॥ ०६८ ॥

तथोक्तः सात्यकिं प्राह व्रज त्वं कार्यसिद्धये ।
अहं राज्ञः करिष्यामि रक्षां पुरुषसत्तम ॥ ०६९ ॥

एवमुक्तः प्रत्युवाच भीमसेनं स माधवः ।
गच्छ गच्छ द्रुतं पार्थ ध्रुवोऽद्य विजयो मम ॥ ०७० ॥

यन्मे स्निग्धोऽनुरक्तश्च त्वमद्य वशगः स्थितः ।

निमित्तानि च धन्यानि यथा भीम वदन्ति मे ॥ ०७१ ॥

निहते सैन्धवे पापे पाण्डवेन महात्मना ।
परिष्वजिष्ये राजानं धर्मात्मानं न संशयः ॥ ०७२ ॥

एतावदुक्त्वा भीमं तु विसृज्य च महामनाः ।
संप्रैक्षत्तावकं सैन्यं व्याघ्रो मृगगणानिव ॥ ०७३ ॥

तं दृष्ट्वा प्रविविक्षन्तं सैन्यं तव जनाधिप ।
भूय एवाभवन्मूढं सुभृशं चाप्यकम्पत ॥ ०७४ ॥

ततः प्रयातः सहसा सैन्यं तव स सात्यकिः ।
दिदृक्षुरर्जुनं राजन्धर्मराजस्य शासनात् ॥ ०७५ ॥

---

# अध्याय ०८८

सञ्जय उवाच ॥

प्रयाते तव सैन्यं तु युयुधाने युयुत्सया ।
धर्मराजो महाराज स्वेनानीकेन संवृतः ॥ ००१ ॥

प्रायाद्द्रोणरथप्रेप्सुर्युयुधानस्य पृष्ठतः ॥ ००१ ॥

ततः पाञ्चालराजस्य पुत्रः समरदुर्मदः ।
प्राक्रोशत्पाण्डवानीके वसुदानश्च पार्थिवः ॥ ००२ ॥

आगच्छत प्रहरत द्रुतं विपरिधावत ।

यथा सुखेन गच्छेत सात्यकिर्युद्धदुर्मदः ॥ ००३ ॥

महारथा हि बहवो यतिष्यन्त्यस्य निर्जये ।
इति ब्रुवन्तो वेगेन समापेतुर्बलं तव ॥ ००४ ॥

वयं प्रतिजिगीषन्तस्तत्र तान्समभिद्रुताः ।
ततः शब्दो महानासीद्युयुधानरथं प्रति ॥ ००५ ॥

प्रकम्प्यमाना महती तव पुत्रस्य वाहिनी ।
सात्वतेन महाराज शतधाभिव्यदीर्यत ॥ ००६ ॥

तस्यां विदीर्यमाणायां शिनेः पौत्रो महारथः ।
सप्त वीरान्महेष्वासानग्रानीके व्यपोथयत् ॥ ००७ ॥

ते भीता मृद्यमानाश्च प्रमृष्टा दीर्घबाहुना ।
आयोधनं जहुर्वीरा दृष्ट्वा तमतिमानुषम् ॥ ००८ ॥

रथैर्विमथिताक्षैश्च भग्ननीडैश्च मारिष ।
चक्रैर्विमथितैश्छिन्नैर्ध्वजैश्च विनिपातितैः ॥ ००९ ॥

अनुकर्षैः पताकाभिः शिरस्त्राणैः सकाञ्चनैः ।
बाहुभिश्चन्दनादिग्धैः साङ्गदैश्च विशां पते ॥ ०१० ॥

हस्तिहस्तोपमैश्चापि भुजगाभोगसंनिभैः ।
ऊरुभिः पृथिवी छन्ना मनुजानां नरोत्तम ॥ ०११ ॥

शशाङ्कसंनिकाशैश्च वदनैश्चारुकुण्डलैः ।
पतितैर्वृषभाक्षाणां बभौ भारत मेदिनी ॥ ०१२ ॥

गजैश्च बहुधा छिन्नैः शयानैः पर्वतोपमैः ।
रराजातिभृशं भूमिर्विकीर्णैरिव पर्वतैः ॥ ०१३ ॥

तपनीयमयैर्योक्त्रैर्मुक्ताजालविभूषितैः ।
उरश्छदैर्विचित्रैश्च व्यशोभन्त तुरङ्गमाः ॥ ०१४ ॥

गतसत्त्वा महीं प्राप्य प्रमृष्टा दीर्घबाहुना ॥ ०१४ ॥

नानाविधानि सैन्यानि तव हत्वा तु सात्वतः ।
प्रविष्टस्तावकं सैन्यं द्रावयित्वा चमूं भृशम् ॥ ०१५ ॥

ततस्तेनैव मार्गेण येन यातो धनञ्जयः ।
इयेष सात्यकिर्गन्तुं ततो द्रोणेन वारितः ॥ ०१६ ॥

भरद्वाजं समासाद्य युयुधानस्तु मारिष ।
नाभ्यवर्तत सङ्क्रुद्धो वेलामिव जलाशयः ॥ ०१७ ॥

निवार्य तु रणे द्रोणो युयुधानं महारथम् ।
विव्याध निशितैर्बाणैः पञ्चभिर्मर्मभेदिभिः ॥ ०१८ ॥

सात्यकिस्तु रणे द्रोणं राजन्विव्याध सप्तभिः ।
हेमपुङ्खैः शिलाधौतैः कङ्कबर्हिणवाजितैः ॥ ०१९ ॥

तं षड्भिः सायकैर्द्रोणः साश्वयन्तारमार्दयत् ।
स तं न ममृषे द्रोणं युयुधानो महारथः ॥ ०२० ॥

सिंहनादं ततः कृत्वा द्रोणं विव्याध सात्यकिः ।
दशभिः सायकैश्चान्यैः षड्भिरष्टाभिरेव च ॥ ०२१ ॥

युयुधानः पुनर्द्रोणं विव्याध दशभिः शरैः ।
एकेन सारथिं चास्य चतुर्भिश्चतुरो हयान् ॥ ०२२ ॥

ध्वजमेकेन बाणेन विव्याध युधि मारिष ॥ ०२२ ॥

तं द्रोणः साश्वयन्तारं सरथध्वजमाशुगैः ।
त्वरन्प्राच्छादयद्बाणैः शलभानामिव व्रजैः ॥ ०२३ ॥

तथैव युयुधानोऽपि द्रोणं बहुभिराशुगैः ।
प्राच्छादयदसंभ्रान्तस्ततो द्रोण उवाच ह ॥ ०२४ ॥

तवाचार्यो रणं हित्वा गतः कापुरुषो यथा ।
युध्यमानं हि मां हित्वा प्रदक्षिणमवर्तत ॥ ०२५ ॥

त्वं हि मे युध्यतो नाद्य जीवन्मोक्ष्यसि माधव ।
यदि मां त्वं रणे हित्वा न यास्याचार्यवद्द्रुतम् ॥ ०२६ ॥

सात्यकिरुवाच ॥

धनञ्जयस्य पदवीं धर्मराजस्य शासनात् ।
गच्छामि स्वस्ति ते ब्रह्मन्न मे कालात्ययो भवेत् ॥ ०२७ ॥

सञ्जय उवाच ॥

एतावदुक्त्वा शैनेय आचार्यं परिवर्जयन् ।
प्रयातः सहसा राजन्सारथिं चेदमब्रवीत् ॥ ०२८ ॥

द्रोणः करिष्यते यत्नं सर्वथा मम वारणे ।
यत्तो याहि रणे सूत श‍ृणु चेदं वचः परम् ॥ ०२९ ॥

एतदालोक्यते सैन्यमावन्त्यानां महाप्रभम् ।
अस्यानन्तरतस्त्वेतद्दाक्षिणात्यं महाबलम् ॥ ०३० ॥

तदनन्तरमेतच्च बाह्लिकानां बलं महत् ।
बाह्लिकाभ्याशतो युक्तं कर्णस्यापि महद्बलम् ॥ ०३१ ॥

अन्योन्येन हि सैन्यानि भिन्नान्येतानि सारथे ।
अन्योन्यं समुपाश्रित्य न त्यक्ष्यन्ति रणाजिरम्  ॥ ०३२  ॥

एतदन्तरमासाद्य चोदयाश्वान्प्रहृष्टवत् ।
मध्यमं जवमास्थाय वह मामत्र सारथे  ॥ ०३३  ॥

बाह्लिका यत्र दृश्यन्ते नानाप्रहरणोद्यताः ।
दाक्षिणात्याश्च बहवः सूतपुत्रपुरोगमाः  ॥ ०३४  ॥

हस्त्यश्वरथसंबाधं यच्चानीकं विलोक्यते ।
नानादेशसमुत्थैश्च पदातिभिरधिष्ठितम्  ॥ ०३५  ॥

एतावदुक्त्वा यन्तारं ब्रह्माणं परिवर्जयन् ।
स व्यतीयाय यत्रोग्रं कर्णस्य सुमहद्बलम्  ॥ ०३६  ॥

तं द्रोणोऽनुययौ क्रुद्धो विकिरन्विशिखान्बहून् ।
युयुधानं महाबाहुं गच्छन्तमनिवर्तिनम्  ॥ ०३७  ॥

कर्णस्य सैन्यं सुमहदभिहत्य शितैः शरैः ।
प्राविशद्भारतीं सेनामपर्यन्तां स सात्यकिः  ॥ ०३८  ॥

प्रविष्टे युयुधाने तु सैनिकेषु द्रुतेषु च ।
अमर्षी कृतवर्मा तु सात्यकिं पर्यवारयत्  ॥ ०३९  ॥

तमापतन्तं विशिखैः षड्भिराहत्य सात्यकिः ।
चतुर्भिश्चतुरोऽस्याश्वानाजघानाशु वीर्यवान्  ॥ ०४०  ॥

ततः पुनः षोडशभिर्नतपर्वभिराशुगैः ।
सात्यकिः कृतवर्माणं प्रत्यविध्यत्स्तनान्तरे  ॥ ०४१  ॥

स तुद्यमानो विशिखैर्बहुभिस्तिग्मतेजनैः ।
सात्वतेन महाराज कृतवर्मा न चक्षमे ॥ ०४२ ॥

स वत्सदन्तं संधाय जिह्मगानलसंनिभम् ।
आकृष्य राजन्नाकर्णाद्विव्याधोरसि सात्यकिम् ॥ ०४३ ॥

स तस्य देहावरणं भित्त्वा देहं च सायकः ।
सपत्रपुङ्खः पृथिवीं विवेश रुधिरोक्षितः ॥ ०४४ ॥

अथास्य बहुभिर्बाणैरच्छिनत्परमास्त्रवित् ।
समार्गणगुणं राजन्कृतवर्मा शरासनम् ॥ ०४५ ॥

विव्याध च रणे राजन्सात्यकिं सत्यविक्रमम् ।
दशभिर्विशिखैस्तीक्ष्णैरभिक्रुद्धः स्तनान्तरे ॥ ०४६ ॥

ततः प्रशीर्णे धनुषि शक्त्या शक्तिमतां वरः ।
अभ्यहन्दक्षिणं बाहुं सात्यकिः कृतवर्मणः ॥ ०४७ ॥

ततोऽन्यत्सुदृढं वीरो धनुरादाय सात्यकिः ।
व्यसृजद्विशिखांस्तूर्णं शतशोऽथ सहस्रशः ॥ ०४८ ॥

सरथं कृतवर्माणं समन्तात्पर्यवाकिरत् ।
छादयित्वा रणेऽत्यर्थं हार्दिक्यं तु स सात्यकिः ॥ ०४९ ॥

अथास्य भल्लेन शिरः सारथेः समकृन्तत ।
स पपात हतः सूतो हार्दिक्यस्य महारथात् ॥ ०५० ॥

ततस्ते यन्तरि हते प्राद्रवंस्तुरगा भृशम् ॥ ०५० ॥

अथ भोजस्त्वसंभ्रान्तो निगृह्य तुरगान्स्वयम् ।
तस्थौ शरधनुष्पाणिस्तत्सैन्यान्यभ्यपूजयन् ॥ ०५१ ॥

स मुहूर्तमिवाश्वस्य सदश्वान्समचोदयत् ।
व्यपेतभीरमित्राणामावहत्सुमहद्भयम् ॥ ०५२ ॥

सात्यकिश्चाभ्यगात्तस्मात्स तु भीममुपाद्रवत् ॥ ०५२ ॥

युयुधानोऽपि राजेन्द्र द्रोणानीकाद्विनिःसृतः ।
प्रययौ त्वरितस्तूर्णं काम्बोजानां महाचमूम् ॥ ०५३ ॥

स तत्र बहुभिः शूरैः संनिरुद्धो महारथैः ।
न चचाल तदा राजन्सात्यकिः सत्यविक्रमः ॥ ०५४ ॥

संधाय च चमूं द्रोणो भोजे भारं निवेश्य च ।
अन्वधावद्रणे यत्तो युयुधानं युयुत्सया ॥ ०५५ ॥

तथा तमनुधावन्तं युयुधानस्य पृष्ठतः ।
न्यवारयन्त सङ्क्रुद्धाः पाण्डुसैन्ये बृहत्तमाः ॥ ०५६ ॥

समासाद्य तु हार्दिक्यं रथानां प्रवरं रथम् ।
पाञ्चाला विगतोत्साहा भीमसेनपुरोगमाः ॥ ०५७ ॥

विक्रम्य वारिता राजन्वीरेण कृतवर्मणा ॥ ०५७ ॥

यतमानांस्तु तान्सर्वानीषद्विगतचेतसः ।
अभितस्ताञ्शरौघेण क्लान्तवाहानवारयत् ॥ ०५८ ॥

निगृहीतास्तु भोजेन भोजानीकेप्सवो रणे ।
अतिष्ठन्नार्यवद्वीराः प्रार्थयन्तो महद्यशः ॥ ०५९ ॥

# अध्याय ०८९

धृतराष्ट्र उवाच ॥

एवं बहुविधं सैन्यमेवं प्रविचितं वरम् ।
व्यूढमेवं यथान्यायमेवं बहु च सञ्जय ॥ ००१ ॥

नित्यं पूजितमस्माभिरभिकामं च नः सदा ।
प्रौढमत्यद्भुताकारं पुरस्ताद्दृढविक्रमम् ॥ ००२ ॥

नातिवृद्धमबालं च न कृशं नातिपीवरम् ।
लघुवृत्तायतप्राणं सारगात्रमनामयम् ॥ ००३ ॥

आत्तसंनाहसंपन्नं बहुशस्त्रपरिच्छदम् ।
शस्त्रग्रहणविद्यासु बह्वीषु परिनिष्ठितम् ॥ ००४ ॥

आरोहे पर्यवस्कन्दे सरणे सान्तरप्लुते ।
सम्यक्प्रहरणे याने व्यपयाने च कोविदम् ॥ ००५ ॥

नागेष्वश्वेषु बहुशो रथेषु च परीक्षितम् ।
परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ॥ ००६ ॥

न गोष्ठ्या नोपचारेण न संबन्धनिमित्ततः ।
नानाहूतो न ह्यभृतो मम सैन्ये बभूव ह ॥ ००७ ॥

कुलीनार्यजनोपेतं तुष्टपुष्टमनुद्धतम् ।
कृतमानोपकारं च यशस्वि च मनस्वि च ॥ ००८ ॥

सचिवैश्चापरैर्मुख्यैर्बहुभिर्मुख्यकर्मभिः ।
लोकपालोपमैस्तात पालितं नरसत्तमैः ॥ ००९ ॥

बहुभिः पार्थिवैर्गुप्तमस्मत्प्रियचिकीर्षुभिः ।
अस्मानभिसृतैः कामात्सबलैः सपदानुगैः ॥ ०१० ॥

महोदधिमिवापूर्णमापगाभिः समन्ततः ।
अपक्षैः पक्षिसङ्काशै रथैरश्वैश्च संवृतम् ॥ ०११ ॥

योधाक्षय्यजलं भीमं वाहनोर्मितरङ्गिणम् ।
क्षेपण्यसिगदाशक्तिशरप्रासझषाकुलम् ॥ ०१२ ॥

ध्वजभूषणसंबाधं रत्नपट्टेन सञ्चितम् ।
वाहनैरपि धावद्भिर्वायुवेगविकम्पितम् ॥ ०१३ ॥

द्रोणगम्भीरपातालं कृतवर्ममहाह्रदम् ।
जलसंधमहाग्राहं कर्णचन्द्रोदयोद्धतम् ॥ ०१४ ॥

गते सैन्यार्णवं भित्त्वा तरसा पाण्डवर्षभे ।
सञ्जयैकरथेनैव युयुधाने च मामकम् ॥ ०१५ ॥

तत्र शेषं न पश्यामि प्रविष्टे सव्यसाचिनि ।
सात्वते च रथोदारे मम सैन्यस्य सञ्जय ॥ ०१६ ॥

तौ तत्र समतिक्रान्तौ दृष्ट्वाभीतौ तरस्विनौ ।
सिन्धुराजं च संप्रेक्ष्य गाण्डीवस्येषुगोचरे ॥ ०१७ ॥

किं तदा कुरवः कृत्यं विदधुः कालचोदिताः ।
दारुणैकायने काले कथं वा प्रतिपेदिरे ॥ ०१८ ॥

ग्रस्तान्हि कौरवान्मन्ये मृत्युना तात सङ्गतान् ।
विक्रमो हि रणे तेषां न तथा दृश्यतेऽद्य वै ॥ ०१९ ॥

अक्षतौ संयुगे तत्र प्रविष्टौ कृष्णपाण्डवौ ।

न च वारयिता कश्चित्तयोरस्तीह सञ्जय ॥ ०२० ॥

भृताश्च बहवो योधाः परीक्ष्यैव महारथाः ।
वेतनेन यथायोग्यं प्रियवादेन चापरे ॥ ०२१ ॥

अकारणभृतस्तात मम सैन्ये न विद्यते ।
कर्मणा ह्यनुरूपेण लभ्यते भक्तवेतनम् ॥ ०२२ ॥

न च योधोऽभवत्कश्चिन्मम सैन्ये तु सञ्जय ।
अल्पदानभृतस्तात न कुप्यभृतको नरः ॥ ०२३ ॥

पूजिता हि यथाशक्त्या दानमानासनैर्मया ।
तथा पुत्रैश्च मे तात ज्ञातिभिश्च सबान्धवैः ॥ ०२४ ॥

ते च प्राप्यैव सङ्ग्रामे निर्जिताः सव्यसाचिना ।
शैनेयेन परामृष्टाः किमन्यद्भागधेयतः ॥ ०२५ ॥

रक्ष्यते यश्च सङ्ग्रामे ये च सञ्जय रक्षिणः ।
एकः साधारणः पन्था रक्ष्यस्य सह रक्षिभिः ॥ ०२६ ॥

अर्जुनं समरे दृष्ट्वा सैन्धवस्याग्रतः स्थितम् ।
पुत्रो मम भृशं मूढः किं कार्यं प्रत्यपद्यत ॥ ०२७ ॥

सात्यकिं च रणे दृष्ट्वा प्रविशन्तमभीतवत् ।
किं नु दुर्योधनः कृत्यं प्राप्तकालममन्यत ॥ ०२८ ॥

सर्वशस्त्रातिगौ सेनां प्रविष्टौ रथसत्तमौ ।
दृष्ट्वा कां वै धृतिं युद्धे प्रत्यपद्यन्त मामकाः ॥ ०२९ ॥

दृष्ट्वा कृष्णं तु दाशार्हमर्जुनार्थे व्यवस्थितम् ।
शिनीनामृषभं चैव मन्ये शोचन्ति पुत्रकाः ॥ ०३० ॥

दृष्ट्वा सेनां व्यतिक्रान्तां सात्वतेनार्जुनेन च ।
पलायमानांश्च कुरून्मन्ये शोचन्ति पुत्रकाः ॥ ०३१ ॥

विद्रुतान्रथिनो दृष्ट्वा निरुत्साहान्द्विषज्जये ।
पलायने कृतोत्साहान्मन्ये शोचन्ति पुत्रकाः ॥ ०३२ ॥

शून्यान्कृतान्रथोपस्थान्सात्वतेनार्जुनेन च ।
हतांश्च योधान्संदृश्य मन्ये शोचन्ति पुत्रकाः ॥ ०३३ ॥

व्यश्वनागरथान्दृष्ट्वा तत्र वीरान्सहस्रशः ।
धावमानान्रणे व्यग्रान्मन्ये शोचन्ति पुत्रकाः ॥ ०३४ ॥

विवीरांश्च कृतानश्वान्विरथांश्च कृतान्नरान् ।
तत्र सात्यकिपार्थाभ्यां मन्ये शोचन्ति पुत्रकाः ॥ ०३५ ॥

पत्तिसंघान्रणे दृष्ट्वा धावमानांश्च सर्वशः ।
निराशा विजये सर्वे मन्ये शोचन्ति पुत्रकाः ॥ ०३६ ॥

द्रोणस्य समतिक्रान्तावनीकमपराजितौ ।
क्षणेन दृष्ट्वा तौ वीरौ मन्ये शोचन्ति पुत्रकाः ॥ ०३७ ॥

संमूढोऽस्मि भृशं तात श्रुत्वा कृष्णधनञ्जयौ ।
प्रविष्टौ मामकं सैन्यं सात्वतेन सहाच्युतौ ॥ ०३८ ॥

तस्मिन्प्रविष्टे पृतनां शिनीनां प्रवरे रथे ।
भोजानीकं व्यतिक्रान्ते कथमासन्हि कौरवाः ॥ ०३९ ॥

तथा द्रोणेन समरे निगृहीतेषु पाण्डुषु ।
कथं युद्धमभूत्तत्र तन्ममाचक्ष्व सञ्जय ॥ ०४० ॥

द्रोणो हि बलवाञ्शूरः कृतास्त्रो दृढविक्रमः ।
पाञ्चालास्तं महेष्वासं प्रत्ययुध्यन्कथं रणे ॥ ०४१ ॥

बद्धवैरास्तथा द्रोणे धर्मराजजयैषिणः ।
भारद्वाजस्तथा तेषु कृतवैरो महारथः ॥ ०४२ ॥

अर्जुनश्चापि यच्चक्रे सिन्धुराजवधं प्रति ।
तन्मे सर्वं समाचक्ष्व कुशलो ह्यसि सञ्जय ॥ ०४३ ॥

---

# अध्याय ०९०

सञ्जय उवाच ॥

आत्मापराधात्संभूतं व्यसनं भरतर्षभ ।
प्राप्य प्राकृतवद्वीर न त्वं शोचितुमर्हसि ॥ ००१ ॥

तव निर्गुणतां ज्ञात्वा पक्षपातं सुतेषु च ।
द्वैधीभावं तथा धर्मे पाण्डवेषु च मत्सरम् ॥ ००२ ॥

आर्तप्रलापांश्च बहून्मनुजाधिपसत्तम ॥ ००२ ॥

सर्वलोकस्य तत्त्वज्ञः सर्वलोकगुरुः प्रभुः ।
वासुदेवस्ततो युद्धं कुरूणामकरोन्महत् ॥ ००३ ॥

आत्मापराधात्सुमहान्प्राप्तस्ते विपुलः क्षयः ।
न हि ते सुकृतं किञ्चिदादौ मध्ये च भारत ॥ ००४ ॥

दृश्यते पृष्ठतश्चैव त्वन्मूलो हि पराजयः ॥ ००४ ॥

तस्मादद्य स्थिरो भूत्वा ज्ञात्वा लोकस्य निर्णयम् ।
श्रृणु युद्धं यथा वृत्तं घोरं देवासुरोपमम् ॥ ००५ ॥

प्रविष्टे तव सैन्यं तु शैनेये सत्यविक्रमे ।
भीमसेनमुखाः पार्थाः प्रतीयुर्वाहिनीं तव ॥ ००६ ॥

आगच्छतस्तान्सहसा क्रुद्धरूपान्सहानुगान् ।
दधारैको रणे पाण्डून्कृतवर्मा महारथः ॥ ००७ ॥

यथोद्वृत्तं धारयते वेला वै सलिलार्णवम् ।
पाण्डुसैन्यं तथा संख्ये हार्दिक्यः समवारयत् ॥ ००८ ॥

तत्राद्भुतममन्यन्त हार्दिक्यस्य पराक्रमम् ।
यदेनं सहिताः पार्था नातिचक्रमुराहवे ॥ ००९ ॥

ततो भीमस्त्रिभिर्विद्ध्वा कृतवर्माणमायसैः ।
शङ्खं दध्मौ महाबाहुर्हर्षयन्सर्वपाण्डवान् ॥ ०१० ॥

सहदेवस्तु विंशत्या धर्मराजश्च पञ्चभिः ।
शतेन नकुलश्चापि हार्दिक्यं समविध्यत ॥ ०११ ॥

द्रौपदेयास्त्रिसप्तत्या सप्तभिश्च घटोत्कचः ।
धृष्टद्युम्नस्त्रिभिश्चापि कृतवर्माणमार्दयत् ॥ ०१२ ॥

विराटो द्रुपदश्चैव याज्ञसेनिश्च पञ्चभिः ॥ ०१२ ॥

शिखण्डी चापि हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः ।
पुनर्विव्याध विंशत्या सायकानां हसन्निव ॥ ०१३ ॥

कृतवर्मा ततो राजन्सर्वतस्तान्महारथान् ।

एकैकं पञ्चभिर्विद्ध्वा भीमं विव्याध सप्तभिः ॥ ०१४ ॥

धनुर्ध्वजं च संयत्तो रथाद्भूमावपातयत् ॥ ०१४ ॥

अथैनं छिन्नधन्वानं त्वरमाणो महारथः ।
आजघानोरसि क्रुद्धः सप्तत्या निशितैः शरैः ॥ ०१५ ॥

स गाढविद्धो बलवान्हार्दिक्यस्य शरोत्तमैः ।
चचाल रथमध्यस्थः क्षितिकम्पे यथाचलः ॥ ०१६ ॥

भीमसेनं तथा दृष्ट्वा धर्मराजपुरोगमाः ।
विसृजन्तः शरान्घोरान्कृतवर्माणमार्दयन् ॥ ०१७ ॥

तं तथा कोष्ठकीकृत्य रथवंशेन मारिष ।
विव्यधुः सायकैर्हृष्टा रक्षार्थं मारुतेर्मृधे ॥ ०१८ ॥

प्रतिलभ्य ततः सञ्ज्ञां भीमसेनो महाबलः ।
शक्तिं जग्राह समरे हेमदण्डामयस्मयीम् ॥ ०१९ ॥

चिक्षेप च रथात्तूर्णं कृतवर्मरथं प्रति ॥ ०१९ ॥

सा भीमभुजनिर्मुक्ता निर्मुक्तोरगसंनिभा ।
कृतवर्माणमभितः प्रजज्वाल सुदारुणा ॥ ०२० ॥

तामापतन्तीं सहसा युगान्ताग्निसमप्रभाम् ।
द्वाभ्यां शराभ्यां हार्दिक्यो निचकर्त द्विधा तदा ॥ ०२१ ॥

सा छिन्ना पतिता भूमौ शक्तिः कनकभूषणा ।
द्योतयन्ती दिशो राजन्महोल्केव दिवश्च्युता ॥ ०२२ ॥

शक्तिं विनिहतां दृष्ट्वा भीमश्चुक्रोध वै भृशम् ॥ ०२२ ॥

ततोऽन्यद्धनुरादाय वेगवत्सुमहास्वनम् ।
भीमसेनो रणे क्रुद्धो हार्दिक्यं समवारयत्  ॥ ०२३  ॥

अथैनं पञ्चभिर्बाणैराजघान स्तनान्तरे ।
भीमो भीमबलो राजंस्तव दुर्मन्त्रितेन ह  ॥ ०२४  ॥

भोजस्तु क्षतसर्वाङ्गो भीमसेनेन मारिष ।
रक्ताशोक इवोत्फुल्लो व्यभ्राजत रणाजिरे  ॥ ०२५  ॥

ततः क्रुद्धस्त्रिभिर्बाणैर्भीमसेनं हसन्निव ।
अभिहत्य दृढं युद्धे तान्सर्वान्प्रत्यविध्यत  ॥ ०२६  ॥

त्रिभिस्त्रिभिर्महेष्वासो यतमानान्महारथान् ।
तेऽपि तं प्रत्यविध्यन्त सप्तभिः सप्तभिः शरैः  ॥ ०२७  ॥

शिखण्डिनस्ततः क्रुद्धः क्षुरप्रेण महारथः ।
धनुश्चिच्छेद समरे प्रहसन्निव भारत  ॥ ०२८  ॥

शिखण्डी तु ततः क्रुद्धश्छिन्ने धनुषि सत्वरम् ।
असिं जग्राह समरे शतचन्द्रं च भास्वरम्  ॥ ०२९  ॥

भ्रामयित्वा महाचर्म चामीकरविभूषितम् ।
तमसिं प्रेषयामास कृतवर्मरथं प्रति  ॥ ०३०  ॥

स तस्य सशरं चापं छित्त्वा संख्ये महानसिः ।
अभ्यगाद्धरणीं राजंश्च्युतं ज्योतिरिवाम्बरात्  ॥ ०३१  ॥

एतस्मिन्नेव काले तु त्वरमाणा महारथाः ।
विव्यधुः सायकैर्गाढं कृतवर्माणमाहवे  ॥ ०३२  ॥

अथान्यद्धनुरादाय त्यक्त्वा तच्च महद्धनुः ।
विशीर्णं भरतश्रेष्ठ हार्दिक्यः परवीरहा ॥ ०३३ ॥

विव्याध पाण्डवान्युद्धे त्रिभिस्त्रिभिरजिह्मगैः ।
शिखण्डिनं च विव्याध त्रिभिः पञ्चभिरेव च ॥ ०३४ ॥

धनुरन्यत्समादाय शिखण्डी तु महायशाः ।
अवारयत्कूर्मनखैराशुगैर्हृदिकात्मजम् ॥ ०३५ ॥

ततः क्रुद्धो रणे राजन्हृदिकस्यात्मसंभवः ।
अभिदुद्राव वेगेन याज्ञसेनिं महारथम् ॥ ०३६ ॥

भीष्मस्य समरे राजन्मृत्योर्हेतुं महात्मनः ।
विदर्शयन्बलं शूरः शार्दूल इव कुञ्जरम् ॥ ०३७ ॥

तौ दिशागजसङ्काशौ ज्वलिताविव पावकौ ।
समासेदतुरन्योन्यं शरसंघैररिंदमौ ॥ ०३८ ॥

विधुन्वानौ धनुःश्रेष्ठे संदधानौ च सायकान् ।
विसृजन्तौ च शतशो गभस्तीनिव भास्करौ ॥ ०३९ ॥

तापयन्तौ शरैस्तीक्ष्णैरन्योन्यं तौ महारथौ ।
युगान्तप्रतिमौ वीरौ रेजतुर्भास्कराविव ॥ ०४० ॥

कृतवर्मा तु रभसं याज्ञसेनिं महारथम् ।
विद्ध्वेषूणां त्रिसप्तत्या पुनर्विव्याध सप्तभिः ॥ ०४१ ॥

स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
विसृजन्सशरं चापं मूर्छयाभिपरिप्लुतः ॥ ०४२ ॥

तं विषण्णं रथे दृष्ट्वा तावका भरतर्षभ ।

हार्दिक्यं पूजयामासुर्वासांस्यादुधुवुश्च ह ॥ ०४३ ॥

शिखण्डिनं तथा ज्ञात्वा हार्दिक्यशरपीडितम् ।
अपोवाह रणाद्यन्ता त्वरमाणो महारथम् ॥ ०४४ ॥

सादितं तु रथोपस्थे दृष्ट्वा पार्थाः शिखण्डिनम् ।
परिवव्रू रथैस्तूर्णं कृतवर्माणमाहवे ॥ ०४५ ॥

तत्राद्भुतं परं चक्रे कृतवर्मा महारथः ।
यदेकः समरे पार्थान्वारयामास सानुगान् ॥ ०४६ ॥

पार्थाञ्जित्वाजयच्चेदीन्पाञ्चालान्सृञ्जयानपि ।
केकयांश्च महावीर्यान्कृतवर्मा महारथः ॥ ०४७ ॥

ते वध्यमानाः समरे हार्दिक्येन स्म पाण्डवाः ।
इतश्चेतश्च धावन्तो नैव चक्रुर्धृतिं रणे ॥ ०४८ ॥

जित्वा पाण्डुसुतान्युद्धे भीमसेनपुरोगमान् ।
हार्दिक्यः समरेऽतिष्ठद्विधूम इव पावकः ॥ ०४९ ॥

ते द्राव्यमाणाः समरे हार्दिक्येन महारथाः ।
विमुखाः समपद्यन्त शरवृष्टिभिरर्दिताः ॥ ०५० ॥

---

# अध्याय ०९१

सञ्जय उवाच ॥

श‍ृणुष्वैकमना राजन्यन्मां त्वं परिपृच्छसि ।
द्राव्यमाणे बले तस्मिन्हार्दिक्येन महात्मना ॥ ००१ ॥

लज्जयावनते चापि प्रहृष्टैश्चैव तावकैः ।
द्वीपो य आसीत्पाण्डूनामगाधे गाधमिच्छताम् ॥ ००२ ॥

श्रुत्वा तु निनदं भीमं तावकानां महाहवे ।
शैनेयस्त्वरितो राजन्कृतवर्माणमभ्ययात् ॥ ००३ ॥

कृतवर्मा तु हार्दिक्यः शैनेयं निशितैः शरैः ।
अवाकिरत्सुसङ्क्रुद्धस्ततोऽक्रुध्यत सात्यकिः ॥ ००४ ॥

ततः सुनिशितं भल्लं शैनेयः कृतवर्मणे ।
प्रेषयामास समरे शरांश्च चतुरोऽपरान् ॥ ००५ ॥

ते तस्य जघ्निरे वाहान्भल्लेनास्याच्छिनद्धनुः ।
पृष्ठरक्षं तथा सूतमविध्यन्निशितैः शरैः ॥ ००६ ॥

ततस्तं विरथं कृत्वा सात्यकिः सत्यविक्रमः ।
सेनामस्यार्दयामास शरैः संनतपर्वभिः ॥ ००७ ॥

साभज्यताथ पृतना शैनेयशरपीडिता ।
ततः प्रायाद्वै त्वरितः सात्यकिः सत्यविक्रमः ॥ ००८ ॥

श‍ृणु राजन्यदकरोत्तव सैन्येषु वीर्यवान् ।
अतीत्य स महाराज द्रोणानीकमहार्णवम् ॥ ००९ ॥

पराजित्य च संहृष्टः कृतवर्माणमाहवे ।
यन्तारमब्रवीच्छूरः शनैर्याहीत्यसंभ्रमम् ॥ ०१० ॥

दृष्ट्वा तु तव तत्सैन्यं रथाश्वद्विपसङ्कुलम् ।

पदातिजनसंपूर्णमब्रवीत्सारथिं पुनः ॥ ०११ ॥

यदेतन्मेघसङ्काशं द्रोणानीकस्य सव्यतः ।
सुमहत्कुञ्जरानीकं यस्य रुक्मरथो मुखम् ॥ ०१२ ॥

एते हि बहवः सूत दुर्निवार्याश्च संयुगे ।
दुर्योधनसमादिष्टा मदर्थे त्यक्तजीविताः ॥ ०१३ ॥

राजपुत्रा महेष्वासाः सर्वे विक्रान्तयोधिनः ॥ ०१३ ॥

त्रिगर्तानां रथोदाराः सुवर्णविकृतध्वजाः ।
मामेवाभिमुखा वीरा योत्स्यमाना व्यवस्थिताः ॥ ०१४ ॥

अत्र मां प्रापय क्षिप्रमश्वांश्चोदय सारथे ।
त्रिगर्तैः सह योत्स्यामि भारद्वाजस्य पश्यतः ॥ ०१५ ॥

ततः प्रायाच्छनैः सूतः सात्वतस्य मते स्थितः ।
रथेनादित्यवर्णेन भास्वरेण पताकिना ॥ ०१६ ॥

तमूहुः सारथेर्वश्या वल्गमाना हयोत्तमाः ।
वायुवेगसमाः संख्ये कुन्देन्दुरजतप्रभाः ॥ ०१७ ॥

आपतन्तं रथं तं तु शङ्खवर्णैर्हयोत्तमैः ।
परिवव्रुस्ततः शूरा गजानीकेन सर्वतः ॥ ०१८ ॥

किरन्तो विविधांस्तीक्ष्णान्सायका.ण्लघुवेधिनः ॥ ०१८ ॥

सात्वतोऽपि शितैर्बाणैर्गजानीकमयोधयत् ।
पर्वतानिव वर्षेण तपान्ते जलदो महान् ॥ ०१९ ॥

वज्राशनिसमस्पर्शैर्वध्यमानाः शरैर्गजाः ।

प्राद्रवन्रणमुत्सृज्य शिनिवीर्यसमीरितैः ॥ ०२० ॥

शीर्णदन्ता विरुधिरा भिन्नमस्तकपिण्डकाः ।
विशीर्णकर्णास्यकरा विनियन्तृपताकिनः ॥ ०२१ ॥

संभिन्नवर्मघण्टाश्च संनिकृत्तमहाध्वजाः ।
हतारोहा दिशो राजन्भेजिरे भ्रष्टकम्बलाः ॥ ०२२ ॥

रुवन्तो विविधान्रावाञ्जलदोपमनिस्वनाः ।
नाराचैर्वत्सदन्तैश्च सात्वतेन विदारिताः ॥ ०२३ ॥

तस्मिन्द्रुते गजानीके जलसंधो महारथः ।
यत्तः संप्रापयन्नागं रजताश्वरथं प्रति ॥ ०२४ ॥

रुक्मवर्णकरः शूरस्तपनीयाङ्गदः शुचिः ।
कुण्डली मुकुटी शङ्खी रक्तचन्दनरूषितः ॥ ०२५ ॥

शिरसा धारयन्दीप्तां तपनीयमयीं स्रजम् ।
उरसा धारयन्निष्कं कण्ठसूत्रं च भास्वरम् ॥ ०२६ ॥

चापं च रुक्मविकृतं विधुन्वन्गजमूर्धनि ।
अशोभत महाराज सविद्युदिव तोयदः ॥ ०२७ ॥

तमापतन्तं सहसा मागधस्य गजोत्तमम् ।
सात्यकिर्वारयामास वेलेवोद्वृत्तमर्णवम् ॥ ०२८ ॥

नागं निवारितं दृष्ट्वा शैनेयस्य शरोत्तमैः ।
अक्रुध्यत रणे राजञ्जलसंधो महाबलः ॥ ०२९ ॥

ततः क्रुद्धो महेष्वासो मार्गणैर्भारसाधनैः ।
अविध्यत शिनेः पौत्रं जलसंधो महोरसि ॥ ०३० ॥

ततोऽपरेण भल्लेन पीतेन निशितेन च ।
अस्यतो वृष्णिवीरस्य निचकर्त शरासनम्  ॥ ०३१  ॥

सात्यकिं छिन्नधन्वानं प्रहसन्निव भारत ।
अविध्यन्मागधो वीरः पञ्चभिर्निशितैः शरैः  ॥ ०३२  ॥

स विद्धो बहुभिर्बाणैर्जलसंधेन वीर्यवान् ।
नाकम्पत महाबाहुस्तदद्भुतमिवाभवत्  ॥ ०३३  ॥

अचिन्तयन्वै स शरान्नात्यर्थं संभ्रमाद्बली ।
धनुरन्यत्समादाय तिष्ठ तिष्ठेत्युवाच ह  ॥ ०३४  ॥

एतावदुक्त्वा शैनेयो जलसंधं महोरसि ।
विव्याध षष्ट्या सुभृशं शराणां प्रहसन्निव  ॥ ०३५  ॥

क्षुरप्रेण च पीतेन मुष्टिदेशे महद्धनुः ।
जलसंधस्य चिच्छेद विव्याध च त्रिभिः शरैः  ॥ ०३६  ॥

जलसंधस्तु तत्त्यक्त्वा सशरं वै शरासनम् ।
तोमरं व्यसृजत्तूर्णं सात्यकिं प्रति मारिष  ॥ ०३७  ॥

स निर्भिद्य भुजं सव्यं माधवस्य महारणे ।
अभ्यगाद्धरणीं घोरः श्वसन्निव महोरगः  ॥ ०३८  ॥

निर्भिन्ने तु भुजे सव्ये सात्यकिः सत्यविक्रमः ।
त्रिंशद्भिर्विशिखैस्तीक्ष्णैर्जलसंधमताडयत्  ॥ ०३९  ॥

प्रगृह्य तु ततः खड्गं जलसंधो महाबलः ।
आर्षभं चर्म च महच्छतचन्द्रमलङ्कृतम्  ॥ ०४०  ॥

तत आविध्य तं खड्गं सात्वतायोत्ससर्ज ह ॥ ०४० ॥

शैनेयस्य धनुश्छित्त्वा स खड्गो न्यपतन्महीम् ।
अलातचक्रवच्चैव व्यरोचत महीं गतः ॥ ०४१ ॥

अथान्यद्धनुरादाय सर्वकायावदारणम् ।
शालस्कन्धप्रतीकाशमिन्द्राशनिसमस्वनम् ॥ ०४२ ॥

विस्फार्य विव्यधे क्रुद्धो जलसंधं शरेण ह ॥ ०४२ ॥

ततः साभरणौ बाहू क्षुराभ्यां माधवोत्तमः ।
साङ्गदौ जलसंधस्य चिच्छेद प्रहसन्निव ॥ ०४३ ॥

तौ बाहू परिघप्रख्यौ पेततुर्गजसत्तमात् ।
वसुंधरधराद्भ्रष्टौ पञ्चशीर्षाविवोरगौ ॥ ०४४ ॥

ततः सुदंष्ट्रं सुहनु चारुकुण्डलमुन्नसम् ।
क्षुरेणास्य तृतीयेन शिरश्चिच्छेद सात्यकिः ॥ ०४५ ॥

तत्पातितशिरोबाहुकबन्धं भीमदर्शनम् ।
द्विरदं जलसंधस्य रुधिरेणाभ्यषिञ्चत ॥ ०४६ ॥

जलसंधं निहत्याजौ त्वरमाणस्तु सात्वतः ।
नैषादिं पातयामास गजस्कन्धाद्विशां पते ॥ ०४७ ॥

रुधिरेणावसिक्ताङ्गो जलसंधस्य कुञ्जरः ।
विलम्बमानमवहत्संश्लिष्टं परमासनम् ॥ ०४८ ॥

शरार्दितः सात्वतेन मर्दमानः स्ववाहिनीम् ।
घोरमार्तस्वरं कृत्वा विदुद्राव महागजः ॥ ०४९ ॥

हाहाकारो महानासीत्तव सैन्यस्य मारिष ।
जलसंधं हतं दृष्ट्वा वृष्णीनामृषभेण ह ॥ ०५० ॥

विमुखाश्चाभ्यधावन्त तव योधाः समन्ततः ।
पलायने कृतोत्साहा निरुत्साहा द्विषज्जये ॥ ०५१ ॥

एतस्मिन्नन्तरे राजन्द्रोणः शस्त्रभृतां वरः ।
अभ्ययाज्जवनैरश्वैर्युयुधानं महारथम् ॥ ०५२ ॥

तमुदीर्णं तथा दृष्ट्वा शैनेयं कुरुपुङ्गवाः ।
द्रोणेनैव सह क्रुद्धाः सात्यकिं पर्यवारयन् ॥ ०५३ ॥

ततः प्रववृते युद्धं कुरूणां सात्वतस्य च ।
द्रोणस्य च रणे राजन्घोरं देवासुरोपमम् ॥ ०५४ ॥

---

# अध्याय ०९२

सञ्जय उवाच ॥

ते किरन्तः शरव्रातान्सर्वे यत्ताः प्रहारिणः ।
त्वरमाणा महाराज युयुधानमयोधयन् ॥ ००१ ॥

तं द्रोणः सप्तसप्तत्या जघान निशितैः शरैः ।
दुर्मर्षणो द्वादशभिर्दुःसहो दशभिः शरैः ॥ ००२ ॥

विकर्णश्चापि निशितैस्त्रिंशद्भिः कङ्कपत्रिभिः ।
विव्याध सव्ये पार्श्वे तु स्तनाभ्यामन्तरे तथा ॥ ००३ ॥

दुर्मुखो दशभिर्बाणैस्तथा दुःशासनोऽष्टभिः ।
चित्रसेनश्च शैनेयं द्वाभ्यां विव्याध मारिष ॥ ००४ ॥

दुर्योधनश्च महता शरवर्षेण माधवम् ।
अपीडयद्रणे राजञ्शूराश्चान्ये महारथाः ॥ ००५ ॥

सर्वतः प्रतिविद्धस्तु तव पुत्रैर्महारथैः ।
तान्प्रत्यविध्यच्छैनेयः पृथक्पृथगजिह्मगैः ॥ ००६ ॥

भारद्वाजं त्रिभिर्बाणैर्दुःसहं नवभिस्तथा ।
विकर्णं पञ्चविंशत्या चित्रसेनं च सप्तभिः ॥ ००७ ॥

दुर्मर्षणं द्वादशभिश्चतुर्भिश्च विविंशतिम् ।
सत्यव्रतं च नवभिर्विजयं दशभिः शरैः ॥ ००८ ॥

ततो रुक्माङ्गदं चापं विधुन्वानो महारथः ।
अभ्ययात्सात्यकिस्तूर्णं पुत्रं तव महारथम् ॥ ००९ ॥

राजानं सर्वलोकस्य सर्वशस्त्रभृतां वरम् ।
शरैरभ्याहनद्गाढं ततो युद्धमभूत्तयोः ॥ ०१० ॥

विमुञ्चन्तौ शरांस्तीक्ष्णान्संदधानौ च सायकान् ।
अदृश्यं समरेऽन्योन्यं चक्रतुस्तौ महारथौ ॥ ०११ ॥

सात्यकिः कुरुराजेन निर्विद्धो बह्वशोभत ।
अस्रवद्रुधिरं भूरि स्वरसं चन्दनो यथा ॥ ०१२ ॥

सात्वतेन च बाणौघैर्निर्विद्धस्तनयस्तव ।
शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः ॥ ०१३ ॥

माधवस्तु रणे राजन्कुरुराजस्य धन्विनः ।

धनुश्चिच्छेद सहसा क्षुरप्रेण हसन्निव ॥ ०१४ ॥

अथैनं छिन्नधन्वानं शरैर्बहुभिराचिनोत् ॥ ०१४ ॥

निर्भिन्नश्च शरैस्तेन द्विषता क्षिप्रकारिणा ।
नामृष्यत रणे राजा शत्रोर्विजयलक्षणम् ॥ ०१५ ॥

अथान्यद्धनुरादाय हेमपृष्ठं दुरासदम् ।
विव्याध सात्यकिं तूर्णं सायकानां शतेन ह ॥ ०१६ ॥

सोऽतिविद्धो बलवता पुत्रेण तव धन्विना ।
अमर्षवशमापन्नस्तव पुत्रमपीडयत् ॥ ०१७ ॥

पीडितं नृपतिं दृष्ट्वा तव पुत्रा महारथाः ।
सात्वतं शरवर्षेण छादयामासुरञ्जसा ॥ ०१८ ॥

स छाद्यमानो बहुभिस्तव पुत्रैर्महारथैः ।
एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ॥ ०१९ ॥

दुर्योधनं च त्वरितो विव्याधाष्टभिराशुगैः ।
प्रहसंश्चास्य चिच्छेद कार्मुकं रिपुभीषणम् ॥ ०२० ॥

नागं मणिमयं चैव शरैर्ध्वजमपातयत् ।
हत्वा तु चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ॥ ०२१ ॥

सारथिं पातयामास क्षुरप्रेण महायशाः ॥ ०२१ ॥

एतस्मिन्नन्तरे चैव कुरुराजं महारथम् ।
अवाकिरच्छरैर्हृष्टो बहुभिर्मर्मभेदिभिः ॥ ०२२ ॥

स वध्यमानः समरे शैनेयस्य शरोत्तमैः ।

प्राद्रवत्सहसा राजन्पुत्रो दुर्योधनस्तव ॥ ०२३ ॥

आप्लुतश्च ततो यानं चित्रसेनस्य धन्विनः ॥ ०२३ ॥

हाहाभूतं जगच्चासीद्दृष्ट्वा राजानमाहवे ।
ग्रस्यमानं सात्यकिना खे सोममिव राहुणा ॥ ०२४ ॥

तं तु शब्दं महच्छ्रुत्वा कृतवर्मा महारथः ।
अभ्ययात्सहसा तत्र यत्रास्ते माधवः प्रभुः ॥ ०२५ ॥

विधुन्वानो धनुःश्रेष्ठं चोदयंश्चैव वाजिनः ।
भर्त्सयन्सारथिं चोग्रं याहि याहीति सत्वरः ॥ ०२६ ॥

तमापतन्तं संप्रेक्ष्य व्यादितास्यमिवान्तकम् ।
युयुधानो महाराज यन्तारमिदमब्रवीत् ॥ ०२७ ॥

कृतवर्मा रथेनैष द्रुतमापतते शरी ।
प्रत्युद्याहि रथेनैनं प्रवरं सर्वधन्विनाम् ॥ ०२८ ॥

ततः प्रजविताश्वेन विधिवत्कल्पितेन च ।
आससाद रणे भोजं प्रतिमानं धनुष्मताम् ॥ ०२९ ॥

ततः परमसङ्क्रुद्धौ ज्वलन्ताविव पावकौ ।
समेयातां नरव्याघ्रौ व्याघ्राविव तरस्विनौ ॥ ०३० ॥

कृतवर्मा तु शैनेयं षड्विंशत्या समार्पयत् ।
निशितैः सायकैस्तीक्ष्णैर्यन्तारं चास्य सप्तभिः ॥ ०३१ ॥

चतुरश्च हयोदारांश्चतुर्भिः परमेषुभिः ।
अविध्यत्साधुदान्तान्वै सैन्धवान्सात्वतस्य ह ॥ ०३२ ॥

रुक्मध्वजो रुक्मपृष्ठं महद्विस्फार्य कार्मुकम् ।
रुक्माङ्गदी रुक्मवर्मा रुक्मपुङ्खानवाकिरत् ॥ ०३३ ॥

ततोऽशीतिं शिनेः पौत्रः सायकान्कृतवर्मणे ।
प्राहिणोत्त्वरया युक्तो द्रष्टुकामो धनञ्जयम् ॥ ०३४ ॥

सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
समकम्पत दुर्धर्षः क्षितिकम्पे यथाचलः ॥ ०३५ ॥

त्रिषष्ट्या चतुरोऽस्याश्वान्सप्तभिः सारथिं शरैः ।
विव्याध निशितैस्तूर्णं सात्यकिः कृतवर्मणः ॥ ०३६ ॥

सुवर्णपुङ्खं विशिखं समाधाय स सात्यकिः ।
व्यसृजत्तं महाज्वालं सङ्क्रुद्धमिव पन्नगम् ॥ ०३७ ॥

सोऽविशत्कृतवर्माणं यमदण्डोपमः शरः ।
जाम्बूनदविचित्रं च वर्म निर्भिद्य भानुमत् ॥ ०३८ ॥

अभ्यगाद्धरणीमुग्रो रुधिरेण समुक्षितः ॥ ०३८ ॥

सञ्जातरुधिरश्चाजौ सात्वतेषुभिरर्दितः ।
प्रचलन्धनुरुत्सृज्य न्यपतत्स्यन्दनोत्तमे ॥ ०३९ ॥

स सिंहदंष्ट्रो जानुभ्यामापन्नोऽमितविक्रमः ।
शरार्दितः सात्यकिना रथोपस्थे नरर्षभः ॥ ०४० ॥

सहस्रबाहोः सदृशमक्षोभ्यमिव सागरम् ।
निवार्य कृतवर्माणं सात्यकिः प्रययौ ततः ॥ ०४१ ॥

खड्गशक्तिधनुःकीर्णां गजाश्वरथसङ्कुलाम् ।
प्रवर्तितोग्ररुधिरां शतशः क्षत्रियर्षभैः ॥ ०४२ ॥

प्रेक्षतां सर्वसैन्यानां मध्येन शिनिपुङ्गवः ।
अभ्यगाद्वाहिनीं भित्त्वा वृत्रहेवासुरीं चमूम् ॥ ०४३ ॥

समाश्वास्य च हार्दिक्यो गृह्य चान्यन्महद्धनुः ।
तस्थौ तत्रैव बलवान्वारयन्युधि पाण्डवान् ॥ ०४४ ॥

---

# अध्याय ०९३

सञ्जय उवाच ॥

काल्यमानेषु सैन्येषु शैनेयेन ततस्ततः ।
भारद्वाजः शरव्रातैर्महद्भिः समवाकिरत् ॥ ००१ ॥

स संप्रहारस्तुमुलो द्रोणसात्वतयोरभूत् ।
पश्यतां सर्वसैन्यानां बलिवासवयोरिव ॥ ००२ ॥

ततो द्रोणः शिनेः पौत्रं चित्रैः सर्वायसैः शरैः ।
त्रिभिराशीविषाकारैर्ललाटे समविध्यत ॥ ००३ ॥

तैर्ललाटार्पितैर्बाणैर्युयुधानस्त्वजिह्मगैः ।
व्यरोचत महाराज त्रिशृङ्ग इव पर्वतः ॥ ००४ ॥

ततोऽस्य बाणानपरानिन्द्राशनिसमस्वनान् ।
भारद्वाजोऽन्तरप्रेक्षी प्रेषयामास संयुगे ॥ ००५ ॥

तान्द्रोणचापनिर्मुक्तान्दाशार्हः पततः शरान् ।
द्वाभ्यां द्वाभ्यां सुपुङ्खाभ्यां चिच्छेद परमास्त्रवित् ॥ ००६ ॥

तामस्य लघुतां द्रोणः समवेक्ष्य विशां पते ।
प्रहस्य सहसाविध्यद्विंशत्या शिनिपुङ्गवम् ॥ ००७ ॥

पुनः पञ्चाशतेषूणां शतेन च समार्पयत् ।
लघुतां युयुधानस्य लाघवेन विशेषयन् ॥ ००८ ॥

समुत्पतन्ति वल्मीकाद्यथा क्रुद्धा महोरगाः ।
तथा द्रोणरथाद्राजन्नुत्पतन्ति तनुच्छिदः ॥ ००९ ॥

तथैव युयुधानेन सृष्टाः शतसहस्रशः ।
अवाकिरन्द्रोणरथं शरा रुधिरभोजनाः ॥ ०१० ॥

लाघवाद्द्विजमुख्यस्य सात्वतस्य च मारिष ।
विशेषं नाध्यगच्छाम समावास्तां नरर्षभौ ॥ ०११ ॥

सात्यकिस्तु ततो द्रोणं नवभिर्नतपर्वभिः ।
आजघान भृशं क्रुद्धो ध्वजं च निशितैः शरैः ॥ ०१२ ॥

सारथिं च शतेनैव भारद्वाजस्य पश्यतः ॥ ०१२ ॥

लाघवं युयुधानस्य दृष्ट्वा द्रोणो महारथः ।
सप्तत्या सात्यकिं विद्ध्वा तुरगांश्च त्रिभिस्त्रिभिः ॥ ०१३ ॥

ध्वजमेकेन विव्याध माधवस्य रथे स्थितम् ॥ ०१३ ॥

अथापरेण भल्लेन हेमपुङ्खेन पत्रिणा ।
धनुश्चिच्छेद समरे माधवस्य महात्मनः ॥ ०१४ ॥

सात्यकिस्तु ततः क्रुद्धो धनुस्त्यक्त्वा महारथः ।
गदां जग्राह महतीं भारद्वाजाय चाक्षिपत् ॥ ०१५ ॥

तामापतन्तीं सहसा पट्टबद्धामयस्मयीम् ।
न्यवारयच्छरैर्द्रोणो बहुभिर्बहुरूपिभिः ॥ ०१६ ॥

अथान्यद्धनुरादाय सात्यकिः सत्यविक्रमः ।
विव्याध बहुभिर्वीरं भारद्वाजं शिलाशितैः ॥ ०१७ ॥

स विद्ध्वा समरे द्रोणं सिंहनादममुञ्चत ।
तं वै न ममृषे द्रोणः सर्वशस्त्रभृतां वरः ॥ ०१८ ॥

तथः शक्तिं गृहीत्वा तु रुक्मदण्डामयस्मयीम् ।
तरसा प्रेषयामास माधवस्य रथं प्रति ॥ ०१९ ॥

अनासाद्य तु शैनेयं सा शक्तिः कालसंनिभा ।
भित्त्वा रथं जगामोग्रा धरणीं दारुणस्वना ॥ ०२० ॥

ततो द्रोणं शिनेः पौत्रो राजन्विव्याध पत्रिणा ।
दक्षिणं भुजमासाद्य पीडयन्भरतर्षभ ॥ ०२१ ॥

द्रोणोऽपि समरे राजन्माधवस्य महद्धनुः ।
अर्धचन्द्रेण चिच्छेद रथशक्त्या च सारथिम् ॥ ०२२ ॥

मुमोह सरथिस्तस्य रथशक्त्या समाहतः ।
स रथोपस्थमासाद्य मुहूर्तं संन्यषीदत ॥ ०२३ ॥

चकार सात्यकी राजंस्तत्र कर्मातिमानुषम् ।
अयोधयच्च यद्द्रोणं रश्मीञ्जग्राह च स्वयम् ॥ ०२४ ॥

ततः शरशतेनैव युयुधानो महारथः ।
अविध्यद्ब्राह्मणं संख्ये हृष्टरूपो विशां पते ॥ ०२५ ॥

तस्य द्रोणः शरान्पञ्च प्रेषयामास भारत ।
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ॥ ०२६ ॥

निर्विद्धस्तु शरैर्घोरैरक्रुध्यत्सात्यकिर्भृशम् ।
सायकान्व्यसृजच्चापि वीरो रुक्मरथं प्रति ॥ ०२७ ॥

ततो द्रोणस्य यन्तारं निपात्यैकेषुणा भुवि ।
अश्वान्व्यद्रावयद्बाणैर्हतसूतान्महात्मनः ॥ ०२८ ॥

स रथः प्रद्रुतः संख्ये मण्डलानि सहस्रशः ।
चकार राजतो राजन्भ्राजमान इवांशुमान् ॥ ०२९ ॥

अभिद्रवत गृह्णीत हयान्द्रोणस्य धावत ।
इति स्म चुक्रुशुः सर्वे राजपुत्राः सराजकाः ॥ ०३० ॥

ते सात्यकिमपास्याशु राजन्युधि महारथाः ।
यतो द्रोणस्ततः सर्वे सहसा समुपाद्रवन् ॥ ०३१ ॥

तान्दृष्ट्वा प्रद्रुतान्सर्वान्सात्वतेन शरार्दितान् ।
प्रभग्नं पुनरेवासीत्तव सैन्यं समाकुलम् ॥ ०३२ ॥

व्यूहस्यैव पुनर्द्वारं गत्वा द्रोणो व्यवस्थितः ।
वातायमानैस्तैरश्वैर्हतो वृष्णिशरार्दितैः ॥ ०३३ ॥

पाण्डुपाञ्चालसंभग्नं व्यूहमालोक्य वीर्यवान् ।
शैनेये नाकरोद्यत्नं व्यूहस्यैवाभिरक्षणे ॥ ०३४ ॥

निवार्य पाण्डुपाञ्चालान्द्रोणाग्निः प्रदहन्निव ।
तस्थौ क्रोधाग्निसंदीप्तः कालसूर्य इवोदितः ॥ ०३५ ॥

# अध्याय ०९४

सञ्जय उवाच ॥

द्रोणं स जित्वा पुरुषप्रवीर ;स्तथैव हार्दिक्यमुखांस्त्वदीयान् ।
प्रहस्य सूतं वचनं बभाषे ; शिनिप्रवीरः कुरुपुङ्गवाग्र्य ॥ ००१ ॥

निमित्तमात्रं वयमत्र सूत ; दग्धारयः केशवफल्गुनाभ्याम् ।
हतान्निहन्मेह नरर्षभेण ; वयं सुरेशात्मसमुद्भवेन ॥ ००२ ॥

तमेवमुक्त्वा शिनिपुङ्गवस्तदा ; महामृधे सोऽग्र्यधनुर्धरोऽरिहा ।
किरन्समन्तात्सहसा शरान्बली ; समापतच्छ्येन इवामिषं यथा ॥ ००३ ॥

तं यान्तमश्वैः शशिशङ्खवर्णै ;र्विगाह्य सैन्यं पुरुषप्रवीरम् ।
नाशक्नुवन्वारयितुं समन्ता ;दादित्यरश्मिप्रतिमं नराग्र्यम् ॥ ००४ ॥

असह्यविक्रान्तमदीनसत्त्वं ; सर्वे गणा भारत दुर्विषह्यम् ।
सहस्रनेत्रप्रतिमप्रभावं ; दिवीव सूर्यं जलदव्यपाये ॥ ००५ ॥

अमर्षपूर्णस्त्वतिचित्रयोधी ; शरासनी काञ्चनवर्मधारी ।
सुदर्शनः सात्यकिमापतन्तं ; न्यवारयद्राजवरः प्रसह्य ॥ ००६ ॥

तयोरभूद्भरत संप्रहारः ; सुदारुणस्तं समभिप्रशंसन् ।
योधास्त्वदीयाश्च हि सोमकाश्च ; वृत्रेन्द्रयोर्युद्धमिवामरौघाः ॥ ००७ ॥

शरैः सुतीक्ष्णैः शतशोऽभ्यविध्य ;त्सुदर्शनः सात्वतमुख्यमाजौ ।
अनागतानेव तु तान्पृषत्कां ;श्चिच्छेद बाणैः शिनिपुङ्गवोऽपि ॥ ००८ ॥

तथैव शक्रप्रतिमोऽपि सात्यकिः ; सुदर्शने यान्क्षिपति स्म सायकान् ।
द्विधा त्रिधा तानकरोत्सुदर्शनः ; शरोत्तमैः स्यन्दनवर्यमास्थितः ॥ ००९ ॥

संप्रेक्ष्य बाणान्निहतांस्तदानीं ; सुदर्शनः सात्यकिबाणवेगैः ।
क्रोधाद्दिधक्षन्निव तिग्मतेजाः ; शरानमुञ्चत्तपनीयचित्रान् ॥ ०१० ॥

पुनः स बाणैस्त्रिभिरग्निकल्पै ;राकर्णपूर्णैर्निशितैः सुपुङ्खैः ।
विव्याध देहावरणं विभिद्य ; ते सात्यकेराविविशुः शरीरम् ॥ ०११ ॥

तथैव तस्यावनिपालपुत्रः ; संधाय बाणैरपरैर्ज्वलद्भिः ।
आजघ्निवांस्तान्रजतप्रकाशां ;श्चतुर्भिरश्वांश्चतुरः प्रसह्य ॥ ०१२ ॥

तथा तु तेनाभिहतस्तरस्वी ; नप्ता शिनेरिन्द्रसमानवीर्यः ।
सुदर्शनस्येषुगणैः सुतीक्ष्णै ;र्हयान्निहत्याशु ननाद नादम् ॥ ०१३ ॥

अथास्य सूतस्य शिरो निकृत्य ; भल्लेन वज्राशनिसंनिभेन ।
सुदर्शनस्यापि शिनिप्रवीरः ; क्षुरेण चिच्छेद शिरः प्रसह्य ॥ ०१४ ॥

सकुण्डलं पूर्णशशिप्रकाशं ; भ्राजिष्णु वक्त्रं निचकर्त देहात् ।
यथा पुरा वज्रधरः प्रसह्य ; बलस्य संख्येऽतिबलस्य राजन् ॥ ०१५ ॥

निहत्य तं पार्थिवपुत्रपौत्रं ; रणे यदूनामृषभस्तरस्वी ।
मुदा समेतः परया महात्मा ; रराज राजन्सुरराजकल्पः ॥ ०१६ ॥

ततो ययावर्जुनमेव येन ; निवार्य सैन्यं तव मार्गणौघैः ।
सदश्वयुक्तेन रथेन निर्या ;ल्लोकान्विसिस्मापयिषुर्नृवीरः ॥ ०१७ ॥

तत्तस्य विस्मापयनीयमग्र्य ;मपूजयन्योधवराः समेताः ।
यद्वर्तमानानिषुगोचरेऽरी ;न्ददाह बाणैर्हुतभुग्यथैव ॥ ०१८ ॥

# अध्याय ०९५

सञ्जय उवाच ॥

ततः स सात्यकिर्धीमान्महात्मा वृष्णिपुङ्गवः ।
सुदर्शनं निहत्याजौ यन्तारमिदमब्रवीत् ॥ ००१ ॥

रथाश्वनागकलिलं शरशक्त्यूर्मिमालिनम् ।
खड्गमत्स्यं गदाग्राहं शूरायुधमहास्वनम् ॥ ००२ ॥

प्राणापहारिणं रौद्रं वादित्रोत्क्रुष्टनादितम् ।
योधानामसुखस्पर्शं दुर्धर्षमजयैषिणाम् ॥ ००३ ॥

तीर्णाः स्म दुस्तरं तात द्रोणानीकमहार्णवम् ।
जलसंधबलेनाजौ पुरुषादैरिवावृतम् ॥ ००४ ॥

अतोऽन्यं पृतनाशेषं मन्ये कुनदिकामिव ।
तर्तव्यामल्पसलिलां चोदयाश्वानसंभ्रमम् ॥ ००५ ॥

हस्तप्राप्तमहं मन्ये सांप्रतं सव्यसाचिनम् ।
निर्जित्य दुर्धरं द्रोणं सपदानुगमाहवे ॥ ००६ ॥

हार्दिक्यं योधवर्यं च प्राप्तं मन्ये धनञ्जयम् ।
न हि मे जायते त्रासो दृष्ट्वा सैन्यान्यनेकशः ॥ ००७ ॥

वह्नेरिव प्रदीप्तस्य ग्रीष्मे शुष्कं तृणोलपम् ॥ ००७ ॥

पश्य पाण्डवमुख्येन यातां भूमिं किरीटिना ।

पत्त्यश्वरथनागौघैः पतितैर्विषमीकृताम्  ॥ ००८  ॥

अभ्याशस्थमहं मन्ये श्वेताश्वं कृष्णसारथिम् ।
स एष श्रूयते शब्दो गाण्डीवस्यामितौजसः  ॥ ००९  ॥

यादृशानि निमित्तानि मम प्रादुर्भवन्ति वै ।
अनस्तङ्गत आदित्ये हन्ता सैन्धवमर्जुनः  ॥ ०१०  ॥

शनैर्विश्रम्भयन्नश्वान्याहि यत्तोऽरिवाहिनीम् ।
यत्रैते सतनुत्राणाः सुयोधनपुरोगमाः  ॥ ०११  ॥

दंशिताः क्रूरकर्माणः काम्बोजा युद्धदुर्मदाः ।
शरबाणासनधरा यवनाश्च प्रहारिणः  ॥ ०१२  ॥

शकाः किराता दरदा बर्बरास्ताम्रलिप्तकाः ।
अन्ये च बहवो म्लेच्छा विविधायुधपाणयः  ॥ ०१३  ॥

मामेवाभिमुखाः सर्वे तिष्ठन्ति समरार्थिनः  ॥ ०१३  ॥

एतान्सरथनागाश्वान्निहत्याजौ सपत्तिनः ।
इदं दुर्गं महाघोरं तीर्णमेवोपधारय  ॥ ०१४  ॥

सूत उवाच  ॥

न संभ्रमो मे वार्ष्णेय विद्यते सत्यविक्रम ।
यद्यपि स्यात्सुसङ्क्रुद्धो जामदग्न्योऽग्रतः स्थितः  ॥ ०१५  ॥

द्रोणो वा रथिनां श्रेष्ठः कृपो मद्रेश्वरोऽपि वा ।
तथापि संभ्रमो न स्यात्त्वामाश्रित्य महाभुज  ॥ ०१६  ॥

त्वया सुबहवो युद्धे निर्जिताः शत्रुसूदन ।

न च मे संभ्रमः कश्चिद्भूतपूर्वः कदाचन ॥ ०१७ ॥

किमु चैतत्समासाद्य वीर संयुगगोष्पदम् ॥ ०१७ ॥

आयुष्मन्कतरेण त्वा प्रापयामि धनञ्जयम् ।
केषां क्रुद्धोऽसि वार्ष्णेय केषां मृत्युरुपस्थितः ॥ ०१८ ॥

केषां संयमनीमद्य गन्तुमुत्सहते मनः ॥ ०१८ ॥

के त्वां युधि पराक्रान्तं कालान्तकयमोपमम् ।
दृष्ट्वा विक्रमसंपन्नं विद्रविष्यन्ति संयुगे ॥ ०१९ ॥

केषां वैवस्वतो राजा स्मरतेऽद्य महाभुज ॥ ०१९ ॥

सात्यकिरुवाच ॥

मुण्डानेतान्हनिष्यामि दानवानिव वासवः ।
प्रतिज्ञां पारयिष्यामि काम्बोजानेव मा वह ॥ ०२० ॥

अद्यैषां कदनं कृत्वा क्षिप्रं यास्यामि पाण्डवम् ॥ ०२० ॥

अद्य द्रक्ष्यन्ति मे वीर्यं कौरवाः ससुयोधनाः ।
मुण्डानीके हते सूत सर्वसैन्येषु चासकृत् ॥ ०२१ ॥

अद्य कौरवसैन्यस्य दीर्यमाणस्य संयुगे ।
श्रुत्वा विरावं बहुधा संतप्स्यति सुयोधनः ॥ ०२२ ॥

अद्य पाण्डवमुख्यस्य श्वेताश्वस्य महात्मनः ।
आचार्यककृतं मार्गं दर्शयिष्यामि संयुगे ॥ ०२३ ॥

अद्य मद्बाणनिहतान्योधमुख्यान्सहस्रशः ।

दृष्ट्वा दुर्योधनो राजा पश्चात्तापं गमिष्यति ॥ ०२४ ॥

अद्य मे क्षिप्रहस्तस्य क्षिपतः सायकोत्तमान् ।
अलातचक्रप्रतिमं धनुर्द्रक्ष्यन्ति कौरवाः ॥ ०२५ ॥

मत्सायकचिताङ्गानां रुधिरं स्रवतां बहु ।
सैनिकानां वधं दृष्ट्वा संतप्स्यति सुयोधनः ॥ ०२६ ॥

अद्य मे क्रुद्धरूपस्य निघ्नतश्च वरान्वरान् ।
द्विरर्जुनमिमं लोकं मंस्यते स सुयोधनः ॥ ०२७ ॥

अद्य राजसहस्राणि निहतानि मया रणे ।
दृष्ट्वा दुर्योधनो राजा संतप्स्यति महामृधे ॥ ०२८ ॥

अद्य स्नेहं च भक्तिं च पाण्डवेषु महात्मसु ।
हत्वा राजसहस्राणि दर्शयिष्यामि राजसु ॥ ०२९ ॥

सञ्जय उवाच ॥

एवमुक्तस्तदा सूतः शिक्षितान्साधुवाहिनः ।
शशाङ्कसंनिकाशान्वै वाजिनोऽचूचुदद्भृशम् ॥ ०३० ॥

ते पिबन्त इवाकाशं युयुधानं हयोत्तमाः ।
प्रापयन्यवनाञ्शीघ्रं मनःपवनरंहसः ॥ ०३१ ॥

सात्यकिं ते समासाद्य पृतनास्वनिवर्तिनम् ।
बहवो लघुहस्ताश्च शरवर्षैरवाकिरन् ॥ ०३२ ॥

तेषामिषूनथास्त्राणि वेगवन्नतपर्वभिः ।
अच्छिनत्सात्यकी राजन्नैनं ते प्राप्नुवञ्शराः ॥ ०३३ ॥

रुक्मपुङ्खैः सुनिशितैर्गार्ध्रपत्रैरजिह्मगैः ।
उच्चकर्त शिरांस्युग्रो यवनानां भुजानपि ॥ ०३४ ॥

शैक्यायसानि वर्माणि कांस्यानि च समन्ततः ।
भित्त्वा देहांस्तथा तेषां शरा जग्मुर्महीतलम् ॥ ०३५ ॥

ते हन्यमाना वीरेण म्लेच्छाः सात्यकिना रणे ।
शतशो न्यपतंस्तत्र व्यसवो वसुधातले ॥ ०३६ ॥

सुपूर्णायतमुक्तैस्तानव्यवच्छिन्नपिण्डितैः ।
पञ्च षट्सप्त चाष्टौ च बिभेद यवनाञ्शरैः ॥ ०३७ ॥

काम्बोजानां सहस्रैस्तु शकानां च विशां पते ।
शबराणां किरातानां बर्बराणां तथैव च ॥ ०३८ ॥

अगम्यरूपां पृथिवीं मांसशोणितकर्दमाम् ।
कृतवांस्तत्र शैनेयः क्षपयंस्तावकं बलम् ॥ ०३९ ॥

दस्यूनां सशिरस्त्राणैः शिरोभिर्लूनमूर्धजैः ।
तत्र तत्र मही कीर्णा विबर्हैरण्डजैरिव ॥ ०४० ॥

रुधिरोक्षितसर्वाङ्गैस्तैस्तदायोधनं बभौ ।
कबन्धैः संवृतं सर्वं ताम्राभ्रैः खमिवावृतम् ॥ ०४१ ॥

वज्राशनिसमस्पर्शैः सुपर्वभिरजिह्मगैः ।
ते साश्वयाना निहताः समावव्रुर्वसुंधराम् ॥ ०४२ ॥

अल्पावशिष्टाः संभग्नाः कृच्छ्रप्राणा विचेतसः ।
जिताः संख्ये महाराज युयुधानेन दंशिताः ॥ ०४३ ॥

पार्ष्णिभिश्च कशाभिश्च ताडयन्तस्तुरङ्गमान् ।

जवमुत्तममास्थाय सर्वतः प्राद्रवन्भयात् ॥ ०४४ ॥

काम्बोजसैन्यं विद्राव्य दुर्जयं युधि भारत ।
यवनानां च तत्सैन्यं शकानां च महद्बलम् ॥ ०४५ ॥

स ततः पुरुषव्याघ्रः सात्यकिः सत्यविक्रमः ।
प्रहृष्टस्तावकाञ्जित्वा सूतं याहीत्यचोदयत् ॥ ०४६ ॥

तं यान्तं पृष्ठगोप्तारमर्जुनस्य विशां पते ।
चारणाः प्रेक्ष्य संहृष्टास्त्वदीयाश्चाप्यपूजयन् ॥ ०४७ ॥

---

# अध्याय ०९६

सञ्जय उवाच ॥

जित्वा यवनकाम्बोजान्युयुधानस्ततोऽर्जुनम् ।
जगाम तव सैन्यस्य मध्येन रथिनां वरः ॥ ००१ ॥

शरदंष्ट्रो नरव्याघ्रो विचित्रकवचच्छविः ।
मृगान्व्याघ्र इवाजिघ्रंस्तव सैन्यमभीषयत् ॥ ००२ ॥

स रथेन चरन्मार्गान्धनुरभ्रामयद्भृशम् ।
रुक्मपृष्ठं महावेगं रुक्मचन्द्रकसङ्कुलम् ॥ ००३ ॥

रुक्माङ्गदशिरस्त्राणो रुक्मवर्मसमावृतः ।
रुक्मध्वजवरः शूरो मेरुशृङ्ग इवाबभौ ॥ ००४ ॥

सधनुर्मण्डलः संख्ये तेजोभास्वररश्मिवान् ।

शरदीवोदितः सूर्यो नृसूर्यो विरराज ह ॥ ००५ ॥

वृषभस्कन्धविक्रान्तो वृषभाक्षो नरर्षभः ।
तावकानां बभौ मध्ये गवां मध्ये यथा वृषः ॥ ००६ ॥

मत्तद्विरदसङ्काशं मत्तद्विरदगामिनम् ।
प्रभिन्नमिव मातङ्गं यूथमध्ये व्यवस्थितम् ॥ ००७ ॥

व्याघ्रा इव जिघांसन्तस्त्वदीयाभ्यद्रवन्रणे ॥ ००७ ॥

द्रोणानीकमतिक्रान्तं भोजानीकं च दुस्तरम् ।
जलसंधार्णवं तीर्त्वा काम्बोजानां च वाहिनीम् ॥ ००८ ॥

हार्दिक्यमकरान्मुक्तं तीर्णं वै सैन्यसागरम् ।
परिवव्रुः सुसङ्क्रुद्धास्त्वदीयाः सात्यकिं रथाः ॥ ००९ ॥

दुर्योधनश्चित्रसेनो दुःशासनविविंशती ।
शकुनिर्दुःसहश्चैव युवा दुर्मर्षणः क्रथः ॥ ०१० ॥

अन्ये च बहवः शूराः शस्त्रवन्तो दुरासदाः ।
पृष्ठतः सात्यकिं यान्तमन्वधावन्नमर्षिताः ॥ ०११ ॥

अथ शब्दो महानासीत्तव सैन्यस्य मारिष ।
मारुतोद्धूतवेगस्य सागरस्येव पर्वणि ॥ ०१२ ॥

तानभिद्रवतः सर्वान्समीक्ष्य शिनिपुङ्गवः ।
शनैर्याहीति यन्तारमब्रवीत्प्रहसन्निव ॥ ०१३ ॥

इदमेति समुद्धूतं धार्तराष्ट्रस्य यद्बलम् ।
मामेवाभिमुखं तूर्णं गजाश्वरथपत्तिमत् ॥ ०१४ ॥

नादयन्वै दिशः सर्वा रथघोषेण सारथे ।
पृथिवीं चान्तरिक्षं च कम्पयन्सागरानपि ॥ ०१५ ॥

एतद्बलार्णवं तात वारयिष्ये महारणे ।
पौर्णमास्यामिवोद्धूतं वेलेव सलिलाशयम् ॥ ०१६ ॥

पश्य मे सूत विक्रान्तमिन्द्रस्येव महामृधे ।
एष सैन्यानि शत्रूणां विधमामि शितैः शरैः ॥ ०१७ ॥

निहतानाहवे पश्य पदात्यश्वरथद्विपान् ।
मच्छरैरग्निसङ्काशैर्विदेहासून्सहस्रशः ॥ ०१८ ॥

इत्येवं ब्रुवतस्तस्य सात्यकेरमितौजसः ।
समीपं सैनिकास्ते तु शीघ्रमीयुर्युयुत्सवः ॥ ०१९ ॥

जह्याद्रवस्व तिष्ठेति पश्य पश्येति वादिनः ॥ ०१९ ॥

तानेवं ब्रुवतो वीरान्सात्यकिर्निशितैः शरैः ।
जघान त्रिशतानश्वान्कुञ्जरांश्च चतुःशतान् ॥ ०२० ॥

स संप्रहारस्तुमुलस्तस्य तेषां च धन्विनाम् ।
देवासुररणप्रख्यः प्रावर्तत जनक्षयः ॥ ०२१ ॥

मेघजालनिभं सैन्यं तव पुत्रस्य मारिष ।
प्रत्यगृह्णाच्छिनेः पौत्रः शरैराशीविषोपमैः ॥ ०२२ ॥

प्रच्छाद्यमानः समरे शरजालैः स वीर्यवान् ।
असंभ्रमं महाराज तावकानवधीद्बहून् ॥ ०२३ ॥

आश्चर्यं तत्र राजेन्द्र सुमहद्दृष्टवानहम् ।
न मोघः सायकः कश्चित्सात्यकेरभवत्प्रभो ॥ ०२४ ॥

रथनागाश्वकलिलः पदात्यूर्मिसमाकुलः ।
शैनेयवेलामासाद्य स्थितः सैन्यमहार्णवः ॥ ०२५ ॥

संभ्रान्तनरनागाश्वमावर्तत मुहुर्मुहुः ।
तत्सैन्यमिषुभिस्तेन वध्यमानं समन्ततः ॥ ०२६ ॥

बभ्राम तत्र तत्रैव गावः शीतार्दिता इव ॥ ०२६ ॥

पदातिनं रथं नागं सादिनं तुरगं तथा ।
अविद्धं तत्र नाद्राक्षं युयुधानस्य सायकैः ॥ ०२७ ॥

न तादृक्कदनं राजन्कृतवांस्तत्र फल्गुनः ।
यादृक्क्षयमनीकानामकरोत्सात्यकिर्नृप ॥ ०२८ ॥

अत्यर्जुनं शिनेः पौत्रो युध्यते भरतर्षभ ॥ ०२८ ॥

ततो दुर्योधनो राजा सात्वतस्य त्रिभिः शरैः ।
विव्याध सूतं निशितैश्चतुर्भिश्चतुरो हयान् ॥ ०२९ ॥

सात्यकिं च त्रिभिर्विद्ध्वा पुनर्विव्याध सोऽष्टभिः ।
दुःशासनः षोडशभिर्विव्याध शिनिपुङ्गवम् ॥ ०३० ॥

शकुनिः पञ्चविंशत्या चित्रसेनश्च पञ्चभिः ।
दुःसहः पञ्चदशभिर्विव्याधोरसि सात्यकिम् ॥ ०३१ ॥

उत्स्मयन्वृष्णिशार्दूलस्तथा बाणैः समाहतः ।
तानविध्यन्महाराज सर्वानेव त्रिभिस्त्रिभिः ॥ ०३२ ॥

गाढविद्धानरीन्कृत्वा मार्गणैः सोऽतितेजनैः ।
शैनेयः श्येनवत्संख्ये व्यचरल्लघुविक्रमः ॥ ०३३ ॥

सौबलस्य धनुश्छित्त्वा हस्तावापं निकृत्य च ।
दुर्योधनं त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे ॥ ०३४ ॥

चित्रसेनं शतेनैव दशभिर्दुःसहं तथा ।
दुःशासनं च विंशत्या विव्याध शिनिपुङ्गवः ॥ ०३५ ॥

अथान्यद्धनुरादाय स्यालस्तव विशां पते ।
अष्टभिः सात्यकिं विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ ०३६ ॥

दुःशासनश्च दशभिर्दुःसहश्च त्रिभिः शरैः ।
दुर्मुखश्च द्वादशभी राजन्विव्याध सात्यकिम् ॥ ०३७ ॥

दुर्योधनस्त्रिसप्तत्या विद्ध्वा भारत माधवम् ।
ततोऽस्य निशितैर्बाणैस्त्रिभिर्विव्याध सारथिम् ॥ ०३८ ॥

तान्सर्वान्सहिताञ्शूरान्यतमानान्महारथान् ।
पञ्चभिः पञ्चभिर्बाणैः पुनर्विव्याध सात्यकिः ॥ ०३९ ॥

ततः स रथिनां श्रेष्ठस्तव पुत्रस्य सारथिम् ।
आजघानाशु भल्लेन स हतो न्यपतद्भुवि ॥ ०४० ॥

पातिते सारथौ तस्मिंस्तव पुत्ररथः प्रभो ।
वातायमानैस्तैरश्वैरपानीयत सङ्गरात् ॥ ०४१ ॥

ततस्तव सुता राजन्सैनिकाश्च विशां पते ।
राज्ञो रथमभिप्रेक्ष्य विद्रुताः शतशोऽभवन् ॥ ०४२ ॥

विद्रुतं तत्र तत्सैन्यं दृष्ट्वा भारत सात्यकिः ।
अवाकिरच्छरैस्तीक्ष्णै रुक्मपुङ्खैः शिलाशितैः ॥ ०४३ ॥

विद्राव्य सर्वसैन्यानि तावकानि समन्ततः ।
प्रययौ सात्यकी राजञ्श्वेताश्वस्य रथं प्रति ॥ ०४४ ॥

तं शरानाददानं च रक्षमाणं च सारथिम् ।
आत्मानं मोचयन्तं च तावकाः समपूजयन् ॥ ०४५ ॥

---

# अध्याय ०९७

धृतराष्ट्र उवाच ॥

संप्रमृद्य महत्सैन्यं यान्तं शैनेयमर्जुनम् ।
निर्ह्रीका मम ते पुत्राः किमकुर्वत सञ्जय ॥ ००१ ॥

कथं चैषां तथा युद्धे धृतिरासीन्मुमूर्षताम् ।
शैनेयचरितं दृष्ट्वा सदृशं सव्यसाचिनः ॥ ००२ ॥

किं नु वक्ष्यन्ति ते क्षात्रं सैन्यमध्ये पराजिताः ।
कथं च सात्यकिर्युद्धे व्यतिक्रान्तो महायशाः ॥ ००३ ॥

कथं च मम पुत्राणां जीवतां तत्र सञ्जय ।
शैनेयोऽभिययौ युद्धे तन्ममाचक्ष्व तत्त्वतः ॥ ००४ ॥

अत्यद्भुतमिदं तात त्वत्सकाशाच्छृणोम्यहम् ।
एकस्य बहुभिर्युद्धं शत्रुभिर्वै महारथैः ॥ ००५ ॥

विपरीतमहं मन्ये मन्दभाग्यान्सुतान्प्रति ।
यत्रावध्यन्त समरे सात्वतेन महात्मना ॥ ००६ ॥

एकस्य हि न पर्याप्तं मत्सैन्यं तस्य सञ्जय ।
क्रुद्धस्य युयुधानस्य सर्वे तिष्ठन्तु पाण्डवाः ॥ ००७ ॥

निर्जित्य समरे द्रोणं कृतिनं युद्धदुर्मदम् ।
यथा पशुगणान्सिंहस्तद्वद्धन्ता सुतान्मम ॥ ००८ ॥

कृतवर्मादिभिः शूरैर्यत्तैर्बहुभिराहवे ।
युयुधानो न शकितो हन्तुं यः पुरुषर्षभः ॥ ००९ ॥

नैतदीदृशकं युद्धं कृतवांस्तत्र फल्गुनः ।
यादृशं कृतवान्युद्धं शिनेर्नप्ता महायशाः ॥ ०१० ॥

सञ्जय उवाच ॥

तव दुर्मन्त्रिते राजन्दुर्योधनकृतेन च ।
शृणुष्वावहितो भूत्वा यत्ते वक्ष्यामि भारत ॥ ०११ ॥

ते पुनः संन्यवर्तन्त कृत्वा संशप्तकान्मिथः ।
परां युद्धे मतिं कृत्वा पुत्रस्य तव शासनात् ॥ ०१२ ॥

त्रीणि सादिसहस्राणि दुर्योधनपुरोगमाः ।
शकाः काम्बोजबाह्लीका यवनाः पारदास्तथा ॥ ०१३ ॥

कुणिन्दास्तङ्गणाम्बष्ठाः पैशाचाश्च समन्दराः ।
अभ्यद्रवन्त शैनेयं शलभाः पावकं यथा ॥ ०१४ ॥

युक्ताश्च पार्वतीयानां रथाः पाषाणयोधिनाम् ।
शूराः पञ्चशता राजञ्शैनेयं समुपाद्रवन् ॥ ०१५ ॥

ततो रथसहस्रेण महारथशतेन च ।

द्विरदानां सहस्रेण द्विसाहस्रैश्च वाजिभिः ॥ ०१६ ॥

शरवर्षाणि मुञ्चन्तो विविधानि महारथाः ।
अभ्यद्रवन्त शैनेयमसंख्येयाश्च पत्तयः ॥ ०१७ ॥

तांश्च सञ्चोदयन्सर्वान्घ्नतैनमिति भारत ।
दुःशासनो महाराज सात्यक्तिं पर्यवारयत् ॥ ०१८ ॥

तत्राद्भुतमपश्याम शैनेयचरितं महत् ।
यदेको बहुभिः सार्धमसंभ्रान्तमयुध्यत ॥ ०१९ ॥

अवधीच्च रथानीकं द्विरदानां च तद्बलम् ।
सादिनश्चैव तान्सर्वान्दस्यूनपि च सर्वशः ॥ ०२० ॥

तत्र चक्रैर्विमथितैर्भग्नैश्च परमायुधैः ।
अक्षैश्च बहुधा भग्नैरीषादण्डकबन्धुरैः ॥ ०२१ ॥

कूबरैर्मथितैश्चापि ध्वजैश्चापि निपातितैः ।
वर्मभिश्चामरैश्चैव व्यवकीर्णा वसुंधरा ॥ ०२२ ॥

स्रग्भिराभरणैर्वस्त्रैरनुकर्षैश्च मारिष ।
संछन्ना वसुधा तत्र द्यौर्ग्रहैरिव भारत ॥ ०२३ ॥

गिरिरूपधराश्चापि पतिताः कुञ्जरोत्तमाः ।
अञ्जनस्य कुले जाता वामनस्य च भारत ॥ ०२४ ॥

सुप्रतीककुले जाता महापद्मकुले तथा ॥ ०२४ ॥

ऐरावणकुले चैव तथान्येषु कुलेषु च ।
जाता दन्तिवरा राजञ्शेरते बहवो हताः ॥ ०२५ ॥

वनायुजान्पार्वतीयान्काम्बोजारट्टबाह्लिकान् ।
तथा हयवरान्राजन्निजघ्ने तत्र सात्यकिः ॥ ०२६ ॥

नानादेशसमुत्थांश्च नानाजात्यांश्च पत्तिनः ।
निजघ्ने तत्र शैनेयः शतशोऽथ सहस्रशः ॥ ०२७ ॥

तेषु प्रकाल्यमानेषु दस्यून्दुःशासनोऽब्रवीत् ।
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ ०२८ ॥

तांश्चापि सर्वान्संप्रेक्ष्य पुत्रो दुःशासनस्तव ।
पाषाणयोधिनः शूरान्पार्वतीयानचोदयत् ॥ ०२९ ॥

अश्मयुद्धेषु कुशला नैतज्जानाति सात्यकिः ।
अश्मयुद्धमजानन्तं घ्नतैनं युद्धकामुकम् ॥ ०३० ॥

तथैव कुरवः सर्वे नाश्मयुद्धविशारदाः ।
अभिद्रवत मा भैष्ट न वः प्राप्स्यति सात्यकिः ॥ ०३१ ॥

ततो गजशिशुप्रख्यैरुपलैः शैलवासिनः ।
उद्यतैर्युयुधानस्य स्थिता मरणकाङ्क्षिणः ॥ ०३२ ॥

क्षेपणीयैस्तथाप्यन्ये सात्वतस्य वधैषिणः ।
चोदितास्तव पुत्रेण रुरुधुः सर्वतोदिशम् ॥ ०३३ ॥

तेषामापततामेव शिलायुद्धं चिकीर्षताम् ।
सात्यकिः प्रतिसंधाय त्रिंशतं प्राहिणोच्छरान् ॥ ०३४ ॥

तामश्मवृष्टिं तुमुलां पार्वतीयैः समीरिताम् ।
बिभेदोरगसङ्काशैर्नाराचैः शिनिपुङ्गवः ॥ ०३५ ॥

तैरश्मचूर्णैर्दीप्यद्भिः खद्योतानामिव व्रजैः ।

प्रायः सैन्यान्यवध्यन्त हाहाभूतानि मारिष ॥ ०३६ ॥

ततः पञ्चशताः शूराः समुद्यतमहाशिलाः ।
निकृत्तबाहवो राजन्निपेतुर्धरणीतले ॥ ०३७ ॥

पाषाणयोधिनः शूरान्यतमानानवस्थितान् ।
अवधीद्बहुसाहस्रांस्तदद्भुतमिवाभवत् ॥ ०३८ ॥

ततः पुनर्बस्तमुखैरश्मवृष्टिं समन्ततः ।
अयोहस्तैः शूलहस्तैर्दरदैः खशतङ्गणैः ॥ ०३९ ॥

अम्बष्ठैश्च कुणिन्दैश्च क्षिप्तां क्षिप्तां स सात्यकिः ।
नाराचैः प्रतिविव्याध प्रेक्षमाणो महाबलः ॥ ०४० ॥

अद्रीणां भिद्यमानानामन्तरिक्षे शितैः शरैः ।
शब्देन प्राद्रवन्राजन्गजाश्वरथपत्तयः ॥ ०४१ ॥

अश्मचूर्णैः समाकीर्णा मनुष्याश्च वयांसि च ।
नाशक्नुवन्नवस्थातुं भ्रमरैरिव दंशिताः ॥ ०४२ ॥

हतशिष्टा विरुधिरा भिन्नमस्तकपिण्डिकाः ।
कुञ्जराः संन्यवर्तन्त युयुधानरथं प्रथि ॥ ०४३ ॥

ततः शब्दः समभवत्तव सैन्यस्य मारिष ।
माधवेनार्द्यमानस्य सागरस्येव दारुणः ॥ ०४४ ॥

तं शब्दं तुमुलं श्रुत्वा द्रोणो यन्तारमब्रवीत् ।
एष सूत रणे क्रुद्धः सात्वतानां महारथः ॥ ०४५ ॥

दारयन्बहुधा सैन्यं रणे चरति कालवत् ।
यत्रैष शब्दस्तुमुलस्तत्र सूत रथं नय ॥ ०४६ ॥

पाषाणयोधिभिर्नूनं युयुधानः समागतः ।
तथा हि रथिनः सर्वे ह्रियन्ते विद्रुतैर्हयैः ॥ ०४७ ॥

विशस्त्रकवचा रुग्णास्तत्र तत्र पतन्ति च ।
न शक्नुवन्ति यन्तारः संयन्तुं तुमुले हयान् ॥ ०४८ ॥

इत्येवं ब्रुवतो राजन्भारद्वाजस्य धीमतः ।
प्रत्युवाच ततो यन्ता द्रोणं शस्त्रभृतां वरम् ॥ ०४९ ॥

आयुष्मन्द्रवते सैन्यं कौरवेयं समन्ततः ।
पश्य योधान्रणे भिन्नान्धावमानांस्ततस्ततः ॥ ०५० ॥

एते च सहिताः शूराः पाञ्चालाः पाण्डवैः सह ।
त्वामेव हि जिघांसन्तः प्राद्रवन्ति समन्ततः ॥ ०५१ ॥

अत्र कार्यं समाधत्स्व प्राप्तकालमरिंदम ।
स्थाने वा गमने वापि दूरं यातश्च सात्यकिः ॥ ०५२ ॥

तथैवं वदतस्तस्य भारद्वाजस्य मारिष ।
प्रत्यदृश्यत शैनेयो निघ्नन्बहुविधान्रथान् ॥ ०५३ ॥

ते वध्यमानाः समरे युयुधानेन तावकाः ।
युयुधानरथं त्यक्त्वा द्रोणानीकाय दुद्रुवुः ॥ ०५४ ॥

यैस्तु दुःशासनः सार्धं रथैः पूर्वं न्यवर्तत ।
ते भीतास्त्वभ्यधावन्त सर्वे द्रोणरथं प्रति ॥ ०५५ ॥

# अध्याय ०९८

सञ्जय उवाच ॥

दुःशासनरथं दृष्ट्वा समीपे पर्यवस्थितम् ।
भारद्वाजस्ततो वाक्यं दुःशासनमथाब्रवीत् ॥ ००१ ॥

दुःशासन रथाः सर्वे कस्मादेते प्रविद्रुताः ।
कच्चित्क्षेमं तु नृपतेः कच्चिज्जीवति सैन्धवः ॥ ००२ ॥

राजपुत्रो भवानत्र राजभ्राता महारथः ।
किमर्थं द्रवसे युद्धे यौवराज्यमवाप्य हि ॥ ००३ ॥

स्वयं वैरं महत्कृत्वा पाञ्चालैः पाण्डवैः सह ।
एकं सात्यकिमासाद्य कथं भीतोऽसि संयुगे ॥ ००४ ॥

न जानीषे पुरा त्वं तु गृह्णन्नक्षान्दुरोदरे ।
शरा ह्येते भविष्यन्ति दारुणाशीविषोपमाः ॥ ००५ ॥

अप्रियाणां च वचनं पाण्डवेषु विशेषतः ।
द्रौपद्याश्च परिक्लेशस्त्वन्मूलो ह्यभवत्पुरा ॥ ००६ ॥

क्व ते मानश्च दर्पश्च क्व च तद्वीर गर्जितम् ।
आशीविषसमान्पार्थान्कोपयित्वा क्व यास्यसि ॥ ००७ ॥

शोच्येयं भारती सेना राजा चैव सुयोधनः ।
यस्य त्वं कर्कशो भ्राता पलायनपरायणः ॥ ००८ ॥

ननु नाम त्वया वीर दीर्यमाणा भयार्दिता ।
स्वबाहुबलमास्थाय रक्षितव्या ह्यनीकिनी ॥ ००९ ॥

स त्वमद्य रणं त्यक्त्वा भीतो हर्षयसे परान्  ॥ ००९  ॥

विद्रुते त्वयि सैन्यस्य नायके शत्रुसूदन ।
कोऽन्यः स्थास्यति सङ्ग्रामे भीतो भीते व्यपाश्रये  ॥ ०१०  ॥

एकेन सात्वतेनाद्य युध्यमानस्य चानघ ।
पलायने तव मतिः सङ्ग्रामाद्धि प्रवर्तते  ॥ ०११  ॥

यदा गाण्डीवधन्वानं भीमसेनं च कौरव ।
यमौ च युधि द्रष्टासि तदा त्वं किं करिष्यसि  ॥ ०१२  ॥

युधि फल्गुनबाणानां सूर्याग्निसमतेजसाम् ।
न तुल्याः सात्यकिशरा येषां भीतः पलायसे  ॥ ०१३  ॥

यदि तावत्कृता बुद्धिः पलायनपरायणा ।
पृथिवी धर्मराजस्य शमेनैव प्रदीयताम्  ॥ ०१४  ॥

यावत्फल्गुननाराचा निर्मुक्तोरगसंनिभाः ।
नाविशन्ति शरीरं ते तावत्संशाम्य पाण्डवैः  ॥ ०१५  ॥

यावत्ते पृथिवीं पार्था हत्वा भ्रातृशतं रणे ।
नाक्षिपन्ति महात्मानस्तावत्संशाम्य पाण्डवैः  ॥ ०१६  ॥

यावन्न क्रुध्यते राजा धर्मपुत्रो युधिष्ठिरः ।
कृष्णश्च समरश्लाघी तावत्संशाम्य पाण्डवैः  ॥ ०१७  ॥

यावद्भीमो महाबाहुर्विगाह्य महतीं चमूम् ।
सोदरांस्ते न मृद्नाति तावत्संशाम्य पाण्डवैः  ॥ ०१८  ॥

पूर्वमुक्तश्च ते भ्राता भीष्मेण स सुयोधनः ।
अजेयाः पाण्डवाः संख्ये सौम्य संशाम्य पाण्डवैः  ॥ ०१९  ॥

न च तत्कृतवान्मन्दस्तव भ्राता सुयोधनः ॥ ०१९ ॥

स युद्धे धृतिमास्थाय यत्तो युध्यस्व पाण्डवैः ।
गच्छ तूर्णं रथेनैव तत्र तिष्ठति सात्यकिः ॥ ०२० ॥

त्वया हीनं बलं ह्येतद्विद्रविष्यति भारत ।
आत्मार्थं योधय रणे सात्यकिं सत्यविक्रमम् ॥ ०२१ ॥

एवमुक्तस्तव सुतो नाब्रवीत्किञ्चिदप्यसौ ।
श्रुतं चाश्रुतवत्कृत्वा प्रायाद्येन स सात्यकिः ॥ ०२२ ॥

सैन्येन महता युक्तो म्लेच्छानामनिवर्तिनाम् ।
आसाद्य च रणे यत्तो युयुधानमयोधयत् ॥ ०२३ ॥

द्रोणोऽपि रथिनां श्रेष्ठः पाञ्चालान्पाण्डवांस्तथा ।
अभ्यद्रवत सङ्क्रुद्धो जवमास्थाय मध्यमम् ॥ ०२४ ॥

प्रविश्य च रणे द्रोणः पाञ्चालानां वरूथिनीम् ।
द्रावयामास योधान्वै शतशोऽथ सहस्रशः ॥ ०२५ ॥

ततो द्रोणो महाराज नाम विश्राव्य संयुगे ।
पाण्डुपाञ्चालमत्स्यानां प्रचक्रे कदनं महत् ॥ ०२६ ॥

तं जयन्तमनीकानि भारद्वाजं ततस्ततः ।
पाञ्चालपुत्रो द्युतिमान्वीरकेतुः समभ्ययात् ॥ ०२७ ॥

स द्रोणं पञ्चभिर्विद्ध्वा शरैः संनतपर्वभिः ।
ध्वजमेकेन विव्याध सारथिं चास्य सप्तभिः ॥ ०२८ ॥

तत्राद्भुतं महाराज दृष्टवानस्मि संयुगे ।

यद्द्रोणो रभसं युद्धे पाञ्चाल्यं नाभ्यवर्तत ॥ ०२९ ॥

संनिरुद्धं रणे द्रोणं पाञ्चाला वीक्ष्य मारिष ।
आवव्रुः सर्वतो राजन्धर्मपुत्रजयैषिणः ॥ ०३० ॥

ते शरैरग्निसङ्काशैस्तोमरैश्च महाधनैः ।
शस्त्रैश्च विविधै राजन्द्रोणमेकमवाकिरन् ॥ ०३१ ॥

निहत्य तान्बाणगणान्द्रोणो राजन्समन्ततः ।
महाजलधरान्व्योम्नि मातरिश्वा विवानिव ॥ ०३२ ॥

ततः शरं महाघोरं सूर्यपावकसंनिभम् ।
संदधे परवीरघ्नो वीरकेतुरथं प्रति ॥ ०३३ ॥

स भित्त्वा तु शरो राजन्पाञ्चाल्यं कुलनन्दनम् ।
अभ्यगाद्धरणीं तूर्णं लोहितार्द्रो ज्वलन्निव ॥ ०३४ ॥

ततोऽपतद्रथात्तूर्णं पाञ्चाल्यः कुलनन्दनः ।
पर्वताग्रादिव महांश्चम्पको वायुपीडितः ॥ ०३५ ॥

तस्मिन्हते महेष्वासे राजपुत्रे महाबले ।
पाञ्चालास्त्वरिता द्रोणं समन्तात्पर्यवारयन् ॥ ०३६ ॥

चित्रकेतुः सुधन्वा च चित्रवर्मा च भारत ।
तथा चित्ररथश्चैव भ्रातृव्यसनकर्षिताः ॥ ०३७ ॥

अभ्यद्रवन्त सहिता भारद्वाजं युयुत्सवः ।
मुञ्चन्तः शरवर्षाणि तपान्ते जलदा इव ॥ ०३८ ॥

स वध्यमानो बहुधा राजपुत्रैर्महारथैः ।
व्यश्वसूतरथांश्चक्रे कुमारान्कुपितो रणे ॥ ०३९ ॥

तथापरैः सुनिशितैर्भल्लैस्तेषां महायशाः ।
पुष्पाणीव विचिन्वन्हि सोत्तमाङ्गान्यपातयत् ॥ ०४० ॥

ते रथेभ्यो हताः पेतुः क्षितौ राजन्सुवर्चसः ।
देवासुरे पुरा युद्धे यथा दैतेयदानवाः ॥ ०४१ ॥

तान्निहत्य रणे राजन्भारद्वाजः प्रतापवान् ।
कार्मुकं भ्रामयामास हेमपृष्ठं दुरासदम् ॥ ०४२ ॥

पाञ्चालान्निहतान्दृष्ट्वा देवकल्पान्महारथान् ।
धृष्टद्युम्नो भृशं क्रुद्धो नेत्राभ्यां पातयञ्जलम् ॥ ०४३ ॥

अभ्यवर्तत सङ्ग्रामे क्रुद्धो द्रोणरथं प्रति ॥ ०४३ ॥

ततो हा हेति सहसा नादः समभवन्नृप ।
पाञ्चाल्येन रणे दृष्ट्वा द्रोणमावारितं शरैः ॥ ०४४ ॥

संछाद्यमानो बहुधा पार्षतेन महात्मना ।
न विव्यथे ततो द्रोणः स्मयन्नेवान्वयुध्यत ॥ ०४५ ॥

ततो द्रोणं महाराज पाञ्चाल्यः क्रोधमूर्छितः ।
आजघानोरसि क्रुद्धो नवत्या नतपर्वणाम् ॥ ०४६ ॥

स गाढविद्धो बलिना भारद्वाजो महायशाः ।
निषसाद रथोपस्थे कश्मलं च जगाम ह ॥ ०४७ ॥

तं वै तथागतं दृष्ट्वा धृष्टद्युम्नः पराक्रमी ।
समुत्सृज्य धनुस्तूर्णमसिं जग्राह वीर्यवान् ॥ ०४८ ॥

अवप्लुत्य रथाच्चापि त्वरितः स महारथः ।

आरुरोह रथं तूर्णं भारद्वाजस्य मारिष ॥ ०४९ ॥

हर्तुमैच्छच्छिरः कायात्क्रोधसंरक्तलोचनः ॥ ०४९ ॥

प्रत्याश्वस्तस्ततो द्रोणो धनुर्गृह्य महाबलः ।
शरैर्वैतस्तिकै राजन्नित्यमासन्नयोधिभिः ॥ ०५० ॥

योधयामास समरे धृष्टद्युम्नं महारथम् ॥ ०५० ॥

ते हि वैतस्तिका नाम शरा आसन्नयोधिनः ।
द्रोणस्य विदिता राजन्धृष्टद्युम्नमवाक्षिपन् ॥ ०५१ ॥

स वध्यमानो बहुभिः सायकैस्तैर्महाबलः ।
अवप्लुत्य रथात्तूर्णं भग्नवेगः पराक्रमी ॥ ०५२ ॥

आरुह्य स्वरथं वीरः प्रगृह्य च महद्धनुः ।
विव्याध समरे द्रोणं धृष्टद्युम्नो महारथः ॥ ०५३ ॥

तदद्भुतं तयोर्युद्धं भूतसंघा ह्यपूजयन् ।
क्षत्रियाश्च महाराज ये चान्ये तत्र सैनिकाः ॥ ०५४ ॥

अवश्यं समरे द्रोणो धृष्टद्युम्नेन सङ्गतः ।
वशमेष्यति नो राज्ञः पाञ्चाला इति चुक्रुशुः ॥ ०५५ ॥

द्रोणस्तु त्वरितो युद्धे धृष्टद्युम्नस्य सारथेः ।
शिरः प्रच्यावयामास फलं पक्वं तरोरिव ॥ ०५६ ॥

ततस्ते प्रद्रुता वाहा राजंस्तस्य महात्मनः ॥ ०५६ ॥

तेषु प्रद्रवमाणेषु पाञ्चालान्सृञ्जयांस्तथा ।
व्यद्रावयद्रणे द्रोणस्तत्र तत्र पराक्रमी ॥ ०५७ ॥

विजित्य पाण्डुपाञ्चालान्भारद्वाजः प्रतापवान् ।
स्वं व्यूहं पुनरास्थाय स्थिरोऽभवदरिंदमः ॥ ०५८ ॥

न चैनं पाण्डवा युद्धे जेतुमुत्सहिरे प्रभो ॥ ०५८ ॥

---

# अध्याय ०९९

सञ्जय उवाच ॥

ततो दुःशासनो राजञ्शैनेयं समुपाद्रवत् ।
किरञ्शरसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ००१ ॥

स विद्ध्वा सात्यकिं षष्ट्या तथा षोडशभिः शरैः ।
नाकम्पयत्स्थितं युद्धे मैनाकमिव पर्वतम् ॥ ००२ ॥

स तु दुःशासनं वीरः सायकैरावृणोद्भृशम् ।
मशकं समनुप्राप्तमूर्णनाभिरिवोर्णया ॥ ००३ ॥

दृष्ट्वा दुःशासनं राजा तथा शरशताचितम् ।
त्रिगर्तांश्चोदयामास युयुधानरथं प्रति ॥ ००४ ॥

तेऽगच्छन्युयुधानस्य समीपं क्रूरकारिणः ।
त्रिगर्तानां त्रिसाहस्रा रथा युद्धविशारदाः ॥ ००५ ॥

ते तु तं रथवंशेन महता पर्यवारयन् ।
स्थिरां कृत्वा मतिं युद्धे भूत्वा संशप्तका मिथः ॥ ००६ ॥

तेषां प्रयततां युद्धे शरवर्षाणि मुञ्चताम् ।
योधान्पञ्चशतान्मुख्यानग्रानीके व्यपोथयत् ॥ ००७ ॥

तेऽपतन्त हतास्तूर्णं शिनिप्रवरसायकैः ।
महामारुतवेगेन रुग्णा इव महाद्रुमाः ॥ ००८ ॥

रथैश्च बहुधा छिन्नैर्ध्वजैश्चैव विशां पते ।
हयैश्च कनकापीडैः पतितैस्तत्र मेदिनी ॥ ००९ ॥

शैनेयशरसङ्कृत्तैः शोणितौघपरिप्लुतैः ।
अशोभत महाराज किंशुकैरिव पुष्पितैः ॥ ०१० ॥

ते वध्यमानाः समरे युयुधानेन तावकाः ।
त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः ॥ ०११ ॥

ततस्ते पर्यवर्तन्त सर्वे द्रोणरथं प्रति ।
भयात्पतगराजस्य गर्तानीव महोरगाः ॥ ०१२ ॥

हत्वा पञ्चशतान्योधाञ्शरैराशीविषोपमैः ।
प्रायात्स शनकैर्वीरो धनञ्जयरथं प्रति ॥ ०१३ ॥

तं प्रयान्तं नरश्रेष्ठं पुत्रो दुःशासनस्तव ।
विव्याध नवभिस्तूर्णं शरैः संनतपर्वभिः ॥ ०१४ ॥

स तु तं प्रतिविव्याध पञ्चभिर्निशितैः शरैः ।
रुक्मपुङ्खैर्महेष्वासो गार्ध्रपत्रैरजिह्मगैः ॥ ०१५ ॥

सात्यकिं तु महाराज प्रहसन्निव भारत ।
दुःशासनस्त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ ०१६ ॥

शैनेयस्तव पुत्रं तु विद्ध्वा पञ्चभिराशुगैः ।
धनुश्चास्य रणे छित्त्वा विस्मयन्नर्जुनं ययौ ॥ ०१७ ॥

ततो दुःशासनः क्रुद्धो वृष्णिवीराय गच्छते ।
सर्वपारशवीं शक्तिं विससर्ज जिघांसया ॥ ०१८ ॥

तां तु शक्तिं तदा घोरां तव पुत्रस्य सात्यकिः ।
चिच्छेद शतधा राजन्निशितैः कङ्कपत्रिभिः ॥ ०१९ ॥

अथान्यद्धनुरादाय पुत्रस्तव जनेश्वर ।
सात्यकिं दशभिर्विद्ध्वा सिंहनादं ननाद ह ॥ ०२० ॥

सात्यकिस्तु रणे क्रुद्धो मोहयित्वा सुतं तव ।
शरैरग्निशिखाकारैराजघान स्तनान्तरे ॥ ०२१ ॥

सर्वायसैस्तीक्ष्णवक्त्रैरष्टाभिर्विव्यधे पुनः ॥ ०२१ ॥

दुःशासनस्तु विंशत्या सात्यकिं प्रत्यविध्यत ।
सात्वतोऽपि महाराज तं विव्याध स्तनान्तरे ॥ ०२२ ॥

त्रिभिरेव महावेगैः शरैः संनतपर्वभिः ॥ ०२२ ॥

ततोऽस्य वाहान्निशितैः शरैर्जघ्ने महारथः ।
सारथिं च सुसङ्क्रुद्धः शरैः संनतपर्वभिः ॥ ०२३ ॥

धनुरेकेन भल्लेन हस्तावापं च पञ्चभिः ।
ध्वजं च रथशक्तिं च भल्लाभ्यां परमास्त्रवित् ॥ ०२४ ॥

चिच्छेद विशिखैस्तीक्ष्णैस्तथोभौ पार्ष्णिसारथी ॥ ०२४ ॥

स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।

त्रिगर्तसेनापतिना स्वरथेनापवाहितः ॥ ०२५ ॥

तमभिद्रुत्य शैनेयो मुहूर्तमिव भारत ।
न जघान महाबाहुर्भीमसेनवचः स्मरन् ॥ ०२६ ॥

भीमसेनेन हि वधः सुतानां तव भारत ।
प्रतिज्ञातः सभामध्ये सर्वेषामेव संयुगे ॥ ०२७ ॥

तथा दुःशासनं जित्वा सात्यकिः संयुगे प्रभो ।
जगाम त्वरितो राजन्येन यातो धनञ्जयः ॥ ०२८ ॥

---

# अध्याय १००

धृतराष्ट्र उवाच ॥

किं तस्यां मम सेनायां नासन्केचिन्महारथाः ।
ये तथा सात्यकिं यान्तं नैवाघ्नन्नाप्यवारयन् ॥ ००१ ॥

एको हि समरे कर्म कृतवान्सत्यविक्रमः ।
शक्रतुल्यबलो युद्धे महेन्द्रो दानवेष्विव ॥ ००२ ॥

अथ वा शून्यमासीत्तद्येन यातः स सात्यकिः ।
एको वै बहुलाः सेनाः प्रमृद्नन्पुरुषर्षभः ॥ ००३ ॥

कथं च युध्यमानानामपक्रान्तो महात्मनाम् ।
एको बहूनां शैनेयस्तन्ममाचक्ष्व सञ्जय ॥ ००४ ॥

सञ्जय उवाच ॥

राजन्सेनासमुद्योगो रथनागाश्वपत्तिमान् ।
तुमुलस्तव सैन्यानां युगान्तसदृशोऽभवत् ॥ ००५ ॥

आह्निकेषु समूहेषु तव सैन्यस्य मानद ।
नास्ति लोके समः कश्चित्समूह इति मे मतिः ॥ ००६ ॥

तत्र देवाः स्म भाषन्ते चारणाश्च समागताः ।
एतदन्ताः समूहा वै भविष्यन्ति महीतले ॥ ००७ ॥

न चैव तादृशः कश्चिद्व्यूह आसीद्विशां पते ।
यादृग्जयद्रथवधे द्रोणेन विहितोऽभवत् ॥ ००८ ॥

चण्डवाताभिपन्नानां समुद्राणामिव स्वनः ।
रणेऽभवद्बलौघानामन्योन्यमभिधावताम् ॥ ००९ ॥

पार्थिवानां समेतानां बहून्यासन्नरोत्तम ।
त्वद्बले पाण्डवानां च सहस्राणि शतानि च ॥ ०१० ॥

संरब्धानां प्रवीराणां समरे दृढकर्मणाम् ।
तत्रासीत्सुमहाञ्शब्दस्तुमुलो लोमहर्षणः ॥ ०११ ॥

अथाक्रन्दद्भीमसेनो धृष्टद्युम्नश्च मारिष ।
नकुलः सहदेवश्च धर्मराजश्च पाण्डवः ॥ ०१२ ॥

आगच्छत प्रहरत बलवत्परिधावत ।
प्रविष्टावरिसेनां हि वीरौ माधवपाण्डवौ ॥ ०१३ ॥

यथा सुखेन गच्छेतां जयद्रथवधं प्रति ।
तथा प्रकुरुत क्षिप्रमिति सैन्यान्यचोदयत् ॥ ०१४ ॥

तयोरभावे कुरवः कृतार्थाः स्युर्वयं जिताः  ॥ ०१४  ॥

ते यूयं सहिता भूत्वा तूर्णमेव बलार्णवम् ।
क्षोभयध्वं महावेगाः पवनाः सागरं यथा  ॥ ०१५  ॥

भीमसेनेन ते राजन्पाञ्चाल्येन च चोदिताः ।
आजघ्नुः कौरवान्संख्ये त्यक्त्वासूनात्मनः प्रियान्  ॥ ०१६  ॥

इच्छन्तो निधनं युद्धे शस्त्रैरुत्तमतेजसः ।
स्वर्गार्थं मित्रकार्यार्थं नाभ्यरक्षन्त जीवितम्  ॥ ०१७  ॥

तथैव तावका राजन्प्रार्थयन्तो महद्यशः ।
आर्यां युद्धे मतिं कृत्वा युद्धायैवोपतस्थिरे  ॥ ०१८  ॥

तस्मिंस्तु तुमुले युद्धे वर्तमाने महाभये ।
हत्वा सर्वाणि सैन्यानि प्रायात्सात्यकिरर्जुनम्  ॥ ०१९  ॥

कवचानां प्रभास्तत्र सूर्यरश्मिविचित्रिताः ।
दृष्टीः संख्ये सैनिकानां प्रतिजघ्नुः समन्ततः  ॥ ०२०  ॥

तथा प्रयतमानेषु पाण्डवेयेषु निर्भयः ।
दुर्योधनो महाराज व्यगाहत महद्बलम्  ॥ ०२१  ॥

स संनिपातस्तुमुलस्तेषां तस्य च भारत ।
अभवत्सर्वसैन्यानामभावकरणो महान्  ॥ ०२२  ॥

धृतराष्ट्र उवाच  ॥

तथा गतेषु सैन्येषु तथा कृच्छ्रगतः स्वयम् ।
कच्चिद्दुर्योधनः सूत नाकार्षीत्पृष्ठतो रणम्  ॥ ०२३  ॥

एकस्य च बहूनां च संनिपातो महाहवे ।
विशेषतो नृपतिना विषमः प्रतिभाति मे ॥ ०२४ ॥

सोऽत्यन्तसुखसंवृद्धो लक्ष्म्या लोकस्य चेश्वरः ।
एको बहून्समासाद्य कच्चिन्नासीत्पराङ्मुखः ॥ ०२५ ॥

सञ्जय उवाच ॥

राजन्सङ्ग्राममाश्चर्यं तव पुत्रस्य भारत ।
एकस्य च बहूनां च शृणुष्व गदतोऽद्भुतम् ॥ ०२६ ॥

दुर्योधनेन सहसा पाण्डवी पृतना रणे ।
नलिनी द्विरदेनेव समन्ताद्विप्रलोडिता ॥ ०२७ ॥

तथा सेनां कृतां दृष्ट्वा तव पुत्रेण कौरव ।
भीमसेनपुरोगास्तं पाञ्चालाः समुपाद्रवन् ॥ ०२८ ॥

स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः ।
विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम् ॥ ०२९ ॥

धृष्टद्युम्नं च विंशत्या धर्मपुत्रं च सप्तभिः ।
केकयान्दशभिर्विद्ध्वा द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ०३० ॥

शतशश्चापरान्योधान्सद्विपांश्च रथान्रणे ।
शरैरवचकर्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ॥ ०३१ ॥

न संदधन्विमुञ्चन्वा मण्डलीकृतकार्मुकः ।
अदृश्यत रिपून्निघ्नञ्शिक्षयास्त्रबलेन च ॥ ०३२ ॥

तस्य तान्निघ्नतः शत्रून्हेमपृष्ठं महद्धनुः ।

भल्लाभ्यां पाण्डवो ज्येष्ठस्त्रिधा चिच्छेद मारिष ॥ ०३३ ॥

विव्याध चैनं बहुभिः सम्यगस्तैः शितैः शरैः ।
वर्माण्याशु समासाद्य ते भग्नाः क्षितिमाविशन् ॥ ०३४ ॥

ततः प्रमुदिताः पार्थाः परिवव्रुर्युधिष्ठिरम् ।
यथा वृत्रवधे देवा मुदा शक्रं महर्षिभिः ॥ ०३५ ॥

अथ दुर्योधनो राजा दृढमादाय कार्मुकम् ।
तिष्ठ तिष्ठेति राजानं ब्रुवन्पाण्डवमभ्ययात् ॥ ०३६ ॥

तं तथा वादिनं राजंस्तव पुत्रं महारथम् ।
प्रत्युद्ययुः प्रमुदिताः पाञ्चाला जयगृद्धिनः ॥ ०३७ ॥

तान्द्रोणः प्रतिजग्राह परीप्सन्युधि पाण्डवम् ।
चण्डवातोद्धुतान्मेघान्सजलानचलो यथा ॥ ०३८ ॥

तत्र राजन्महानासीत्सङ्ग्रामो भूरिवर्धनः ।
रुद्रस्याक्रीडसङ्काशः संहारः सर्वदेहिनाम् ॥ ०३९ ॥

---

# अध्याय १०१

सञ्जय उवाच ॥

अपराह्णे महाराज सङ्ग्रामः समपद्यत ।
पर्जन्यसमनिर्घोषः पुनर्द्रोणस्य सोमकैः ॥ ००१ ॥

शोणाश्वं रथमास्थाय नरवीरः समाहितः ।

समरेऽभ्यद्रवत्पाण्डूञ्जवमास्थाय मध्यमम्  ॥ ००२  ॥

तव प्रियहिते युक्तो महेष्वासो महाबलः ।
चित्रपुङ्खैः शितैर्बाणैः कलशोत्तमसंभवः  ॥ ००३  ॥

वरान्वरान्हि योधानां विचिन्वन्निव भारत ।
अक्रीडत रणे राजन्भारद्वाजः प्रतापवान्  ॥ ००४  ॥

तमभ्ययाद्बृहत्क्षत्रः केकयानां महारथः ।
भ्रातृणां वीरपञ्चानां ज्येष्ठः समरकर्कशः  ॥ ००५  ॥

विमुञ्चन्विशिखांस्तीक्ष्णानाचार्यं छादयन्भृशम् ।
महामेघो यथा वर्षं विमुञ्चन्गन्धमादने  ॥ ००६  ॥

तस्य द्रोणो महाराज स्वर्णपुङ्खाञ्शिलाशितान् ।
प्रेषयामास सङ्क्रुद्धः सायकान्दश सप्त च  ॥ ००७  ॥

तांस्तु द्रोणधनुर्मुक्तान्घोरानाशीविषोपमान् ।
एकैकं दशभिर्बाणैर्युधि चिच्छेद हृष्टवत्  ॥ ००८  ॥

तस्य तल्लाघवं दृष्ट्वा प्रहसन्द्विजसत्तमः ।
प्रेषयामास विशिखानष्टौ संनतपर्वणः  ॥ ००९  ॥

तान्दृष्ट्वा पततः शीघ्रं द्रोणचापच्च्युताञ्शरान् ।
अवारयच्छरैरेव तावद्भिर्निशितैर्दृढैः  ॥ ०१०  ॥

ततोऽभवन्महाराज तव सैन्यस्य विस्मयः ।
बृहत्क्षत्रेण तत्कर्म कृतं दृष्ट्वा सुदुष्करम्  ॥ ०११  ॥

ततो द्रोणो महाराज केकयं वै विशेषयन् ।
प्रादुश्चक्रे रणे दिव्यं ब्राह्ममस्त्रं महातपाः  ॥ ०१२  ॥

तदस्य राजन्कैकेयः प्रत्यवारयदच्युतः ।
ब्राह्मेणैव महाबाहुराहवे समुदीरितम् ॥ ०१३ ॥

प्रतिहन्य तदस्त्रं तु भारद्वाजस्य संयुगे ।
विव्याध ब्राह्मणं षष्ट्या स्वर्णपुङ्खैः शिलाशितैः ॥ ०१४ ॥

तं द्रोणो द्विपदां श्रेष्ठो नाराचेन समर्पयत् ।
स तस्य कवचं भित्त्वा प्राविशद्धरणीतलम् ॥ ०१५ ॥

कृष्णसर्पो यथा मुक्तो वल्मीकं नृपसत्तम ।
तथाभ्यगान्महीं बाणो भित्त्वा कैकेयमाहवे ॥ ०१६ ॥

सोऽतिविद्धो महाराज द्रोणेनास्त्रविदा भृशम् ।
क्रोधेन महताविष्टो व्यावृत्य नयने शुभे ॥ ०१७ ॥

द्रोणं विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ।
सारथिं चास्य भल्लेन बाह्वोरुरसि चार्पयत् ॥ ०१८ ॥

द्रोणस्तु बहुधा विद्धो बृहत्क्षत्रेण मारिष ।
असृजद्विशिखांस्तीक्ष्णान्केकयस्य रथं प्रति ॥ ०१९ ॥

व्याकुलीकृत्य तं द्रोणो बृहत्क्षत्रं महारथम् ।
व्यसृजत्सायकं तीक्ष्णं केकयं प्रति भारत ॥ ०२० ॥

स गाढविद्धस्तेनाशु महाराज स्तनान्तरे ।
रथात्पुरुषशार्दूलः संभिन्नहृदयोऽपतत् ॥ ०२१ ॥

बृहत्क्षत्रे हते राजन्केकयानां महारथे ।
शैशुपालिः सुसङ्क्रुद्धो यन्तारमिदमब्रवीत् ॥ ०२२ ॥

सारथे याहि यत्रैष द्रोणस्तिष्ठति दंशितः ।
विनिघ्नन्केकयान्सर्वान्पाञ्चालानां च वाहिनीम् ॥ ०२३ ॥

तस्य तद्वचनं श्रुत्वा सारथी रथिनां वरम् ।
द्रोणाय प्रापयामास काम्बोजैर्जवनैर्हयैः ॥ ०२४ ॥

धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
सहसा प्रापतद्द्रोणं पतङ्ग इव पावकम् ॥ ०२५ ॥

सोऽभ्यविध्यत्ततो द्रोणं षष्ट्या साश्वरथध्वजम् ।
पुनश्चान्यैः शरैस्तीक्ष्णैः सुप्तं व्याघ्रं तुदन्निव ॥ ०२६ ॥

तस्य द्रोणो धनुर्मध्ये क्षुरप्रेण शितेन ह ।
चिच्छेद राज्ञो बलिनो यतमानस्य संयुगे ॥ ०२७ ॥

अथान्यद्धनुरादाय शैशुपालिर्महारथः ।
विव्याध सायकैर्द्रोणं पुनः सुनिशितैर्दृढैः ॥ ०२८ ॥

तस्य द्रोणो हयान्हत्वा सारथिं च महाबलः ।
अथैनं पञ्चविंशत्या सायकानां समार्पयत् ॥ ०२९ ॥

विरथो विधनुष्कश्च चेदिराजोऽपि संयुगे ।
गदां चिक्षेप सङ्क्रुद्धो भारद्वाजरथं प्रति ॥ ०३० ॥

तामापतन्तीं सहसा घोररूपां भयावहाम् ।
अश्मसारमयीं गुर्वीं तपनीयविभूषिताम् ॥ ०३१ ॥

शरैरनेकसाहस्रैर्भारद्वाजो न्यपातयत् ॥ ०३१ ॥

सा पपात गदा भूमौ भारद्वाजेन सादिता ।
रक्तमाल्याम्बरधरा तारेव नभसस्तलात् ॥ ०३२ ॥

गदां विनिहतां दृष्ट्वा धृष्टकेतुरमर्षणः ।
तोमरं व्यसृजत्तूर्णं शक्तिं च कनकोज्ज्वलाम् ॥ ०३३ ॥

तोमरं तु त्रिभिर्बाणैर्द्रोणश्छित्त्वा महामृधे ।
शक्तिं चिच्छेद सहसा कृतहस्तो महाबलः ॥ ०३४ ॥

ततोऽस्य विशिखं तीक्ष्णं वधार्थं वधकाङ्क्षिणः ।
प्रेषयामास समरे भारद्वाजः प्रतापवान् ॥ ०३५ ॥

स तस्य कवचं भित्त्वा हृदयं चामितौजसः ।
अभ्यगाद्धरणीं बाणो हंसः पद्मसरो यथा ॥ ०३६ ॥

पतङ्गं हि ग्रसेच्चाषो यथा राजन्बुभुक्षितः ।
तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महामृधे ॥ ०३७ ॥

निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत् ।
अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित् ॥ ०३८ ॥

तमपि प्रहसन्द्रोणः शरैर्निन्ये यमक्षयम् ।
महाव्याघ्रो महारण्ये मृगशावं यथा बली ॥ ०३९ ॥

तेषु प्रक्षीयमाणेषु पाण्डवेयेषु भारत ।
जरासंधसुतो वीरः स्वयं द्रोणमुपाद्रवत् ॥ ०४० ॥

स तु द्रोणं महाराज छादयन्सायकैः शितैः ।
अदृश्यमकरोत्तूर्णं जलदो भास्करं यथा ॥ ०४१ ॥

तस्य तल्लाघवं दृष्ट्वा द्रोणः क्षत्रियमर्दनः ।
व्यसृजत्सायकांस्तूर्णं शतशोऽथ सहस्रशः ॥ ०४२ ॥

छादयित्वा रणे द्रोणो रथस्थं रथिनां वरम् ।
जारासंधिमथो जघ्ने मिषतां सर्वधन्विनाम्  ॥ ०४३  ॥

यो यः स्म लीयते द्रोणं तं तं द्रोणोऽन्तकोपमः ।
आदत्त सर्वभूतानि प्राप्ते काले यथान्तकः  ॥ ०४४  ॥

ततो द्रोणो महेष्वासो नाम विश्राव्य संयुगे ।
शरैरनेकसाहस्रैः पाण्डवेयान्व्यमोहयत्  ॥ ०४५  ॥

ततो द्रोणाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः ।
नरान्नागान्हयांश्चैव निजघ्नुः सर्वतो रणे  ॥ ०४६  ॥

ते वध्यमाना द्रोणेन शक्रेणेव महासुराः ।
समकम्पन्त पाञ्चाला गावः शीतार्दिता इव  ॥ ०४७  ॥

ततो निष्टानको घोरः पाण्डवानामजायत ।
द्रोणेन वध्यमानेषु सैन्येषु भरतर्षभ  ॥ ०४८  ॥

मोहिताः शरवर्षेण भारद्वाजस्य संयुगे ।
ऊरुग्राहगृहीता हि पाञ्चालानां महारथाः  ॥ ०४९  ॥

चेदयश्च महाराज सृञ्जयाः सोमकास्तथा ।
अभ्यद्रवन्त संहृष्टा भारद्वाजं युयुत्सया  ॥ ०५०  ॥

हत द्रोणं हत द्रोणमिति ते द्रोणमभ्ययुः ।
यतन्तः पुरुषव्याघ्राः सर्वशक्त्या महाद्युतिम्  ॥ ०५१  ॥

निनीषन्तो रणे द्रोणं यमस्य सदनं प्रति  ॥ ०५१  ॥

यतमानांस्तु तान्वीरान्भारद्वाजः शिलीमुखैः ।
यमाय प्रेषयामास चेदिमुख्यान्विशेषतः  ॥ ०५२  ॥

तेषु प्रक्षीयमाणेषु चेदिमुख्येषु भारत ।
पाञ्चालाः समकम्पन्त द्रोणसायकपीडिताः ॥ ०५३ ॥

प्राक्रोशन्भीमसेनं ते धृष्टद्युम्नरथं प्रति ।
दृष्ट्वा द्रोणस्य कर्माणि तथारूपाणि मारिष ॥ ०५४ ॥

ब्राह्मणेन तपो नूनं चरितं दुश्चरं महत् ।
तथा हि युधि विक्रान्तो दहति क्षत्रियर्षभान् ॥ ०५५ ॥

धर्मो युद्धं क्षत्रियस्य ब्राह्मणस्य परं तपः ।
तपस्वी कृतविद्यश्च प्रेक्षितेनापि निर्दहेत् ॥ ०५६ ॥

द्रोणास्त्रमग्निसंस्पर्शं प्रविष्टाः क्षत्रियर्षभाः ।
बहवो दुस्तरं घोरं यत्रादह्यन्त भारत ॥ ०५७ ॥

यथाबलं यथोत्साहं यथासत्त्वं महाद्युतिः ।
मोहयन्सर्वभूतानि द्रोणो हन्ति बलानि नः ॥ ०५८ ॥

तेषां तद्वचनं श्रुत्वा क्षत्रधर्मा व्यवस्थितः ।
अर्धचन्द्रेण चिच्छेद द्रोणस्य सशरं धनुः ॥ ०५९ ॥

स संरब्धतरो भूत्वा द्रोणः क्षत्रियमर्दनः ।
अन्यत्कार्मुकमादाय भास्वरं वेगवत्तरम् ॥ ०६० ॥

तत्राधाय शरं तीक्ष्णं भारघ्नं विमलं दृढम् ।
आकर्णपूर्णमाचार्यो बलवानभ्यवासृजत् ॥ ०६१ ॥

स हत्वा क्षत्रधर्माणं जगाम धरणीतलम् ।
स भिन्नहृदयो वाहादपतन्मेदिनीतले ॥ ०६२ ॥

ततः सैन्यान्यकम्पन्त धृष्टद्युम्नसुते हते ।
अथ द्रोणं समारोहच्चेकितानो महारथः ॥ ०६३ ॥

स द्रोणं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ।
चतुर्भिः सारथिं चास्य चतुर्भिश्चतुरो हयान् ॥ ०६४ ॥

तस्याचार्यः षोडशभिरविध्यद्दक्षिणं भुजम् ।
ध्वजं षोडशभिर्बाणैर्यन्तारं चास्य सप्तभिः ॥ ०६५ ॥

तस्य सूते हते तेऽश्वा रथमादाय विद्रुताः ।
समरे शरसंवीता भारद्वाजेन मारिष ॥ ०६६ ॥

चेकितानरथं दृष्ट्वा विद्रुतं हतसारथिम् ।
पाञ्चालान्पाण्डवांश्चैव महद्भयमथाविशत् ॥ ०६७ ॥

तान्समेतान्रणे शूरांश्चेदिपाञ्चालसृञ्जयान् ।
समन्ताद्द्रावयन्द्रोणो बह्वशोभत मारिष ॥ ०६८ ॥

आकर्णपलितः श्यामो वयसाशीतिकात्परः ।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ ०६९ ॥

अथ द्रोणं महाराज विचरन्तमभीतवत् ।
वज्रहस्तममन्यन्त शत्रवः शत्रुसूदनम् ॥ ०७० ॥

ततोऽब्रवीन्महाराज द्रुपदो बुद्धिमान्नृप ।
लुब्धोऽयं क्षत्रियान्हन्ति व्याघ्रः क्षुद्रमृगानिव ॥ ०७१ ॥

कृच्छ्रान्दुर्योधनो लोकान्पापः प्राप्स्यति दुर्मतिः ।
यस्य लोभाद्विनिहताः समरे क्षत्रियर्षभाः ॥ ०७२ ॥

शतशः शेरते भूमौ निकृत्ता गोवृषा इव ।

रुधिरेण परीताङ्गाः श्वसृगालादनीकृताः ॥ ०७३ ॥

एवमुक्त्वा महाराज द्रुपदोऽक्षौहिणीपतिः ।
पुरस्कृत्य रणे पार्थान्द्रोणमभ्यद्रवद्द्रुतम् ॥ ०७४ ॥

---

# अध्याय १०२

सञ्जय उवाच ॥

व्यूहेष्वालोड्यमानेषु पाण्डवानां ततस्ततः ।
सुदूरमन्वयुः पार्थाः पाञ्चालाः सह सोमकैः ॥ ००१ ॥

वर्तमाने तथा रौद्रे सङ्ग्रामे लोमहर्षणे ।
प्रक्षये जगतस्तीव्रे युगान्त इव भारत ॥ ००२ ॥

द्रोणे युधि पराक्रान्ते नर्दमाने मुहुर्मुहुः ।
पाञ्चालेषु च क्षीणेषु वध्यमानेषु पाण्डुषु ॥ ००३ ॥

नापश्यच्छरणं किञ्चिद्धर्मराजो युधिष्ठिरः ।
चिन्तयामास राजेन्द्र कथमेतद्भविष्यति ॥ ००४ ॥

तत्रावेक्ष्य दिशः सर्वाः सव्यसाचिदिदृक्षया ।
युधिष्ठिरो ददर्शाथ नैव पार्थं न माधवम् ॥ ००५ ॥

सोऽपश्यन्नरशार्दूलं वानरर्षभलक्षणम् ।
गाण्डीवस्य च निर्घोषमशृण्वन्व्यथितेन्द्रियः ॥ ००६ ॥

अपश्यन्सात्यकिं चापि वृष्णीनां प्रवरं रथम् ।
चिन्तयाभिपरीताङ्गो धर्मराजो युधिष्ठिरः ॥ ००७ ॥

नाध्यगच्छत्तदा शान्तिं तावपश्यन्नरर्षभौ ॥ ००७ ॥

लोकोपक्रोशभीरुत्वाद्धर्मराजो महायशाः ।
अचिन्तयन्महाबाहुः शैनेयस्य रथं प्रति ॥ ००८ ॥

पदवीं प्रेषितश्चैव फल्गुनस्य मया रणे ।
शैनेयः सात्यकिः सत्यो मित्राणामभयङ्करः ॥ ००९ ॥

तदिदं ह्येकमेवासीद्द्विधा जातं ममाद्य वै ।
सात्यकिश्च हि मे ज्ञेयः पाण्डवश्च धनञ्जयः ॥ ०१० ॥

सात्यकिं प्रेषयित्वा तु पाण्डवस्य पदानुगम् ।
सात्वतस्यापि कं युद्धे प्रेषयिष्ये पदानुगम् ॥ ०११ ॥

करिष्यामि प्रयत्नेन भ्रातुरन्वेषणं यदि ।
युयुधानमनन्विष्य लोको मां गर्हयिष्यति ॥ ०१२ ॥

भ्रातुरन्वेषणं कृत्वा धर्मराजो युधिष्ठिरः ।
परित्यजति वार्ष्णेयं सात्यकिं सत्यविक्रमम् ॥ ०१३ ॥

लोकापवादभीरुत्वात्सोऽहं पार्थं वृकोदरम् ।
पदवीं प्रेषयिष्यामि माधवस्य महात्मनः ॥ ०१४ ॥

यथैव च मम प्रीतिरर्जुने शत्रुसूदने ।
तथैव वृष्णिवीरेऽपि सात्वते युद्धदुर्मदे ॥ ०१५ ॥

अतिभारे नियुक्तश्च मया शैनेयनन्दनः ।
स तु मित्रोपरोधेन गौरवाच्च महाबलः ॥ ०१६ ॥

प्रविष्टो भारतीं सेनां मकरः सागरं यथा ॥ ०१६ ॥

असौ हि श्रूयते शब्दः शूराणामनिवर्तिनाम् ।
मिथः संयुध्यमानानां वृष्णिवीरेण धीमता ॥ ०१७ ॥

प्राप्तकालं सुबलवन्निश्चित्य बहुधा हि मे ।
तत्रैव पाण्डवेयस्य भीमसेनस्य धन्विनः ॥ ०१८ ॥

गमनं रोचते मह्यं यत्र यातौ महारथौ ॥ ०१८ ॥

न चाप्यसह्यं भीमस्य विद्यते भुवि किञ्चन ।
शक्तो ह्येष रणे यत्तान्पृथिव्यां सर्वधन्विनः ॥ ०१९ ॥

स्वबाहुबलमास्थाय प्रतिव्यूहितुमञ्जसा ॥ ०१९ ॥

यस्य बाहुबलं सर्वे समाश्रित्य महात्मनः ।
वनवासान्निवृत्ताः स्म न च युद्धेषु निर्जिताः ॥ ०२० ॥

इतो गते भीमसेने सात्वतं प्रति पाण्डवे ।
सनाथौ भवितारौ हि युधि सात्वतफल्गुनौ ॥ ०२१ ॥

कामं त्वशोचनीयौ तौ रणे सात्वतफल्गुनौ ।
रक्षितौ वासुदेवेन स्वयं चास्त्रविशारदौ ॥ ०२२ ॥

अवश्यं तु मया कार्यमात्मनः शोकनाशनम् ।
तस्माद्भीमं नियोक्ष्यामि सात्वतस्य पदानुगम् ॥ ०२३ ॥

ततः प्रतिकृतं मन्ये विधानं सात्यकिं प्रति ॥ ०२३ ॥

एवं निश्चित्य मनसा धर्मपुत्रो युधिष्ठिरः ।

यन्तारमब्रवीद्राजन्भीमं प्रति नयस्व माम्  ॥ ०२४  ॥

धर्मराजवचः श्रुत्वा सारथिर्हयकोविदः ।
रथं हेमपरिष्कारं भीमान्तिकमुपानयत्  ॥ ०२५  ॥

भीमसेनमनुप्राप्य प्राप्तकालमनुस्मरन् ।
कश्मलं प्राविशद्राजा बहु तत्र समादिशन्  ॥ ०२६  ॥

यः सदेवान्सगन्धर्वान्दैत्यांश्चैकरथोऽजयत् ।
तस्य लक्ष्म न पश्यामि भीमसेनानुजस्य ते  ॥ ०२७  ॥

ततोऽब्रवीद्धर्मराजं भीमसेनस्तथागतम् ।
नैवाद्राक्षं न चाश्रौषं तव कश्मलमीदृशम्  ॥ ०२८  ॥

पुरा हि दुःखदीर्णानां भवान्गतिरभूद्धि नः ।
उत्तिष्ठोत्तिष्ठ राजेन्द्र शाधि किं करवाणि ते  ॥ ०२९  ॥

न ह्यसाध्यमकार्यं वा विद्यते मम मानद ।
आज्ञापय कुरुश्रेष्ठ मा च शोके मनः कृथाः  ॥ ०३०  ॥

तमब्रवीदश्रुपूर्णः कृष्णसर्प इव श्वसन् ।
भीमसेनमिदं वाक्यं प्रम्लानवदनो नृपः  ॥ ०३१  ॥

यथा शङ्खस्य निर्घोषः पाञ्चजन्यस्य श्रूयते ।
प्रेरितो वासुदेवेन संरब्धेन यशस्विना  ॥ ०३२  ॥

नूनमद्य हतः शेते तव भ्राता धनञ्जयः  ॥ ०३२  ॥

तस्मिन्विनिहते नूनं युध्यतेऽसौ जनार्दनः ।
यस्य सत्त्ववतो वीर्यमुपजीवन्ति पाण्डवाः  ॥ ०३३  ॥

यं भयेष्वभिगच्छन्ति सहस्राक्षमिवामराः ।
स शूरः सैन्धवप्रेप्सुरन्वयाद्भारतीं चमूम्  ॥ ०३४  ॥

तस्य वै गमनं विद्मो भीम नावर्तनं पुनः ।
श्यामो युवा गुडाकेशो दर्शनीयो महाभुजः  ॥ ०३५  ॥

व्यूढोरस्को महास्कन्धो मत्तद्विरदविक्रमः ।
चकोरनेत्रस्ताम्राक्षो द्विषतामघवर्धनः  ॥ ०३६  ॥

तदिदं मम भद्रं ते शोकस्थानमरिंदम ।
अर्जुनार्थं महाबाहो सात्वतस्य च कारणात्  ॥ ०३७  ॥

वर्धते हविषेवाग्निरिध्यमानः पुनः पुनः ।
तस्य लक्ष्म न पश्यामि तेन विन्दामि कश्मलम्  ॥ ०३८  ॥

तं विद्धि पुरुषव्याघ्रं सात्वतं च महारथम् ।
स तं महारथं पश्चादनुयातस्तवानुजम्  ॥ ०३९  ॥

तमपश्यन्महाबाहुमहं विन्दामि कश्मलम्  ॥ ०३९  ॥

तस्मात्कृष्णो रणे नूनं युध्यते युद्धकोविदः ।
यस्य वीर्यवतो वीर्यमुपजीवन्ति पाण्डवाः  ॥ ०४०  ॥

स तत्र गच्छ कौन्तेय यत्र यातो धनञ्जयः ।
सात्यकिश्च महावीर्यः कर्तव्यं यदि मन्यसे  ॥ ०४१  ॥

वचनं मम धर्मज्ञ ज्येष्ठो भ्राता भवामि ते  ॥ ०४१  ॥

न तेऽर्जुनस्तथा ज्ञेयो ज्ञातव्यः सात्यकिर्यथा ।
चिकीर्षुर्मत्प्रियं पार्थ प्रयातः सव्यसाचिनः  ॥ ०४२  ॥

पदवीं दुर्गमां घोरामगम्यामकृतात्मभिः ॥ ०४२ ॥

भीमसेन उवाच ॥

ब्रह्मेशानेन्द्रवरुणानवहद्यः पुरा रथः ।
तमास्थाय गतौ कृष्णौ न तयोर्विद्यते भयम् ॥ ०४३ ॥

आज्ञां तु शिरसा बिभ्रदेष गच्छामि मा शुचः ।
समेत्य तान्नरव्याघ्रांस्तव दास्यामि संविदम् ॥ ०४४ ॥

सञ्जय उवाच ॥

एतावदुक्त्वा प्रययौ परिदाय युधिष्ठिरम् ।
धृष्टद्युम्नाय बलवान्सुहृद्भ्यश्च पुनः पुनः ॥ ०४५ ॥

धृष्टद्युम्नं चेदमाह भीमसेनो महाबलः ॥ ०४५ ॥

विदितं ते महाबाहो यथा द्रोणो महारथः ।
ग्रहणे धर्मराजस्य सर्वोपायेन वर्तते ॥ ०४६ ॥

न च मे गमने कृत्यं तादृक्पार्षत विद्यते ।
यादृशं रक्षणे राज्ञः कार्यमात्ययिकं हि नः ॥ ०४७ ॥

एवमुक्तोऽस्मि पार्थेन प्रतिवक्तुं स्म नोत्सहे ।
प्रयास्ये तत्र यत्रासौ मुमूर्षुः सैन्धवः स्थितः ॥ ०४८ ॥

धर्मराजस्य वचने स्थातव्यमविशङ्कया ॥ ०४८ ॥

सोऽद्य यत्तो रणे पार्थं परिरक्ष युधिष्ठिरम् ।
एतद्धि सर्वकार्याणां परमं कृत्यमाहवे ॥ ०४९ ॥

तमब्रवीन्महाराज धृष्टद्युम्नो वृकोदरम् ।
ईप्सितेन महाबाहो गच्छ पार्थाविचारयन्  ॥ ०५० ॥

नाहत्वा समरे द्रोणो धृष्टद्युम्नं कथञ्चन ।
निग्रहं धर्मराजस्य प्रकरिष्यति संयुगे  ॥ ०५१ ॥

ततो निक्षिप्य राजानं धृष्टद्युम्नाय पाण्डवः ।
अभिवाद्य गुरुं ज्येष्ठं प्रययौ यत्र फल्गुनः  ॥ ०५२ ॥

परिष्वक्तस्तु कौन्तेयो धर्मराजेन भारत ।
आघ्रातश्च तथा मूर्ध्नि श्रावितश्चाशिषः शुभाः  ॥ ०५३ ॥

भीमसेनो महाबाहुः कवची शुभकुण्डली ।
साङ्गदः सतनुत्राणः सशरी रथिनां वरः  ॥ ०५४ ॥

तस्य कार्ष्णायसं वर्म हेमचित्रं महर्द्धिमत् ।
विबभौ पर्वतश्लिष्टः सविद्युदिव तोयदः  ॥ ०५५ ॥

पीतरक्तासितसितैर्वासोभिश्च सुवेष्टितः ।
कण्ठत्राणेन च बभौ सेन्द्रायुध इवाम्बुदः  ॥ ०५६ ॥

प्रयाते भीमसेने तु तव सैन्यं युयुत्सया ।
पाञ्चजन्यरवो घोरः पुनरासीद्विशां पते  ॥ ०५७ ॥

तं श्रुत्वा निनदं घोरं त्रैलोक्यत्रासनं महत् ।
पुनर्भीमं महाबाहुर्धर्मपुत्रोऽभ्यभाषत  ॥ ०५८ ॥

एष वृष्णिप्रवीरेण ध्मातः सलिलजो भृशम् ।
पृथिवीं चान्तरिक्षं च विनादयति शङ्खराट्  ॥ ०५९ ॥

नूनं व्यसनमापन्ने सुमहत्सव्यसाचिनि ।

कुरुभिर्युध्यते सार्धं सर्वैश्चक्रगदाधरः ॥ ०६० ॥

नूनमार्या महत्कुन्ती पापमद्य निदर्शनम् ।
द्रौपदी च सुभद्रा च पश्यन्ति सह बन्धुभिः ॥ ०६१ ॥

स भीमस्त्वरया युक्तो याहि यत्र धनञ्जयः ।
मुह्यन्तीव हि मे सर्वा धनञ्जयदिदृक्षया ॥ ०६२ ॥

दिशः सप्रदिशः पार्थ सात्वतस्य च कारणात् ॥ ०६२ ॥

गच्छ गच्छेति च पुनर्भीमसेनमभाषत ।
भृशं स प्रहितो भ्रात्रा भ्राता भ्रातुः प्रियङ्करः ॥ ०६३ ॥

आहत्य दुन्दुभिं भीमः शङ्खं प्रध्माय चासकृत् ॥ ०६३ ॥

विनद्य सिंहनादं च ज्यां विकर्षन्पुनः पुनः ।
दर्शयन्घोरमात्मानममित्रान्सहसाभ्ययात् ॥ ०६४ ॥

तमूहुर्जवना दान्ता विकुर्वाणा हयोत्तमाः ।
विशोकेनाभिसंयत्ता मनोमारुतरंहसः ॥ ०६५ ॥

आरुजन्विरुजन्पार्थो ज्यां विकर्षंश्च पाणिना ।
सोऽवकर्षन्विकर्षंश्च सेनाग्रं समलोडयत् ॥ ०६६ ॥

तं प्रयान्तं महाबाहुं पाञ्चालाः सहसोमकाः ।
पृष्ठतोऽनुययुः शूरा मघवन्तमिवामराः ॥ ०६७ ॥

तं ससेना महाराज सोदर्याः पर्यवारयन् ।
दुःशलश्चित्रसेनश्च कुण्डभेदी विविंशतिः ॥ ०६८ ॥

दुर्मुखो दुःसहश्चैव विकर्णश्च शलस्तथा ।

विन्दानुविन्दौ सुमुखो दीर्घबाहुः सुदर्शनः ॥ ०६९ ॥

वृन्दारकः सुहस्तश्च सुषेणो दीर्घलोचनः ।
अभयो रौद्रकर्मा च सुवर्मा दुर्विमोचनः ॥ ०७० ॥

विविधै रथिनां श्रेष्ठाः सह सैन्यैः सहानुगैः ।
संयत्ताः समरे शूरा भीमसेनमुपाद्रवन् ॥ ०७१ ॥

तान्समीक्ष्य तु कौन्तेयो भीमसेनः पराक्रमी ।
अभ्यवर्तत वेगेन सिंहः क्षुद्रमृगानिव ॥ ०७२ ॥

ते महास्त्राणि दिव्यानि तत्र वीरा अदर्शयन् ।
वारयन्तः शरैर्भीमं मेघाः सूर्यमिवोदितम् ॥ ०७३ ॥

स तानतीत्य वेगेन द्रोणानीकमुपाद्रवत् ।
अग्रतश्च गजानीकं शरवर्षैरवाकिरत् ॥ ०७४ ॥

सोऽचिरेणैव कालेन तद्गजानीकमाशुगैः ।
दिशः सर्वाः समभ्यस्य व्यधमत्पवनात्मजः ॥ ०७५ ॥

त्रासिताः शरभस्येव गर्जितेन वने मृगाः ।
प्राद्रवन्द्विरदाः सर्वे नदन्तो भैरवान्रवान् ॥ ०७६ ॥

पुनश्चातीत्य वेगेन द्रोणानीकमुपाद्रवत् ।
तमवारयदाचार्यो वेलेवोद्वृत्तमर्णवम् ॥ ०७७ ॥

ललाटेऽताडयच्चैनं नाराचेन स्मयन्निव ।
ऊर्ध्वरश्मिरिवादित्यो विबभौ तत्र पाण्डवः ॥ ०७८ ॥

स मन्यमानस्त्वाचार्यो ममायं फल्गुनो यथा ।
भीमः करिष्यते पूजामित्युवाच वृकोदरम् ॥ ०७९ ॥

भीमसेन न ते शक्यं प्रवेष्टुमरिवाहिनीम् ।
मामनिर्जित्य समरे शत्रुमध्ये महाबल ॥ ०८० ॥

यदि ते सोऽनुजः कृष्णः प्रविष्टोऽनुमते मम ।
अनीकं न तु शक्यं भोः प्रवेष्टुमिह वै त्वया ॥ ०८१ ॥

अथ भीमस्तु तच्छ्रुत्वा गुरोर्वाक्यमपेतभीः ।
क्रुद्धः प्रोवाच वै द्रोणं रक्तताम्रेक्षणः श्वसन् ॥ ०८२ ॥

तवार्जुनो नानुमते ब्रह्मबन्धो रणाजिरम् ।
प्रविष्टः स हि दुर्धर्षः शक्रस्यापि विशेद्बलम् ॥ ०८३ ॥

येन वै परमां पूजां कुर्वता मानितो ह्यसि ।
नार्जुनोऽहं घृणी द्रोण भीमसेनोऽस्मि ते रिपुः ॥ ०८४ ॥

पिता नस्त्वं गुरुर्बन्धुस्तथा पुत्रा हि ते वयम् ।
इति मन्यामहे सर्वे भवन्तं प्रणताः स्थिताः ॥ ०८५ ॥

अद्य तद्विपरीतं ते वदतोऽस्मासु दृश्यते ।
यदि शत्रुं त्वमात्मानं मन्यसे तत्तथास्त्विह ॥ ०८६ ॥

एष ते सदृशं शत्रोः कर्म भीमः करोम्यहम् ॥ ०८६ ॥

अथोद्भ्राम्य गदां भीमः कालदण्डमिवान्तकः ।
द्रोणायावसृजद्राजन्स रथादवपुप्लुवे ॥ ०८७ ॥

साश्वसूतध्वजं यानं द्रोणस्यापोथयत्तदा ।
प्रामृद्नाच्च बहून्योधान्वायुर्वृक्षानिवौजसा ॥ ०८८ ॥

तं पुनः परिवव्रुस्ते तव पुत्रा रथोत्तमम् ।

अन्यं च रथमास्थाय द्रोणः प्रहरतां वरः ॥ ०८९ ॥

ततः क्रुद्धो महाराज भीमसेनः पराक्रमी ।
अग्रतः स्यन्दनानीकं शरवर्षैरवाकिरत् ॥ ०९० ॥

ते वध्यमानाः समरे तव पुत्रा महारथाः ।
भीमं भीमबलं युद्धेऽयोधयंस्तु जयैषिणः ॥ ०९१ ॥

ततो दुःशासनः क्रुद्धो रथशक्तिं समाक्षिपत् ।
सर्वपारशवीं तीक्ष्णां जिघांसुः पाण्डुनन्दनम् ॥ ०९२ ॥

आपतन्तीं महाशक्तिं तव पुत्रप्रचोदिताम् ।
द्विधा चिच्छेद तां भीमस्तदद्भुतमिवाभवत् ॥ ०९३ ॥

अथान्यैर्निशितैर्बाणैः सङ्क्रुद्धः कुण्डभेदिनम् ।
सुषेणं दीर्घनेत्रं च त्रिभिस्त्रीनवधीद्बली ॥ ०९४ ॥

ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
पुत्राणां तव वीराणां युध्यतामवधीत्पुनः ॥ ०९५ ॥

अभयं रौद्रकर्माणं दुर्विमोचनमेव च ।
त्रिभिस्त्रीनवधीद्भीमः पुनरेव सुतांस्तव ॥ ०९६ ॥

वध्यमाना महाराज पुत्रास्तव बलीयसा ।
भीमं प्रहरतां श्रेष्ठं समन्तात्पर्यवारयन् ॥ ०९७ ॥

विन्दानुविन्दौ सहितौ सुवर्माणं च ते सुतम् ।
प्रहसन्निव कौन्तेयः शरैर्निन्ये यमक्षयम् ॥ ०९८ ॥

ततः सुदर्शनं वीरं पुत्रं ते भरतर्षभ ।
विव्याध समरे तूर्णं स पपात ममार च ॥ ०९९ ॥

सोऽचिरेणैव कालेन तद्रथानीकमाशुगैः ।
दिशः सर्वाः समभ्यस्य व्यधमत्पाण्डुनन्दनः ॥ १०० ॥

ततो वै रथघोषेण गर्जितेन मृगा इव ।
वध्यमानाश्च समरे पुत्रास्तव विशां पते ॥ १०१ ॥

प्राद्रवन्सरथाः सर्वे भीमसेनभयार्दिताः ॥ १०१ ॥

अनुयाय तु कौन्तेयः पुत्राणां ते महद्बलम् ।
विव्याध समरे राजन्कौरवेयान्समन्ततः ॥ १०२ ॥

वध्यमाना महाराज भीमसेनेन तावकाः ।
त्यक्त्वा भीमं रणे यान्ति चोदयन्तो हयोत्तमान् ॥ १०३ ॥

तांस्तु निर्जित्य समरे भीमसेनो महाबलः ।
सिंहनादरवं चक्रे बाहुशब्दं च पाण्डवः ॥ १०४ ॥

तलशब्दं च सुमहत्कृत्वा भीमो महाबलः ।
व्यतीत्य रथिनश्चापि द्रोणानीकमुपाद्रवत् ॥ १०५ ॥

---

# अध्याय १०३

सञ्जय उवाच ॥

तमुत्तीर्णं रथानीकात्तमसो भास्करं यथा ।
दिधारयिषुराचार्यः शरवर्षैरवाकिरत् ॥ ००१ ॥

पिबन्निव शरौघांस्तान्द्रोणचापवरातिगान् ।
सोऽभ्यवर्तत सोदर्यान्मायया मोहयन्बलम् ॥ ००२ ॥

तं मृधे वेगमास्थाय परं परमधन्विनः ।
चोदितास्तव पुत्रैश्च सर्वतः पर्यवारयन् ॥ ००३ ॥

स तथा संवृतो भीमः प्रहसन्निव भारत ।
उदयच्छद्गदां तेभ्यो घोरां तां सिंहवन्नदन् ॥ ००४ ॥

अवासृजच्च वेगेन तेषु तान्प्रमथद्बली ॥ ००४ ॥

सेन्द्राशनिरिवेन्द्रेण प्रविद्धा संहतात्मना ।
घोषेण महता राजन्पूरयित्वेव मेदिनीम् ॥ ००५ ॥

ज्वलन्ती तेजसा भीमा त्रासयामास ते सुतान् ॥ ००५ ॥

तां पतन्तीं महावेगां दृष्ट्वा तेजोभिसंवृताम् ।
प्राद्रवंस्तावकाः सर्वे नदन्तो भैरवान्रवान् ॥ ००६ ॥

तं च शब्दमसंसह्यं तस्याः संलक्ष्य मारिष ।
प्रापतन्मनुजास्तत्र रथेभ्यो रथिनस्तदा ॥ ००७ ॥

स तान्विद्राव्य कौन्तेयः संख्येऽमित्रान्दुरासदः ।
सुपर्ण इव वेगेन पक्षिराडत्यगाच्चमूम् ॥ ००८ ॥

तथा तं विप्रकुर्वाणं रथयूथपयूथपम् ।
भारद्वाजो महाराज भीमसेनं समभ्ययात् ॥ ००९ ॥

द्रोणस्तु समरे भीमं वारयित्वा शरोर्मिभिः ।
अकरोत्सहसा नादं पाण्डूनां भयमादधत् ॥ ०१० ॥

तद्युद्धमासीत्सुमहद्घोरं देवासुरोपमम् ।
द्रोणस्य च महाराज भीमस्य च महात्मनः ॥ ०११ ॥

यदा तु विशिखैस्तीक्ष्णैर्द्रोणचापविनिःसृतैः ।
वध्यन्ते समरे वीराः शतशोऽथ सहस्रशः ॥ ०१२ ॥

ततो रथादवप्लुत्य वेगमास्थाय पाण्डवः ।
निमील्य नयने राजन्पदातिर्द्रोणमभ्ययात् ॥ ०१३ ॥

यथा हि गोवृषो वर्षं प्रतिगृह्णाति लीलया ।
तथा भीमो नरव्याघ्रः शरवर्षं समग्रहीत् ॥ ०१४ ॥

स वध्यमानः समरे रथं द्रोणस्य मारिष ।
ईषायां पाणिना गृह्य प्रचिक्षेप महाबलः ॥ ०१५ ॥

द्रोणस्तु सत्वरो राजन्क्षिप्तो भीमेन संयुगे ।
रथमन्यं समास्थाय व्यूहद्वारमुपाययौ ॥ ०१६ ॥

तस्मिन्क्षणे तस्य यन्ता तूर्णमश्वानचोदयत् ।
भीमसेनस्य कौरव्य तदद्भुतमिवाभवत् ॥ ०१७ ॥

ततः स्वरथमास्थाय भीमसेनो महाबलः ।
अभ्यवर्तत वेगेन तव पुत्रस्य वाहिनीम् ॥ ०१८ ॥

स मृद्नन्क्षत्रियानाजौ वातो वृक्षानिवोद्धतः ।
अगच्छद्दारयन्सेनां सिन्धुवेगो नगानिव ॥ ०१९ ॥

भोजानीकं समासाद्य हार्दिक्येनाभिरक्षितम् ।
प्रमथ्य बहुधा राजन्भीमसेनः समभ्ययात् ॥ ०२० ॥

संत्रासयन्ननीकानि तलशब्देन मारिष ।

अजयत्सर्वसैन्यानि शार्दूल इव गोवृषान्  ॥ ०२१  ॥

भोजानीकमतिक्रम्य काम्बोजानां च वाहिनीम् ।
तथा म्लेच्छगणांश्चान्यान्बहून्युद्धविशारदान्  ॥ ०२२  ॥

सात्यकिं चापि संप्रेक्ष्य युध्यमानं नरर्षभम् ।
रथेन यत्तः कौन्तेयो वेगेन प्रययौ तदा  ॥ ०२३  ॥

भीमसेनो महाराज द्रष्टुकामो धनञ्जयम् ।
अतीत्य समरे योधांस्तावकान्पाण्डुनन्दनः  ॥ ०२४  ॥

सोऽपश्यदर्जुनं तत्र युध्यमानं नरर्षभम् ।
सैन्धवस्य वधार्थं हि पराक्रान्तं पराक्रमी  ॥ ०२५  ॥

अर्जुनं तत्र दृष्ट्वाथ चुक्रोश महतो रवान् ।
तं तु तस्य महानादं पार्थः शुश्राव नर्दतः  ॥ ०२६  ॥

ततः पार्थो महानादं मुञ्चन्वै माधवश्च ह ।
अभ्ययातां महाराज नर्दन्तौ गोवृषाविव  ॥ ०२७  ॥

वासुदेवार्जुनौ श्रुत्वा निनादं तस्य शुष्मिणः ।
पुनः पुनः प्रणदतां दिदृक्षन्तौ वृकोदरम्  ॥ ०२८  ॥

भीमसेनरवं श्रुत्वा फल्गुनस्य च धन्विनः ।
अप्रीयत महाराज धर्मपुत्रो युधिष्ठिरः  ॥ ०२९  ॥

विशोकश्चाभवद्राजा श्रुत्वा तं निनदं महत् ।
धनञ्जयस्य च रणे जयमाशास्तवान्विभुः  ॥ ०३०  ॥

तथा तु नर्दमाने वै भीमसेने रणोत्कटे ।
स्मितं कृत्वा महाबाहुर्धर्मपुत्रो युधिष्ठिरः  ॥ ०३१  ॥

हृद्गतं मनसा प्राह ध्यात्वा धर्मभृतां वरः ।
दत्ता भीम त्वया संवित्कृतं गुरुवचस्तथा ॥ ०३२ ॥

न हि तेषां जयो युद्धे येषां द्वेष्टासि पाण्डव ।
दिष्ट्या जीवति सङ्ग्रामे सव्यसाची धनञ्जयः ॥ ०३३ ॥

दिष्ट्या च कुशली वीरः सात्यकिः सत्यविक्रमः ।
दिष्ट्या शृणोमि गर्जन्तौ वासुदेवधनञ्जयौ ॥ ०३४ ॥

येन शक्रं रणे जित्वा तर्पितो हव्यवाहनः ।
स हन्ता द्विषतां संख्ये दिष्ट्या जीवति फल्गुनः ॥ ०३५ ॥

यस्य बाहुबलं सर्वे वयमाश्रित्य जीविताः ।
स हन्ता रिपुसैन्यानां दिष्ट्या जीवति फल्गुनः ॥ ०३६ ॥

निवातकवचा येन देवैरपि सुदुर्जयाः ।
निर्जिता रथिनैकेन दिष्ट्या पार्थः स जीवति ॥ ०३७ ॥

कौरवान्सहितान्सर्वान्गोग्रहार्थे समागतान् ।
योऽजयन्मत्स्यनगरे दिष्ट्या पार्थः स जीवति ॥ ०३८ ॥

कालकेयसहस्राणि चतुर्दश महारणे ।
योऽवधीद्भुजवीर्येण दिष्ट्या पार्थः स जीवति ॥ ०३९ ॥

गन्धर्वराजं बलिनं दुर्योधनकृतेन वै ।
जितवान्योऽस्त्रवीर्येण दिष्ट्या पार्थः स जीवति ॥ ०४० ॥

किरीटमाली बलवाञ्श्वेताश्वः कृष्णसारथिः ।
मम प्रियश्च सततं दिष्ट्या जीवति फल्गुनः ॥ ०४१ ॥

पुत्रशोकाभिसंतप्तश्चिकीर्षुः कर्म दुष्करम् ।
जयद्रथवधान्वेषी प्रतिज्ञां कृतवान्हि यः ॥ ०४२ ॥

कच्चित्स सैन्धवं संख्ये हनिष्यति धनञ्जयः ॥ ०४२ ॥

कच्चित्तीर्णप्रतिज्ञं हि वासुदेवेन रक्षितम् ।
अनस्तमित आदित्ये समेष्याम्यहमर्जुनम् ॥ ०४३ ॥

कच्चित्सैन्धवको राजा दुर्योधनहिते रतः ।
नन्दयिष्यत्यमित्राणि फल्गुनेन निपातितः ॥ ०४४ ॥

कच्चिद्दुर्योधनो राजा फल्गुनेन निपातितम् ।
दृष्ट्वा सैन्धवकं संख्ये शममस्मासु धास्यति ॥ ०४५ ॥

दृष्ट्वा विनिहतान्भ्रातॄन्भीमसेनेन संयुगे ।
कच्चिद्दुर्योधनो मन्दः शममस्मासु धास्यति ॥ ०४६ ॥

दृष्ट्वा चान्यान्बहून्योधान्पातितान्धरणीतले ।
कच्चिद्दुर्योधनो मन्दः पश्चात्तापं करिष्यति ॥ ०४७ ॥

कच्चिद्भीष्मेण नो वैरमेकेनैव प्रशाम्यति ।
शेषस्य रक्षणार्थं च संधास्यति सुयोधनः ॥ ०४८ ॥

एवं बहुविधं तस्य चिन्तयानस्य पार्थिव ।
कृपयाभिपरीतस्य घोरं युद्धमवर्तत ॥ ०४९ ॥

# अध्याय १०४

धृतराष्ट्र उवाच ॥

तथा तु नर्दमानं तं भीमसेनं महाबलम् ।
मेघस्तनितनिर्घोषं के वीराः पर्यवारयन् ॥ ००१ ॥

न हि पश्याम्यहं तं वै त्रिषु लोकेषु सञ्जय ।
क्रुद्धस्य भिमसेनस्य यस्तिष्ठेदग्रतो रणे ॥ ००२ ॥

गदामुद्यच्छमानस्य कालस्येव महामृधे ।
न हि पश्याम्यहं तात यस्तिष्ठेत रणाजिरे ॥ ००३ ॥

रथं रथेन यो हन्यात्कुञ्जरं कुञ्जरेण च ।
कस्तस्य समरे स्थाता साक्षादपि शतक्रतुः ॥ ००४ ॥

क्रुद्धस्य भीमसेनस्य मम पुत्राञ्जिघांसतः ।
दुर्योधनहिते युक्ताः समतिष्ठन्त केऽग्रतः ॥ ००५ ॥

भीमसेनदवाग्नेस्तु मम पुत्रतृणोलपम् ।
प्रधक्ष्यतो रणमुखे के वीराः प्रमुखे स्थिताः ॥ ००६ ॥

काल्यमानान्हि मे पुत्रान्भीमेनावेक्ष्य संयुगे ।
कालेनेव प्रजाः सर्वाः के भीमं पर्यवारयन् ॥ ००७ ॥

भीमवह्नेः प्रदीप्तस्य मम पुत्रान्दिधक्षतः ।
के शूराः पर्यवर्तन्त तन्ममाचक्ष्व सञ्जय ॥ ००८ ॥

सञ्जय उवाच ॥

तथा तु नर्दमानं तं भीमसेनं महारथम् ।

तुमुलेनैव शब्देन कर्णोऽप्यभ्यपतद्बली ॥ ००९ ॥

व्याक्षिपन्बलवच्चापमतिमात्रममर्षणः ।
कर्णस्तु युद्धमाकाङ्क्षन्दर्शयिष्यन्बलं बली ॥ ०१० ॥

प्रावेपन्निव गात्राणि कर्णभीमसमागमे ।
रथिनां सादिनां चैव तयोः श्रुत्वा तलस्वनम् ॥ ०११ ॥

भीमसेनस्य निनदं घोरं श्रुत्वा रणाजिरे ।
खं च भूमिं च संबद्धां मेनिरे क्षत्रियर्षभाः ॥ ०१२ ॥

पुनर्घोरेण नादेन पाण्डवस्य महात्मनः ।
समरे सर्वयोधानां धनूंष्यभ्यपतन्क्षितौ ॥ ०१३ ॥

वित्रस्तानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः ।
वाहनानि महाराज बभूवुर्विमनांसि च ॥ ०१४ ॥

प्रादुरासन्निमित्तानि घोराणि च बहूनि च ।
तस्मिंस्तु तुमुले राजन्भीमकर्णसमागमे ॥ ०१५ ॥

ततः कर्णस्तु विंशत्या शराणां भीममार्दयत् ।
विव्याध चास्य त्वरितः सूतं पञ्चभिराशुगैः ॥ ०१६ ॥

प्रहस्य भीमसेनस्तु कर्णं प्रत्यर्पयद्रणे ।
सायकानां चतुःषष्ट्या क्षिप्रकारी महाबलः ॥ ०१७ ॥

तस्य कर्णो महेष्वासः सायकांश्चतुरोऽक्षिपत् ।
असंप्राप्तांस्तु तान्भीमः सायकैर्नतपर्वभिः ॥ ०१८ ॥

चिच्छेद बहुधा राजन्दर्शयन्पाणिलाघवम् ॥ ०१८ ॥

तं कर्णश्छादयामास शरव्रातैरनेकशः ।
संछाद्यमानः कर्णेन बहुधा पाण्डुनन्दनः ॥ ०१९ ॥

चिच्छेद चापं कर्णस्य मुष्टिदेशे महारथः ।
विव्याध चैनं बहुभिः सायकैर्नतपर्वभिः ॥ ०२० ॥

अथान्यद्धनुरादाय सज्यं कृत्वा च सूतजः ।
विव्याध समरे भीमं भीमकर्मा महारथः ॥ ०२१ ॥

तस्य भीमो भृशं क्रुद्धस्त्रीञ्शरान्नतपर्वणः ।
निचखानोरसि तदा सूतपुत्रस्य वेगितः ॥ ०२२ ॥

तैः कर्णोऽभ्राजत शरैरुरोमध्यगतैस्तदा ।
महीधर इवोदग्रस्त्रिशृङ्गो भरतर्षभ ॥ ०२३ ॥

सुस्राव चास्य रुधिरं विद्धस्य परमेषुभिः ।
धातुप्रस्यन्दिनः शैलाद्यथा गैरिकराजयः ॥ ०२४ ॥

किञ्चिद्विचलितः कर्णः सुप्रहाराभिपीडितः ।
ससायकं धनुः कृत्वा भीमं विव्याध मारिष ॥ ०२५ ॥

चिक्षेप च पुनर्बाणाञ्शतशोऽथ सहस्रशः ॥ ०२५ ॥

स छाद्यमानः सहसा कर्णेन दृढधन्विना ।
धनुर्ज्यामच्छिनत्तूर्णमुत्स्मयन्पाण्डुनन्दनः ॥ ०२६ ॥

सारथिं चास्य भल्लेन प्राहिणोद्यमसादनम् ।
वाहांश्च चतुरः संख्ये व्यसूंश्चक्रे महारथः ॥ ०२७ ॥

हताश्वात्तु रथात्कर्णः समाप्लुत्य विशां पते ।
स्यन्दनं वृषसेनस्य समारोहन्महारथः ॥ ०२८ ॥

निर्जित्य तु रणे कर्णं भीमसेनः प्रतापवान् ।
ननाद सुमहानादं पर्जन्यनिनदोपमम्  ॥ ०२९  ॥

तस्य तं निनदं श्रुत्वा प्रहृष्टोऽभूद्युधिष्ठिरः ।
कर्णं च निर्जितं मत्वा भीमसेनेन भारत  ॥ ०३०  ॥

समन्ताच्छङ्खनिनदं पाण्डुसेनाकरोत्तदा ।
शत्रुसेनाध्वनिं श्रुत्वा तावका ह्यपि नानदन्  ॥ ०३१  ॥

गाण्डीवं प्राक्षिपत्पार्थः कृष्णोऽप्यब्जमवादयत्  ॥ ०३१  ॥

तमन्तर्धाय निनदं ध्वनिर्भीमस्य नर्दतः ।
अश्रूयत महाराज सर्वसैन्येषु भारत  ॥ ०३२  ॥

ततो व्यायच्छतामस्त्रैः पृथक्पृथगरिंदमौ ।
मृदुपूर्वं च राधेयो दृढपूर्वं च पाण्डवः  ॥ ०३३  ॥

---

# अध्याय १०५

सञ्जय उवाच  ॥

तस्मिन्विलुलिते सैन्ये सैन्धवायार्जुने गते ।
सात्वते भीमसेने च पुत्रस्ते द्रोणमभ्ययात्  ॥ ००१  ॥

त्वरन्नेकरथेनैव बहुकृत्यं विचिन्तयन्  ॥ ००१  ॥

स रथस्तव पुत्रस्य त्वरया परया युतः ।
तूर्णमभ्यपतद्द्रोणं मनोमारुतवेगवान् ॥ ००२ ॥

उवाच चैनं पुत्रस्ते संरम्भाद्रक्तलोचनः ।
अर्जुनो भीमसेनश्च सात्यकिश्चापराजितः ॥ ००३ ॥

विजित्य सर्वसैन्यानि सुमहान्ति महारथाः ।
संप्राप्ताः सिन्धुराजस्य समीपमरिकर्शनाः ॥ ००४ ॥

व्यायच्छन्ति च तत्रापि सर्व एवापराजिताः ॥ ००४ ॥

यदि तावद्रणे पार्थो व्यतिक्रान्तो महारथः ।
कथं सात्यकिभीमाभ्यां व्यतिक्रान्तोऽसि मानद ॥ ००५ ॥

आश्चर्यभूतं लोकेऽस्मिन्समुद्रस्येव शोषणम् ।
निर्जयं तव विप्राग्र्य सात्वतेनार्जुनेन च ॥ ००६ ॥

तथैव भीमसेनेन लोकः संवदते भृशम् ।
कथं द्रोणो जितः संख्ये धनुर्वेदस्य पारगः ॥ ००७ ॥

नाश एव तु मे नूनं मन्दभाग्यस्य संयुगे ।
यत्र त्वां पुरुषव्याघ्रमतिक्रान्तास्त्रयो रथाः ॥ ००८ ॥

एवं गते तु कृत्येऽस्मिन्ब्रूहि यत्ते विवक्षितम् ।
यद्गतं गतमेवेह शेषं चिन्तय मानद ॥ ००९ ॥

यत्कृत्यं सिन्धुराजस्य प्राप्तकालमनन्तरम् ।
तद्ब्रवीतु भवान्क्षिप्रं साधु तत्संविधीयताम् ॥ ०१० ॥

द्रोण उवाच ॥

चिन्त्यं बहु महाराज कृत्यं यत्तत्र मे श्रृणु ।
त्रयो हि समतिक्रान्ताः पाण्डवानां महारथाः ॥ ०११ ॥

यावदेव भयं पश्चात्तावदेषां पुरःसरम् ॥ ०११ ॥

तद्गरीयस्तरं मन्ये यत्र कृष्णधनञ्जयौ ।
सा पुरस्ताच्च पश्चाच्च गृहीता भारती चमूः ॥ ०१२ ॥

तत्र कृत्यमहं मन्ये सैन्धवस्याभिरक्षणम् ।
स नो रक्ष्यतमस्तात क्रुद्धाद्भीतो धनञ्जयात् ॥ ०१३ ॥

गतौ हि सैन्धवं वीरौ युयुधानवृकोदरौ ।
संप्राप्तं तदिदं द्यूतं यत्तच्छकुनिबुद्धिजम् ॥ ०१४ ॥

न सभायां जयो वृत्तो नापि तत्र पराजयः ।
इह नो ग्लहमानानामद्य तात जयाजयौ ॥ ०१५ ॥

यान्स्म तान्ग्लहते घोराञ्शकुनिः कुरुसंसदि ।
अक्षान्संमन्यमानः स प्रा क्शरास्ते दुरासदाः ॥ ०१६ ॥

यत्र ते बहवस्तात कुरवः पर्यवस्थिताः ।
सेनां दुरोदरं विद्धि शरानक्षान्विशां पते ॥ ०१७ ॥

ग्लहं च सैन्धवं राजन्नत्र द्यूतस्य निश्चयः ।
सैन्धवे हि महाद्यूतं समासक्तं परैः सह ॥ ०१८ ॥

अत्र सर्वे महाराज त्यक्त्वा जीवितमात्मनः ।
सैन्धवस्य रणे रक्षां विधिवत्कर्तुमर्हथ ॥ ०१९ ॥

तत्र नो ग्लहमानानां ध्रुवौ तात जयाजयौ ॥ ०१९ ॥

यत्र ते परमेष्वासा यत्ता रक्षन्ति सैन्धवम् ।
तत्र याहि स्वयं शीघ्रं तांश्च रक्षस्व रक्षिणः ॥ ०२० ॥

इहैव त्वहमासिष्ये प्रेषयिष्यामि चापरान् ।
निरोत्स्यामि च पाञ्चालान्सहितान्पाण्डुसृञ्जयैः ॥ ०२१ ॥

ततो दुर्योधनः प्रायात्तूर्णमाचार्यशासनात् ।
उद्यम्यात्मानमुग्राय कर्मणे सपदानुगः ॥ ०२२ ॥

चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
बाह्येन सेनामभ्येत्य जग्मतुः सव्यसाचिनम् ॥ ०२३ ॥

तौ हि पूर्वं महाराज वारितौ कृतवर्मणा ।
प्रविष्टे त्वर्जुने राजंस्तव सैन्यं युयुत्सया ॥ ०२४ ॥

ताभ्यां दुर्योधनः सार्धमगच्छद्युद्धमुत्तमम् ।
त्वरितस्त्वरमाणाभ्यां भ्रातृभ्यां भारतो बली ॥ ०२५ ॥

तावभिद्रवतामेनमुभावुद्यतकार्मुकौ ।
महारथसमाख्यातौ क्षत्रियप्रवरौ युधि ॥ ०२६ ॥

युधामन्युस्तु सङ्क्रुद्धः शरांस्त्रिंशतमायसान् ।
व्यसृजत्तव पुत्रस्य त्वरमाणः स्तनान्तरे ॥ ०२७ ॥

दुर्योधनोऽपि राजेन्द्र पाञ्चाल्यस्योत्तमौजसः ।
जघान चतुरश्चाश्वानुभौ च पार्ष्णिसारथी ॥ ०२८ ॥

उत्तमौजा हताश्वस्तु हतसूतश्च संयुगे ।
आरुरोह रथं भ्रातुर्युधामन्योरभित्वरन् ॥ ०२९ ॥

स रथं प्राप्य तं भ्रातुर्दुर्योधनहयाञ्शरैः ।

बहुभिस्ताडयामास ते हताः प्रापतन्भुवि ॥ ०३० ॥

हयेषु पतितेष्वस्य चिच्छेद परमेषुणा ।
युधामन्युर्धनुः शीघ्रं शरावापं च संयुगे ॥ ०३१ ॥

हताश्वसूतात्स रथादवप्लुत्य महारथः ।
गदामादाय ते पुत्रः पाञ्चाल्यावभ्यधावत ॥ ०३२ ॥

तमापतन्तं संप्रेक्ष्य क्रुद्धं परपुरञ्जयम् ।
अवप्लुतौ रथोपस्थाद्युधामन्यूत्तमौजसौ ॥ ०३३ ॥

ततः स हेमचित्रं तं स्यन्दनप्रवरं गदी ।
गदया पोथयामास साश्वसूतध्वजं रणे ॥ ०३४ ॥

हत्वा चैनं स पुत्रस्ते हताश्वो हतसारथिः ।
मद्रराजरथं तूर्णमारुरोह परंतपः ॥ ०३५ ॥

पाञ्चालानां तु मुख्यौ तौ राजपुत्रौ महाबलौ ।
रथमन्यं समारुह्य धनञ्जयमभीयतुः ॥ ०३६ ॥

---

# अध्याय १०६

धृतराष्ट्र उवाच ॥

यौ तौ कर्णश्च भीमश्च संप्रयुद्धौ महाबलौ ।
अर्जुनस्य रथोपान्ते कीदृशः सोऽभवद्रणः ॥ ००१ ॥

पूर्वं हि निर्जितः कर्णो भीमसेनेन संयुगे ।
कथं भूयस्तु राधेयो भीममागान्महारथः ॥ ००२ ॥

भीमो वा सूततनयं प्रत्युद्यातः कथं रणे ।
महारथसमाख्यातं पृथिव्यां प्रवरं रथम् ॥ ००३ ॥

भीष्मद्रोणावतिक्रम्य धर्मपुत्रो युधिष्ठिरः ।
नान्यतो भयमादत्त विना कर्णं धनुर्धरम् ॥ ००४ ॥

भयान्न शेते सततं चिन्तयन्वै महारथम् ।
तं कथं सूतपुत्रं हि भीमोऽयुध्यत संयुगे ॥ ००५ ॥

ब्रह्मण्यं वीर्यसंपन्नं समरेष्वनिवर्तिनम् ।
कथं कर्णं युधां श्रेष्ठं भीमोऽयुध्यत संयुगे ॥ ००६ ॥

यौ तौ समीयतुर्वीरावर्जुनस्य रथं प्रति ।
कथं नु तावयुध्येतां सूतपुत्रवृकोदरौ ॥ ००७ ॥

भ्रातृत्वं दर्शितं पूर्वं घृणी चापि स सूतजः ।
कथं भीमेन युयुधे कुन्त्या वाक्यमनुस्मरन् ॥ ००८ ॥

भीमो वा सूतपुत्रेण स्मरन्वैरं पुरा कृतम् ।
सोऽयुध्यत कथं वीरः कर्णेन सह संयुगे ॥ ००९ ॥

आशास्ते च सदा सूत पुत्रो दुर्योधनो मम ।
कर्णो जेष्यति सङ्ग्रामे सहितान्पाण्डवानिति ॥ ०१० ॥

जयाशा यत्र मन्दस्य पुत्रस्य मम संयुगे ।
स कथं भीमकर्माणं भीमसेनमयुध्यत ॥ ०११ ॥

यं समाश्रित्य पुत्रैर्मे कृतं वैरं महारथैः ।

तं सूततनयं तात कथं भीमो ह्ययोधयत्  ॥ ०१२  ॥

अनेकान्विप्रकारांश्च सूतपुत्रसमुद्भवान् ।
स्मरमाणः कथं भीमो युयुधे सूतसूनुना  ॥ ०१३  ॥

योऽजयत्पृथिवीं सर्वां रथेनैकेन वीर्यवान् ।
तं सूततनयं युद्धे कथं भीमो ह्ययोधयत्  ॥ ०१४  ॥

यो जातः कुण्डलाभ्यां च कवचेन सहैव च ।
तं सूतपुत्रं समरे भीमः कथमयोधयत्  ॥ ०१५  ॥

यथा तयोर्युद्धमभूद्यश्चासीद्विजयी तयोः ।
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय  ॥ ०१६  ॥

सञ्जय उवाच  ॥

भीमसेनस्तु राधेयमुत्सृज्य रथिनां वरम् ।
इयेष गन्तुं यत्रास्तां वीरौ कृष्णधनञ्जयौ  ॥ ०१७  ॥

तं प्रयान्तमभिद्रुत्य राधेयः कङ्कपत्रिभिः ।
अभ्यवर्षन्महाराज मेघो वृष्ट्येव पर्वतम्  ॥ ०१८  ॥

फुल्लता पङ्कजेनेव वक्त्रेणाभ्युत्स्मयन्बली ।
आजुहाव रणे यान्तं भीममाधिरथिस्तदा  ॥ ०१९  ॥

भीमसेनस्तदाह्वानं कर्णान्नामर्षयद्युधि ।
अर्धमण्डलमावृत्य सूतपुत्रमयोधयत्  ॥ ०२०  ॥

अवक्रगामिभिर्बाणैरभ्यवर्षन्महायसैः ।
द्वैरथे दंशितं यत्तं सर्वशस्त्रभृतां वरम्  ॥ ०२१  ॥

विधित्सुः कलहस्यान्तं जिघांसुः कर्णमक्षिणोत् ।
तं च हत्वेतरान्सर्वान्हन्तुकामो महाबलः  ॥ ०२२  ॥

तस्मै प्रासृजदुग्राणि विविधानि परंतपः ।
अमर्षी पाण्डवः क्रुद्धः शरवर्षाणि मारिष  ॥ ०२३  ॥

तस्य तानीषुवर्षाणि मत्तद्विरदगामिनः ।
सूतपुत्रोऽस्त्रमायाभिरग्रसत्सुमहायशाः  ॥ ०२४  ॥

स यथावन्महाराज विद्यया वै सुपूजितः ।
आचार्यवन्महेष्वासः कर्णः पर्यचरद्रणे  ॥ ०२५  ॥

संरम्भेण तु युध्यन्तं भीमसेनं स्मयन्निव ।
अभ्यपद्यत राधेयस्तममर्षी वृकोदरम्  ॥ ०२६  ॥

तन्नामृष्यत कौन्तेयः कर्णस्य स्मितमाहवे ।
युध्यमानेषु वीरेषु पश्यत्सु च समन्ततः  ॥ ०२७  ॥

तं भीमसेनः संप्राप्तं वत्सदन्तैः स्तनान्तरे ।
विव्याध बलवान्क्रुद्धस्तोत्त्रैरिव महाद्विपम्  ॥ ०२८  ॥

सूतं तु सूतपुत्रस्य सुपुङ्खैर्निशितैः शरैः ।
सुमुक्तैश्चित्रवर्माणं निर्बिभेद त्रिसप्तभिः  ॥ ०२९  ॥

कर्णो जाम्बूनदैर्जालैः संछन्नान्वातरंहसः ।
विव्याध तुरगान्वीरः पञ्चभिः पञ्चभिः शरैः  ॥ ०३०  ॥

ततो बाणमयं जालं भीमसेनरथं प्रति ।
कर्णेन विहितं राजन्निमेषार्धाददृश्यत  ॥ ०३१  ॥

सरथः सध्वजस्तत्र ससूतः पाण्डवस्तदा ।

प्राच्छादयत महाराज कर्णचापच्युतैः शरैः ॥ ०३२ ॥

तस्य कर्णश्चतुःषष्ट्या व्यधमत्कवचं दृढम् ।
क्रुद्धश्चाप्यहनत्पार्श्वे नाराचैर्मर्मभेदिभिः ॥ ०३३ ॥

ततोऽचिन्त्य महावेगान्कर्णकार्मुकनिःसृतान् ।
समाश्लिष्यदसंभ्रान्तः सूतपुत्रं वृकोदरः ॥ ०३४ ॥

स कर्णचापप्रभवानिषूनाशीविषोपमान् ।
बिभ्रद्भीमो महाराज न जगाम व्यथां रणे ॥ ०३५ ॥

ततो द्वात्रिंशता भल्लैर्निशितैस्तिग्मतेजनैः ।
विव्याध समरे कर्णं भीमसेनः प्रतापवान् ॥ ०३६ ॥

अयत्नेनैव तं कर्णः शरैरुप समाकिरत् ।
भीमसेनं महाबाहुं सैन्धवस्य वधैषिणम् ॥ ०३७ ॥

मृदुपूर्वं च राधेयो भीममाजावयोधयत् ।
क्रोधपूर्वं तथा भीमः पूर्ववैरमनुस्मरन् ॥ ०३८ ॥

तं भीमसेनो नामृष्यदवमानममर्षणः ।
स तस्मै व्यसृजत्तूर्णं शरवर्षममित्रजित् ॥ ०३९ ॥

ते शराः प्रेषिता राजन्भीमसेनेन संयुगे ।
निपेतुः सर्वतो भीमाः कूजन्त इव पक्षिणः ॥ ०४० ॥

हेमपुङ्खा महाराज भीमसेनधनुश्च्युताः ।
अभ्यद्रवंस्ते राधेयं वृकाः क्षुद्रमृगं यथा ॥ ०४१ ॥

कर्णस्तु रथिनां श्रेष्ठश्छाद्यमानः समन्ततः ।
राजन्व्यसृजदुग्राणि शरवर्षाणि संयुगे ॥ ०४२ ॥

तस्य तानशनिप्रख्यानिषून्समरशोभिनः ।
चिच्छेद बहुभिर्भल्लैरसंप्राप्तान्वृकोदरः ॥ ०४३ ॥

पुनश्च शरवर्षेण छादयामास भारत ।
कर्णो वैकर्तनो युद्धे भीमसेनं महारथम् ॥ ०४४ ॥

तत्र भारत भीमं तु दृष्टवन्तः स्म सायकैः ।
समाचिततनुं संख्ये श्वाविधं शललैरिव ॥ ०४५ ॥

हेमपुङ्खाञ्शिलाधौतान्कर्णचापच्युताञ्शरान् ।
दधार समरे वीरः स्वरश्मीनिव भास्करः ॥ ०४६ ॥

रुधिरोक्षितसर्वाङ्गो भीमसेनो व्यरोचत ।
तपनीयनिभैः पुष्पैः पलाश इव कानने ॥ ०४७ ॥

तत्तु भीमो महाराज कर्णस्य चरितं रणे ।
नामृष्यत महेष्वासः क्रोधादुद्वृत्य चक्षुषी ॥ ०४८ ॥

स कर्णं पञ्चविंशत्या नाराचानां समार्पयत् ।
महीधरमिव श्वेतं गूढपादैर्विषोल्बणैः ॥ ०४९ ॥

तं विव्याध पुनर्भीमः षड्भिरष्टाभिरेव च ।
मर्मस्वमरविक्रान्तः सूतपुत्रं महारणे ॥ ०५० ॥

ततः कर्णस्य सङ्क्रुद्धो भीमसेनः प्रतापवान् ।
चिच्छेद कार्मुकं तूर्णं सर्वोपकरणानि च ॥ ०५१ ॥

जघान चतुरश्चाश्वान्सूतं च त्वरितः शरैः ।
नाराचैरर्करश्म्याभैः कर्णं विव्याध चोरसि ॥ ०५२ ॥

ते जग्मुर्धरणीं सर्वे कर्णं निर्भिद्य मारिष ।
यथा हि जलदं भित्त्वा राजन्सूर्यस्य रश्मयः ॥ ०५३ ॥

स वैकल्यं महत्प्राप्य छिन्नधन्वा शरार्दितः ।
तथा पुरुषमानी स प्रत्यपायाद्रथान्तरम् ॥ ०५४ ॥

---

# अध्याय १०७

धृतराष्ट्र उवाच ॥

यस्मिञ्जयाशा सततं पुत्राणां मम सञ्जय ।
तं दृष्ट्वा विमुखं संख्ये किं नु दुर्योधनोऽब्रवीत् ॥ ००१ ॥

कर्णो वा समरे तात किमकार्षीदतः परम् ॥ ००१ ॥

सञ्जय उवाच ॥

भीमसेनं रणे दृष्ट्वा ज्वलन्तमिव पावकम् ।
रथमन्यं समास्थाय विधिवत्कल्पितं पुनः ॥ ००२ ॥

अभ्ययात्पाण्डवं कर्णो वातोद्धूत इवार्णवः ॥ ००२ ॥

क्रुद्धमाधिरथिं दृष्ट्वा पुत्रास्तव विशां पते ।
भीमसेनममन्यन्त वैवस्वतमुखे हुतम् ॥ ००३ ॥

चापशब्दं महत्कृत्वा तलशब्दं च भैरवम् ।
अभ्यवर्तत राधेयो भीमसेनरथं प्रति ॥ ००४ ॥

पुनरेव ततो राजन्महानासीत्सुदारुणः ।
विमर्दः सूतपुत्रस्य भीमस्य च विशां पते ॥ ००५ ॥

संरब्धौ हि महाबाहू परस्परवधैषिणौ ।
अन्योन्यमीक्षां चक्राते दहन्ताविव लोचनैः ॥ ००६ ॥

क्रोधरक्तेक्षणौ क्रुद्धौ निःश्वसन्तौ महारथौ ।
युद्धेऽन्योन्यं समासाद्य ततक्षतुररिंदमौ ॥ ००७ ॥

व्याघ्राविव सुसंरब्धौ श्येनाविव च शीघ्रगौ ।
शरभाविव सङ्क्रुद्धौ युयुधाते परस्परम् ॥ ००८ ॥

ततो भीमः स्मरन्क्लेशानक्षद्यूते वनेऽपि च ।
विराटनगरे चैव प्राप्तं दुःखमरिंदमः ॥ ००९ ॥

राष्ट्राणां स्फीतरत्नानां हरणं च तवात्मजैः ।
सततं च परिक्लेशान्सपुत्रेण त्वया कृतान् ॥ ०१० ॥

दग्धुमैच्छश्च यत्कुन्तीं सपुत्रां त्वमनागसम् ।
कृष्णायाश्च परिक्लेशं सभामध्ये दुरात्मभिः ॥ ०११ ॥

पतिमन्यं परीप्सस्व न सन्ति पतयस्तव ।
नरकं पतिताः पार्थाः सर्वे षण्ढतिलोपमाः ॥ ०१२ ॥

समक्षं तव कौरव्य यदूचुः कुरवस्तदा ।
दासीभोगेन कृष्णां च भोक्तुकामाः सुतास्तव ॥ ०१३ ॥

यच्चापि तान्प्रव्रजतः कृष्णाजिननिवासिनः ।
परुषाण्युक्तवान्कर्णः सभायां संनिधौ तव ॥ ०१४ ॥

तृणीकृत्य च यत्पार्थांस्तव पुत्रो ववल्ग ह ।

विषमस्थान्समस्थो हि संरम्भाद्गतचेतसः ॥ ०१५ ॥

बाल्यात्प्रभृति चारिघ्नस्तानि दुःखानि चिन्तयन् ।
निरविद्यत धर्मात्मा जीवितेन वृकोदरः ॥ ०१६ ॥

ततो विस्फार्य सुमहद्धेमपृष्ठं दुरासदम् ।
चापं भरतशार्दूलस्त्यक्तात्मा कर्णमभ्ययात् ॥ ०१७ ॥

स सायकमयैर्जालैर्भीमः कर्णरथं प्रति ।
भानुमद्भिः शिलाधौतैर्भानोः प्रच्छादयत्प्रभाम् ॥ ०१८ ॥

ततः प्रहस्याधिरथिस्तूर्णमस्यञ्शिताञ्शरान् ।
व्यधमद्भीमसेनस्य शरजालानि पत्रिभिः ॥ ०१९ ॥

महारथो महाबाहुर्महावेगैर्महाबलः ।
विव्याधाधिरथिर्भीमं नवभिर्निशितैः शरैः ॥ ०२० ॥

स तोत्त्रैरिव मातङ्गो वार्यमाणः पतत्रिभिः ।
अभ्यधावदसंभ्रान्तः सूतपुत्रं वृकोदरः ॥ ०२१ ॥

तमापतन्तं वेगेन रभसं पाण्डवर्षभम् ।
कर्णः प्रत्युद्ययौ योद्धुं मत्तो मत्तमिव द्विपम् ॥ ०२२ ॥

ततः प्रध्माप्य जलजं भेरीशतनिनादितम् ।
अक्षुभ्यत बलं हर्षादुद्धूत इव सागरः ॥ ०२३ ॥

तदुद्धूतं बलं दृष्ट्वा रथनागाश्वपत्तिमत् ।
भीमः कर्णं समासाद्य छादयामास सायकैः ॥ ०२४ ॥

अश्वानृश्यसवर्णांस्तु हंसवर्णैर्हयोत्तमैः ।
व्यामिश्रयद्रणे कर्णः पाण्डवं छादयञ्शरैः ॥ ०२५ ॥

ऋश्यवर्णान्हयान्कर्कैर्मिश्रान्मारुतरंहसः ।
निरीक्ष्य तव पुत्राणां हाहाकृतमभूद्बलम् ॥ ०२६ ॥

ते हया बह्वशोभन्त मिश्रिता वातरंहसः ।
सितासिता महाराज यथा व्योम्नि बलाहकाः ॥ ०२७ ॥

संरब्धौ क्रोधताम्राक्षौ प्रेक्ष्य कर्णवृकोदरौ ।
संत्रस्ताः समकम्पन्त त्वदीयानां महारथाः ॥ ०२८ ॥

यमराष्ट्रोपमं घोरमासीदायोधनं तयोः ।
दुर्दर्शं भरतश्रेष्ठ प्रेतराजपुरं यथा ॥ ०२९ ॥

समाजमिव तच्चित्रं प्रेक्षमाणा महारथाः ।
नालक्षयञ्जयं व्यक्तमेकैकस्य निवारणे ॥ ०३० ॥

तयोः प्रैक्षन्त संमर्दं संनिकृष्टमहास्त्रयोः ।
तव दुर्मन्त्रिते राजन्सपुत्रस्य विशां पते ॥ ०३१ ॥

छादयन्तौ हि शत्रुघ्नावन्योन्यं सायकैः शितैः ।
शरजालावृतं व्योम चक्राते शरवृष्टिभिः ॥ ०३२ ॥

तावन्योन्यं जिघांसन्तौ शरैस्तीक्ष्णैर्महारथौ ।
प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ ॥ ०३३ ॥

सुवर्णविकृतान्बाणान्प्रमुञ्चन्तावरिंदमौ ।
भास्वरं व्योम चक्राते वह्न्युल्काभिरिव प्रभो ॥ ०३४ ॥

ताभ्यां मुक्ता व्यकाशन्त कङ्कबर्हिणवाससः ।
पङ्क्त्यः शरदि मत्तानां सारसानामिवाम्बरे ॥ ०३५ ॥

संसक्तं सूतपुत्रेण दृष्ट्वा भीममरिंदमम् ।
अतिभारममन्येतां भीमे कृष्णधनञ्जयौ  ॥ ०३६  ॥

तत्राधिरथिभीमाभ्यां शरैर्मुक्तैर्दृढाहताः ।
इषुपातमतिक्रम्य पेतुरश्वनरद्विपाः  ॥ ०३७  ॥

पतद्भिः पतितैश्चान्यैर्गतासुभिरनेकशः ।
कृतो महान्महाराज पुत्राणां ते जनक्षयः  ॥ ०३८  ॥

मनुष्याश्वगजानां च शरीरैर्गतजीवितैः ।
क्षणेन भूमिः सञ्जज्ञे संवृता भरतर्षभ  ॥ ०३९  ॥

---

# अध्याय १०८

धृतराष्ट्र उवाच  ॥

अत्यद्भुतमहं मन्ये भीमसेनस्य विक्रमम् ।
यत्कर्णं योधयामास समरे लघुविक्रमम्  ॥ ००१  ॥

त्रिदशानपि चोद्युक्तान्सर्वशस्त्रधरान्युधि ।
वारयेद्यो रणे कर्णः सयक्षासुरमानवान्  ॥ ००२  ॥

स कथं पाण्डवं युद्धे भ्राजमानमिव श्रिया ।
नातरत्संयुगे तात तन्ममाचक्ष्व सञ्जय  ॥ ००३  ॥

कथं च युद्धं भूयोऽभूत्तयोः प्राणदुरोदरे ।
अत्र मन्ये समायत्तो जयो वाजय एव वा  ॥ ००४  ॥

कर्णं प्राप्य रणे सूत मम पुत्रः सुयोधनः ।
जेतुमुत्सहते पार्थान्सगोविन्दान्ससात्वतान् ॥ ००५ ॥

श्रुत्वा तु निर्जितं कर्णमसकृद्भीमकर्मणा ।
भीमसेनेन समरे मोह आविशतीव माम् ॥ ००६ ॥

विनष्टान्कौरवान्मन्ये मम पुत्रस्य दुर्नयैः ।
न हि कर्णो महेष्वासान्पार्थाञ्जेष्यति सञ्जय ॥ ००७ ॥

कृतवान्यानि युद्धानि कर्णः पाण्डुसुतैः सह ।
सर्वत्र पाण्डवाः कर्णमजयन्त रणाजिरे ॥ ००८ ॥

अजय्याः पाण्डवास्तात देवैरपि सवासवैः ।
न च तद्बुध्यते मन्दः पुत्रो दुर्योधनो मम ॥ ००९ ॥

धनं धनेश्वरस्येव हृत्वा पार्थस्य मे सुतः ।
मधुप्रेप्सुरिवाबुद्धिः प्रपातं नावबुध्यते ॥ ०१० ॥

निकृत्या निकृतिप्रज्ञो राज्यं हृत्वा महात्मनाम् ।
जितानित्येव मन्वानः पाण्डवानवमन्यते ॥ ०११ ॥

पुत्रस्नेहाभिभूतेन मया चाप्यकृतात्मना ।
धर्मे स्थिता महात्मानो निकृताः पाण्डुनन्दनाः ॥ ०१२ ॥

शमकामः सदा पार्थो दीर्घप्रेक्षी युधिष्ठिरः ।
अशक्त इति मन्वानैः पुत्रैर्मम निराकृतः ॥ ०१३ ॥

तानि दुःखान्यनेकानि विप्रकारांश्च सर्वशः ।
हृदि कृत्वा महाबाहुर्भीमोऽयुध्यत सूतजम् ॥ ०१४ ॥

तस्मान्मे सञ्जय ब्रूहि कर्णभीमौ यथा रणे ।
अयुध्येतां युधि श्रेष्ठौ परस्परवधैषिणौ ॥ ०१५ ॥

सञ्जय उवाच ॥

शृणु राजन्यथा वृत्तः सङ्ग्रामः कर्णभीमयोः ।
परस्परवधप्रेप्स्वोर्वने कुञ्जरयोरिव ॥ ०१६ ॥

राजन्वैकर्तनो भीमं क्रुद्धः क्रुद्धमरिंदमम् ।
पराक्रान्तं पराक्रम्य विव्याध त्रिंशता शरैः ॥ ०१७ ॥

महावेगैः प्रसन्नाग्रैः शातकुम्भपरिष्कृतैः ।
आहनद्भरतश्रेष्ठ भीमं वैकर्तनः शरैः ॥ ०१८ ॥

तस्यास्यतो धनुर्भीमश्चकर्त निशितैस्त्रिभिः ।
रथनीडाच्च यन्तारं भल्लेनापातयत्क्षितौ ॥ ०१९ ॥

स काङ्क्षन्भीमसेनस्य वधं वैकर्तनो वृषः ।
शक्तिं कनकवैडूर्यचित्रदण्डां परामृशत् ॥ ०२० ॥

प्रगृह्य च महाशक्तिं कालशक्तिमिवापराम् ।
समुत्क्षिप्य च राधेयः संधाय च महाबलः ॥ ०२१ ॥

चिक्षेप भीमसेनाय जीवितान्तकरीमिव ॥ ०२१ ॥

शक्तिं विसृज्य राधेयः पुरंदर इवाशनिम् ।
ननाद सुमहानादं बलवान्सूतनन्दनः ॥ ०२२ ॥

तं च नादं ततः श्रुत्वा पुत्रास्ते हृषिताभवन् ॥ ०२२ ॥

तां कर्णभुजनिर्मुक्तामर्कवैश्वानरप्रभाम् ।

शक्तिं वियति चिच्छेद भीमः सप्तभिराशुगैः ॥ ०२३ ॥

छित्त्वा शक्तिं ततो भीमो निर्मुक्तोरगसंनिभाम् ।
मार्गमाण इव प्राणान्सूतपुत्रस्य मारिष ॥ ०२४ ॥

प्राहिणोन्नव संरब्धः शरान्बर्हिणवाससः ।
स्वर्णपुङ्खाञ्शिलाधौतान्यमदण्डोपमान्मृधे ॥ ०२५ ॥

कर्णोऽप्यन्यद्धनुर्गृह्य हेमपृष्ठं दुरासदम् ।
विकृष्य च महातेजा व्यसृजत्सायकान्नव ॥ ०२६ ॥

तान्पाण्डुपुत्रश्चिच्छेद नवभिर्नतपर्वभिः ।
वसुषेणेन निर्मुक्तान्नव राजन्महाशरान् ॥ ०२७ ॥

छित्त्वा भीमो महाराज नादं सिंह इवानदत् ॥ ०२७ ॥

तौ वृषाविव नर्दन्तौ बलिनौ वाशितान्तरे ।
शार्दूलाविव चान्योन्यमत्यर्थं च ह्यगर्जताम् ॥ ०२८ ॥

अन्योन्यं प्रजिहीर्षन्तावन्योन्यस्यान्तरैषिणौ ।
अन्योन्यमभिवीक्षन्तौ गोष्ठेष्विव महर्षभौ ॥ ०२९ ॥

महागजाविवासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ०३० ॥

निर्दहन्तौ महाराज शरवृष्ट्या परस्परम् ।
अन्योन्यमभिवीक्षन्तौ कोपाद्विवृतलोचनौ ॥ ०३१ ॥

प्रहसन्तौ तथान्योन्यं भर्त्सयन्तौ मुहुर्मुहुः ।
शङ्खशब्दं च कुर्वाणौ युयुधाते परस्परम् ॥ ०३२ ॥

तस्य भीमः पुनश्चापं मुष्टौ चिच्छेद मारिष ।
शङ्खवर्णांश्च तानश्वान्बाणैर्निन्ये यमक्षयम्  ॥ ०३३  ॥

तथा कृच्छ्रगतं दृष्ट्वा कर्णं दुर्योधनो नृपः ।
वेपमान इव क्रोधाद्व्यादिदेशाथ दुर्जयम्  ॥ ०३४  ॥

गच्छ दुर्जय राधेयं पुरा ग्रसति पाण्डवः ।
जहि तूबरकं क्षिप्रं कर्णस्य बलमादधत्  ॥ ०३५  ॥

एवमुक्तस्तथेत्युक्त्वा तव पुत्रस्तवात्मजम् ।
अभ्यद्रवद्भीमसेनं व्यासक्तं विकिरञ्शरान्  ॥ ०३६  ॥

स भीमं नवभिर्बाणैरश्वानष्टभिरर्दयत् ।
षड्भिः सूतं त्रिभिः केतुं पुनस्तं चापि सप्तभिः  ॥ ०३७  ॥

भीमसेनोऽपि सङ्क्रुद्धः साश्वयन्तारमाशुगैः ।
दुर्जयं भिन्नमर्माणमनयद्यमसादनम्  ॥ ०३८  ॥

स्वलङ्कृतं क्षितौ क्षुण्णं चेष्टमानं यथोरगम् ।
रुदन्नार्तस्तव सुतं कर्णश्चक्रे प्रदक्षिणम्  ॥ ०३९  ॥

स तु तं विरथं कृत्वा स्मयन्नत्यन्तवैरिणम् ।
समाचिनोद्बाणगणैः शतघ्नीमिव शङ्कुभिः  ॥ ०४०  ॥

तथाप्यतिरथः कर्णो भिद्यमानः स्म सायकैः ।
न जहौ समरे भीमं क्रुद्धरूपं परंतपः  ॥ ०४१  ॥

# अध्याय १०९

सञ्जय उवाच ॥

स तथा विरथः कर्णः पुनर्भीमेन निर्जितः ।
रथमन्यं समास्थाय सद्यो विव्याध पाण्डवम् ॥ ००१ ॥

महागजाविवासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ००२ ॥

अथ कर्णः शरव्रातैर्भीमं बलवदर्दयत् ।
ननाद बलवन्नादं पुनर्विव्याध चोरसि ॥ ००३ ॥

तं भीमो दशभिर्बाणैः प्रत्यविध्यदजिह्मगैः ।
पुनर्विव्याध विंशत्या शराणां नतपर्वणाम् ॥ ००४ ॥

कर्णस्तु नवभिर्भीमं विद्ध्वा राजन्स्तनान्तरे ।
ध्वजमेकेन विव्याध सायकेन शितेन ह ॥ ००५ ॥

सायकानां ततः पार्थस्त्रिषष्ट्या प्रत्यविध्यत ।
तोत्त्रैरिव महानागं कशाभिरिव वाजिनम् ॥ ००६ ॥

सोऽतिविद्धो महाराज पाण्डवेन यशस्विना ।
सृक्किणी लेलिहन्वीरः क्रोधसंरक्तलोचनः ॥ ००७ ॥

ततः शरं महाराज सर्वकायावदारणम् ।
प्राहिणोद्भीमसेनाय बलायेन्द्र इवाशनिम् ॥ ००८ ॥

स निर्भिद्य रणे पार्थं सूतपुत्रधनुश्च्युतः ।
अगच्छद्दारयन्भूमिं चित्रपुङ्खः शिलीमुखः ॥ ००९ ॥

सर्वशैक्यां चतुष्किष्कुं गुर्वीं रुक्माङ्गदां गदाम् ।

प्राहिणोत्सूतपुत्राय षडस्त्रामविचारयन् ॥ ०१० ॥

तया जघानाधिरथेः सदश्वान्साधुवाहिनः ।
गदया भारतः क्रुद्धो वज्रेणेन्द्र इवासुरान् ॥ ०११ ॥

ततो भीमो महाबाहुः क्षुराभ्यां भरतर्षभ ।
ध्वजमाधिरथेश्छित्त्वा सूतमभ्यहनत्तदा ॥ ०१२ ॥

हताश्वसूतमुत्सृज्य रथं स पतितध्वजम् ।
विस्फारयन्धनुः कर्णस्तस्थौ भारत दुर्मनाः ॥ ०१३ ॥

तत्राद्भुतमपश्याम राधेयस्य पराक्रमम् ।
विरथो रथिनां श्रेष्ठो वारयामास यद्रिपुम् ॥ ०१४ ॥

विरथं तं रथश्रेष्ठं दृष्ट्वाधिरथिमाहवे ।
दुर्योधनस्ततो राजन्नभ्यभाषत दुर्मुखम् ॥ ०१५ ॥

एष दुर्मुख राधेयो भीमेन विरथीकृतः ।
तं रथेन नरश्रेष्ठं संपादय महारथम् ॥ ०१६ ॥

दुर्योधनवचः श्रुत्वा ततो भारत दुर्मुखः ।
त्वरमाणोऽभ्ययात्कर्णं भीमं चावारयच्छरैः ॥ ०१७ ॥

दुर्मुखं प्रेक्ष्य सङ्ग्रामे सूतपुत्रपदानुगम् ।
वायुपुत्रः प्रहृष्टोऽभूत्सृक्किणी परिलेलिहन् ॥ ०१८ ॥

ततः कर्णं महाराज वारयित्वा शिलीमुखैः ।
दुर्मुखाय रथं शीघ्रं प्रेषयामास पाण्डवः ॥ ०१९ ॥

तस्मिन्क्षणे महाराज नवभिर्नतपर्वभिः ।
सुपुङ्खैर्दुर्मुखं भीमः शरैर्निन्ये यमक्षयम् ॥ ०२० ॥

ततस्तमेवाधिरथिः स्यन्दनं दुर्मुखे हते ।
आस्थितः प्रबभौ राजन्दीप्यमान इवांशुमान् ॥ ०२१ ॥

शयानं भिन्नमर्माणं दुर्मुखं शोणितोक्षितम् ।
दृष्ट्वा कर्णोऽश्रुपूर्णाक्षो मुहूर्तं नाभ्यवर्तत ॥ ०२२ ॥

तं गतासुमतिक्रम्य कृत्वा कर्णः प्रदक्षिणम् ।
दीर्घमुष्णं श्वसन्वीरो न किञ्चित्प्रत्यपद्यत ॥ ०२३ ॥

तस्मिंस्तु विवरे राजन्नाराचान्गार्ध्रवाससः ।
प्राहिणोत्सूतपुत्राय भीमसेनश्चतुर्दश ॥ ०२४ ॥

ते तस्य कवचं भित्त्वा स्वर्णपुङ्खा महौजसः ।
हेमचित्रा महाराज द्योतयन्तो दिशो दश ॥ ०२५ ॥

अपिबन्सूतपुत्रस्य शोणितं रक्तभोजनाः ।
क्रुद्धा इव मनुष्येन्द्र भुजगाः कालचोदिताः ॥ ०२६ ॥

प्रसर्पमाणा मेदिन्यां ते व्यरोचन्त मार्गणाः ।
अर्धप्रविष्टाः संरब्धा बिलानीव महोरगाः ॥ ०२७ ॥

तं प्रत्यविध्यद्राधेयो जाम्बूनदविभूषितैः ।
चतुर्दशभिरत्युग्रैर्नाराचैरविचारयन् ॥ ०२८ ॥

ते भीमसेनस्य भुजं सव्यं निर्भिद्य पत्रिणः ।
प्राविशन्मेदिनीं भीमाः क्रौञ्चं पत्ररथा इव ॥ ०२९ ॥

ते व्यरोचन्त नाराचाः प्रविशन्तो वसुंधराम् ।
गच्छत्यस्तं दिनकरे दीप्यमाना इवांशवः ॥ ०३० ॥

स निर्भिन्नो रणे भीमो नाराचैर्मर्मभेदिभिः ।
सुस्राव रुधिरं भूरि पर्वतः सलिलं यथा  ॥ ०३१  ॥

स भीमस्त्रिभिरायस्तः सूतपुत्रं पतत्रिभिः ।
सुपर्णवेगैर्विव्याध सारथिं चास्य सप्तभिः  ॥ ०३२  ॥

स विह्वलो महाराज कर्णो भीमबलार्दितः ।
प्राद्रवज्जवनैरश्वै रणं हित्वा महायशाः  ॥ ०३३  ॥

भीमसेनस्तु विस्फार्य चापं हेमपरिष्कृतम् ।
आहवेऽतिरथोऽतिष्ठज्ज्वलन्निव हुताशनः  ॥ ०३४  ॥

---

# अध्याय ११०

धृतराष्ट्र उवाच  ॥

दैवमेव परं मन्ये धिक्पौरुषमनर्थकम् ।
यत्राधिरथिरायस्तो नातरत्पाण्डवं रणे  ॥ ००१  ॥

कर्णः पार्थान्सगोविन्दाञ्जेतुमुत्सहते रणे ।
न च कर्णसमं योधं लोके पश्यामि कञ्चन  ॥ ००२  ॥

इति दुर्योधनस्याहमश्रौषं जल्पतो मुहुः  ॥ ००२  ॥

कर्णो हि बलवाञ्शूरो दृढधन्वा जितक्लमः ।
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा  ॥ ००३  ॥

वसुषेणसहायं मां नालं देवापि संयुगे ।

किमु पाण्डुसुता राजन्गतसत्त्वा विचेतसः ॥ ००४ ॥

तत्र तं निर्जितं दृष्ट्वा भुजङ्गमिव निर्विषम् ।
युद्धात्कर्णमपक्रान्तं किं स्विद्दुर्योधनोऽब्रवीत् ॥ ००५ ॥

अहो दुर्मुखमेवैकं युद्धानामविशारदम् ।
प्रावेशयद्धुतवहं पतङ्गमिव मोहितः ॥ ००६ ॥

अश्वत्थामा मद्रराजः कृपः कर्णश्च सङ्गताः ।
न शक्ताः प्रमुखे स्थातुं नूनं भीमस्य सञ्जय ॥ ००७ ॥

तेऽपि चास्य महाघोरं बलं नागायुतोपमम् ।
जानन्तो व्यवसायं च क्रूरं मारुततेजसः ॥ ००८ ॥

किमर्थं क्रूरकर्माणं यमकालान्तकोपमम् ।
बलसंरम्भवीर्यज्ञाः कोपयिष्यन्ति संयुगे ॥ ००९ ॥

कर्णस्त्वेको महाबाहुः स्वबाहुबलमाश्रितः ।
भीमसेनमनादृत्य रणेऽयुध्यत सूतजः ॥ ०१० ॥

योऽजयत्समरे कर्णं पुरंदर इवासुरम् ।
न स पाण्डुसुतो जेतुं शक्यः केनचिदाहवे ॥ ०११ ॥

द्रोणं यः संप्रमथ्यैकः प्रविष्टो मम वाहिनीम् ।
भीमो धनञ्जयान्वेषी कस्तमर्छेज्जिजीविषुः ॥ ०१२ ॥

को हि सञ्जय भीमस्य स्थातुमुत्सहतेऽग्रतः ।
उद्यताशनिवज्रस्य महेन्द्रस्येव दानवः ॥ ०१३ ॥

प्रेतराजपुरं प्राप्य निवर्तेतापि मानवः ।
न भीमसेनं संप्राप्य निवर्तेत कदाचन ॥ ०१४ ॥

पतङ्गा इव वह्निं ते प्राविशन्नल्पचेतसः ।
ये भीमसेनं सङ्क्रुद्धमभ्यधावन्विमोहिताः ॥ ०१५ ॥

यत्तत्सभायां भीमेन मम पुत्रवधाश्रयम् ।
शप्तं संरम्भिणोग्रेण कुरूणां शृण्वतां तदा ॥ ०१६ ॥

तन्नूनमभिसञ्चिन्त्य दृष्ट्वा कर्णं च निर्जितम् ।
दुःशासनः सह भ्रात्रा भयाद्भीमादुपारमत् ॥ ०१७ ॥

यश्च सञ्जय दुर्बुद्धिरब्रवीत्समितौ मुहुः ।
कर्णो दुःशासनोऽहं च जेष्यामो युधि पाण्डवान् ॥ ०१८ ॥

स नूनं विरथं दृष्ट्वा कर्णं भीमेन निर्जितम् ।
प्रत्याख्यानाच्च कृष्णस्य भृशं तप्यति सञ्जय ॥ ०१९ ॥

दृष्ट्वा भ्रातॄन्हतान्युद्धे भीमसेनेन दंशितान् ।
आत्मापराधात्सुमहन्नूनं तप्यति पुत्रकः ॥ ०२० ॥

को हि जीवितमन्विच्छन्प्रतीपं पाण्डवं व्रजेत् ।
भीमं भीमायुधं क्रुद्धं साक्षात्कालमिव स्थितम् ॥ ०२१ ॥

वडवामुखमध्यस्थो मुच्येतापि हि मानवः ।
न भीममुखसंप्राप्तो मुच्येतेति मतिर्मम ॥ ०२२ ॥

न पाण्डवा न पाञ्चाला न च केशवसात्यकी ।
जानन्ति युधि संरब्धा जीवितं परिरक्षितुम् ॥ ०२३ ॥

सञ्जय उवाच ॥

यत्संशोचसि कौरव्य वर्तमाने जनक्षये ।

त्वमस्य जगतो मूलं विनाशस्य न संशयः ॥ ०२४ ॥

स्वयं वैरं महत्कृत्वा पुत्राणां वचने स्थितः ।
उच्यमानो न गृह्णीषे मर्त्यः पथ्यमिवौषधम् ॥ ०२५ ॥

स्वयं पीत्वा महाराज कालकूटं सुदुर्जरम् ।
तस्येदानीं फलं कृत्स्नमवाप्नुहि नरोत्तम ॥ ०२६ ॥

यत्तु कुत्सयसे योधान्युध्यमानान्यथाबलम् ।
अत्र ते वर्णयिष्यामि यथा युद्धमवर्तत ॥ ०२७ ॥

दृष्ट्वा कर्णं तु पुत्रास्ते भीमसेनपराजितम् ।
नामृष्यन्त महेष्वासाः सोदर्याः पञ्च मारिष ॥ ०२८ ॥

दुर्मर्षणो दुःसहश्च दुर्मदो दुर्धरो जयः ।
पाण्डवं चित्रसंनाहास्तं प्रतीपमुपाद्रवन् ॥ ०२९ ॥

ते समन्तान्महाबाहुं परिवार्य वृकोदरम् ।
दिशः शरैः समावृण्वञ्शलभानामिव व्रजैः ॥ ०३० ॥

आगच्छतस्तान्सहसा कुमारान्देवरूपिणः ।
प्रतिजग्राह समरे भीमसेनो हसन्निव ॥ ०३१ ॥

तव दृष्ट्वा तु तनयान्भीमसेनसमीपगान् ।
अभ्यवर्तत राधेयो भीमसेनं महाबलम् ॥ ०३२ ॥

विसृजन्विशिखान्राजन्स्वर्णपुङ्खाञ्शिलाशितान् ।
तं तु भीमोऽभ्ययात्तूर्णं वार्यमाणः सुतैस्तव ॥ ०३३ ॥

कुरवस्तु ततः कर्णं परिवार्य समन्ततः ।
अवाकिरन्भीमसेनं शरैः संनतपर्वभिः ॥ ०३४ ॥

तान्बाणैः पञ्चविंशत्या साश्वान्राजन्नरर्षभान् ।
ससूतान्भीमधनुषो भीमो निन्ये यमक्षयम्  ॥ ०३५  ॥

प्रापतन्स्यन्दनेभ्यस्ते सार्धं सूतैर्गतासवः ।
चित्रपुष्पधरा भग्ना वातेनेव महाद्रुमाः  ॥ ०३६  ॥

तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम् ।
संवार्याधिरथिं बाणैर्यज्जघान तवात्मजान्  ॥ ०३७  ॥

स वार्यमाणो भीमेन शितैर्बाणैः समन्ततः ।
सूतपुत्रो महाराज भीमसेनमवैक्षत  ॥ ०३८  ॥

तं भीमसेनः संरम्भात्क्रोधसंरक्तलोचनः ।
विस्फार्य सुमहच्चापं मुहुः कर्णमवैक्षत  ॥ ०३९  ॥

---

# अध्याय १११

सञ्जय उवाच  ॥

तवात्मजांस्तु पतितान्दृष्ट्वा कर्णः प्रतापवान् ।
क्रोधेन महताविष्टो निर्विण्णोऽभूत्स जीवितात्  ॥ ००१  ॥

आगस्कृतमिवात्मानं मेने चाधिरथिस्तदा ।
भीमसेनं ततः क्रुद्धः समाद्रवत संभ्रमात्  ॥ ००२  ॥

स भीमं पञ्चभिर्विद्ध्वा राधेयः प्रहसन्निव ।
पुनर्विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः  ॥ ००३  ॥

अवहासं तु तं पार्थो नामृष्यत वृकोदरः ।
ततो विव्याध राधेयं शतेन नतपर्वणाम् ॥ ००४ ॥

पुनश्च विशिखैस्तीक्ष्णैर्विद्ध्वा पञ्चभिराशुगैः ।
धनुश्चिच्छेद भल्लेन सूतपुत्रस्य मारिष ॥ ००५ ॥

अथान्यद्धनुरादाय कर्णो भारत दुर्मनाः ।
इषुभिश्छादयामास भीमसेनं समन्ततः ॥ ००६ ॥

तस्य भीमो हयान्हत्वा विनिहत्य च सारथिम् ।
प्रजहास महाहासं कृते प्रतिकृतं पुनः ॥ ००७ ॥

इषुभिः कार्मुकं चास्य चकर्त पुरुषर्षभः ।
तत्पपात महाराज स्वर्णपृष्ठं महास्वनम् ॥ ००८ ॥

अवारोहद्रथात्तस्मादथ कर्णो महारथः ।
गदां गृहीत्वा समरे भीमसेनाय चाक्षिपत् ॥ ००९ ॥

तामापतन्तीं सहसा गदां दृष्ट्वा वृकोदरः ।
शरैरवारयद्राजन्सर्वसैन्यस्य पश्यतः ॥ ०१० ॥

ततो बाणसहस्राणि प्रेषयामास पाण्डवः ।
सूतपुत्रवधाकाङ्क्षी त्वरमाणः पराक्रमी ॥ ०११ ॥

तानिषूनिषुभिः कर्णो वारयित्वा महामृधे ।
कवचं भीमसेनस्य पातयामास सायकैः ॥ ०१२ ॥

अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
पश्यतां सर्वभूतानां तदद्भुतमिवाभवत् ॥ ०१३ ॥

ततो भीमो महाराज नवभिर्नतपर्वणाम् ।
रणेऽप्रेषयत क्रुद्धः सूतपुत्रस्य मारिष ॥ ०१४ ॥

ते तस्य कवचं भित्त्वा तथा बाहुं च दक्षिणम् ।
अभ्यगुर्धरणीं तीक्ष्णा वल्मीकमिव पन्नगाः ॥ ०१५ ॥

राधेयं तु रणे दृष्ट्वा पदातिनमवस्थितम् ।
भीमसेनेन संरब्धं राजा दुर्योधनोऽब्रवीत् ॥ ०१६ ॥

त्वरध्वं सर्वतो यत्ता राधेयस्य रथं प्रति ॥ ०१६ ॥

ततस्तव सुता राजञ्श्रुत्वा भ्रातुर्वचो द्रुतम् ।
अभ्ययुः पाण्डवं युद्धे विसृजन्तः शिताञ्शरान् ॥ ०१७ ॥

चित्रोपचित्रश्चित्राक्षश्चारुचित्रः शरासनः ।
चित्रायुधश्चित्रवर्मा समरे चित्रयोधिनः ॥ ०१८ ॥

आगच्छतस्तान्सहसा भीमो राजन्महारथः ।
साश्वसूतध्वजान्यत्तान्पातयामास संयुगे ॥ ०१९ ॥

ते हता न्यपतन्भूमौ वातनुन्ना इव द्रुमाः ॥ ०१९ ॥

दृष्ट्वा विनिहतान्पुत्रांस्तव राजन्महारथान् ।
अश्रुपूर्णमुखः कर्णः कश्मलं समपद्यत ॥ ०२० ॥

रथमन्यं समास्थाय विधिवत्कल्पितं पुनः ।
अभ्ययात्पाण्डवं युद्धे त्वरमाणः पराक्रमी ॥ ०२१ ॥

तावन्योन्यं शरैर्विद्ध्वा स्वर्णपुङ्खैः शिलाशितैः ।
व्यभ्राजेतां महाराज पुष्पिताविव किंशुकौ ॥ ०२२ ॥

षड्विंशद्भिस्ततो भल्लैर्निशितैस्तिग्मतेजनैः ।
व्यधमत्कवचं क्रुद्धः सूतपुत्रस्य पाण्डवः ॥ ०२३ ॥

रक्तचन्दनदिग्धाङ्गौ शरैः कृतमहाव्रणौ ।
शोणिताक्तौ व्यराजेतां कालसूर्याविवोदितौ ॥ ०२४ ॥

तौ शोणितोक्षितैर्गात्रैः शरैश्छिन्नतनुच्छदौ ।
विवर्माणौ व्यराजेतां निर्मुक्ताविव पन्नगौ ॥ ०२५ ॥

व्याघ्राविव नरव्याघ्रौ दंष्ट्राभिरितरेतरम् ।
शरदंष्ट्रा विधुन्वानौ ततक्षतुररिंदमौ ॥ ०२६ ॥

वारणाविव संसक्तौ रङ्गमध्ये विरेजतुः ।
तुदन्तौ विशिखैस्तीक्ष्णैर्मत्तवारणविक्रमौ ॥ ०२७ ॥

प्रच्छादयन्तौ समरे शरजालैः परस्परम् ।
रथाभ्यां नादयन्तौ च दिशः सर्वा विचेरतुः ॥ ०२८ ॥

तौ रथाभ्यां महाराज मण्डलावर्तनादिषु ।
व्यरोचेतां महात्मानौ वृत्रवज्रधराविव ॥ ०२९ ॥

सहस्ताभरणाभ्यां तु भुजाभ्यां विक्षिपन्धनुः ।
व्यरोचत रणे भीमः सविद्युदिव तोयदः ॥ ०३० ॥

स चापघोषस्तनितः शरधाराम्बुदो महान् ।
भीममेघो महाराज कर्णपर्वतमभ्ययात् ॥ ०३१ ॥

ततः शरसहस्रेण धनुर्मुक्तेन भारत ।
पाण्डवो व्यकिरत्कर्णं घनोऽद्रिमिव वृष्टिभिः ॥ ०३२ ॥

तत्रावैक्षन्त पुत्रास्ते भीमसेनस्य विक्रमम् ।

सुपुङ्खैः कङ्कवासोभिर्यत्कर्णं छादयच्छरैः ॥ ०३३ ॥

स नन्दयन्रणे पार्थं केशवं च यशस्विनम् ।
सात्यकिं चक्ररक्षौ च भीमः कर्णमयोधयत् ॥ ०३४ ॥

विक्रमं भुजयोर्वीर्यं धैर्यं च विदितात्मनः ।
पुत्रास्तव महाराज ददृशुः पाण्डवस्य ह ॥ ०३५ ॥

---

# अध्याय ११२

सञ्जय उवाच ॥

भीमसेनस्य राधेयः श्रुत्वा ज्यातलनिस्वनम् ।
नामृष्यत यथा मत्तो गजः प्रतिगजस्वनम् ॥ ००१ ॥

अपक्रम्य स भीमस्य मुहूर्तं शरगोचरात् ।
तव चाधिरथिर्दृष्ट्वा स्यन्दनेभ्यश्च्युतान्सुतान् ॥ ००२ ॥

भीमसेनेन निहतान्विमना दुःखितोऽभवत् ।
निःश्वसन्दीर्घमुष्णं च पुनः पाण्डवमभ्ययात् ॥ ००३ ॥

स ताम्रनयनः क्रोधाच्छ्वसन्निव महोरगः ।
बभौ कर्णः शरानस्यन्रश्मिवानिव भास्करः ॥ ००४ ॥

रश्मिजालैरिवार्कस्य विततैर्भरतर्षभ ।
कर्णचापच्युतैर्बाणैः प्राच्छाद्यत वृकोदरः ॥ ००५ ॥

कर्णचापच्युताश्चित्राः शरा बर्हिणवाससः ।
विविशुः सर्वतः पार्थं वासायेवाण्डजा द्रुमम् ॥ ००६ ॥

कर्णचापच्युता बाणाः संपतन्तस्ततस्ततः ।
रुक्मपुङ्खा व्यराजन्त हंसाः श्रेणीकृता इव ॥ ००७ ॥

चापध्वजोपस्करेभ्यश्छत्रादीषामुखाद्युगात् ।
प्रभवन्तो व्यदृश्यन्त राजन्नाधिरथेः शराः ॥ ००८ ॥

खं पूरयन्महावेगान्खगमान्खगवाससः ।
सुवर्णविकृतांश्चित्रान्मुमोचाधिरथिः शरान् ॥ ००९ ॥

तमन्तकमिवायस्तमापतन्तं वृकोदरः ।
त्यक्त्वा प्राणानभिक्रुध्य विव्याध नवभिः शरैः ॥ ०१० ॥

तस्य वेगमसंसह्यं दृष्ट्वा कर्णस्य पाण्डवः ।
महतश्च शरौघांस्तान्नैवाव्यथत वीर्यवान् ॥ ०११ ॥

ततो विधम्याधिरथेः शरजालानि पाण्डवः ।
विव्याध कर्णं विंशत्या पुनरन्यैः शितैः शरैः ॥ ०१२ ॥

यथैव हि शरैः पार्थः सूतपुत्रेण छादितः ।
तथैव कर्णं समरे छादयामास पाण्डवः ॥ ०१३ ॥

दृष्ट्वा तु भीमसेनस्य विक्रमं युधि भारत ।
अभ्यनन्दंस्त्वदीयाश्च संप्रहृष्टाश्च चारणाः ॥ ०१४ ॥

भूरिश्रवाः कृपो द्रौणिर्मद्रराजो जयद्रथः ।
उत्तमौजा युधामन्युः सात्यकिः केशवार्जुनौ ॥ ०१५ ॥

कुरुपाण्डवानां प्रवरा दश राजन्महारथाः ।

साधु साध्विति वेगेन सिंहनादमथानदन् ॥ ०१६ ॥

तस्मिंस्तु तुमुले शब्दे प्रवृत्ते लोमहर्षणे ।
अभ्यभाषत पुत्रांस्ते राजन्दुर्योधनस्त्वरन् ॥ ०१७ ॥

राज्ञश्च राजपुत्रांश्च सोदर्यांश्च विशेषतः ।
कर्णं गच्छत भद्रं वः परीप्सन्तो वृकोदरात् ॥ ०१८ ॥

पुरा निघ्नन्ति राधेयं भीमचापच्युताः शराः ।
ते यतध्वं महेष्वासाः सूतपुत्रस्य रक्षणे ॥ ०१९ ॥

दुर्योधनसमादिष्टाः सोदर्याः सप्त मारिष ।
भीमसेनमभिद्रुत्य संरब्धाः पर्यवारयन् ॥ ०२० ॥

ते समासाद्य कौन्तेयमावृण्वञ्शरवृष्टिभिः ।
पर्वतं वारिधाराभिः प्रावृषीव बलाहकाः ॥ ०२१ ॥

तेऽपीडयन्भीमसेनं क्रुद्धाः सप्त महारथाः ।
प्रजासंहरणे राजन्सोमं सप्त ग्रहा इव ॥ ०२२ ॥

ततो वामेन कौन्तेयः पीडयित्वा शरासनम् ।
मुष्टिना पाण्डवो राजन्दृढेन सुपरिष्कृतम् ॥ ०२३ ॥

मनुष्यसमतां ज्ञात्वा सप्त संधाय सायकान् ।
तेभ्यो व्यसृजदायस्तः सूर्यरश्मिनिभान्प्रभुः ॥ ०२४ ॥

निरस्यन्निव देहेभ्यस्तनयानामसूंस्तव ।
भीमसेनो महाराज पूर्ववैरमनुस्मरन् ॥ ०२५ ॥

ते क्षिप्ता भीमसेनेन शरा भारत भारतान् ।
विदार्य खं समुत्पेतुः स्वर्णपुङ्खाः शिलाशिताः ॥ ०२६ ॥

तेषां विदार्य चेतांसि शरा हेमविभूषिताः ।
व्यराजन्त महाराज सुपर्णा इव खेचराः  ॥ ०२७  ॥

शोणितादिग्धवाजाग्राः सप्त हेमपरिष्कृताः ।
पुत्राणां तव राजेन्द्र पीत्वा शोणितमुद्गताः  ॥ ०२८  ॥

ते शरैर्भिन्नमर्माणो रथेभ्यः प्रापतन्क्षितौ ।
गिरिसानुरुहा भग्ना द्विपेनेव महाद्रुमाः  ॥ ०२९  ॥

शत्रुञ्जयः शत्रुसहश्चित्रश्चित्रायुधो दृढः ।
चित्रसेनो विकर्णश्च सप्तैते विनिपातिताः  ॥ ०३०  ॥

तान्निहत्य महाबाहू राधेयस्यैव पश्यतः ।
सिंहनादरवं घोरमसृजत्पाण्डुनन्दनः  ॥ ०३१  ॥

स रवस्तस्य शूरस्य धर्मराजस्य भारत ।
आचख्याविव तद्युद्धं विजयं चात्मनो महत्  ॥ ०३२  ॥

तं श्रुत्वा सुमहानादं भीमसेनस्य धन्विनः ।
बभूव परमा प्रीतिर्धर्मराजस्य संयुगे  ॥ ०३३  ॥

ततो हृष्टो महाराज वादित्राणां महास्वनैः ।
भीमसेनरवं पार्थः प्रतिजग्राह सर्वशः  ॥ ०३४  ॥

अभ्ययाच्चैव समरे द्रोणमस्त्रभृतां वरम् ।
हर्षेण महता युक्तः कृतसञ्ज्ञे वृकोदरे  ॥ ०३५  ॥

एकत्रिंशन्महाराज पुत्रांस्तव महारथान् ।
हतान्दुर्योधनो दृष्ट्वा क्षत्तुः सस्मार तद्वचः  ॥ ०३६  ॥

तदिदं समनुप्राप्तं क्षत्तुर्हितकरं वचः ।
इति सञ्चिन्त्य राजासौ नोत्तरं प्रत्यपद्यत ॥ ०३७ ॥

यद्द्यूतकाले दुर्बुद्धिरब्रवीत्तनयस्तव ।
यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ॥ ०३८ ॥

प्रमुखे पाण्डुपुत्राणां तव चैव विशां पते ।
कौरवाणां च सर्वेषामाचार्यस्य च संनिधौ ॥ ०३९ ॥

विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं वृणीष्वेति तस्येदं फलमागतम् ॥ ०४० ॥

यत्स्म तां परुषाण्याहुः सभामानाय्य द्रौपदीम् ।
पाण्डवानुग्रधनुषः क्रोधयन्तस्तवात्मजाः ॥ ०४१ ॥

तं भीमसेनः क्रोधाग्निं त्रयोदश समाः स्थितम् ।
विसृजंस्तव पुत्राणामन्तं गच्छति कौरव ॥ ०४२ ॥

विलपंश्च बहु क्षत्ता शमं नालभत त्वयि ।
सपुत्रो भरतश्रेष्ठ तस्य भुङ्क्ष्व फलोदयम् ॥ ०४३ ॥

हतो विकर्णो राजेन्द्र चित्रसेनश्च वीर्यवान् ॥ ०४३ ॥

प्रवरानात्मजानां ते सुतांश्चान्यान्महारथान् ।
यान्यांश्च ददृशे भीमश्चक्षुर्विषयमागतान् ॥ ०४४ ॥

पुत्रांस्तव महाबाहो त्वरया ताञ्जघान ह ॥ ०४४ ॥

त्वत्कृते ह्यहमद्राक्षं दह्यमानां वरूथिनीम् ।
सहस्रशः शरैर्मुक्तैः पाण्डवेन वृषेण च ॥ ०४५ ॥

# अध्याय ११३

धृतराष्ट्र उवाच ॥

महानपनयः सूत ममैवात्र विशेषतः ।
स इदानीमनुप्राप्तो मन्ये सञ्जय शोचतः ॥ ००१ ॥

यद्गतं तद्गतमिति ममासीन्मनसि स्थितम् ।
इदानीमत्र किं कार्यं प्रकरिष्यामि सञ्जय ॥ ००२ ॥

यथा त्वेष क्षयो वृत्तो ममापनयसंभवः ।
वीराणां तन्ममाचक्ष्व स्थिरीभूतोऽस्मि सञ्जय ॥ ००३ ॥

सञ्जय उवाच ॥

कर्णभीमौ महाराज पराक्रान्तौ महाहवे ।
बाणवर्षाण्यवर्षेतां वृष्टिमन्ताविवाम्बुदौ ॥ ००४ ॥

भीमनामाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः ।
विविशुः कर्णमासाद्य भिन्दन्त इव जीवितम् ॥ ००५ ॥

तथैव कर्णनिर्मुक्तैः सविषैरिव पन्नगैः ।
आकीर्यत रणे भीमः शतशोऽथ सहस्रशः ॥ ००६ ॥

तयोः शरैर्महाराज संपतद्भिः समन्ततः ।
बभूव तव सैन्यानां सङ्क्षोभः सागरोपमः ॥ ००७ ॥

भीमचापच्युतैर्बाणैस्तव सैन्यमरिंदम ।

अवध्यत चमूमध्ये घोरैराशीविषोपमैः ॥ ००८ ॥

वारणैः पतितै राजन्वाजिभिश्च नरैः सह ।
अदृश्यत मही कीर्णा वातनुन्नैर्द्रुमैरिव ॥ ००९ ॥

ते वध्यमानाः समरे भीमचापच्युतैः शरैः ।
प्राद्रवंस्तावका योधाः किमेतदिति चाब्रुवन् ॥ ०१० ॥

ततो व्युदस्तं तत्सैन्यं सिन्धुसौवीरकौरवम् ।
प्रोत्सारितं महावेगैः कर्णपाण्डवयोः शरैः ॥ ०११ ॥

ते शरातुरभूयिष्ठा हताश्वनरवाहनाः ।
उत्सृज्य कर्णं भीमं च प्राद्रवन्सर्वतोदिशम् ॥ ०१२ ॥

नूनं पार्थार्थमेवास्मान्मोहयन्ति दिवौकसः ।
यत्कर्णभीमप्रभवैर्वध्यते नो बलं शरैः ॥ ०१३ ॥

एवं ब्रुवन्तो योधास्ते तावका भयपीडिताः ।
शरपातं समुत्सृज्य स्थिता युद्धदिदृक्षवः ॥ ०१४ ॥

ततः प्रावर्तत नदी घोररूपा महाहवे ।
बभूव च विशेषेण भीरूणां भयवर्धिनी ॥ ०१५ ॥

वारणाश्वमनुष्याणां रुधिरौघसमुद्भवा ।
संवृता गतसत्त्वैश्च मनुष्यगजवाजिभिः ॥ ०१६ ॥

सानुकर्षपताकैश्च द्विपाश्वरथभूषणैः ।
स्यन्दनैरपविद्धैश्च भग्नचक्राक्षकूबरैः ॥ ०१७ ॥

जातरूपपरिष्कारैर्धनुर्भिः सुमहाधनैः ।
सुवर्णपुङ्खैरिषुभिर्नाराचैश्च सहस्रशः ॥ ०१८ ॥

कर्णपाण्डवनिर्मुक्तैर्निर्मुक्तैरिव पन्नगैः ।
प्रासतोमरसंघातैः खड्गैश्च सपरश्वधैः ॥ ०१९ ॥

सुवर्णविकृतैश्चापि गदामुसलपट्टिशैः ।
वज्रैश्च विविधाकारैः शक्तिभिः परिघैरपि ॥ ०२० ॥

शतघ्नीभिश्च चित्राभिर्बभौ भारत मेदिनी ॥ ०२० ॥

कनकाङ्गदकेयूरैः कुण्डलैर्मणिभिः शुभैः ।
तनुत्रैः सतलत्रैश्च हारैर्निष्कैश्च भारत ॥ ०२१ ॥

वस्त्रैश्छत्रैश्च विध्वस्तैश्चामरव्यजनैरपि ।
गजाश्वमनुजैर्भिन्नैः शस्त्रैः स्यन्दनभूषणैः ॥ ०२२ ॥

तैस्तैश्च विविधैर्भावैस्तत्र तत्र वसुंधरा ।
पतितैरपविद्धैश्च संबभौ द्यौरिव ग्रहैः ॥ ०२३ ॥

अचिन्त्यमद्भुतं चैव तयोः कर्मातिमानुषम् ।
दृष्ट्वा चारणसिद्धानां विस्मयः समपद्यत ॥ ०२४ ॥

अग्नेर्वायुसहायस्य गतिः कक्ष इवाहवे ।
आसीद्भीमसहायस्य रौद्रमाधिरथेर्गतम् ॥ ०२५ ॥

निपातितध्वजरथं हतवाजिनरद्विपम् ॥ ०२५ ॥

गजाभ्यां संप्रयुक्ताभ्यामासीन्नडवनं यथा ।
तथाभूतं महत्सैन्यमासीद्भारत संयुगे ॥ ०२६ ॥

विमर्दः कर्णभीमाभ्यामासीच्च परमो रणे ॥ ०२६ ॥

# अध्याय ११४

सञ्जय उवाच ॥

ततः कर्णो महाराज भीमं विद्धा त्रिभिः शरैः ।
मुमोच शरवर्षाणि चित्राणि च बहूनि च ॥ ००१ ॥

वध्यमानो महाराज सूतपुत्रेण पाण्डवः ।
न विव्यथे भीमसेनो भिद्यमान इवाचलः ॥ ००२ ॥

स कर्णं कर्णिना कर्णे पीतेन निशितेन च ।
विव्याध युधि राजेन्द्र भीमसेनः पतत्रिणा ॥ ००३ ॥

स कुण्डलं महत्कर्णात्कर्णस्यापातयद्भुवि ।
तपनीयं महाराज दीप्तं ज्योतिरिवाम्बरात् ॥ ००४ ॥

अथापरेण भल्लेन सूतपुत्रं स्तनान्तरे ।
आजघान भृशं भीमः स्मयन्निव महाबलः ॥ ००५ ॥

पुनरस्य त्वरन्भीमो नाराचान्दश भारत ।
रणे प्रैषीन्महावेगान्यमदण्डोपमांस्तथा ॥ ००६ ॥

ते ललाटं समासाद्य सूतपुत्रस्य मारिष ।
विविशुश्चोदितास्तेन वल्मीकमिव पन्नगाः ॥ ००७ ॥

ललाटस्थैस्तु तैर्बाणैः सूतपुत्रो व्यरोचत ।
नीलोत्पलमयीं मालां धारयन्स पुरा यथा ॥ ००८ ॥

ततः क्रुद्धो रणे कर्णः पीडितो दृढधन्वना ।
वेगं चक्रे महावेगो भीमसेनवधं प्रति ॥ ००९ ॥

तस्मै कर्णः शतं राजन्निषूणां गार्ध्रवाससाम् ।
अमर्षी बलवान्क्रुद्धः प्रेषयामास भारत ॥ ०१० ॥

ततः प्रासृजदुग्राणि शरवर्षाणि पाण्डवः ।
समरे तमनादृत्य नास्य वीर्यमचिन्तयत् ॥ ०११ ॥

ततः कर्णो महाराज पाण्डवं निशितैः शरैः ।
आजघानोरसि क्रुद्धः क्रुद्धरूपं परंतपः ॥ ०१२ ॥

जीमूताविव चान्योन्यं तौ ववर्षतुराहवे ।
तलशब्दरवैश्चैव त्रासयन्तौ परस्परम् ॥ ०१३ ॥

शरजालैश्च विविधैश्छादयामासतुर्मृधे ।
अन्योन्यं समरे क्रुद्धौ कृतप्रतिकृतैषिणौ ॥ ०१४ ॥

ततो भीमो महाबाहू राधेयस्य महात्मनः ।
क्षुरप्रेण धनुश्छित्त्वा कर्णं विव्याध पत्रिणा ॥ ०१५ ॥

तदपास्य धनुश्छिन्नं सूतपुत्रो महामनाः ।
अन्यत्कार्मुकमादत्त वेगघ्नं भारसाधनम् ॥ ०१६ ॥

दृष्ट्वा च कुरुसौवीरसैन्धवानां बलक्षयम् ।
सवर्मध्वजशस्त्रैश्च पतितैः संवृतां महीम् ॥ ०१७ ॥

हस्त्यश्वनरदेहांश्च गतासून्प्रेक्ष्य सर्वतः ।
सूतपुत्रस्य संरम्भाद्दीप्तं वपुरजायत ॥ ०१८ ॥

स विस्फार्य महच्चापं कार्तस्वरविभूषितम् ।

भीमं प्रैक्षत राधेयो राजन्घोरेण चक्षुषा ॥ ०१९ ॥

ततः क्रुद्धः शरानस्यन्सूतपुत्रो व्यरोचत ।
मध्यंदिनगतोऽर्चिष्माञ्शरदीव दिवाकरः ॥ ०२० ॥

मरीचिविकचस्येव राजन्भानुमतो वपुः ।
आसीदाधिरथेर्घोरं वपुः शरशतार्चिषः ॥ ०२१ ॥

कराभ्यामाददानस्य संदधानस्य चाशुगान् ।
विकर्षतो मुञ्चतो वा नान्तरं ददृशू रणे ॥ ०२२ ॥

अग्निचक्रोपमं घोरं मण्डलीकृतमायुधम् ।
कर्णस्यासीन्महाराज सव्यदक्षिणमस्यतः ॥ ०२३ ॥

स्वर्णपुङ्खाः सुनिशिताः कर्णचापच्युताः शराः ।
प्राच्छादयन्महाराज दिशः सूर्यस्य च प्रभाम् ॥ ०२४ ॥

ततः कनकपुङ्खानां शराणां नतपर्वणाम् ।
धनुश्च्युतानां वियति ददृशे बहुधा व्रजः ॥ ०२५ ॥

शरासनादाधिरथेः प्रभवन्तः स्म सायकाः ।
श्रेणीकृता व्यराजन्त राजन्क्रौञ्चा इवाम्बरे ॥ ०२६ ॥

गार्ध्रपत्राञ्शिलाधौतान्कार्तस्वरविभूषितान् ।
महावेगान्प्रदीप्ताग्रान्मुमोचाधिरथिः शरान् ॥ ०२७ ॥

ते तु चापबलोद्धूताः शातकुम्भविभूषिताः ।
अजस्रमन्वकीर्यन्त शराः पार्थरथं प्रति ॥ ०२८ ॥

ते व्योम्नि रत्नविकृता व्यकाशन्त सहस्रशः ।
शलभानामिव व्राताः शराः कर्णसमीरिताः ॥ ०२९ ॥

चापादाधिरथेर्मुक्ताः प्रपतन्तः स्म सायकाः ।
एको दीर्घ इव प्रांशुः प्रभवन्दृश्यते शरः ॥ ०३० ॥

पर्वतं वारिधाराभिश्छादयन्निव तोयदः ।
कर्णः प्राच्छादयत्क्रुद्धो भीमं सायकवृष्टिभिः ॥ ०३१ ॥

तत्र भारत भीमस्य बलवीर्यपराक्रमम् ।
व्यवसायं च पुत्रास्ते प्रैक्षन्त कुरुभिः सह ॥ ०३२ ॥

तां समुद्रमिवोद्धूतां शरवृष्टिं समुत्थिताम् ।
अचिन्तयित्वा भीमस्तु क्रुद्धः कर्णमुपाद्रवत् ॥ ०३३ ॥

रुक्मपृष्ठं महच्चापं भीमस्यासीद्विशां पते ।
आकर्षान्मण्डलीभूतं शक्रचापमिवापरम् ॥ ०३४ ॥

तस्माच्छराः प्रादुरासन्पूरयन्त इवाम्बरम् ॥ ०३४ ॥

सुवर्णपुङ्खैर्भीमेन सायकैर्नतपर्वभिः ।
गगने रचिता माला काञ्चनीव व्यराजत ॥ ०३५ ॥

ततो व्योम्नि विषक्तानि शरजालानि भागशः ।
आहतानि व्यशीर्यन्त भीमसेनस्य पत्रिभिः ॥ ०३६ ॥

कर्णस्य शरजालौघैर्भीमसेनस्य चोभयोः ।
अग्निस्फुलिङ्गसंस्पर्शैरञ्जोगतिभिराहवे ॥ ०३७ ॥

तैस्तैः कनकपुङ्खानां द्यौरासीत्संवृता व्रजैः ॥ ०३७ ॥

स भीमं छादयन्बाणैः सूतपुत्रः पृथग्विधैः ।
उपारोहदनादृत्य तस्य वीर्यं महात्मनः ॥ ०३८ ॥

तयोर्विसृजतोस्तत्र शरजालानि मारिष ।
वायुभूतान्यदृश्यन्त संसक्तानीतरेतरम्  ॥ ०३९  ॥

तस्मै कर्णः शितान्बाणान्कर्मारपरिमार्जितान् ।
सुवर्णविकृतान्क्रुद्धः प्राहिणोद्वधकाङ्क्षया  ॥ ०४०  ॥

तानन्तरिक्षे विशिखैस्त्रिधैकैकमशातयत् ।
विशेषयन्सूतपुत्रं भीमस्तिष्ठेति चाब्रवीत्  ॥ ०४१  ॥

पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः ।
अमर्षी बलवान्क्रुद्धो दिधक्षन्निव पावकः  ॥ ०४२  ॥

तस्य तान्याददे कर्णः सर्वाण्यस्त्राण्यभीतवत् ।
युध्यतः पाण्डुपुत्रस्य सूतपुत्रोऽस्त्रमायया  ॥ ०४३  ॥

तस्येषुधी धनुर्ज्यां च बाणैः संनतपर्वभिः ।
रश्मीन्योक्त्राणि चाश्वानां कर्णो वैकर्तनोऽच्छिनत्  ॥ ०४४  ॥

अथास्याश्वान्पुनर्हत्वा त्रिभिर्विव्याध सारथिम् ।
सोऽवप्लुत्य द्रुतं सूतो युयुधानरथं ययौ  ॥ ०४५  ॥

उत्स्मयन्निव भीमस्य क्रुद्धः कालानलप्रभः ।
ध्वजं चिच्छेद राधेयः पताकाश्च न्यपातयत्  ॥ ०४६  ॥

स विधन्वा महाराज रथशक्तिं परामृशत् ।
तामवासृजदाविध्य क्रुद्धः कर्णरथं प्रति  ॥ ०४७  ॥

तामाधिरथिरायस्तः शक्तिं हेमपरिष्कृताम् ।
आपतन्तीं महोल्काभां चिच्छेद दशभिः शरैः  ॥ ०४८  ॥

सापतद्दशधा राजन्निकृत्ता कर्णसायकैः ।
अस्यतः सूतपुत्रस्य मित्रार्थे चित्रयोधिनः ॥ ०४९ ॥

स चर्मादत्त कौन्तेयो जातरूपपरिष्कृतम् ।
खड्गं चान्यतरप्रेप्सुर्मृत्योरग्रे जयस्य वा ॥ ०५० ॥

तदस्य सहसा कर्णो व्यधमत्प्रहसन्निव ॥ ०५० ॥

स विचर्मा महाराज विरथः क्रोधमूर्छितः ।
असिं प्रासृजदाविध्य त्वरन्कर्णरथं प्रति ॥ ०५१ ॥

स धनुः सूतपुत्रस्य छित्त्वा ज्यां च सुसंशितः ।
अपतद्भुवि निस्त्रिंशश्च्युतः सर्प इवाम्बरात् ॥ ०५२ ॥

ततः प्रहस्याधिरथिरन्यदादत्त कार्मुकम् ।
शत्रुघ्नं समरे क्रुद्धो दृढज्यं वेगवत्तरम् ॥ ०५३ ॥

स भीमसेनः कुपितो बलवान्सत्यविक्रमः ।
विहायसं प्राक्रमद्वै कर्णस्य व्यथयन्मनः ॥ ०५४ ॥

तस्य तच्चरितं दृष्ट्वा सङ्ग्रामे विजयैषिणः ।
लयमास्थाय राधेयो भीमसेनमवञ्चयत् ॥ ०५५ ॥

तमदृष्ट्वा रथोपस्थे निलीनं व्यथितेन्द्रियम् ।
ध्वजमस्य समासाद्य तस्थौ स धरणीतले ॥ ०५६ ॥

तदस्य कुरवः सर्वे चारणाश्चाभ्यपूजयन् ।
यदियेष रथात्कर्णं हन्तुं तार्क्ष्य इवोरगम् ॥ ०५७ ॥

स छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।
स्वरथं पृष्ठतः कृत्वा युद्धायैव व्यवस्थितः ॥ ०५८ ॥

तद्विहत्यास्य राधेयस्तत एनं समभ्ययात् ।
संरब्धः पाण्डवं संख्ये युद्धाय समुपस्थितम्  ॥ ०५९  ॥

तौ समेतौ महारङ्गे स्पर्धमानौ महाबलौ ।
जीमूताविव घर्मान्ते गर्जमानौ नभस्तले  ॥ ०६०  ॥

तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः ।
अमृष्यमाणयोः संख्ये देवदानवयोरिव  ॥ ०६१  ॥

क्षीणशस्त्रस्तु कौन्तेयः कर्णेन समभिद्रुतः ।
दृष्ट्वार्जुनहतान्नागान्पतितान्पर्वतोपमान्  ॥ ०६२  ॥

रथमार्गविघातार्थं व्यायुधः प्रविवेश ह  ॥ ०६२  ॥

हस्तिनां व्रजमासाद्य रथदुर्गं प्रविश्य च ।
पाण्डवो जीविताकाङ्क्षी राधेयं नाभ्यहारयत्  ॥ ०६३  ॥

व्यवस्थानमथाकाङ्क्षन्धनञ्जयशरैर्हतम् ।
उद्यम्य कुञ्जरं पार्थस्तस्थौ परपुरञ्जयः  ॥ ०६४  ॥

तमस्य विशिखैः कर्णो व्यधमत्कुञ्जरं पुनः ।
हस्त्यङ्गान्यथ कर्णाय प्राहिणोत्पाण्डवो नदन्  ॥ ०६५  ॥

चक्राण्यश्वांस्तथा वाहान्यद्यत्पश्यति भूतले ।
तत्तदादाय चिक्षेप क्रुद्धः कर्णाय पाण्डवः  ॥ ०६६  ॥

तदस्य सर्वं चिच्छेद क्षिप्तं क्षिप्तं शितैः शरैः ।
व्यायुधं नावधीच्चैनं कर्णः कुन्त्या वचः स्मरन्  ॥ ०६७  ॥

धनुषोऽग्रेण तं कर्णस्त्वभिद्रुत्य परामृशत् ।

उत्स्मयन्निव राधेयो भीमसेनमुवाच ह ॥ ०६८ ॥

पुनः पुनस्तूबरक मूढ औदरिकेति च ।
अकृतास्त्रक मा योत्सीर्बाल सङ्ग्रामकातर ॥ ०६९ ॥

यत्र भोज्यं बहुविधं भक्ष्यं पेयं च पाण्डव ।
तत्र त्वं दुर्मते योग्यो न युद्धेषु कथञ्चन ॥ ०७० ॥

मुनिर्भूत्वाथ वा भीम फलान्यद्धि सुदुर्मते ।
वनाय व्रज कौन्तेय न त्वं युद्धविशारदः ॥ ०७१ ॥

फलमूलाशने युक्तस्त्वं तथातिथिभोजने ।
न त्वां शस्त्रसमुद्योगे योग्यं मन्ये वृकोदर ॥ ०७२ ॥

पुष्पमूलफलाहारो व्रतेषु नियमेषु च ।
उचितस्त्वं वने भीम न त्वं युद्धविशारदः ॥ ०७३ ॥

क्व युद्धं क्व मुनित्वं च वनं गच्छ वृकोदर ।
न त्वं युद्धोचितस्तात वनवासरतिर्भव ॥ ०७४ ॥

सूदान्भृत्यजनान्दासांस्त्वं गृहे त्वरयन्भृशम् ।
योग्यस्ताडयितुं क्रोधाद्भोजनार्थं वृकोदर ॥ ०७५ ॥

कौमारे यानि चाप्यासन्नप्रियाणि विशां पते ।
पूर्ववृत्तानि चाप्येनं रूक्षाण्यश्रावयद्भृशम् ॥ ०७६ ॥

अथैनं तत्र संलीनमस्पृशद्धनुषा पुनः ।
प्रहसंश्च पुनर्वाक्यं भीममाह वृषस्तदा ॥ ०७७ ॥

योद्धव्यमाविशान्यत्र न योद्धव्यं तु मादृशैः ।
मादृशैर्युध्यमानानामेतच्चान्यच्च विद्यते ॥ ०७८ ॥

गच्छ वा यत्र तौ कृष्णौ तौ त्वा रक्षिष्यतो रणे ।
गृहं वा गच्छ कौन्तेय किं ते युद्धेन बालक ॥ ०७९ ॥

एवं तं विरथं कृत्वा कर्णो राजन्व्यकत्थत ।
प्रमुखे वृष्णिसिंहस्य पार्थस्य च महात्मनः ॥ ०८० ॥

ततो राजञ्शिलाधौताञ्शराञ्शाखामृगध्वजः ।
प्राहिणोत्सूतपुत्राय केशवेन प्रचोदितः ॥ ०८१ ॥

ततः पार्थभुजोत्सृष्टाः शराः काञ्चनभूषणाः ।
गाण्डीवप्रभवाः कर्णं हंसाः क्रौञ्चमिवाविशन् ॥ ०८२ ॥

स भुजङ्गैरिवायस्तैर्गाण्डीवप्रेषितैः शरैः ।
भीमसेनादपासेधत्सूतपुत्रं धनञ्जयः ॥ ०८३ ॥

स छिन्नधन्वा भीमेन धनञ्जयशराहतः ।
कर्णो भीमादपायासीद्रथेन महता द्रुतम् ॥ ०८४ ॥

भीमोऽपि सात्यकेर्वाहं समारुह्य नरर्षभः ।
अन्वयाद्भ्रातरं संख्ये पाण्डवं सव्यसाचिनम् ॥ ०८५ ॥

ततः कर्णं समुद्दिश्य त्वरमाणो धनञ्जयः ।
नाराचं क्रोधताम्राक्षः प्रैषीन्मृत्युमिवान्तकः ॥ ०८६ ॥

स गरुत्मानिवाकाशे प्रार्थयन्भुजगोत्तमम् ।
नाराचोऽभ्यपतत्कर्णं तूर्णं गाण्डीवचोदितः ॥ ०८७ ॥

तमन्तरिक्षे नाराचं द्रौणिश्चिच्छेद पत्रिणा ।
धनञ्जयभयात्कर्णमुज्जिहीर्षुर्महारथः ॥ ०८८ ॥

ततो द्रौणिं चतुःषष्ट्या विव्याध कुपितोऽर्जुनः ।
शिलीमुखैर्महाराज मा गास्तिष्ठेति चाब्रवीत् ॥ ०८९ ॥

स तु मत्तगजाकीर्णमनीकं रथसङ्कुलम् ।
तूर्णमभ्याविशद्द्रौणिर्धनञ्जयशरार्दितः ॥ ०९० ॥

ततः सुवर्णपृष्ठानां धनुषां कूजतां रणे ।
शब्दं गाण्डीवघोषेण कौन्तेयोऽभ्यभवद्बली ॥ ०९१ ॥

धनञ्जयस्तथा यान्तं पृष्ठतो द्रौणिमभ्ययात् ।
नातिदीर्घमिवाध्वानं शरैः संत्रासयन्बलम् ॥ ०९२ ॥

विदार्य देहान्नाराचैर्नरवारणवाजिनाम् ।
कङ्कबर्हिणवासोभिर्बलं व्यधमदर्जुनः ॥ ०९३ ॥

तद्बलं भरतश्रेष्ठ सवाजिद्विपमानवम् ।
पाकशासनिरायस्तः पार्थः संनिजघान ह ॥ ०९४ ॥

---

# अध्याय ११५

धृतराष्ट्र उवाच ॥

अहन्यहनि मे दीप्तं यशः पतति सञ्जय ।
हता मे बहवो योधा मन्ये कालस्य पर्ययम् ॥ ००१ ॥

धनञ्जयस्तु सङ्क्रुद्धः प्रविष्टो मामकं बलम् ।
रक्षितं द्रोणकर्णाभ्यामप्रवेश्यं सुरैरपि ॥ ००२ ॥

ताभ्यामूर्जितवीर्याभ्यामाप्यायितपराक्रमः ।
संहितः कृष्णभीमाभ्यां शिनीनामृषभेण च ॥ ००३ ॥

तदा प्रभृति मा शोको दहत्यग्निरिवाशयम् ।
ग्रस्तान्हि प्रतिपश्यामि भूमिपालान्ससैन्धवान् ॥ ००४ ॥

अप्रियं सुमहत्कृत्वा सिन्धुराजः किरीटिनः ।
चक्षुर्विषयमापन्नः कथं मुच्येत जीवितः ॥ ००५ ॥

अनुमानाच्च पश्यामि नास्ति सञ्जय सैन्धवः ।
युद्धं तु तद्यथा वृत्तं तन्ममाचक्ष्व पृच्छतः ॥ ००६ ॥

यच्च विक्षोभ्य महतीं सेनां संलोड्य चासकृत् ।
एकः प्रविष्टः सङ्क्रुद्धो नलिनीमिव कुञ्जरः ॥ ००७ ॥

तस्य वृष्णिप्रवीरस्य ब्रूहि युद्धं यथातथम् ।
धनञ्जयार्थे यत्तस्य कुशलो ह्यसि सञ्जय ॥ ००८ ॥

सञ्जय उवाच ॥

तथा तु वैकर्तनपीडितं तं ; भीमं प्रयान्तं पुरुषप्रवीरम् ।
समीक्ष्य राजन्नरवीरमध्ये ; शिनिप्रवीरोऽनुययौ रथेन ॥ ००९ ॥

नदन्यथा वज्रधरस्तपान्ते ; ज्वलन्यथा जलदान्ते च सूर्यः ।
निघ्नन्नमित्रान्धनुषा दृढेन ; सङ्कम्पयंस्तव पुत्रस्य सेनाम् ॥ ०१० ॥

तं यान्तमश्वै रजतप्रकाशै ;रायोधने नरवीरं चरन्तम् ।
नाशक्नुवन्वारयितुं त्वदीयाः ; सर्वे रथा भारत माधवाग्र्यम् ॥ ०११ ॥

अमर्षपूर्णस्त्वनिवृत्तयोधी ; शरासनी काञ्चनवर्मधारी ।

अलम्बुसः सात्यकिं माधवाग्र्य ;मवारयद्राजवरोऽभिपत्य ॥ ०१२ ॥

तयोरभूद्भारत संप्रहार ;स्तथागतो नैव बभूव कश्चित् ।
प्रैक्षन्त एवाहवशोभिनौ तौ ; योधास्त्वदीयाश्च परे च सर्वे ॥ ०१३ ॥

अविध्यदेनं दशभिः पृषत्कै ;रलम्बुसो राजवरः प्रसह्य ।
अनागतानेव तु तान्पृषत्कां ;श्चिच्छेद बाणैः शिनिपुङ्गवोऽपि ॥ ०१४ ॥

पुनः स बाणैस्त्रिभिरग्निकल्पै ;राकर्णपूर्णैर्निशितैः सुपुङ्खैः ।
विव्याध देहावरणं विदार्य ; ते सात्यकेराविविशुः शरीरम् ॥ ०१५ ॥

तैः कायमस्याग्न्यनिलप्रभावै ;र्विदार्य बाणैरपरैर्ज्वलद्भिः ।
आजघ्निवांस्तान्रजतप्रकाशा ;नश्वांश्चतुर्भिश्चतुरः प्रसह्य ॥ ०१६ ॥

तथा तु तेनाभिहतस्तरस्वी ; नप्ता शिनेश्चक्रधरप्रभावः ।
अलम्बुसस्योत्तमवेगवद्भि ;र्हयांश्चतुर्भिर्निजघान बाणैः ॥ ०१७ ॥

अथास्य सूतस्य शिरो निकृत्य ; भल्लेन कालानलसंनिभेन ।
सकुण्डलं पूर्णशशिप्रकाशं ; भ्राजिष्णु वक्त्रं निचकर्त देहात् ॥ ०१८ ॥

निहत्य तं पार्थिवपुत्रपौत्रं ; संख्ये मधूनामृषभः प्रमाथी ।
ततोऽन्वयादर्जुनमेव वीरः ; सैन्यानि राजंस्तव संनिवार्य ॥ ०१९ ॥

अन्वागतं वृष्णिवरं समीक्ष्य ; तथारिमध्ये परिवर्तमानम् ।
घ्नन्तं कुरूणामिषुभिर्बलानि ; पुनः पुनर्वायुरिवाभ्रपूगान् ॥ ०२० ॥

ततोऽवहन्सैन्धवाः साधु दान्ता ; गोक्षीरकुन्देन्दुहिमप्रकाशाः ।
सुवर्णजालावतताः सदश्वा ; यतो यतः कामयते नृसिंहः ॥ ०२१ ॥

अथात्मजास्ते सहिताभिपेतु ;रन्ये च योधास्त्वरितास्त्वदीयाः ।
कृत्वा मुखं भारत योधमुख्यं ; दुःशासनं त्वत्सुतमाजमीढ ॥ ०२२ ॥

ते सर्वतः संपरिवार्य संख्ये ; शैनेयमाजघ्नुरनीकसाहाः ।
स चापि तान्प्रवरः सात्वतानां ; न्यवारयद्बाणजालेन वीरः ॥ ०२३ ॥

निवार्य तांस्तूर्णममित्रघाती ; नप्ता शिनेः पत्रिभिरग्निकल्पैः ।
दुःशासनस्यापि जघान वाहा ;नुद्यम्य बाणासनमाजमीढ ॥ ०२४ ॥

---

# अध्याय ११६

सञ्जय उवाच ॥

तमुद्यतं महाबाहुं दुःशासनरथं प्रति ।
त्वरितं त्वरणीयेषु धनञ्जयहितैषिणम् ॥ ००१ ॥

त्रिगर्तानां महेष्वासाः सुवर्णविकृतध्वजाः ।
सेनासमुद्रमाविष्टमानर्तं पर्यवारयन् ॥ ००२ ॥

अथैनं रथवंशेन सर्वतः संनिवार्य ते ।
अवाकिरञ्शरव्रातैः क्रुद्धाः परमधन्विनः ॥ ००३ ॥

अजयद्राजपुत्रांस्तान्यतमानान्महारणे ।
एकः पञ्चाशतं शत्रून्सात्यकिः सत्यविक्रमः ॥ ००४ ॥

संप्राप्य भारतीमध्यं तलघोषसमाकुलम् ।
असिशक्तिगदापूर्णमप्लवं सलिलं यथा ॥ ००५ ॥

तत्राद्भुतमपश्याम शैनेयचरितं रणे ।

प्रतीच्यां दिशि तं दृष्ट्वा प्राच्यां पश्याम लाघवात्  ॥ ००६  ॥

उदीचीं दक्षिणां प्राचीं प्रतीचीं प्रसृतस्तथा ।
नृत्यन्निवाचरच्छूरो यथा रथशतं तथा  ॥ ००७  ॥

तद्दृष्ट्वा चरितं तस्य सिंहविक्रान्तगामिनः ।
त्रिगर्ताः संन्यवर्तन्त संतप्ताः स्वजनं प्रति  ॥ ००८  ॥

तमन्ये शूरसेनानां शूराः संख्ये न्यवारयन् ।
नियच्छन्तः शरव्रातैर्मत्तं द्विपमिवाङ्कुशैः  ॥ ००९  ॥

तान्न्यवारयदायस्तान्मुहूर्तमिव सात्यकिः ।
ततः कलिङ्गैर्युयुधे सोऽचिन्त्यबलविक्रमः  ॥ ०१०  ॥

तां च सेनामतिक्रम्य कलिङ्गानां दुरत्ययाम् ।
अथ पार्थं महाबाहुर्धनञ्जयमुपासदत्  ॥ ०११  ॥

तरन्निव जले श्रान्तो यथा स्थलमुपेयिवान् ।
तं दृष्ट्वा पुरुषव्याघ्रं युयुधानः समाश्वसत्  ॥ ०१२  ॥

तमायान्तमभिप्रेक्ष्य केशवोऽर्जुनमब्रवीत् ।
असावायाति शैनेयस्तव पार्थ पदानुगः  ॥ ०१३  ॥

एष शिष्यः सखा चैव तव सत्यपराक्रमः ।
सर्वान्योधांस्तृणीकृत्य विजिग्ये पुरुषर्षभः  ॥ ०१४  ॥

एष कौरवयोधानां कृत्वा घोरमुपद्रवम् ।
तव प्राणैः प्रियतरः किरीटिन्नेति सात्यकिः  ॥ ०१५  ॥

एष द्रोणं तथा भोजं कृतवर्माणमेव च ।
कदर्थीकृत्य विशिखैः फल्गुनाभ्येति सात्यकिः  ॥ ०१६  ॥

धर्मराजप्रियान्वेषी हत्वा योधान्वरान्वरान् ।
शूरश्चैव कृतास्त्रश्च फल्गुनाभ्येति सात्यकिः ॥ ०१७ ॥

कृत्वा सुदुष्करं कर्म सैन्यमध्ये महाबलः ।
तव दर्शनमन्विच्छन्पाण्डवाभ्येति सात्यकिः ॥ ०१८ ॥

बहूनेकरथेनाजौ योधयित्वा महारथान् ।
आचार्यप्रमुखान्पार्थ आयात्येष हि सात्यकिः ॥ ०१९ ॥

स्वबाहुबलमाश्रित्य विदार्य च वरूथिनीम् ।
प्रेषितो धर्मपुत्रेण पर्थैषोऽभ्येति सात्यकिः ॥ ०२० ॥

यस्य नास्ति समो योधः कौरवेषु कथञ्चन ।
सोऽयमायाति कौन्तेय सात्यकिः सत्यविक्रमः ॥ ०२१ ॥

कुरुसैन्याद्विमुक्तो वै सिंहो मध्याद्गवामिव ।
निहत्य बहुलाः सेनाः पार्थैषोऽभ्येति सात्यकिः ॥ ०२२ ॥

एष राजसहस्राणां वक्त्रैः पङ्कजसंनिभैः ।
आस्तीर्य वसुधां पार्थ क्षिप्रमायाति सात्यकिः ॥ ०२३ ॥

एष दुर्योधनं जित्वा भ्रातृभिः सहितं रणे ।
निहत्य जलसंधं च क्षिप्रमायाति सात्यकिः ॥ ०२४ ॥

रुधिरौघवतीं कृत्वा नदीं शोणितकर्दमाम् ।
तृणवन्न्यस्य कौरव्यानेष आयाति सात्यकिः ॥ ०२५ ॥

ततोऽप्रहृष्टः कौन्तेयः केशवं वाक्यमब्रवीत् ।
न मे प्रियं महाबाहो यन्मामभ्येति सात्यकिः ॥ ०२६ ॥

न हि जानामि वृत्तान्तं धर्मराजस्य केशव ।
सात्वतेन विहीनः स यदि जीवति वा न वा ॥ ०२७ ॥

एतेन हि महाबाहो रक्षितव्यः स पार्थिवः ।
तमेष कथमुत्सृज्य मम कृष्ण पदानुगः ॥ ०२८ ॥

राजा द्रोणाय चोत्सृष्टः सैन्धवश्चानिपातितः ।
प्रत्युद्यातश्च शैनेयमेष भूरिश्रवा रणे ॥ ०२९ ॥

सोऽयं गुरुतरो भारः सैन्धवान्मे समाहितः ।
ज्ञातव्यश्च हि मे राजा रक्षितव्यश्च सात्यकिः ॥ ०३० ॥

जयद्रथश्च हन्तव्यो लम्बते च दिवाकरः ।
श्रान्तश्चैष महाबाहुरल्पप्राणश्च सांप्रतम् ॥ ०३१ ॥

परिश्रान्ता हयाश्चास्य हययन्ता च माधव ।
न च भूरिश्रवाः श्रान्तः ससहायश्च केशव ॥ ०३२ ॥

अपीदानीं भवेदस्य क्षेममस्मिन्समागमे ।
कच्चिन्न सागरं तीर्त्वा सात्यकिः सत्यविक्रमः ॥ ०३३ ॥

गोष्पदं प्राप्य सीदेत महौजाः शिनिपुङ्गवः ॥ ०३३ ॥

अपि कौरवमुख्येन कृतास्त्रेण महात्मना ।
समेत्य भूरिश्रवसा स्वस्तिमान्सात्यकिर्भवेत् ॥ ०३४ ॥

व्यतिक्रममिमं मन्ये धर्मराजस्य केशव ।
आचार्याद्भयमुत्सृज्य यः प्रेषयति सात्यकिम् ॥ ०३५ ॥

ग्रहणं धर्मराजस्य खगः श्येन इवामिषम् ।
नित्यमाशंसते द्रोणः कच्चित्स्यात्कुशली नृपः ॥ ०३६ ॥

# अध्याय ११७

सञ्जय उवाच ॥

तमापतन्तं संप्रेक्ष्य सात्वतं युद्धदुर्मदम् ।
क्रोधाद्भूरिश्रवा राजन्सहसा समुपाद्रवत् ॥ ००१ ॥

तमब्रवीन्महाबाहुः कौरव्यः शिनिपुङ्गवम् ।
अद्य प्राप्तोऽसि दिष्ट्या मे चक्षुर्विषयमित्युत ॥ ००२ ॥

चिराभिलषितं काममद्य प्राप्स्यामि संयुगे ।
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणम् ॥ ००३ ॥

अद्य त्वां समरे हत्वा नित्यं शूराभिमानिनम् ।
नन्दयिष्यामि दाशार्ह कुरुराजं सुयोधनम् ॥ ००४ ॥

अद्य मद्बाणनिर्दग्धं पतितं धरणीतले ।
द्रक्ष्यतस्त्वां रणे वीरौ सहितौ केशवार्जुनौ ॥ ००५ ॥

अद्य धर्मसुतो राजा श्रुत्वा त्वां निहतं मया ।
सव्रीडो भविता सद्यो येनासीह प्रवेशितः ॥ ००६ ॥

अद्य मे विक्रमं पार्थो विज्ञास्यति धनञ्जयः ।
त्वयि भूमौ विनिहते शयाने रुधिरोक्षिते ॥ ००७ ॥

चिराभिलषितो ह्यद्य त्वया सह समागमः ।
पुरा देवासुरे युद्धे शक्रस्य बलिना यथा ॥ ००८ ॥

अद्य युद्धं महाघोरं तव दास्यामि सात्वत ।
ततो ज्ञास्यसि तत्त्वेन मद्वीर्यबलपौरुषम्  ॥ ००९  ॥

अद्य संयमनीं याता मया त्वं निहतो रणे ।
यथा रामानुजेनाजौ रावणिर्लक्ष्मणेन वै  ॥ ०१०  ॥

अद्य कृष्णश्च पार्थश्च धर्मराजश्च माधव ।
हते त्वयि निरुत्साहा रणं त्यक्ष्यन्त्यसंशयम्  ॥ ०११  ॥

अद्य तेऽपचितिं कृत्वा शितैर्माधव सायकैः ।
तत्स्त्रियो नन्दयिष्यामि ये त्वया निहता रणे  ॥ ०१२  ॥

चक्षुर्विषयसंप्राप्तो न त्वं माधव मोक्ष्यसे ।
सिंहस्य विषयं प्राप्तो यथा क्षुद्रमृगस्तथा  ॥ ०१३  ॥

युयुधानस्तु तं राजन्प्रत्युवाच हसन्निव ।
कौरवेय न संत्रासो विद्यते मम संयुगे  ॥ ०१४  ॥

स मां निहन्यात्सङ्ग्रामे यो मां कुर्यान्निरायुधम् ।
समास्तु शाश्वतीर्हन्याद्यो मां हन्याद्धि संयुगे  ॥ ०१५  ॥

किं मृषोक्तेन बहुना कर्मणा तु समाचर ।
शारदस्येव मेघस्य गर्जितं निष्फलं हि ते  ॥ ०१६  ॥

श्रुत्वैतद्गर्जितं वीर हास्यं हि मम जायते ।
चिरकालेप्सितं लोके युद्धमद्यास्तु कौरव  ॥ ०१७  ॥

त्वरते मे मतिस्तात त्वयि युद्धाभिकाङ्क्षिणि ।
नाहत्वा संनिवर्तिष्ये त्वामद्य पुरुषाधम  ॥ ०१८  ॥

अन्योन्यं तौ तदा वाग्भिस्तक्षन्तौ नरपुङ्गवौ ।
जिघांसू परमक्रुद्धावभिजघ्नतुराहवे ॥ ०१९ ॥

समेतौ तौ नरव्याघ्रौ शुष्मिणौ स्पर्धिनौ रणे ।
द्विरदाविव सङ्क्रुद्धौ वाशितार्थे मदोत्कटौ ॥ ०२० ॥

भूरिश्रवाः सात्यकिश्च ववर्षतुररिंदमौ ।
शरवर्षाणि भीमानि मेघाविव परस्परम् ॥ ०२१ ॥

सौमदत्तिस्तु शैनेयं प्रच्छाद्येषुभिराशुगैः ।
जिघांसुर्भरतश्रेष्ठ विव्याध निशितैः शरैः ॥ ०२२ ॥

दशभिः सात्यकिं विद्ध्वा सौमदत्तिरथापरान् ।
मुमोच निशितान्बाणाञ्जिघांसुः शिनिपुङ्गवम् ॥ ०२३ ॥

तानस्य विशिखांस्तीक्ष्णानन्तरिक्षे विशां पते ।
अप्राप्तानस्त्रमायाभिरग्रसत्सात्यकिः प्रभो ॥ ०२४ ॥

तौ पृथक्शरवर्षाभ्यामवर्षेतां परस्परम् ।
उत्तमाभिजनौ वीरौ कुरुवृष्णियशस्करौ ॥ ०२५ ॥

तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ ।
रथशक्तिभिरन्योन्यं विशिखैश्चाप्यकृन्तताम् ॥ ०२६ ॥

निर्भिदन्तौ हि गात्राणि विक्षरन्तौ च शोणितम् ।
व्यष्टम्भयेतामन्योन्यं प्राणद्यूताभिदेविनौ ॥ ०२७ ॥

एवमुत्तमकर्माणौ कुरुवृष्णियशस्करौ ।
परस्परमयुध्येतां वारणाविव यूथपौ ॥ ०२८ ॥

तावदीर्घेण कालेन ब्रह्मलोकपुरस्कृतौ ।

जिगीषन्तौ परं स्थानमन्योन्यमभिजघ्नतुः ॥ ०२९ ॥

सात्यकिः सौमदत्तिश्च शरवृष्ट्या परस्परम् ।
हृष्टवद्धार्तराष्ट्राणां पश्यतामभ्यवर्षताम् ॥ ०३० ॥

संप्रैक्षन्त जनास्तत्र युध्यमानौ युधां पती ।
यूथपौ वाशिताहेतोः प्रयुद्धाविव कुञ्जरौ ॥ ०३१ ॥

अन्योन्यस्य हयान्हत्वा धनुषी विनिकृत्य च ।
विरथावसियुद्धाय समेयातां महारणे ॥ ०३२ ॥

आर्षभे चर्मणी चित्रे प्रगृह्य विपुले शुभे ।
विकोशौ चाप्यसी कृत्वा समरे तौ विचेरतुः ॥ ०३३ ॥

चरन्तौ विविधान्मार्गान्मण्डलानि च भागशः ।
मुहुराजघ्नतुः क्रुद्धावन्योन्यमरिमर्दनौ ॥ ०३४ ॥

सखड्गौ चित्रवर्माणौ सनिष्काङ्गदभूषणौ ।
रणे रणोत्कटौ राजन्नन्योन्यं पर्यकर्षताम् ॥ ०३५ ॥

मुहूर्तमिव राजेन्द्र परिकृष्य परस्परम् ।
पश्यतां सर्वसैन्यानां वीरावाश्वसतां पुनः ॥ ०३६ ॥

असिभ्यां चर्मणी शुभ्रे विपुले च शरावरे ।
निकृत्य पुरुषव्याघ्रौ बाहुयुद्धं प्रचक्रतुः ॥ ०३७ ॥

व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥ ०३८ ॥

तयोरासन्भुजाघाता निग्रहप्रग्रहौ तथा ।
शिक्षाबलसमुद्भूताः सर्वयोधप्रहर्षणाः ॥ ०३९ ॥

तयोर्नृवरयो राजन्समरे युध्यमानयोः ।
भीमोऽभवन्महाशब्दो वज्रपर्वतयोरिव ॥ ०४० ॥

द्विपाविव विषाणाग्रैः शृङ्गैरिव महर्षभौ ।
युयुधाते महात्मानौ कुरुसात्वतपुङ्गवौ ॥ ०४१ ॥

क्षीणायुधे सात्वते युध्यमाने ; ततोऽब्रवीदर्जुनं वासुदेवः ।
पश्यस्वैनं विरथं युध्यमानं ; रणे केतुं सर्वधनुर्धराणाम् ॥ ०४२ ॥

प्रविष्टो भारतीं सेनां तव पाण्डव पृष्ठतः ।
योधितश्च महावीर्यैः सर्वैर्भारत भारतैः ॥ ०४३ ॥

परिश्रान्तो युधां श्रेष्ठः संप्राप्तो भूरिदक्षिणम् ।
युद्धकाङ्क्षिणमायान्तं नैतत्सममिवार्जुन ॥ ०४४ ॥

ततो भूरिश्रवाः क्रुद्धः सात्यकिं युद्धदुर्मदम् ।
उद्यम्य न्यहनद्राजन्मत्तो मत्तमिव द्विपम् ॥ ०४५ ॥

रथस्थयोर्द्वयोर्युद्धे क्रुद्धयोर्योधमुख्ययोः ।
केशवार्जुनयो राजन्समरे प्रेक्षमाणयोः ॥ ०४६ ॥

अथ कृष्णो महाबाहुरर्जुनं प्रत्यभाषत ।
पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम् ॥ ०४७ ॥

परिश्रान्तं गतं भूमौ कृत्वा कर्म सुदुष्करम् ।
तवान्तेवासिनं शूरं पालयार्जुन सात्यकिम् ॥ ०४८ ॥

न वशं यज्ञशीलस्य गच्छेदेष वरारिहन् ।
त्वत्कृते पुरुषव्याघ्र तदाशु क्रियतां विभो ॥ ०४९ ॥

अथाब्रवीद्धृष्टमना वासुदेवं धनञ्जयः ।
पश्य वृष्णिप्रवीरेण क्रीडन्तं कुरुपुङ्गवम्  ॥ ०५० ॥

महाद्विपेनेव वने मत्तेन हरियूथपम्  ॥ ०५० ॥

हाहाकारो महानासीत्सैन्यानां भरतर्षभ ।
यदुद्यम्य महाबाहुः सात्यकिं न्यहनद्भुवि  ॥ ०५१ ॥

स सिंह इव मातङ्गं विकर्षन्भूरिदक्षिणः ।
व्यरोचत कुरुश्रेष्ठः सात्वतप्रवरं युधि  ॥ ०५२ ॥

अथ कोशाद्विनिष्कृष्य खड्गं भूरिश्रवा रणे ।
मूर्धजेषु निजग्राह पदा चोरस्यताडयत्  ॥ ०५३ ॥

तथा तु परिकृष्यन्तं दृष्ट्वा सात्वतमाहवे ।
वासुदेवस्ततो राजन्भूयोऽर्जुनमभाषत  ॥ ०५४ ॥

पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम् ।
तव शिष्यं महाबाहो धनुष्यनवरं त्वया  ॥ ०५५ ॥

असत्यो विक्रमः पार्थ यत्र भूरिश्रवा रणे ।
विशेषयति वार्ष्णेयं सात्यकिं सत्यविक्रमम्  ॥ ०५६ ॥

एवमुक्तो महाबाहुर्वासुदेवेन पाण्डवः ।
मनसा पूजयामास भूरिश्रवसमाहवे  ॥ ०५७ ॥

विकर्षन्सात्वतश्रेष्ठं क्रीडमान इवाहवे ।
संहर्षयति मां भूयः कुरूणां कीर्तिवर्धनः  ॥ ०५८ ॥

प्रवरं वृष्णिवीराणां यन्न हन्याद्धि सात्यकिम् ।
महाद्विपमिवारण्ये मृगेन्द्र इव कर्षति  ॥ ०५९ ॥

एवं तु मनसा राजन्पार्थः संपूज्य कौरवम् ।
वासुदेवं महाबाहुरर्जुनः प्रत्यभाषत ॥ ०६० ॥

सैन्धवासक्तदृष्टित्वान्नैनं पश्यामि माधव ।
एष त्वसुकरं कर्म यादवार्थे करोम्यहम् ॥ ०६१ ॥

इत्युक्त्वा वचनं कुर्वन्वासुदेवस्य पाण्डवः ।
सखड्गं यज्ञशीलस्य पत्रिणा बाहुमच्छिनत् ॥ ०६२ ॥

---

# अध्याय ११८

सञ्जय उवाच ॥

स बाहुरपतद्भूमौ सखड्गः सशुभाङ्गदः ।
आदधज्जीवलोकस्य दुःखमुत्तममुत्तमः ॥ ००१ ॥

प्रहरिष्यन्हृतो बाहुरदृश्येन किरीटिना ।
वेगेनाभ्यपतद्भूमौ पञ्चास्य इव पन्नगः ॥ ००२ ॥

स मोघं कृतमात्मानं दृष्ट्वा पार्थेन कौरवः ।
उत्सृज्य सात्यकिं क्रोधाद्गर्हयामास पाण्डवम् ॥ ००३ ॥

नृशंसं बत कौन्तेय कर्मेदं कृतवानसि ।
अपश्यतो विषक्तस्य यन्मे बाहुमचिच्छिदः ॥ ००४ ॥

किं नु वक्ष्यसि राजानं धर्मपुत्रं युधिष्ठिरम् ।

किं कुर्वाणो मया संख्ये हतो भूरिश्रवा इति ॥ ००५ ॥

इदमिन्द्रेण ते साक्षादुपदिष्टं महात्मना ।
अस्त्रं रुद्रेण वा पार्थ द्रोणेनाथ कृपेण वा ॥ ००६ ॥

ननु नाम स्वधर्मज्ञस्त्वं लोकेऽभ्यधिकः परैः ।
अयुध्यमानस्य कथं रणे प्रहृतवानसि ॥ ००७ ॥

न प्रमत्ताय भीताय विरथाय प्रयाचते ।
व्यसने वर्तमानाय प्रहरन्ति मनस्विनः ॥ ००८ ॥

इदं तु नीचाचरितमसत्पुरुषसेवितम् ।
कथमाचरितं पार्थ त्वया कर्म सुदुष्करम् ॥ ००९ ॥

आर्येण सुकरं ह्याहुरार्यकर्म धनञ्जय ।
अनार्यकर्म त्वार्येण सुदुष्करतरं भुवि ॥ ०१० ॥

येषु येषु नरः पार्थ यत्र यत्र च वर्तते ।
आशु तच्छीलतामेति तदिदं त्वयि दृश्यते ॥ ०११ ॥

कथं हि राजवंश्यस्त्वं कौरवेयो विशेषतः ।
क्षत्रधर्मादपक्रान्तः सुवृत्तश्चरितव्रतः ॥ ०१२ ॥

इदं तु यदतिक्षुद्रं वार्ष्णेयार्थे कृतं त्वया ।
वासुदेवमतं नूनं नैतत्त्वय्युपपद्यते ॥ ०१३ ॥

को हि नाम प्रमत्ताय परेण सह युध्यते ।
ईदृशं व्यसनं दद्याद्यो न कृष्णसखो भवेत् ॥ ०१४ ॥

व्रात्याः संश्लिष्टकर्माणः प्रकृत्यैव विगर्हिताः ।
वृष्ण्यन्धकाः कथं पार्थ प्रमाणं भवता कृताः ॥ ०१५ ॥

एवमुक्त्वा महाबाहुर्यूपकेतुर्महायशाः ।
युयुधानं परित्यज्य रणे प्रायमुपाविशत्  ॥ ०१६  ॥

शरानास्तीर्य सव्येन पाणिना पुण्यलक्षणः ।
यियासुर्ब्रह्मलोकाय प्राणान्प्राणेष्वथाजुहोत्  ॥ ०१७  ॥

सूर्ये चक्षुः समाधाय प्रसन्नं सलिले मनः ।
ध्यायन्महोपनिषदं योगयुक्तोऽभवन्मुनिः  ॥ ०१८  ॥

ततः स सर्वसेनायां जनः कृष्णधनञ्जयौ ।
गर्हयामास तं चापि शशंस पुरुषर्षभम्  ॥ ०१९  ॥

निन्द्यमानौ तथा कृष्णौ नोचतुः किञ्चिदप्रियम् ।
प्रशस्यमानश्च तथा नाहृष्यद्यूपकेतनः  ॥ ०२०  ॥

तांस्तथा वादिनो राजन्पुत्रांस्तव धनञ्जयः ।
अमृष्यमाणो मनसा तेषां तस्य च भाषितम्  ॥ ०२१  ॥

असङ्क्रुद्धमना वाचा स्मारयन्निव भारत ।
उवाच पाण्डुतनयः साक्षेपमिव फल्गुनः  ॥ ०२२  ॥

मम सर्वेऽपि राजानो जानन्त्येतन्महाव्रतम् ।
न शक्यो मामको हन्तुं यो मे स्याद्बाणगोचरे  ॥ ०२३  ॥

यूपकेतो समीक्ष्य त्वं न मां गर्हितुमर्हसि ।
न हि धर्ममविज्ञाय युक्तं गर्हयितुं परम्  ॥ ०२४  ॥

आत्तशस्त्रस्य हि रणे वृष्णिवीरं जिघांसतः ।
यदहं बाहुमच्छैत्सं न स धर्मो विगर्हितः  ॥ ०२५  ॥

न्यस्तशस्त्रस्य बालस्य विरथस्य विवर्मणः ।
अभिमन्योर्वधं तात धार्मिकः को न पूजयेत् ॥ ०२६ ॥

एवमुक्तस्तु पार्थेन शिरसा भूमिमस्पृशत् ।
पाणिना चैव सव्येन प्राहिणोदस्य दक्षिणम् ॥ ०२७ ॥

एतत्पार्थस्य तु वचस्ततः श्रुत्वा महाद्युतिः ।
यूपकेतुर्महाराज तूष्णीमासीदवाङ्मुखः ॥ ०२८ ॥

अर्जुन उवाच ॥

या प्रीतिर्धर्मराजे मे भीमे च वदतां वरे ।
नकुले सहदेवे च सा मे त्वयि शलाग्रज ॥ ०२९ ॥

मया तु समनुज्ञातः कृष्णेन च महात्मना ।
गच्छ पुण्यकृता.ल्लोकाञ्शिबिरौशीनरो यथा ॥ ०३० ॥

सञ्जय उवाच ॥

तत उत्थाय शैनेयो विमुक्तः सौमदत्तिना ।
खड्गमादाय चिच्छित्सुः शिरस्तस्य महात्मनः ॥ ०३१ ॥

निहतं पाण्डुपुत्रेण प्रमत्तं भूरिदक्षिणम् ।
इयेष सात्यकिर्हन्तुं शलाग्रजमकल्मषम् ॥ ०३२ ॥

निकृत्तभुजमासीनं छिन्नहस्तमिव द्विपम् ।
क्रोशतां सर्वसैन्यानां निन्द्यमानः सुदुर्मनाः ॥ ०३३ ॥

वार्यमाणः स कृष्णेन पार्थेन च महात्मना ।
भीमेन चक्ररक्षाभ्यामश्वत्थाम्ना कृपेण च ॥ ०३४ ॥

कर्णेन वृषसेनेन सैन्धवेन तथैव च ।
विक्रोशतां च सैन्यानामवधीत्तं यतव्रतम् ॥ ०३५ ॥

प्रायोपविष्टाय रणे पार्थेन छिन्नबाहवे ।
सात्यकिः कौरवेन्द्राय खड्गेनापाहरच्छिरः ॥ ०३६ ॥

नाभ्यनन्दन्त तत्सैन्याः सात्यकिं तेन कर्मणा ।
अर्जुनेन हतं पूर्वं यज्जघान कुरूद्वहम् ॥ ०३७ ॥

सहस्राक्षसमं तत्र सिद्धचारणमानवाः ।
भूरिश्रवसमालोक्य युद्धे प्रायगतं हतम् ॥ ०३८ ॥

अपूजयन्त तं देवा विस्मितास्तस्य कर्मभिः ।
पक्षवादांश्च बहुशः प्रावदंस्तस्य सैनिकाः ॥ ०३९ ॥

न वार्ष्णेयस्यापराधो भवितव्यं हि तत्तथा ।
तस्मान्मन्युर्न वः कार्यः क्रोधो दुःखकरो नृणाम् ॥ ०४० ॥

हन्तव्यश्चैष वीरेण नात्र कार्या विचारणा ।
विहितो ह्यस्य धात्रैव मृत्युः सात्यकिराहवे ॥ ०४१ ॥

सात्यकिरुवाच ॥

न हन्तव्यो न हन्तव्य इति यन्मां प्रभाषथ ।
धर्मवादैरधर्मिष्ठा धर्मकञ्चुकमास्थिताः ॥ ०४२ ॥

यदा बालः सुभद्रायाः सुतः शस्त्रविनाकृतः ।
युष्माभिर्निहतो युद्धे तदा धर्मः क्व वो गतः ॥ ०४३ ॥

मया त्वेतत्प्रतिज्ञातं क्षेपे कस्मिंश्चिदेव हि ।
यो मां निष्पिष्य सङ्ग्रामे जीवन्हन्यात्पदा रुषा ॥ ०४४ ॥

स मे वध्यो भवेच्छत्रुर्यद्यपि स्यान्मुनिव्रतः ॥ ०४४ ॥

चेष्टमानं प्रतीघाते सभुजं मां सचक्षुषः ।
मन्यध्वं मृतमित्येवमेतद्वो बुद्धिलाघवम् ॥ ०४५ ॥

युक्तो ह्यस्य प्रतीघातः कृतो मे कुरुपुङ्गवाः ॥ ०४५ ॥

यत्तु पार्थेन मत्स्नेहात्स्वां प्रतिज्ञां च रक्षता ।
सखड्गोऽस्य हृतो बाहुरेतेनैवास्मि वञ्चितः ॥ ०४६ ॥

भवितव्यं च यद्भावि दैवं चेष्टयतीव च ।
सोऽयं हतो विमर्देऽस्मिन्किमत्राधर्मचेष्टितम् ॥ ०४७ ॥

अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि ।
पीडाकरममित्राणां यत्स्यात्कर्तव्यमेव तत् ॥ ०४८ ॥

सञ्जय उवाच ॥

एवमुक्ते महाराज सर्वे कौरवपाण्डवाः ।
न स्म किञ्चिदभाषन्त मनसा समपूजयन् ॥ ०४९ ॥

मन्त्रैर्हि पूतस्य महाध्वरेषु ; यशस्विनो भूरिसहस्रदस्य ।
मुनेरिवारण्यगतस्य तस्य ; न तत्र कश्चिद्वधमभ्यनन्दत् ॥ ०५० ॥

सुनीलकेशं वरदस्य तस्य ; शूरस्य पारावतलोहिताक्षम् ।
अश्वस्य मेध्यस्य शिरो निकृत्तं ; न्यस्तं हविर्धानमिवोत्तरेण ॥ ०५१ ॥

स तेजसा शस्त्रहतेन पूतो ; महाहवे देहवरं विसृज्य ।
आक्रामदूर्ध्वं वरदो वरार्हो ; व्यावृत्य धर्मेण परेण रोदसी ॥ ०५२ ॥

# अध्याय ११९

धृतराष्ट्र उवाच ॥

अजितो द्रोणराधेयविकर्णकृतवर्मभिः ।
तीर्णः सैन्यार्णवं वीरः प्रतिश्रुत्य युधिष्ठिरे ॥ ००१ ॥

स कथं कौरवेयेण समरेष्वनिवारितः ।
निगृह्य भूरिश्रवसा बलाद्भुवि निपातितः ॥ ००२ ॥

सञ्जय उवाच ॥

शृणु राजन्निहोत्पत्तिं शैनेयस्य यथा पुरा ।
यथा च भूरिश्रवसो यत्र ते संशयो नृप ॥ ००३ ॥

अत्रेः पुत्रोऽभवत्सोमः सोमस्य तु बुधः स्मृतः ।
बुधस्यासीन्महेन्द्राभः पुत्र एकः पुरूरवाः ॥ ००४ ॥

पुरूरवस आयुस्तु आयुषो नहुषः स्मृतः ।
नहुषस्य ययातिस्तु राजर्षिर्देवसंमितः ॥ ००५ ॥

ययातेर्देवयान्यां तु यदुर्ज्येष्ठोऽभवत्सुतः ।
यदोरभूदन्ववाये देवमीढ इति श्रुतः ॥ ००६ ॥

यादवस्तस्य च सुतः शूरस्त्रैलोक्यसंमतः ।
शूरस्य शौरिर्नृवरो वसुदेवो महायशाः ॥ ००७ ॥

धनुष्यनवरः शूरः कार्तवीर्यसमो युधि ।

तद्वीर्यश्चापि तत्रैव कुले शिनिरभून्नृपः ॥ ००८ ॥

एतस्मिन्नेव काले तु देवकस्य महात्मनः ।
दुहितुः स्वयंवरे राजन्सर्वक्षत्रसमागमे ॥ ००९ ॥

तत्र वै देवकीं देवीं वसुदेवार्थमाप्तवान् ।
निर्जित्य पार्थिवान्सर्वान्रथमारोपयच्छिनिः ॥ ०१० ॥

तां दृष्ट्वा देवकीं शौरे रथस्थां पुरुषर्षभः ।
नामृष्यत महातेजाः सोमदत्तः शिनेर्नृप ॥ ०११ ॥

तयोर्युद्धमभूद्राजन्दिनार्धं चित्रमद्भुतम् ।
बाहुयुद्धं सुबलिनोः शक्रप्रह्लादयोरिव ॥ ०१२ ॥

शिनिना सोमदत्तस्तु प्रसह्य भुवि पातितः ।
असिमुद्यम्य केशेषु प्रगृह्य च पदा हतः ॥ ०१३ ॥

मध्ये राजसहस्राणां प्रेक्षकाणां समन्ततः ।
कृपया च पुनस्तेन जीवेति स विसर्जितः ॥ ०१४ ॥

तदवस्थः कृतस्तेन सोमदत्तोऽथ मारिष ।
प्रसादयन्महादेवममर्षवशमास्थितः ॥ ०१५ ॥

तस्य तुष्टो महादेवो वराणां वरदः प्रभुः ।
वरेण छन्दयामास स तु वव्रे वरं नृपः ॥ ०१६ ॥

पुत्रमिच्छामि भगवन्यो निहन्याच्छिनेः सुतम् ।
मध्ये राजसहस्राणां पदा हन्याच्च संयुगे ॥ ०१७ ॥

तस्य तद्वचनं श्रुत्वा सोमदत्तस्य पार्थिव ।
एवमस्त्विति तत्रोक्त्वा स देवोऽन्तरधीयत ॥ ०१८ ॥

स तेन वरदानेन लब्धवान्भूरिदक्षिणम् ।
न्यपातयच्च समरे सौमदत्तिः शिनेः सुतम्  ॥ ०१९  ॥

एतत्ते कथितं राजन्यन्मां त्वं परिपृच्छसि ।
न हि शक्या रणे जेतुं सात्वता मनुजर्षभ  ॥ ०२०  ॥

लब्धलक्ष्याश्च सङ्ग्रामे बहवश्चित्रयोधिनः ।
देवदानवगन्धर्वान्विजेतारो ह्यविस्मिताः  ॥ ०२१  ॥

स्ववीर्यविजये युक्ता नैते परपरिग्रहाः  ॥ ०२१  ॥

न तुल्यं वृष्णिभिरिह दृश्यते किञ्चन प्रभो ।
भूतं भव्यं भविष्यच्च बलेन भरतर्षभ  ॥ ०२२  ॥

न ज्ञातिमवमन्यन्ते वृद्धानां शासने रताः ।
न देवासुरगन्धर्वा न यक्षोरगराक्षसाः  ॥ ०२३  ॥

जेतारो वृष्णिवीराणां न पुनर्मानुषा रणे  ॥ ०२३  ॥

ब्रह्मद्रव्ये गुरुद्रव्ये ज्ञातिद्रव्येऽप्यहिंसकाः ।
एतेषां रक्षितारश्च ये स्युः कस्याञ्चिदापदि  ॥ ०२४  ॥

अर्थवन्तो न चोत्सिक्ता ब्रह्मण्याः सत्यवादिनः ।
समर्थान्नावमन्यन्ते दीनानभ्युद्धरन्ति च  ॥ ०२५  ॥

नित्यं देवपरा दान्ता दातारश्चाविकत्थनाः ।
तेन वृष्णिप्रवीराणां चक्रं न प्रतिहन्यते  ॥ ०२६  ॥

अपि मेरुं वहेत्कश्चित्तरेद्वा मकरालयम् ।
न तु वृष्णिप्रवीराणां समेत्यान्तं व्रजेन्नृप  ॥ ०२७  ॥

एतत्ते सर्वमाख्यातं यत्र ते संशयो विभो ।
कुरुराज नरश्रेष्ठ तव ह्यपनयो महान् ॥ ०२८ ॥

---

# अध्याय १२०

धृतराष्ट्र उवाच ॥

तदवस्थे हते तस्मिन्भूरिश्रवसि कौरवे ।
यथा भूयोऽभवद्युद्धं तन्ममाचक्ष्व सञ्जय ॥ ००१ ॥

सञ्जय उवाच ॥

भूरिश्रवसि सङ्क्रान्ते परलोकाय भारत ।
वासुदेवं महाबाहुरर्जुनः समचूचुदत् ॥ ००२ ॥

चोदयाश्वान्भृशं कृष्ण यतो राजा जयद्रथः ।
अस्तमेति महाबाहो त्वरमाणो दिवाकरः ॥ ००३ ॥

एतद्धि पुरुषव्याघ्र महदभ्युद्यतं मया ।
कार्यं संरक्ष्यते चैष कुरुसेनामहारथैः ॥ ००४ ॥

नास्तमेति यथा सूर्यो यथा सत्यं भवेद्वचः ।
चोदयाश्वांस्तथा कृष्ण यथा हन्यां जयद्रथम् ॥ ००५ ॥

ततः कृष्णो महाबाहू रजतप्रतिमान्हयान् ।
हयज्ञश्चोदयामास जयद्रथरथं प्रति ॥ ००६ ॥

तं प्रयान्तममोघेषुमुत्पतद्भिरिवाशुगैः ।
त्वरमाणा महाराज सेनामुख्याः समाव्रजन् ॥ ००७ ॥

दुर्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट् ।
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः ॥ ००८ ॥

समासाद्य तु बीभत्सुः सैन्धवं प्रमुखे स्थितम् ।
नेत्राभ्यां क्रोधदीप्ताभ्यां संप्रैक्षन्निर्दहन्निव ॥ ००९ ॥

ततो दुर्योधनो राजा राधेयं त्वरितोऽब्रवीत् ।
अर्जुनं वीक्ष्य संयान्तं जयद्रथरथं प्रति ॥ ०१० ॥

अयं स वैकर्तन युद्धकालो ; विदर्शयस्वात्मबलं महात्मन् ।
यथा न वध्येत रणेऽर्जुनेन ; जयद्रथः कर्ण तथा कुरुष्व ॥ ०११ ॥

अल्पावशिष्टं दिवसं नृवीर ; विघातयस्वाद्य रिपुं शरौघैः ।
दिनक्षयं प्राप्य नरप्रवीर ; ध्रुवं हि नः कर्ण जयो भविष्यति ॥ ०१२ ॥

सैन्धवे रक्ष्यमाणे तु सूर्यस्यास्तमयं प्रति ।
मिथ्याप्रतिज्ञः कौन्तेयः प्रवेक्ष्यति हुताशनम् ॥ ०१३ ॥

अनर्जुनायां च भुवि मुहूर्तमपि मानद ।
जीवितुं नोत्सहेरन्वै भ्रातरोऽस्य सहानुगाः ॥ ०१४ ॥

विनष्टैः पाण्डवेयैश्च सशैलवनकाननाम् ।
वसुंधरामिमां कर्ण भोक्ष्यामो हतकण्टकाम् ॥ ०१५ ॥

दैवेनोपहतः पार्थो विपरीतश्च मानद ।
कार्याकार्यमजानन्वै प्रतिज्ञां कृतवान्रणे ॥ ०१६ ॥

नूनमात्मविनाशाय पाण्डवेन किरीटिना ।

प्रतिज्ञेयं कृता कर्ण जयद्रथवधं प्रति ॥ ०१७ ॥

कथं जीवति दुर्धर्षे त्वयि राधेय फल्गुनः ।
अनस्तङ्गत आदित्ये हन्यात्सैन्धवकं नृपम् ॥ ०१८ ॥

रक्षितं मद्रराजेन कृपेण च महात्मना ।
जयद्रथं रणमुखे कथं हन्याद्धनञ्जयः ॥ ०१९ ॥

द्रौणिना रक्ष्यमाणं च मया दुःशासनेन च ।
कथं प्राप्स्यति बीभत्सुः सैन्धवं कालचोदितः ॥ ०२० ॥

युध्यन्ते बहवः शूरा लम्बते च दिवाकरः ।
शङ्के जयद्रथं पार्थो नैव प्राप्स्यति मानद ॥ ०२१ ॥

स त्वं कर्ण मया सार्धं शूरैश्चान्यैर्महारथैः ।
युध्यस्व यत्नमास्थाय परं पार्थेन संयुगे ॥ ०२२ ॥

एवमुक्तस्तु राधेयस्तव पुत्रेण मारिष ।
दुर्योधनमिदं वाक्यं प्रत्युवाच कुरूत्तमम् ॥ ०२३ ॥

दृढलक्ष्येण शूरेण भीमसेनेन धन्विना ।
भृशमुद्वेजितः संख्ये शरजालैरनेकशः ॥ ०२४ ॥

स्थातव्यमिति तिष्ठामि रणे संप्रति मानद ।
नैवाङ्गमिङ्गति किञ्चिन्मे संतप्तस्य रणेषुभिः ॥ ०२५ ॥

योत्स्यामि तु तथा राजञ्शक्त्याहं परया रणे ।
यथा पाण्डवमुख्योऽसौ न हनिष्यति सैन्धवम् ॥ ०२६ ॥

न हि मे युध्यमानस्य सायकांश्चास्यतः शितान् ।
सैन्धवं प्राप्स्यते वीरः सव्यसाची धनञ्जयः ॥ ०२७ ॥

यत्तु शक्तिमता कार्यं सततं हितकारिणा ।
तत्करिष्यामि कौरव्य जयो दैवे प्रतिष्ठितः ॥ ०२८ ॥

अद्य योत्स्येऽर्जुनमहं पौरुषं स्वं व्यपाश्रितः ।
त्वदर्थं पुरुषव्याघ्र जयो दैवे प्रतिष्ठितः ॥ ०२९ ॥

अद्य युद्धं कुरुश्रेष्ठ मम पार्थस्य चोभयोः ।
पश्यन्तु सर्वभूतानि दारुणं लोमहर्षणम् ॥ ०३० ॥

कर्णकौरवयोरेवं रणे संभाषमाणयोः ।
अर्जुनो निशितैर्बाणैर्जघान तव वाहिनीम् ॥ ०३१ ॥

चिच्छेद तीक्ष्णाग्रमुखैः शूराणामनिवर्तिनाम् ।
भुजान्परिघसङ्काशान्हस्तिहस्तोपमान्रणे ॥ ०३२ ॥

शिरांसि च महाबाहुश्चिच्छेद निशितैः शरैः ।
हस्तिहस्तान्हयग्रीवा रथाक्षांश्च समन्ततः ॥ ०३३ ॥

शोणिताक्तान्हयारोहान्गृहीतप्रासतोमरान् ।
क्षुरैश्चिच्छेद बीभत्सुर्द्विधैकैकं त्रिधैव च ॥ ०३४ ॥

हयवारणमुख्याश्च प्रापतन्त सहस्रशः ।
ध्वजाश्छत्राणि चापानि चामराणि शिरांसि च ॥ ०३५ ॥

कक्षमग्निमिवोद्धूतः प्रदहंस्तव वाहिनीम् ।
अचिरेण महीं पार्थश्चकार रुधिरोत्तराम् ॥ ०३६ ॥

हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली ।
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः ॥ ०३७ ॥

बीभत्सुर्भीमसेनेन सात्वतेन च रक्षितः ।
स बभौ भरतश्रेष्ठ ज्वलन्निव हुताशनः ॥ ०३८ ॥

तं तथावस्थितं दृष्ट्वा त्वदीया वीर्यसंमताः ।
नामृष्यन्त महेष्वासाः फल्गुनं पुरुषर्षभाः ॥ ०३९ ॥

दुर्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट् ।
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः ॥ ०४० ॥

संरब्धाः सैन्धवस्यार्थे समावृण्वन्किरीटिनम् ।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनिस्वनैः ॥ ०४१ ॥

सङ्ग्रामकोविदं पार्थं सर्वे युद्धविशारदाः ।
अभीताः पर्यवर्तन्त व्यादितास्यमिवान्तकम् ॥ ०४२ ॥

सैन्धवं पृष्ठतः कृत्वा जिघांसन्तोऽर्जुनाच्युतौ ।
सूर्यास्तमयमिच्छन्तो लोहितायति भास्करे ॥ ०४३ ॥

ते भुजैर्भोगिभोगाभैर्धनूंष्यायम्य सायकान् ।
मुमुचुः सूर्यरश्म्याभाञ्शतशः फल्गुनं प्रति ॥ ०४४ ॥

तानस्तानस्यमानांश्च किरीटी युद्धदुर्मदः ।
द्विधा त्रिधाष्टधैकैकं छित्त्वा विव्याध तान्रणे ॥ ०४५ ॥

सिंहलाङ्गूलकेतुस्तु दर्शयञ्शक्तिमात्मनः ।
शारद्वतीसुतो राजन्नर्जुनं प्रत्यवारयत् ॥ ०४६ ॥

स विद्ध्वा दशभिः पार्थं वासुदेवं च सप्तभिः ।
अतिष्ठद्रथमार्गेषु सैन्धवं परिपालयन् ॥ ०४७ ॥

अथैनं कौरवश्रेष्ठाः सर्व एव महारथाः ।
महता रथवंशेन सर्वतः पर्यवारयन् ॥ ०४८ ॥

विस्फारयन्तश्चापानि विसृजन्तश्च सायकान् ।
सैन्धवं पर्यरक्षन्त शासनात्तनयस्य ते ॥ ०४९ ॥

तत्र पार्थस्य शूरस्य बाह्वोर्बलमदृश्यत ।
इषूणामक्षयत्वं च धनुषो गाण्डिवस्य च ॥ ०५० ॥

अस्त्रैरस्त्राणि संवार्य द्रौणेः शारद्वतस्य च ।
एकैकं नवभिर्बाणैः सर्वानेव समर्पयत् ॥ ०५१ ॥

तं द्रौणिः पञ्चविंशत्या वृषसेनश्च सप्तभिः ।
दुर्योधनश्च विंशत्या कर्णशल्यौ त्रिभिस्त्रिभिः ॥ ०५२ ॥

त एनमभिगर्जन्तो विध्यन्तश्च पुनः पुनः ।
विधुन्वन्तश्च चापानि सर्वतः पर्यवारयन् ॥ ०५३ ॥

श्लिष्टं तु सर्वतश्चक्रू रथमण्डलमाशु ते ।
सूर्यास्तमयमिच्छन्तस्त्वरमाणा महारथाः ॥ ०५४ ॥

त एनमभिनर्दन्तो विधुन्वाना धनूंषि च ।
सिषिचुर्मार्गणैर्घोरैर्गिरिं मेघा इवाम्बुभिः ॥ ०५५ ॥

ते महास्त्राणि दिव्यानि तत्र राजन्व्यदर्शयन् ।
धनञ्जयस्य गात्रेषु शूराः परिघबाहवः ॥ ०५६ ॥

हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली ।
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः ॥ ०५७ ॥

तं कर्णः संयुगे राजन्प्रत्यवारयदाशुगैः ।

मिषतो भीमसेनस्य सात्वतस्य च भारत ॥ ०५८ ॥

तं पार्थो दशभिर्बाणैः प्रत्यविध्यद्रणाजिरे ।
सूतपुत्रं महाबाहुः सर्वसैन्यस्य पश्यतः ॥ ०५९ ॥

सात्वतश्च त्रिभिर्बाणैः कर्णं विव्याध मारिष ।
भीमसेनस्त्रिभिश्चैव पुनः पार्थश्च सप्तभिः ॥ ०६० ॥

तान्कर्णः प्रतिविव्याध षष्ट्या षष्ट्या महारथः ।
तद्युद्धमभवद्राजन्कर्णस्य बहुभिः सह ॥ ०६१ ॥

तत्राद्भुतमपश्याम सूतपुत्रस्य मारिष ।
यदेकः समरे क्रुद्धस्त्रीन्रथान्पर्यवारयत् ॥ ०६२ ॥

फल्गुनस्तु महाबाहुः कर्णं वैकर्तनं रणे ।
सायकानां शतेनैव सर्वमर्मस्वताडयत् ॥ ०६३ ॥

रुधिरोक्षितसर्वाङ्गः सूतपुत्रः प्रतापवान् ।
शरैः पञ्चाशता वीरः फल्गुनं प्रत्यविध्यत ॥ ०६४ ॥

तस्य तल्लाघवं दृष्ट्वा नामृष्यत रणेऽर्जुनः ॥ ०६४ ॥

ततः पार्थो धनुश्छित्त्वा विव्याधैनं स्तनान्तरे ।
सायकैर्नवभिर्वीरस्त्वरमाणो धनञ्जयः ॥ ०६५ ॥

वधार्थं चास्य समरे सायकं सूर्यवर्चसम् ।
चिक्षेप त्वरया युक्तस्त्वराकाले धनञ्जयः ॥ ०६६ ॥

तमापतन्तं वेगेन द्रौणिश्चिच्छेद सायकम् ।
अर्धचन्द्रेण तीक्ष्णेन स छिन्नः प्रापतद्भुवि ॥ ०६७ ॥

अथान्यद्धनुरादाय सूतपुत्रः प्रतापवान् ।
कर्णोऽपि द्विषतां हन्ता छादयामास फल्गुनम् ॥ ०६८ ॥

सायकैर्बहुसाहस्रैः कृतप्रतिकृतेप्सया ॥ ०६८ ॥

तौ वृषाविव नर्दन्तौ नरसिंहौ महारथौ ।
सायकौघप्रतिच्छन्नं चक्रतुः खमजिह्मगैः ॥ ०६९ ॥

अदृश्यौ च शरौघैस्तौ निघ्नतामितरेतरम् ॥ ०६९ ॥

पार्थोऽहमस्मि तिष्ठ त्वं कर्णोऽहं तिष्ठ फल्गुन ।
इत्येवं तर्जयन्तौ तौ वाक्शल्यैस्तुदतां तथा ॥ ०७० ॥

युध्येतां समरे वीरौ चित्रं लघु च सुष्ठु च ।
प्रेक्षणीयौ चाभवतां सर्वयोधसमागमे ॥ ०७१ ॥

प्रशस्यमानौ समरे सिद्धचारणवार्तिकैः ।
अयुध्येतां महाराज परस्परवधैषिणौ ॥ ०७२ ॥

ततो दुर्योधनो राजंस्तावकानभ्यभाषत ।
यत्ता रक्षत राधेयं नाहत्वा समरेऽर्जुनम् ॥ ०७३ ॥

निवर्तिष्यति राधेय इति मामुक्तवान्वृषः ॥ ०७३ ॥

एतस्मिन्नन्तरे राजन्दृष्ट्वा कर्णस्य विक्रमम् ।
आकर्णमुक्तैरिषुभिः कर्णस्य चतुरो हयान् ॥ ०७४ ॥

अनयन्मृत्युलोकाय चतुर्भिः सायकोत्तमैः ॥ ०७४ ॥

सारथिं चास्य भल्लेन रथनीडादपाहरत् ।
छादयामास च शरैस्तव पुत्रस्य पश्यतः ॥ ०७५ ॥

स छाद्यमानः समरे हताश्वो हतसारथिः ।
मोहितः शरजालेन कर्तव्यं नाभ्यपद्यत ॥ ०७६ ॥

तं तथा विरथं दृष्ट्वा रथमारोप्य स्वं तदा ।
अश्वत्थामा महाराज भूयोऽर्जुनमयोधयत् ॥ ०७७ ॥

मद्रराजस्तु कौन्तेयमविध्यत्त्रिंशता शरैः ।
शारद्वतस्तु विंशत्या वासुदेवं समार्पयत् ॥ ०७८ ॥

धनञ्जयं द्वादशभिराजघान शिलीमुखैः ॥ ०७८ ॥

चतुर्भिः सिन्धुराजश्च वृषसेनश्च सप्तभिः ।
पृथक्पृथङ्महाराज कृष्णपार्थावविध्यताम् ॥ ०७९ ॥

तथैव तान्प्रत्यविध्यत्कुन्तीपुत्रो धनञ्जयः ।
द्रोणपुत्रं चतुःषष्ट्या मद्रराजं शतेन च ॥ ०८० ॥

सैन्धवं दशभिर्भल्लैर्वृषसेनं त्रिभिः शरैः ।
शारद्वतं च विंशत्या विद्ध्वा पार्थः समुन्नदत् ॥ ०८१ ॥

ते प्रतिज्ञाप्रतीघातमिच्छन्तः सव्यसाचिनः ।
सहितास्तावकास्तूर्णमभिपेतुर्धनञ्जयम् ॥ ०८२ ॥

अथार्जुनः सर्वतोधारमस्त्रं ; प्रादुश्चक्रे त्रासयन्धार्तराष्ट्रान् ।
तं प्रत्युदीयुः कुरवः पाण्डुसूनुं ; रथैर्महार्हैः शरवर्षाण्यवर्षन् ॥ ०८३ ॥

ततस्तु तस्मिंस्तुमुले समुत्थिते ; सुदारुणे भारत मोहनीये ।
नामुह्यत प्राप्य स राजपुत्रः ; किरीटमाली विसृजन्पृषत्कान् ॥ ०८४ ॥

राज्यप्रेप्सुः सव्यसाची कुरूणां ; स्मरन्क्लेशान्द्वादशवर्षवृत्तान् ।

गाण्डीवमुक्तैरिषुभिर्महात्मा ; सर्वा दिशो व्यावृणोदप्रमेयैः ॥ ०८५ ॥

प्रदीप्तोल्कमभवच्चान्तरिक्षं ; देहेषु भूरीण्यपतन्वयांसि ।
यत्पिङ्गलज्येन किरीटमाली ; क्रुद्धो रिपूनाजगवेन हन्ति ॥ ०८६ ॥

किरीटमाली महता महायशाः ; शरासनेनास्य शराननीकजित् ।
हयप्रवेकोत्तमनागधूर्गता ;न्कुरुप्रवीरानिषुभिर्न्यपातयत् ॥ ०८७ ॥

गदाश्च गुर्वीः परिघानयस्मया ;नसींश्च शक्तीश्च रणे नराधिपाः ।
महान्ति शस्त्राणि च भीमदर्शनाः ; प्रगृह्य पार्थं सहसाभिदुद्रुवुः ॥ ०८८ ॥

स तानुदीर्णान्सरथाश्ववारणा ;न्पदातिसंघांश्च महाधनुर्धरः ।
विपन्नसर्वायुधजीवितान्रणे ; चकार वीरो यमराष्ट्रवर्धनान् ॥ ०८९ ॥

---

# अध्याय १२१

सञ्जय उवाच ॥

स रणे व्यचरत्पार्थः प्रेक्षणीयो धनञ्जयः ।
युगपद्दिक्षु सर्वासु चित्राण्यस्त्राणि दर्शयन् ॥ ००१ ॥

मध्यंदिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
न शेकुः सर्वभूतानि पाण्डवं प्रतिवीक्षितुम् ॥ ००२ ॥

प्रसृतांस्तस्य गाण्डीवाच्छरव्रातान्महात्मनः ।
सङ्ग्रामे समपश्याम हंसपङ्क्तीरिवाम्बरे ॥ ००३ ॥

विनिवार्य स वीराणामस्त्रैरस्त्राणि सर्वशः ।

दर्शयन्रौद्रमात्मानमुग्रे कर्मणि धिष्ठितः ॥ ००४ ॥

स तान्रथवरान्राजन्नभ्यतिक्रामदर्जुनः ।
मोहयन्निव नाराचैर्जयद्रथवधेप्सया ॥ ००५ ॥

विसृजन्दिक्षु सर्वासु शरानसितसारथिः ।
स रणे व्यचरत्तूर्णं प्रेक्षणीयो धनञ्जयः ॥ ००६ ॥

भ्रमन्त इव शूरस्य शरव्राता महात्मनः ।
अदृश्यन्तान्तरिक्षस्थाः शतशोऽथ सहस्रशः ॥ ००७ ॥

आददानं महेष्वासं संदधानं च पाण्डवम् ।
विसृजन्तं च कौन्तेयं नानुपश्यामहे तदा ॥ ००८ ॥

तथा सर्वा दिशो राजन्सर्वांश्च रथिनो रणे ।
आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् ॥ ००९ ॥

विव्याध च चतुःषष्ट्या शराणां नतपर्वणाम् ॥ ००९ ॥

सैन्धवस्तु तथा विद्धः शरैर्गाण्डीवधन्वना ।
न चक्षमे सुसङ्क्रुद्धस्तोत्त्रार्दित इव द्विपः ॥ ०१० ॥

स वराहध्वजस्तूर्णं गार्ध्रपत्रानजिह्मगान् ।
आशीविषसमप्रख्यान्कर्मारपरिमार्जितान् ॥ ०११ ॥

मुमोच निशितान्संख्ये सायकान्सव्यसाचिनि ॥ ०११ ॥

त्रिभिस्तु विद्ध्वा गाण्डीवं नाराचैः षड्भिरर्जुनम् ।
अष्टाभिर्वाजिनोऽविध्यद्ध्वजं चैकेन पत्रिणा ॥ ०१२ ॥

स विक्षिप्यार्जुनस्तीक्ष्णान्सैन्धवप्रेषिताञ्शरान् ।

युगपत्तस्य चिच्छेद शराभ्यां सैन्धवस्य ह ॥ ०१३ ॥

सारथेश्च शिरः कायाद्ध्वजं च समलङ्कृतम् ॥ ०१३ ॥

स छिन्नयष्टिः सुमहाञ्शीर्यमाणः शराहतः ।
वराहः सिन्धुराजस्य पपाताग्निशिखोपमः ॥ ०१४ ॥

एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे ।
अब्रवीत्पाण्डवं तत्र त्वरमाणो जनार्दनः ॥ ०१५ ॥

धनञ्जय शिरश्छिन्धि सैन्धवस्य दुरात्मनः ।
अस्तं महीधरश्रेष्ठं यियासति दिवाकरः ॥ ०१६ ॥

शृणुष्वैव च मे वाक्यं जयद्रथवधं प्रति ॥ ०१६ ॥

वृद्धक्षत्रः सैन्धवस्य पिता जगति विश्रुतः ।
स कालेनेह महता सैन्धवं प्राप्तवान्सुतम् ॥ ०१७ ॥

जयद्रथममित्रघ्नं तं चोवाच ततो नृपम् ।
अन्तर्हिता तदा वाणी मेघदुन्दुभिनिस्वना ॥ ०१८ ॥

तवात्मजोऽयं मर्त्येषु कुलशीलदमादिभिः ।
गुणैर्भविष्यति विभो सदृशो वंशयोर्द्वयोः ॥ ०१९ ॥

क्षत्रियप्रवरो लोके नित्यं शूराभिसत्कृतः ॥ ०१९ ॥

शत्रुभिर्युध्यमानस्य सङ्ग्रामे त्वस्य धन्विनः ।
शिरश्छेत्स्यति सङ्क्रुद्धः शत्रुर्नालक्षितो भुवि ॥ ०२० ॥

एतच्छ्रुत्वा सिन्धुराजो ध्यात्वा चिरमरिंदम ।
ज्ञातीन्सर्वानुवाचेदं पुत्रस्नेहाभिपीडितः ॥ ०२१ ॥

सङ्ग्रामे युध्यमानस्य वहतो महतीं धुरम् ।
धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः ॥ ०२२ ॥

तस्यापि शतधा मूर्धा फलिष्यति न संशयः ॥ ०२२ ॥

एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथम् ।
वृद्धक्षत्रो वनं यातस्तपश्चेष्टं समास्थितः ॥ ०२३ ॥

सोऽयं तप्यति तेजस्वी तपो घोरं दुरासदम् ।
समन्तपञ्चकादस्माद्बहिर्वानरकेतन ॥ ०२४ ॥

तस्माज्जयद्रथस्य त्वं शिरश्छित्त्वा महामृधे ।
दिव्येनास्त्रेण रिपुहन्घोरेणाद्भुतकर्मणा ॥ ०२५ ॥

सकुण्डलं सिन्धुपतेः प्रभञ्जनसुतानुज ।
उत्सङ्गे पातयस्वाशु वृद्धक्षत्रस्य भारत ॥ ०२६ ॥

अथ त्वमस्य मूर्धानं पातयिष्यसि भूतले ।
तवापि शतधा मूर्धा फलिष्यति न संशयः ॥ ०२७ ॥

यथा चैतन्न जानीयात्स राजा पृथिवीपतिः ।
तथा कुरु कुरुश्रेष्ठ दिव्यमस्त्रमुपाश्रितः ॥ ०२८ ॥

न ह्यसाध्यमकार्यं वा विद्यते तव किञ्चन ।
समस्तेष्वपि लोकेषु त्रिषु वासवनन्दन ॥ ०२९ ॥

एतच्छ्रुत्वा तु वचनं सृक्किणी परिसंलिहन् ।
इन्द्राशनिसमस्पर्शं दिव्यमन्त्राभिमन्त्रितम् ॥ ०३० ॥

सर्वभारसहं शश्वद्गन्धमाल्यार्चितं शरम् ।

विससर्जार्जुनस्तूर्णं सैन्धवस्य वधे वृतः ॥ ०३१ ॥

स तु गाण्डीवनिर्मुक्तः शरः श्येन इवाशुगः ।
शकुन्तमिव वृक्षाग्रात्सैन्धवस्य शिरोऽहरत् ॥ ०३२ ॥

अहरत्तत्पुनश्चैव शरैरूर्ध्वं धनञ्जयः ।
दुर्हृदामप्रहर्षाय सुहृदां हर्षणाय च ॥ ०३३ ॥

शरैः कदम्बकीकृत्य काले तस्मिंश्च पाण्डवः ।
समन्तपञ्चकाद्बाह्यं शिरस्तद्व्यहरत्ततः ॥ ०३४ ॥

एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः ।
संध्यामुपास्ते तेजस्वी संबन्धी तव मारिष ॥ ०३५ ॥

उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम् ।
सिन्धुराजस्य मूर्धानमुत्सङ्गे समपातयत् ॥ ०३६ ॥

तस्योत्सङ्गे निपतितं शिरस्तच्चारुकुण्डलम् ।
वृद्धक्षत्रस्य नृपतेरलक्षितमरिंदम ॥ ०३७ ॥

कृतजप्यस्य तस्याथ वृद्धक्षत्रस्य धीमतः ।
उत्तिष्ठतस्तत्सहसा शिरोऽगच्छद्धरातलम् ॥ ०३८ ॥

ततस्तस्य नरेन्द्रस्य पुत्रमूर्धनि भूतलम् ।
गते तस्यापि शतधा मूर्धागच्छदरिंदम ॥ ०३९ ॥

ततः सर्वाणि भूतानि विस्मयं जग्मुरुत्तमम् ।
वासुदेवश्च बीभत्सुं प्रशशंस महारथम् ॥ ०४० ॥

ततो दृष्ट्वा विनिहतं सिन्धुराजं जयद्रथम् ।
पुत्राणां तव नेत्रेभ्यो दुःखाद्बह्वपतज्जलम् ॥ ०४१ ॥

भीमसेनोऽपि सङ्ग्रामे बोधयन्निव पाण्डवम् ।
सिंहनादेन महता पूरयामास रोदसी ॥ ०४२ ॥

तं श्रुत्वा तु महानादं धर्मपुत्रो युधिष्ठिरः ।
सैन्धवं निहतं मेने फल्गुनेन महात्मना ॥ ०४३ ॥

ततो वादित्रघोषेण स्वान्योधानभिहर्षयन् ।
अभ्यवर्तत सङ्ग्रामे भारद्वाजं युयुत्सया ॥ ०४४ ॥

ततः प्रववृते राजन्नस्तं गच्छति भास्करे ।
द्रोणस्य सोमकैः सार्धं सङ्ग्रामो लोमहर्षणः ॥ ०४५ ॥

ते तु सर्वप्रयत्नेन भारद्वाजं जिघांसवः ।
सैन्धवे निहते राजन्नयुध्यन्त महारथाः ॥ ०४६ ॥

पाण्डवास्तु जयं लब्ध्वा सैन्धवं विनिहत्य च ।
अयोधयंस्ततो द्रोणं जयोन्मत्तास्ततस्ततः ॥ ०४७ ॥

अर्जुनोऽपि रणे योधांस्तावकान्रथसत्तमान् ।
अयोधयन्महाराज हत्वा सैन्धवकं नृपम् ॥ ०४८ ॥

स देवशत्रूनिव देवराजः ; किरीटमाली व्यधमत्समन्तात् ।
यथा तमांस्यभ्युदितस्तमोघ्नः ; पूर्वां प्रतिज्ञां समवाप्य वीरः ॥ ०४९ ॥

# घटोत्कचवधपर्व

## अध्याय १२२

धृतराष्ट्र उवाच ॥

तस्मिन्विनिहते वीरे सैन्धवे सव्यसाचिना ।
मामका यदकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ ००१ ॥

सञ्जय उवाच ॥

सैन्धवं निहतं दृष्ट्वा रणे पार्थेन मारिष ।
अमर्षवशमापन्नः कृपः शारद्वतस्तदा ॥ ००२ ॥

महता शरवर्षेण पाण्डवं समवाकिरत् ।
द्रौणिश्चाभ्यद्रवत्पार्थं रथमास्थाय फल्गुनम् ॥ ००३ ॥

तावेनं रथिनां श्रेष्ठौ रथाभ्यां रथसत्तमम् ।
उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षताम् ॥ ००४ ॥

स तथा शरवर्षाभ्यां सुमहद्भ्यां महाभुजः ।
पीड्यमानः परामार्तिमगमद्रथिनां वरः ॥ ००५ ॥

सोऽजिघांसुर्गुरुं संख्ये गुरोस्तनयमेव च ।
चकाराचार्यकं तत्र कुन्तीपुत्रो धनञ्जयः ॥ ००६ ॥

अस्त्रैरस्त्राणि संवार्य द्रौणेः शारद्वतस्य च ।
मन्दवेगानिषूंस्ताभ्यामजिघांसुरवासृजत् ॥ ००७ ॥

ते नातिभृशमभ्यघ्नन्विशिखा जयचोदिताः ।
बहुत्वात्तु परामार्तिं शराणां तावगच्छताम् ॥ ००८ ॥

अथ शारद्वतो राजन्कौन्तेयशरपीडितः ।
अवासीदद्रथोपस्थे मूर्च्छामभिजगाम ह ॥ ००९ ॥

विह्वलं तमभिज्ञाय भर्तारं शरपीडितम् ।
हतोऽयमिति च ज्ञात्वा सारथिस्तमपावहत् ॥ ०१० ॥

तस्मिन्सन्ने महाराज कृपे शारद्वते युधि ।
अश्वत्थामाप्यपायासीत्पाण्डवेयाद्रथान्तरम् ॥ ०११ ॥

दृष्ट्वा शारद्वतं पार्थो मूर्छितं शरपीडितम् ।
रथ एव महेष्वासः कृपणं पर्यदेवयत् ॥ ०१२ ॥

पश्यन्निदं महाप्राज्ञः क्षत्ता राजानमुक्तवान् ।
कुलान्तकरणे पापे जातमात्रे सुयोधने ॥ ०१३ ॥

नीयतां परलोकाय साध्वयं कुलपांसनः ।
अस्माद्धि कुरुमुख्यानां महदुत्पत्स्यते भयम् ॥ ०१४ ॥

तदिदं समनुप्राप्तं वचनं सत्यवादिनः ।
तत्कृते ह्यद्य पश्यामि शरतल्पगतं कृपम् ॥ ०१५ ॥

धिगस्तु क्षात्रमाचारं धिगस्तु बलपौरुषम् ।
को हि ब्राह्मणमाचार्यमभिद्रुह्येत मादृशः ॥ ०१६ ॥

ऋषिपुत्रो ममाचार्यो द्रोणस्य दयितः सखा ।
एष शेते रथोपस्थे मद्बाणैरभिपीडितः ॥ ०१७ ॥

अकामयानेन मया विशिखैरर्दितो भृशम् ।
अवासीदद्रथोपस्थे प्राणान्पीडयतीव मे ॥ ०१८ ॥

शरार्दितेन हि मया प्रेक्षणीयो महाद्युतिः ।
प्रत्यस्तो बहुभिर्बाणैर्दशधर्मगतेन वै ॥ ०१९ ॥

शोचयत्येष निपतन्भूयः पुत्रवधाद्धि माम् ।
कृपणं स्वरथे सन्नं पश्य कृष्ण यथा गतम् ॥ ०२० ॥

उपाकृत्य तु वै विद्यामाचार्येभ्यो नरर्षभाः ।
प्रयच्छन्तीह ये कामान्देवत्वमुपयान्ति ते ॥ ०२१ ॥

ये तु विद्यामुपादाय गुरुभ्यः पुरुषाधमाः ।
घ्नन्ति तानेव दुर्वृत्तास्ते वै निरयगामिनः ॥ ०२२ ॥

तदिदं नरकायाद्य कृतं कर्म मया ध्रुवम् ।
आचार्यं शरवर्षेण रथे सादयता कृपम् ॥ ०२३ ॥

यत्तत्पूर्वमुपाकुर्वन्नस्त्रं मामब्रवीत्कृपः ।
न कथञ्चन कौरव्य प्रहर्तव्यं गुराविति ॥ ०२४ ॥

तदिदं वचनं साधोराचार्यस्य महात्मनः ।
नानुष्ठितं तमेवाजौ विशिखैरभिवर्षता ॥ ०२५ ॥

नमस्तस्मै सुपूज्याय गौतमायापलायिने ।
धिगस्तु मम वार्ष्णेय यो ह्यस्मै प्रहराम्यहम् ॥ ०२६ ॥

तथा विलपमाने तु सव्यसाचिनि तं प्रति ।
सैन्धवं निहतं दृष्ट्वा राधेयः समुपाद्रवत् ॥ ०२७ ॥

उपायान्तं तु राधेयं दृष्ट्वा पार्थो महारथः ।
प्रहसन्देवकीपुत्रमिदं वचनमब्रवीत् ॥ ०२८ ॥

एष प्रयात्याधिरथिः सात्यकेः स्यन्दनं प्रति ।

न मृष्यति हतं नूनं भूरिश्रवसमाहवे ॥ ०२९ ॥

यत्र यात्येष तत्र त्वं चोदयाश्वाञ्जनार्दन ।
मा सोमदत्तेः पदवीं गमयेत्सात्यकिं वृषः ॥ ०३० ॥

एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।
प्रत्युवाच महातेजाः कालयुक्तमिदं वचः ॥ ०३१ ॥

अलमेष महाबाहुः कर्णायैको हि पाण्डव ।
किं पुनर्द्रौपदेयाभ्यां सहितः सात्वतर्षभः ॥ ०३२ ॥

न च तावत्क्षमः पार्थ कर्णेन तव सङ्गरः ।
प्रज्वलन्ती महोल्केव तिष्ठत्यस्य हि वासवी ॥ ०३३ ॥

त्वदर्थं पूज्यमानैषा रक्ष्यते परवीरहन् ॥ ०३३ ॥

अतः कर्णः प्रयात्वत्र सात्वतस्य यथा तथा ।
अहं ज्ञास्यामि कौरव्य कालमस्य दुरात्मनः ॥ ०३४ ॥

धृतराष्ट्र उवाच ॥

योऽसौ कर्णेन वीरेण वार्ष्णेयस्य समागमः ।
हते तु भूरिश्रवसि सैन्धवे च निपातिते ॥ ०३५ ॥

सात्यकिश्चापि विरथः कं समारूढवान्रथम् ।
चक्ररक्षौ च पाञ्चाल्यौ तन्ममाचक्ष्व सञ्जय ॥ ०३६ ॥

सञ्जय उवाच ॥

हन्त ते वर्णयिष्यामि यथावृत्तं महारणे ।
शुश्रूषस्व स्थिरो भूत्वा दुराचरितमात्मनः ॥ ०३७ ॥

पूर्वमेव हि कृष्णस्य मनोगतमिदं प्रभो ।
विजेतव्यो यथा वीरः सात्यकिर्यूपकेतुना ॥ ०३८ ॥

अतीतानागतं राजन्स हि वेत्ति जनार्दनः ।
अतः सूतं समाहूय दारुकं संदिदेश ह ॥ ०३९ ॥

रथो मे युज्यतां काल्यमिति राजन्महाबलः ॥ ०३९ ॥

न हि देवा न गन्धर्वा न यक्षोरगराक्षसाः ।
मानवा वा विजेतारः कृष्णयोः सन्ति केचन ॥ ०४० ॥

पितामहपुरोगाश्च देवाः सिद्धाश्च तं विदुः ।
तयोः प्रभावमतुलं शृणु युद्धं च तद्यथा ॥ ०४१ ॥

सात्यकिं विरथं दृष्ट्वा कर्णं चाभ्युद्यतायुधम् ।
दध्मौ शङ्खं महावेगमार्षभेणाथ माधवः ॥ ०४२ ॥

दारुकोऽवेत्य संदेशं श्रुत्वा शङ्खस्य च स्वनम् ।
रथमन्वानयत्तस्मै सुपर्णोच्छ्रितकेतनम् ॥ ०४३ ॥

स केशवस्यानुमते रथं दारुकसंयुतम् ।
आरुरोह शिनेः पौत्रो ज्वलनादित्यसंनिभम् ॥ ०४४ ॥

कामगैः सैन्यसुग्रीवमेघपुष्पबलाहकैः ।
हयोदग्रैर्महावेगैर्हेमभाण्डविभूषितैः ॥ ०४५ ॥

युक्तं समारुह्य च तं विमानप्रतिमं रथम् ।
अभ्यद्रवत राधेयं प्रवपन्सायकान्बहून् ॥ ०४६ ॥

चक्ररक्षावपि तदा युधामन्यूत्तमौजसौ ।

धनञ्जयरथं हित्वा राधेयं प्रत्युदीययुः ॥ ०४७ ॥

राधेयोऽपि महाराज शरवर्षं समुत्सृजन् ।
अभ्यद्रवत्सुसङ्क्रुद्धो रणे शैनेयमच्युतम् ॥ ०४८ ॥

नैव दैवं न गान्धर्वं नासुरोरगराक्षसम् ।
तादृशं भुवि वा युद्धं दिवि वा श्रुतमित्युत ॥ ०४९ ॥

उपारमत तत्सैन्यं सरथाश्वनरद्विपम् ।
तयोर्दृष्ट्वा महाराज कर्म संमूढचेतनम् ॥ ०५० ॥

सर्वे च समपश्यन्त तद्युद्धमतिमानुषम् ।
तयोर्नृवरयो राजन्सारथ्यं दारुकस्य च ॥ ०५१ ॥

गतप्रत्यागतावृत्तैर्मण्डलैः संनिवर्तनैः ।
सारथेस्तु रथस्थस्य काश्यपेयस्य विस्मिताः ॥ ०५२ ॥

नभस्तलगताश्चैव देवगन्धर्वदानवाः ।
अतीवावहिता द्रष्टुं कर्णशैनेययो रणम् ॥ ०५३ ॥

मित्रार्थे तौ पराक्रान्तौ स्पर्धिनौ शुष्मिणौ रणे ।
कर्णश्चामरसङ्काशो युयुधानश्च सात्यकिः ॥ ०५४ ॥

अन्योन्यं तौ महाराज शरवर्षैरवर्षताम् ।
प्रममाथ शिनेः पौत्रं कर्णः सायकवृष्टिभिः ॥ ०५५ ॥

अमृष्यमाणो निधनं कौरव्यजलसंधयोः ।
कर्णः शोकसमाविष्टो महोरग इव श्वसन् ॥ ०५६ ॥

स शैनेयं रणे क्रुद्धः प्रदहन्निव चक्षुषा ।
अभ्यद्रवत वेगेन पुनः पुनररिंदमः ॥ ०५७ ॥

तं तु संप्रेक्ष्य सङ्क्रुद्धं सात्यकिः प्रत्यविध्यत ।
महता शरवर्षेण गजः प्रतिगजं यथा ॥ ०५८ ॥

तौ समेत्य नरव्याघ्रौ व्याघ्राविव तरस्विनौ ।
अन्योन्यं संततक्षाते रणेऽनुपमविक्रमौ ॥ ०५९ ॥

ततः कर्णं शिनेः पौत्रः सर्वपारशवैः शरैः ।
बिभेद सर्वगात्रेषु पुनः पुनररिंदमः ॥ ०६० ॥

सारथिं चास्य भल्लेन रथनीडादपाहरत् ।
अश्वांश्च चतुरः श्वेतान्निजघ्ने निशितैः शरैः ॥ ०६१ ॥

छित्त्वा ध्वजं शतेनैव शतधा पुरुषर्षभः ।
चकार विरथं कर्णं तव पुत्रस्य पश्यतः ॥ ०६२ ॥

ततो विमनसो राजंस्तावकाः पुरुषर्षभाः ।
वृषसेनः कर्णसुतः शल्यो मद्राधिपस्तथा ॥ ०६३ ॥

द्रोणपुत्रश्च शैनेयं सर्वतः पर्यवारयन् ।
ततः पर्याकुलं सर्वं न प्राज्ञायत किञ्चन ॥ ०६४ ॥

तथा सात्यकिना वीरे विरथे सूतजे कृते ।
हाहाकारस्ततो राजन्सर्वसैन्येषु चाभवत् ॥ ०६५ ॥

कर्णोऽपि विह्वलो राजन्सात्वतेनार्दितः शरैः ।
दुर्योधनरथं राजन्नारुरोह विनिःश्वसन् ॥ ०६६ ॥

मानयंस्तव पुत्रस्य बाल्यात्प्रभृति सौहृदम् ।
कृतां राज्यप्रदानेन प्रतिज्ञां परिपालयन् ॥ ०६७ ॥

तथा तु विरथे कर्णे पुत्रान्वै तव पार्थिव ।
दुःशासनमुखाञ्शूरान्नावधीत्सात्यकिर्वशी ॥ ०६८ ॥

रक्षन्प्रतिज्ञां च पुनर्भीमसेनकृतां पुरा ।
विरथान्विह्वलांश्चक्रे न तु प्राणैर्व्ययोजयत् ॥ ०६९ ॥

भीमसेनेन तु वधः पुत्राणां ते प्रतिश्रुतः ।
पुनर्द्यूते च पार्थेन वधः कर्णस्य शंश्रुतः ॥ ०७० ॥

वधे त्वकुर्वन्यत्नं ते तस्य कर्णमुखास्तदा ।
नाशक्नुवंश्च तं हन्तुं सात्यकिं प्रवरा रथाः ॥ ०७१ ॥

द्रौणिश्च कृतवर्मा च तथैवान्ये महारथाः ।
निर्जिता धनुषैकेन शतशः क्षत्रियर्षभाः ॥ ०७२ ॥

काङ्क्षता परलोकं च धर्मराजस्य च प्रियम् ॥ ०७२ ॥

कृष्णयोः सदृशो वीर्ये सात्यकिः शत्रुकर्शनः ।
कृष्णो वापि भवेल्लोके पार्थो वापि धनुर्धरः ॥ ०७३ ॥

शैनेयो वा नरव्याघ्रश्चतुर्थो नोपलभ्यते ॥ ०७३ ॥

धृतराष्ट्र उवाच ॥

अजय्यं रथमास्थाय वासुदेवस्य सात्यकिः ।
विरथं कृतवान्कर्णं वासुदेवसमो युवा ॥ ०७४ ॥

दारुकेण समायुक्तं स्वबाहुबलदर्पितः ।
कच्चिदन्यं समारूढः स रथं सात्यकिः पुनः ॥ ०७५ ॥

एतदिच्छाम्यहं श्रोतुं कुशलो ह्यसि भाषितुम् ।

असह्यं तमहं मन्ये तन्ममाचक्ष्व सञ्जय ॥ ०७६ ॥

सञ्जय उवाच ॥

श्‍णु राजन्यथा तस्य रथमन्यं महामतिः ।
दारुकस्यानुजस्तूर्णं कल्पनाविधिकल्पितम् ॥ ०७७ ॥

आयसैः काञ्चनैश्चापि पट्टैर्नद्धं सकूबरम् ।
तारासहस्रखचितं सिंहध्वजपताकिनम् ॥ ०७८ ॥

अश्वैर्वातजवैर्युक्तं हेमभाण्डपरिच्छदैः ।
पाण्डुरैरिन्दुसङ्काशैः सर्वशब्दातिगैर्दृढैः ॥ ०७९ ॥

चित्रकाञ्चनसंनाहैर्वाजिमुख्यैर्विशां पते ।
घण्टाजालाकुलरवं शक्तितोमरविद्युतम् ॥ ०८० ॥

वृतं साङ्ग्रामिकैर्द्रव्यैर्बहुशस्त्रपरिच्छदम् ।
रथं संपादयामास मेघगम्भीरनिस्वनम् ॥ ०८१ ॥

तं समारुह्य शैनेयस्तव सैन्यमुपाद्रवत् ।
दारुकोऽपि यथाकामं प्रययौ केशवान्तिकम् ॥ ०८२ ॥

कर्णस्यापि महाराज शङ्खगोक्षीरपाण्डुरैः ।
चित्रकाञ्चनसंनाहैः सदश्वैर्वेगवत्तरैः ॥ ०८३ ॥

हेमकक्ष्याध्वजोपेतं क्लृप्तयन्त्रपताकिनम् ।
अग्र्यं रथं सुयन्तारं बहुशस्त्रपरिच्छदम् ॥ ०८४ ॥

उपाजह्रुस्तमास्थाय कर्णोऽप्यभ्यद्रवद्रिपून् ।
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ०८५ ॥

भूयश्चापि निबोध त्वं तवापनयजं क्षयम् ।
एकत्रिंशत्तव सुता भीमसेनेन पातिताः ॥ ०८६ ॥

दुर्मुखं प्रमुखे कृत्वा सततं चित्रयोधिनम् ।
शतशो निहताः शूराः सात्वतेनार्जुनेन च ॥ ०८७ ॥

भीष्मं प्रमुखतः कृत्वा भगदत्तं च मारिष ।
एवमेष क्षयो वृत्तो राजन्दुर्मन्त्रिते तव ॥ ०८८ ॥

---

# अध्याय १२३

धृतराष्ट्र उवाच ॥

तथा गतेषु शूरेषु तेषां मम च सञ्जय ।
किं वै भीमस्तदाकार्षीत्तन्ममाचक्ष्व सञ्जय ॥ ००१ ॥

सञ्जय उवाच ॥

विरथो भीमसेनो वै कर्णवाक्शल्यपीडितः ।
अमर्षवशमापन्नः फल्गुनं वाक्यमब्रवीत् ॥ ००२ ॥

पुनः पुनस्तूबरक मूढ औदरिकेति च ।
अकृतास्त्रक मा योधीर्बाल सङ्ग्रामकातर ॥ ००३ ॥

इति मामब्रवीत्कर्णः पश्यतस्ते धनञ्जय ।
एवं वक्ता च मे वध्यस्तेन चोक्तोऽस्मि भारत ॥ ००४ ॥

एतद्व्रतं महाबाहो त्वया सह कृतं मया ।
यथैतन्मम कौन्तेय तथा तव न संशयः ॥ ००५ ॥

तद्वधाय नरश्रेष्ठ स्मरैतद्वचनं मम ।
यथा भवति तत्सत्यं तथा कुरु धनञ्जय ॥ ००६ ॥

तच्छ्रुत्वा वचनं तस्य भीमस्यामितविक्रमः ।
ततोऽर्जुनोऽब्रवीत्कर्णं किञ्चिदभ्येत्य संयुगे ॥ ००७ ॥

कर्ण कर्ण वृथादृष्टे सूतपुत्रात्मसंस्तुत ।
अधर्मबुद्धे शृणु मे यत्त्वा वक्ष्यामि सांप्रतम् ॥ ००८ ॥

द्विविधं कर्म शूराणां युद्धे जयपराजयौ ।
तौ चाप्यनित्यौ राधेय वासवस्यापि युध्यतः ॥ ००९ ॥

मुमूर्षुर्युयुधानेन विरथोऽसि विसर्जितः ।
यदृच्छया भीमसेनं विरथं कृतवानसि ॥ ०१० ॥

अधर्मस्त्वेष राधेय यत्त्वं भीममवोचथाः ।
युद्धधर्मं विजानन्वै युध्यन्तमपलायिनम् ॥ ०११ ॥

पूरयन्तं यथाशक्ति शूरकर्माहवे तथा ॥ ०११ ॥

पश्यतां सर्वसैन्यानां केशवस्य ममैव च ।
विरथो भीमसेनेन कृतोऽसि बहुशो रणे ॥ ०१२ ॥

न च त्वां परुषं किञ्चिदुक्तवान्पण्डुनन्दनः ॥ ०१२ ॥

यस्मात्तु बहु रूक्षं च श्रावितस्ते वृकोदरः ।
परोक्षं यच्च सौभद्रो युष्माभिर्निहतो मम ॥ ०१३ ॥

तस्मादस्यावलेपस्य सद्यः फलमवाप्नुहि ।
त्वया तस्य धनुश्छिन्नमात्मनाशाय दुर्मते ॥ ०१४ ॥

तस्माद्वध्योऽसि मे मूढ सभृत्यबलवाहनः ।
कुरु त्वं सर्वकृत्यानि महत्ते भयमागतम् ॥ ०१५ ॥

हन्तास्मि वृषसेनं ते प्रेक्षमाणस्य संयुगे ।
ये चान्येऽप्युपयास्यन्ति बुद्धिमोहेन मां नृपाः ॥ ०१६ ॥

तांश्च सर्वान्हनिष्यामि सत्येनायुधमालभे ॥ ०१६ ॥

त्वां च मूढाकृतप्रज्ञमतिमानिनमाहवे ।
दृष्ट्वा दुर्योधनो मन्दो भृशं तप्स्यति पातितम् ॥ ०१७ ॥

अर्जुनेन प्रतिज्ञाते वधे कर्णसुतस्य तु ।
महान्सुतुमुलः शब्दो बभूव रथिनां तदा ॥ ०१८ ॥

तस्मिन्नाकुलसङ्ग्रामे वर्तमाने महाभये ।
मन्दरश्मिः सहस्रांशुरस्तं गिरिमुपागमत् ॥ ०१९ ॥

ततो राजन्हृषीकेशः सङ्ग्रामशिरसि स्थितम् ।
तीर्णप्रतिज्ञं बीभत्सुं परिष्वज्येदमब्रवीत् ॥ ०२० ॥

दिष्ट्या संपादिता जिष्णो प्रतिज्ञा महती त्वया ।
दिष्ट्या च निहतः पापो वृद्धक्षत्रः सहात्मजः ॥ ०२१ ॥

धार्तराष्ट्रबलं प्राप्य देवसेनापि भारत ।
सीदेत समरे जिष्णो नात्र कार्या विचारणा ॥ ०२२ ॥

न तं पश्यामि लोकेषु चिन्तयन्पुरुषं क्वचित् ।
त्वदृते पुरुषव्याघ्र य एतद्योधयेद्बलम् ॥ ०२३ ॥

महाप्रभावा बहवस्त्वया तुल्याधिकापि वा ।
समेताः पृथिवीपाला धार्तराष्ट्रस्य कारणात्  ॥ ०२४  ॥

ते त्वां प्राप्य रणे क्रुद्धं नाभ्यवर्तन्त दंशिताः  ॥ ०२४  ॥

तव वीर्यं बलं चैव रुद्रशक्रान्तकोपमम् ।
नेदृशं शक्नुयात्कश्चिद्रणे कर्तुं पराक्रमम्  ॥ ०२५  ॥

यादृशं कृतवानद्य त्वमेकः शत्रुतापनः  ॥ ०२५  ॥

एवमेव हते कर्णे सानुबन्धे दुरात्मनि ।
वर्धयिष्यामि भूयस्त्वां विजितारिं हतद्विषम्  ॥ ०२६  ॥

तमर्जुनः प्रत्युवाच प्रसादात्तव माधव ।
प्रतिज्ञेयं मयोत्तीर्णा विबुधैरपि दुस्तरा  ॥ ०२७  ॥

अनाश्चर्यो जयस्तेषां येषां नाथोऽसि माधव ।
त्वत्प्रसादान्महीं कृत्स्नां संप्राप्स्यति युधिष्ठिरः  ॥ ०२८  ॥

तवैव भारो वार्ष्णेय तवैव विजयः प्रभो ।
वर्धनीयास्तव वयं प्रेष्याश्च मधुसूदन  ॥ ०२९  ॥

एवमुक्तः स्मयन्कृष्णः शनकैर्वाहयन्हयान् ।
दर्शयामास पार्थाय क्रूरमायोधनं महत्  ॥ ०३०  ॥

श्रीकृष्ण उवाच  ॥

प्रार्थयन्तो जयं युद्धे प्रथितं च महद्यशः ।
पृथिव्यां शेरते शूराः पार्थिवास्त्वच्छरैर्हताः  ॥ ०३१  ॥

विकीर्णशस्त्राभरणा विपन्नाश्वरथद्विपाः ।
संछिन्नभिन्नवर्माणो वैक्लव्यं परमं गताः ॥ ०३२ ॥

ससत्त्वा गतसत्त्वाश्च प्रभया परया युताः ।
सजीवा इव लक्ष्यन्ते गतसत्त्वा नराधिपाः ॥ ०३३ ॥

तेषां शरैः स्वर्णपुङ्खैः शस्त्रैश्च विविधैः शितैः ।
वाहनैरायुधैश्चैव संपूर्णां पश्य मेदिनीम् ॥ ०३४ ॥

वर्मभिश्चर्मभिर्हारैः शिरोभिश्च सकुण्डलैः ।
उष्णीषैर्मुकुटैः स्रग्भिश्चूडामणिभिरम्बरैः ॥ ०३५ ॥

कण्ठसूत्रैरङ्गदैश्च निष्कैरपि च सुप्रभैः ।
अन्यैश्चाभरणैश्चित्रैर्भाति भारत मेदिनी ॥ ०३६ ॥

चामरैर्व्यजनैश्चित्रैर्ध्वजैश्चाश्वरथद्विपैः ।
विविधैश्च परिस्तोमैरश्वानां च प्रकीर्णकैः ॥ ०३७ ॥

कुथाभिश्च विचित्राभिर्वरूथैश्च महाधनैः ।
संस्तीर्णां वसुधां पश्य चित्रपट्टैरिवावृताम् ॥ ०३८ ॥

नागेभ्यः पतितानन्यान्कल्पितेभ्यो द्विपैः सह ।
सिंहान्वज्रप्रणुन्नेभ्यो गिर्यग्रेभ्य इव च्युतान् ॥ ०३९ ॥

संस्यूतान्वाजिभिः सार्धं धरण्यां पश्य चापरान् ।
पदातिसादिसंघांश्च क्षतजौघपरिप्लुतान् ॥ ०४० ॥

सञ्जय उवाच ॥

एवं संदर्शयन्कृष्णो रणभूमिं किरीटिनः ।
स्वैः समेतः स मुदितः पाञ्चजन्यं व्यनादयत् ॥ ०४१ ॥

# अध्याय १२४

सञ्जय उवाच ॥

ततो युधिष्ठिरो राजा रथादाप्लुत्य भारत ।
पर्यष्वजत्तदा कृष्णावानन्दाश्रुपरिप्लुतः ॥ ००१ ॥

प्रमृज्य वदनं शुभ्रं पुण्डरीकसमप्रभम् ।
अब्रवीद्वासुदेवं च पाण्डवं च धनञ्जयम् ॥ ००२ ॥

दिष्ट्या पश्यामि सङ्ग्रामे तीर्णभारौ महारथौ ।
दिष्ट्या च निहतः पापः सैन्धवः पुरुषाधमः ॥ ००३ ॥

कृष्ण दिष्ट्या मम प्रीतिर्महती प्रतिपादिता ।
दिष्ट्या शत्रुगणाश्चैव निमग्नाः शोकसागरे ॥ ००४ ॥

न तेषां दुष्करं किञ्चित्त्रिषु लोकेषु विद्यते ।
सर्वलोकगुरुर्येषां त्वं नाथो मधुसूदन ॥ ००५ ॥

तव प्रसादाद्गोविन्द वयं जेष्यामहे रिपून् ।
यथा पूर्वं प्रसादात्ते दानवान्पाकशासनः ॥ ००६ ॥

पृथिवीविजयो वापि त्रैलोक्यविजयोऽपि वा ।
ध्रुवो हि तेषां वार्ष्णेय येषां तुष्टोऽसि माधव ॥ ००७ ॥

न तेषां विद्यते पापं सङ्ग्रामे वा पराजयः ।

त्रिदशेश्वरनाथस्त्वं येषां तुष्टोऽसि माधव ॥ ००८ ॥

त्वत्प्रसादाद्धृषीकेश शक्रः सुरगणेश्वरः ।
त्रैलोक्यविजयं श्रीमान्प्राप्तवान्रणमूर्धनि ॥ ००९ ॥

तव चैव प्रसादेन त्रिदशास्त्रिदशेश्वर ।
अमरत्वं गताः कृष्ण लोकांश्चाश्नुवतेऽक्षयान् ॥ ०१० ॥

त्वत्प्रसादसमुत्थेन विक्रमेणारिसूदन ।
सुरेशत्वं गतः शक्रो हत्वा दैत्यान्सहस्रशः ॥ ०११ ॥

त्वत्प्रसादाद्धृषीकेश जगत्स्थावरजङ्गमम् ।
स्ववर्त्मनि स्थितं वीर जपहोमेषु वर्तते ॥ ०१२ ॥

एकार्णवमिदं पूर्वं सर्वमासीत्तमोमयम् ।
त्वत्प्रसादात्प्रकाशत्वं जगत्प्राप्तं नरोत्तम ॥ ०१३ ॥

स्रष्टारं सर्वलोकानां परमात्मानमच्युतम् ।
ये प्रपन्ना हृषीकेशं न ते मुह्यन्ति कर्हिचित् ॥ ०१४ ॥

अनादिनिधनं देवं लोककर्तारमव्ययम् ।
त्वां भक्ता ये हृषीकेश दुर्गाण्यतितरन्ति ते ॥ ०१५ ॥

परं पुराणं पुरुषं पुराणानां परं च यत् ।
प्रपद्यतस्तं परमं परा भूतिर्विधीयते ॥ ०१६ ॥

योऽगात चतुरो वेदान्यश्च वेदेषु गीयते ।
तं प्रपद्य महात्मानं भूतिमाप्नोत्यनुत्तमाम् ॥ ०१७ ॥

धनञ्जयसखा यश्च धनञ्जयहितश्च यः ।
तं धनञ्जयगोप्तारं प्रपद्य सुखमेधते ॥ ०१८ ॥

इत्युक्तौ तौ महात्मानावुभौ केशवपाण्डवौ ।
तावब्रूतां तदा हृष्टौ राजानं पृथिवीपतिम्  ॥ ०१९  ॥

तव कोपाग्निना दग्धः पापो राजा जयद्रथः ।
उदीर्णं चापि सुमहद्धार्तराष्ट्रबलं रणे  ॥ ०२०  ॥

हन्यते निहतं चैव विनङ्क्ष्यति च भारत ।
तव क्रोधहता ह्येते कौरवाः शत्रुसूदन  ॥ ०२१  ॥

त्वां हि चक्षुर्हणं वीरं कोपयित्वा सुयोधनः ।
समित्रबन्धुः समरे प्राणांस्त्यक्ष्यति दुर्मतिः  ॥ ०२२  ॥

तव क्रोधहतः पूर्वं देवैरपि सुदुर्जयः ।
शरतल्पगतः शेते भीष्मः कुरुपितामहः  ॥ ०२३  ॥

दुर्लभो हि जयस्तेषां सङ्ग्रामे रिपुसूदन ।
याता मृत्युवशं ते वै येषां क्रुद्धोऽसि पाण्डव  ॥ ०२४  ॥

राज्यं प्राणाः प्रियाः पुत्राः सौख्यानि विविधानि च ।
अचिरात्तस्य नश्यन्ति येषां क्रुद्धोऽसि मानद  ॥ ०२५  ॥

विनष्टान्कौरवान्मन्ये सपुत्रपशुबान्धवान् ।
राजधर्मपरे नित्यं त्वयि क्रुद्धे युधिष्ठिर  ॥ ०२६  ॥

ततो भीमो महाबाहुः सात्यकिश्च महारथः ।
अभिवाद्य गुरुं ज्येष्ठं मार्गणैः क्षतविक्षतौ  ॥ ०२७  ॥

स्थितावास्तां महेष्वासौ पाञ्चाल्यैः परिवारितौ  ॥ ०२७  ॥

तौ दृष्ट्वा मुदितौ वीरौ प्राञ्जली चाग्रतः स्थितौ ।

अभ्यनन्दत कौन्तेयस्तावुभौ भीमसात्यकी ॥ ०२८ ॥

दिष्ट्या पश्यामि वां वीरौ विमुक्तौ सैन्यसागरात् ।
द्रोणग्राहाद्दुराधर्षाद्धार्दिक्यमकरालयात् ॥ ०२९ ॥

दिष्ट्या च निर्जिताः संख्ये पृथिव्यां सर्वपार्थिवाः ॥ ०२९ ॥

युवां विजयिनौ चापि दिष्ट्या पश्यामि संयुगे ।
दिष्ट्या द्रोणो जितः संख्ये हार्दिक्यश्च महाबलः ॥ ०३० ॥

सैन्यार्णवं समुत्तीर्णौ दिष्ट्या पश्यामि चानघौ ।
समरश्लाघिनौ वीरौ समरेष्वपलायिनौ ॥ ०३१ ॥

मम प्राणसमौ चैव दिष्ट्या पश्यामि वामहम् ॥ ०३१ ॥

इत्युक्त्वा पाण्डवो राजा युयुधानवृकोदरौ ।
सस्वजे पुरुषव्याघ्रौ हर्षाद्बाष्पं मुमोच ह ॥ ०३२ ॥

ततः प्रमुदितं सर्वं बलमासीद्विशां पते ।
पाण्डवानां जयं दृष्ट्वा युद्धाय च मनो दधे ॥ ०३३ ॥

---

# अध्याय १२५

सञ्जय उवाच ॥

सैन्धवे निहते राजन्पुत्रस्तव सुयोधनः ।
अश्रुक्लिन्नमुखो दीनो निरुत्साहो द्विषज्जये ॥ ००१ ॥

अमन्यतार्जुनसमो योधो भुवि न विद्यते ॥ ००१ ॥

न द्रोणो न च राधेयो नाश्वत्थामा कृपो न च ।
क्रुद्धस्य प्रमुखे स्थातुं पर्याप्ता इति मारिष ॥ ००२ ॥

निर्जित्य हि रणे पार्थः सर्वान्मम महारथान् ।
अवधीत्सैन्धवं संख्ये नैनं कश्चिदवारयत् ॥ ००३ ॥

सर्वथा हतमेवैतत्कौरवाणां महद्बलम् ।
न ह्यस्य विद्यते त्राता साक्षादपि पुरंदरः ॥ ००४ ॥

यमुपाश्रित्य सङ्ग्रामे कृतः शस्त्रसमुद्यमः ।
स कर्णो निर्जितः संख्ये हतश्चैव जयद्रथः ॥ ००५ ॥

परुषाणि सभामध्ये प्रोक्तवान्यः स्म पाण्डवान् ।
स कर्णो निर्जितः संख्ये सैन्धवश्च निपातितः ॥ ००६ ॥

यस्य वीर्यं समाश्रित्य शमं याचन्तमच्युतम् ।
तृणवत्तमहं मन्ये स कर्णो निर्जितो युधि ॥ ००७ ॥

एवं क्लान्तमना राजन्नुपायाद्द्रोणमीक्षितुम् ।
आगस्कृत्सर्वलोकस्य पुत्रस्ते भरतर्षभ ॥ ००८ ॥

ततस्तत्सर्वमाचख्यौ कुरूणां वैशसं महत् ।
परान्विजयतश्चापि धार्तराष्ट्रान्निमज्जतः ॥ ००९ ॥

दुर्योधन उवाच ॥

पश्य मूर्धावसिक्तानामाचार्य कदनं कृतम् ।
कृत्वा प्रमुखतः शूरं भीष्मं मम पितामहम् ॥ ०१० ॥

तं निहत्य प्रलुब्धोऽयं शिखण्डी पूर्णमानसः ।
पाञ्चालैः सहितः सर्वैः सेनाग्रमभिकर्षति ॥ ०११ ॥

अपरश्चापि दुर्धर्षः शिष्यस्ते सव्यसाचिना ।
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ॥ ०१२ ॥

अस्मद्विजयकामानां सुहृदामुपकारिणाम् ।
गन्तास्मि कथमानृण्यं गतानां यमसादनम् ॥ ०१३ ॥

ये मदर्थं परीप्सन्ति वसुधां वसुधाधिपाः ।
ते हित्वा वसुधैश्वर्यं वसुधामधिशेरते ॥ ०१४ ॥

सोऽहं कापुरुषः कृत्वा मित्राणां क्षयमीदृशम् ।
नाश्वमेधसहस्रेण पातुमात्मानमुत्सहे ॥ ०१५ ॥

मम लुब्धस्य पापस्य तथा धर्मापचायिनः ।
व्यायच्छन्तो जिगीषन्तः प्राप्ता वैवस्वतक्षयम् ॥ ०१६ ॥

कथं पतितवृत्तस्य पृथिवी सुहृदां द्रुहः ।
विवरं नाशकद्दातुं मम पार्थिवसंसदि ॥ ०१७ ॥

सोऽहं रुधिरसिक्ताङ्गं राज्ञां मध्ये पितामहम् ।
शयानं नाशकं त्रातुं भीष्ममायोधने हतम् ॥ ०१८ ॥

तं मामनार्यपुरुषं मित्रद्रुहमधार्मिकम् ।
किं स वक्ष्यति दुर्धर्षः समेत्य परलोकजित् ॥ ०१९ ॥

जलसंधं महेष्वासं पश्य सात्यकिना हतम् ।
मदर्थमुद्यतं शूरं प्राणांस्त्यक्त्वा महारथम् ॥ ०२० ॥

काम्बोजं निहतं दृष्ट्वा तथालम्बुसमेव च ।

अन्यान्बहूंश्च सुहृदो जीवितार्थोऽद्य को मम ॥ ०२१ ॥

व्यायच्छन्तो हताः शूरा मदर्थे येऽपराङ्मुखाः ।
यतमानाः परं शक्त्या विजेतुमहितान्मम ॥ ०२२ ॥

तेषां गत्वाहमानृण्यमद्य शक्त्या परंतप ।
तर्पयिष्यामि तानेव जलेन यमुनामनु ॥ ०२३ ॥

सत्यं ते प्रतिजानामि सर्वशस्त्रभृतां वर ।
इष्टापूर्तेन च शपे वीर्येण च सुतैरपि ॥ ०२४ ॥

निहत्य तान्रणे सर्वान्पाञ्चालान्पाण्डवैः सह ।
शान्तिं लब्धास्मि तेषां वा रणे गन्ता सलोकताम् ॥ ०२५ ॥

न हीदानीं सहाया मे परीप्सन्त्यनुपस्कृताः ।
श्रेयो हि पाण्डून्मन्यन्ते न तथास्मान्महाभुज ॥ ०२६ ॥

स्वयं हि मृत्युर्विहितः सत्यसंधेन संयुगे ।
भवानुपेक्षां कुरुते सुशिष्यत्वाद्धनञ्जये ॥ ०२७ ॥

अतो विनिहताः सर्वे येऽस्मज्जयचिकीर्षवः ।
कर्णमेव तु पश्यामि संप्रत्यस्मज्जयैषिणम् ॥ ०२८ ॥

यो हि मित्रमविज्ञाय याथातथ्येन मन्दधीः ।
मित्रार्थे योजयत्येनं तस्य सोऽर्थोऽवसीदति ॥ ०२९ ॥

तादृग्रूपमिदं कार्यं कृतं मम सुहृद्बुवैः ।
मोहाल्लुब्धस्य पापस्य जिह्माचारैस्ततस्ततः ॥ ०३० ॥

हतो जयद्रथश्चैव सौमदत्तिश्च वीर्यवान् ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ०३१ ॥

सोऽहमद्य गमिष्यामि यत्र ते पुरुषर्षभाः ।
हता मदर्थं सङ्ग्रामे युध्यमानाः किरीटिना ॥ ०३२ ॥

न हि मे जीवितेनार्थस्तानृते पुरुषर्षभान् ।
आचार्यः पाण्डुपुत्राणामनुजानातु नो भवान् ॥ ०३३ ॥

---

# अध्याय १२६

धृतराष्ट्र उवाच ॥

सिन्धुराजे हते तात समरे सव्यसाचिना ।
तथैव भूरिश्रवसि किमासीद्वो मनस्तदा ॥ ००१ ॥

दुर्योधनेन च द्रोणस्तथोक्तः कुरुसंसदि ।
किमुक्तवान्परं तस्मात्तन्ममाचक्ष्व सञ्जय ॥ ००२ ॥

सञ्जय उवाच ॥

निष्टानको महानासीत्सैन्यानां तव भारत ।
सैन्धवं निहतं दृष्ट्वा भूरिश्रवसमेव च ॥ ००३ ॥

मन्त्रितं तव पुत्रस्य ते सर्वमवमेनिरे ।
येन मन्त्रेण निहताः शतशः क्षत्रियर्षभाः ॥ ००४ ॥

द्रोणस्तु तद्वचः श्रुत्वा पुत्रस्य तव दुर्मनाः ।
मुहूर्तमिव तु ध्यात्वा भृशमार्तोऽभ्यभाषत ॥ ००५ ॥

दुर्योधन किमेवं मां वाक्शरैरभिकृन्तसि ।
अजय्यं समरे नित्यं ब्रुवाणं सव्यसाचिनम्  ॥ ००६  ॥

एतेनैवार्जुनं ज्ञातुमलं कौरव संयुगे ।
यच्छिखण्ड्यवधीद्भीष्मं पाल्यमानः किरीटिना  ॥ ००७  ॥

अवध्यं निहतं दृष्ट्वा संयुगे देवमानुषैः ।
तदैवाज्ञासिषमहं नेयमस्तीति भारती  ॥ ००८  ॥

यं पुंसां त्रिषु लोकेषु सर्वशूरममंस्महि ।
तस्मिन्विनिहते शूरे किं शेषं पर्युपास्महे  ॥ ००९  ॥

यान्स्म तान्ग्लहते तातः शकुनिः कुरुसंसदि ।
अक्षान्न तेऽक्षा निशिता बाणास्ते शत्रुतापनाः  ॥ ०१०  ॥

त एते घ्नन्ति नस्तात विशिखा जयचोदिताः ।
यांस्तदा ख्याप्यमानांस्त्वं विदुरेण न बुध्यसे  ॥ ०११  ॥

तास्ता विलपतश्चापि विदुरस्य महात्मनः ।
धीरस्य वाचो नाश्रौषीः क्षेमाय वदतः शिवाः  ॥ ०१२  ॥

तदिदं वर्तते घोरमागतं वैशसं महत् ।
तस्यावमानाद्वाक्यस्य दुर्योधन कृते तव  ॥ ०१३  ॥

यच्च नः प्रेक्षमाणानां कृष्णामानाययः सभाम् ।
अनर्हतीं कुले जातां सर्वधर्मानुचारिणीम्  ॥ ०१४  ॥

तस्याधर्मस्य गान्धारे फलं प्राप्तमिदं त्वया ।
नो चेत्पापं परे लोके त्वमर्च्छेथास्ततोऽधिकम्  ॥ ०१५  ॥

यच्च तान्पाण्डवान्द्यूते विषमेण विजित्य ह ।
प्राव्राजयस्तदारण्ये रौरवाजिनवाससः ॥ ०१६ ॥

पुत्राणामिव चैतेषां धर्ममाचरतां सदा ।
द्रुह्येत्को नु नरो लोके मदन्यो ब्राह्मणब्रुवः ॥ ०१७ ॥

पाण्डवानामयं कोपस्त्वया शकुनिना सह ।
आहृतो धृतराष्ट्रस्य संमते कुरुसंसदि ॥ ०१८ ॥

दुःशासनेन संयुक्तः कर्णेन परिवर्धितः ।
क्षत्तुर्वाक्यमनादृत्य त्वयाभ्यस्तः पुनः पुनः ॥ ०१९ ॥

यत्तत्सर्वैः पराभूय पर्यवारयतार्जुनिम् ।
सिन्धुराजानमाश्रित्य स वो मध्ये कथं हतः ॥ ०२० ॥

कथं त्वयि च कर्णे च कृपे शल्ये च जीवति ।
अश्वत्थाम्नि च कौरव्य निधनं सैन्धवोऽगमत् ॥ ०२१ ॥

यद्वस्तत्सर्वराजानस्तेजस्तिग्ममुपासते ।
सिन्धुराजं परित्रातुं स वो मध्ये कथं हतः ॥ ०२२ ॥

मय्येव हि विशेषेण तथा दुर्योधन त्वयि ।
आशंसत परित्राणमर्जुनात्स महीपतिः ॥ ०२३ ॥

ततस्तस्मिन्परित्राणमलब्धवति फल्गुनात् ।
न किञ्चिदनुपश्यामि जीवितत्राणमात्मनः ॥ ०२४ ॥

मज्जन्तमिव चात्मानं धृष्टद्युम्नस्य किल्बिषे ।
पश्याम्यहत्वा पाञ्चालान्सह तेन शिखण्डिना ॥ ०२५ ॥

तन्मा किमभितप्यन्तं वाक्शरैरभिकृन्तसि ।

अशक्तः सिन्धुराजस्य भूत्वा त्राणाय भारत ॥ ०२६ ॥

सौवर्णं सत्यसंधस्य ध्वजमक्लिष्टकर्मणः ।
अपश्यन्युधि भीष्मस्य कथमाशंससे जयम् ॥ ०२७ ॥

मध्ये महारथानां च यत्राहन्यत सैन्धवः ।
हतो भूरिश्रवाश्चैव किं शेषं तत्र मन्यसे ॥ ०२८ ॥

कृप एव च दुर्धर्षो यदि जीवति पार्थिव ।
यो नागात्सिन्धुराजस्य वर्त्म तं पूजयाम्यहम् ॥ ०२९ ॥

यच्चापश्यं हतं भीष्मं पश्यतस्तेऽनुजस्य वै ।
दुःशासनस्य कौरव्य कुर्वाणं कर्म दुष्करम् ॥ ०३० ॥

अवध्यकल्पं सङ्ग्रामे देवैरपि सवासवैः ॥ ०३० ॥

न ते वसुंधरास्तीति तदहं चिन्तये नृप ।
इमानि पाण्डवानां च सृञ्जयानां च भारत ॥ ०३१ ॥

अनीकान्याद्रवन्ते मां सहितान्यद्य मारिष ॥ ०३१ ॥

नाहत्वा सर्वपाञ्चालान्कवचस्य विमोक्षणम् ।
कर्तास्मि समरे कर्म धार्तराष्ट्र हितं तव ॥ ०३२ ॥

राजन्ब्रूयाः सुतं मे त्वमश्वत्थामानमाहवे ।
न सोमकाः प्रमोक्तव्या जीवितं परिरक्षता ॥ ०३३ ॥

यच्च पित्रानुशिष्टोऽसि तद्वचः परिपालय ।
आनृशंस्ये दमे सत्ये आर्जवे च स्थिरो भव ॥ ०३४ ॥

धर्मार्थकामकुशलो धर्मार्थावप्यपीडयन् ।

धर्मप्रधानः कार्याणि कुर्याश्चेति पुनः पुनः ॥ ०३५ ॥

चक्षुर्मनोभ्यां संतोष्या विप्राः सेव्याश्च शक्तितः ।
न चैषां विप्रियं कार्यं ते हि वह्निशिखोपमाः ॥ ०३६ ॥

एष त्वहमनीकानि प्रविशाम्यरिसूदन ।
रणाय महते राजंस्त्वया वाक्शल्यपीडितः ॥ ०३७ ॥

त्वं च दुर्योधन बलं यदि शक्नोषि धारय ।
रात्रावपि हि योत्स्यन्ते संरब्धाः कुरुसृञ्जयाः ॥ ०३८ ॥

एवमुक्त्वा ततः प्रायाद्द्रोणः पाण्डवसृञ्जयान् ।
मुष्णन्क्षत्रियतेजांसि नक्षत्राणामिवांशुमान् ॥ ०३९ ॥

---

# अध्याय १२७

सञ्जय उवाच ॥

ततो दुर्योधनो राजा द्रोणेनैवं प्रचोदितः ।
अमर्षवशमापन्नो युद्धायैव मनो दधे ॥ ००१ ॥

अब्रवीच्च तदा कर्णं पुत्रो दुर्योधनस्तव ।
पश्य कृष्णसहायेन पाण्डवेन किरीटिना ॥ ००२ ॥

आचार्यविहितं व्यूहं भिन्नं देवैः सुदुर्भिदम् ॥ ००२ ॥

तव व्यायच्छमानस्य द्रोणस्य च महात्मनः ।
मिषतां योधमुख्यानां सैन्धवो विनिपातितः ॥ ००३ ॥

पश्य राधेय राजानः पृथिव्यां प्रवरा युधि ।
पार्थेनैकेन निहताः सिंहेनेवेतरा मृगाः ॥ ००४ ॥

मम व्यायच्छमानस्य समरे शत्रुसूदन ।
अल्पावशेषं सैन्यं मे कृतं शक्रात्मजेन ह ॥ ००५ ॥

कथं ह्यनिच्छमानस्य द्रोणस्य युधि फल्गुनः ।
भिन्द्यात्सुदुर्भिदं व्यूहं यतमानोऽपि संयुगे ॥ ००६ ॥

प्रियो हि फल्गुनो नित्यमाचार्यस्य महात्मनः ।
ततोऽस्य दत्तवान्द्वारं नयुद्धेनारिमर्दन ॥ ००७ ॥

अभयं सैन्धवस्याजौ दत्त्वा द्रोणः परंतपः ।
प्रादात्किरीटिने द्वारं पश्य निर्गुणतां मम ॥ ००८ ॥

यद्यदास्यमनुज्ञां वै पूर्वमेव गृहान्प्रति ।
सिन्धुराजस्य समरे नाभविष्यज्जनक्षयः ॥ ००९ ॥

जयद्रथो जीवितार्थी गच्छमानो गृहान्प्रति ।
मयानार्येण संरुद्धो द्रोणात्प्राप्याभयं रणे ॥ ०१० ॥

अद्य मे भ्रातरः क्षीणाश्चित्रसेनादयो युधि ।
भीमसेनं समासाद्य पश्यतां नो दुरात्मनाम् ॥ ०११ ॥

कर्ण उवाच ॥

आचार्यं मा विगर्हस्व शक्त्या युध्यत्यसौ द्विजः ।
अजय्यान्पाण्डवान्मन्ये द्रोणेनास्त्रविदा मृधे ॥ ०१२ ॥

तथा ह्येनमतिक्रम्य प्रविष्टः श्वेतवाहनः ।

दैवदृष्टोऽन्यथाभावो न मन्ये विद्यते क्वचित्  ॥ ०१३  ॥

ततो नो युध्यमानानां परं शक्त्या सुयोधन ।
सैन्धवो निहतो राजन्दैवमत्र परं स्मृतम्  ॥ ०१४  ॥

परं यत्नं कुर्वतां च त्वया सार्धं रणाजिरे ।
हत्वास्माकं पौरुषं हि दैवं पश्चात्करोति नः  ॥ ०१५  ॥

सततं चेष्टमानानां निकृत्या विक्रमेण च  ॥ ०१५  ॥

दैवोपसृष्टः पुरुषो यत्कर्म कुरुते क्वचित् ।
कृतं कृतं स्म तत्तस्य दैवेन विनिहन्यते  ॥ ०१६  ॥

यत्कर्तव्यं मनुष्येण व्यवसायवता सता ।
तत्कार्यमविशङ्केन सिद्धिर्दैवे प्रतिष्ठिता  ॥ ०१७  ॥

निकृत्या निकृताः पार्था विषयोगैश्च भारत ।
दग्धा जतुगृहे चापि द्यूतेन च पराजिताः  ॥ ०१८  ॥

राजनीतिं व्यपाश्रित्य प्रहिताश्चैव काननम् ।
यत्नेन च कृतं यत्ते दैवेन विनिपातितम्  ॥ ०१९  ॥

युध्यस्व यत्नमास्थाय मृत्युं कृत्वा निवर्तनम् ।
यततस्तव तेषां च दैवं मार्गेण यास्यति  ॥ ०२०  ॥

न तेषां मतिपूर्वं हि सुकृतं दृश्यते क्वचित् ।
दुष्कृतं तव वा वीर बुद्ध्या हीनं कुरूद्वह  ॥ ०२१  ॥

दैवं प्रमाणं सर्वस्य सुकृतस्येतरस्य वा ।
अनन्यकर्म दैवं हि जागर्ति स्वपतामपि  ॥ ०२२  ॥

बहूनि तव सैन्यानि योधाश्च बहवस्तथा ।
न तथा पाण्डुपुत्राणामेवं युद्धमवर्तत ॥ ०२३ ॥

तैरल्पैर्बहवो यूयं क्षयं नीताः प्रहारिणः ।
शङ्के दैवस्य तत्कर्म पौरुषं येन नाशितम् ॥ ०२४ ॥

सञ्जय उवाच ॥

एवं संभाषमाणानां बहु तत्तज्जनाधिप ।
पाण्डवानामनीकानि समदृश्यन्त संयुगे ॥ ०२५ ॥

ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम् ।
तावकानां परैः सार्धं राजन्दुर्मन्त्रिते तव ॥ ०२६ ॥

---

# अध्याय १२८

सञ्जय उवाच ॥

तदुदीर्णगजाश्वौघं बलं तव जनाधिप ।
पाण्डुसेनामभिद्रुत्य योधयामास सर्वतः ॥ ००१ ॥

पाञ्चालाः कुरवश्चैव योधयन्तः परस्परम् ।
यमराष्ट्राय महते परलोकाय दीक्षिताः ॥ ००२ ॥

शूराः शूरैः समागम्य शरतोमरशक्तिभिः ।
विव्यधुः समरे तूर्णं निन्युश्चैव यमक्षयम् ॥ ००३ ॥

रथिनां रथिभिः सार्धं रुधिरस्राविदारुणम् ।
प्रावर्तत महद्युद्धं निघ्नतामितरेतरम् ॥ ००४ ॥

वारणाश्च महाराज समासाद्य परस्परम् ।
विषाणैर्दारयामासुः सङ्क्रुद्धाश्च मदोत्कटाः ॥ ००५ ॥

हयारोहान्हयारोहाः प्रासशक्तिपरश्वधैः ।
बिभिदुस्तुमुले युद्धे प्रार्थयन्तो महद्यशः ॥ ००६ ॥

पत्तयश्च महाबाहो शतशः शस्त्रपाणयः ।
अन्योन्यमार्दयन्राजन्नित्ययत्ताः पराक्रमे ॥ ००७ ॥

गोत्राणां नामधेयानां कुलानां चैव मारिष ।
श्रवणाद्धि विजानीमः पाञ्चालान्कुरुभिः सह ॥ ००८ ॥

अन्योन्यं समरे योधाः शरशक्तिपरश्वधैः ।
प्रेषयन्परलोकाय विचरन्तो ह्यभीतवत् ॥ ००९ ॥

शरैर्दश दिशो राजंस्तेषां मुक्तैः सहस्रशः ।
न भ्राजन्त यथापूर्वं भास्करेऽस्तं गतेऽपि च ॥ ०१० ॥

तथा प्रयुध्यमानेषु पाण्डवेयेषु निर्भयः ।
दुर्योधनो महाराज व्यवगाहत तद्बलम् ॥ ०११ ॥

सैन्धवस्य वधेनैव भृशं दुःखसमन्वितः ।
मर्तव्यमिति सञ्चिन्त्य प्राविशत्तु द्विषद्बलम् ॥ ०१२ ॥

नादयन्रथघोषेण कम्पयन्निव मेदिनीम् ।
अभ्यवर्तत पुत्रस्ते पाण्डवानामनीकिनीम् ॥ ०१३ ॥

स संनिपातस्तुमुलस्तस्य तेषां च भारत ।

अभवत्सर्वसैन्यानामभावकरणो महान्  ॥ ०१४  ॥

मध्यंदिनगतं सूर्यं प्रतपन्तं गभस्तिभिः ।
तथा तव सुतं मध्ये प्रतपन्तं शरोर्मिभिः  ॥ ०१५  ॥

न शेकुर्भारतं युद्धे पाण्डवाः समवेक्षितुम् ।
पलायने कृतोत्साहा निरुत्साहा द्विषज्जये  ॥ ०१६  ॥

पर्यधावन्त पाञ्चाला वध्यमाना महात्मना ।
रुक्मपुङ्खैः प्रसन्नाग्रैस्तव पुत्रेण धन्विना  ॥ ०१७  ॥

अर्द्यमानाः शरैस्तूर्णं न्यपतन्पाण्डुसैनिकाः  ॥ ०१७  ॥

न तादृशं रणे कर्म कृतवन्तस्तु तावकाः ।
यादृशं कृतवान्राजा पुत्रस्तव विशां पते  ॥ ०१८  ॥

पुत्रेण तव सा सेना पाण्डवी मथिता रणे ।
नलिनी द्विरदेनेव समन्तात्फुल्लपङ्कजा  ॥ ०१९  ॥

क्षीणतोयानिलार्काभ्यां हतत्विडिव पद्मिनी ।
बभूव पाण्डवी सेना तव पुत्रस्य तेजसा  ॥ ०२०  ॥

पाण्डुसेनां हतां दृष्ट्वा तव पुत्रेण भारत ।
भीमसेनपुरोगास्तु पाञ्चालाः समुपाद्रवन्  ॥ ०२१  ॥

स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः ।
विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम्  ॥ ०२२  ॥

धृष्टद्युम्नं च सप्तत्या धर्मपुत्रं च सप्तभिः ।
केकयांश्चैव चेदींश्च बहुभिर्निशितैः शरैः  ॥ ०२३  ॥

सात्वतं पञ्चभिर्विद्ध्वा द्रौपदेयांस्त्रिभिस्त्रिभिः ।
घटोत्कचं च समरे विद्ध्वा सिंह इवानदत् ॥ ०२४ ॥

शतशश्चापरान्योधान्सद्विपाश्वरथान्रणे ।
शरैरवचकर्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ॥ ०२५ ॥

तस्य तान्निघ्नतः शत्रून्रुक्मपृष्ठं महद्धनुः ।
भल्लाभ्यां पाण्डवो ज्येष्ठस्त्रिधा चिच्छेद मारिष ॥ ०२६ ॥

विव्याध चैनं दशभिः सम्यगस्तैः शितैः शरैः ।
मर्माणि भित्त्वा ते सर्वे संभग्नाः क्षितिमाविशन् ॥ ०२७ ॥

ततः प्रमुदिता योधाः परिवव्रुर्युधिष्ठिरम् ।
वृत्रहत्यै यथा देवाः परिवव्रुः पुरंदरम् ॥ ०२८ ॥

ततो युधिष्ठिरो राजा तव पुत्रस्य मारिष ।
शरं परमदुर्वारं प्रेषयामास संयुगे ॥ ०२९ ॥

स तेन भृशसंविद्धो निषसाद रथोत्तमे ॥ ०२९ ॥

ततः पाञ्चालसैन्यानां भृशमासीद्रवो महान् ।
हतो राजेति राजेन्द्र मुदितानां समन्ततः ॥ ०३० ॥

बाणशब्दरवश्चोग्रः शुश्रुवे तत्र मारिष ।
अथ द्रोणो द्रुतं तत्र प्रत्यदृश्यत संयुगे ॥ ०३१ ॥

हृष्टो दुर्योधनश्चापि दृढमादाय कार्मुकम् ।
तिष्ठ तिष्ठेति राजानं ब्रुवन्पाण्डवमभ्ययात् ॥ ०३२ ॥

प्रत्युद्ययुस्तं त्वरिताः पाञ्चाला राजगृद्धिनः ।
तान्द्रोणः प्रतिजग्राह परीप्सन्कुरुसत्तमम् ॥ ०३३ ॥

चण्डवातोद्धतान्मेघान्निघ्नन्रश्मिमुचो यथा ॥ ०३३ ॥

ततो राजन्महानासीत्सङ्ग्रामो भूरिवर्धनः ।
तावकानां परेषां च समेतानां युयुत्सया ॥ ०३४ ॥

---

# अध्याय १२९

धृतराष्ट्र उवाच ॥

यत्तदा प्राविशत्पाण्डूनाचार्यः कुपितो वशी ।
उक्त्वा दुर्योधनं सम्यङ्मम शास्त्रातिगं सुतम् ॥ ००१ ॥

प्रविश्य विचरन्तं च रणे शूरमवस्थितम् ।
कथं द्रोणं महेष्वासं पाण्डवाः पर्यवारयन् ॥ ००२ ॥

केऽरक्षन्दक्षिणं चक्रमाचार्यस्य महात्मनः ।
के चोत्तरमरक्षन्त निघ्नतः शात्रवान्रणे ॥ ००३ ॥

नृत्यन्स रथमार्गेषु सर्वशस्त्रभृतां वरः ।
धूमकेतुरिव क्रुद्धः कथं मृत्युमुपेयिवान् ॥ ००४ ॥

सञ्जय उवाच ॥

सायाह्ने सैन्धवं हत्वा राज्ञा पार्थः समेत्य च ।
सात्यकिश्च महेष्वासो द्रोणमेवाभ्यधावताम् ॥ ००५ ॥

तथा युधिष्ठिरस्तूर्णं भीमसेनश्च पाण्डवः ।

पृथक्चमूभ्यां संसक्तौ द्रोणमेवाभ्यधावताम् ॥ ००६ ॥

तथैव नकुलो धीमान्सहदेवश्च दुर्जयः ।
धृष्टद्युम्नः शतानीको विराटश्च सकेकयः ॥ ००७ ॥

मत्स्याः शाल्वेयसेनाश्च द्रोणमेव ययुर्युधि ॥ ००७ ॥

द्रुपदश्च तथा राजा पाञ्चालैरभिरक्षितः ।
धृष्टद्युम्नपिता राजन्द्रोणमेवाभ्यवर्तत ॥ ००८ ॥

द्रौपदेया महेष्वासा राक्षसश्च घटोत्कचः ।
ससेनास्तेऽभ्यवर्तन्त द्रोणमेव महाद्युतिम् ॥ ००९ ॥

प्रभद्रकाश्च पाञ्चालाः षट्सहस्राः प्रहारिणः ।
द्रोणमेवाभ्यवर्तन्त पुरस्कृत्य शिखण्डिनम् ॥ ०१० ॥

तथेतरे नरव्याघ्राः पाण्डवानां महारथाः ।
सहिताः संन्यवर्तन्त द्रोणमेव द्विजर्षभम् ॥ ०११ ॥

तेषु शूरेषु युद्धाय गतेषु भरतर्षभ ।
बभूव रजनी घोरा भीरूणां भयवर्धिनी ॥ ०१२ ॥

योधानामशिवा रौद्रा राजन्नन्तकगामिनी ।
कुञ्जराश्वमनुष्याणां प्राणान्तकरणी तदा ॥ ०१३ ॥

तस्यां रजन्यां घोरायां नदन्त्यः सर्वतः शिवाः ।
न्यवेदयन्भयं घोरं सज्वालकवलैर्मुखैः ॥ ०१४ ॥

उलूकाश्चाप्यदृश्यन्त शंसन्तो विपुलं भयम् ।
विशेषतः कौरवाणां ध्वजिन्यामतिदारुणम् ॥ ०१५ ॥

ततः सैन्येषु राजेन्द्र शब्दः समभवन्महान् ।
भेरीशब्देन महता मृदङ्गानां स्वनेन च ॥ ०१६ ॥

गजानां गर्जितैश्चापि तुरङ्गाणां च हेषितैः ।
खुरशब्दनिपातैश्च तुमुलः सर्वतोऽभवत् ॥ ०१७ ॥

ततः समभवद्युद्धं संध्यायामतिदारुणम् ।
द्रोणस्य च महाराज सृञ्जयानां च सर्वशः ॥ ०१८ ॥

तमसा चावृते लोके न प्राज्ञायत किञ्चन ।
सैन्येन रजसा चैव समन्तादुत्थितेन ह ॥ ०१९ ॥

नरस्याश्वस्य नागस्य समसज्जत शोणितम् ।
नापश्याम रजो भौमं कश्मलेनाभिसंवृताः ॥ ०२० ॥

रात्रौ वंशवनस्येव दह्यमानस्य पर्वते ।
घोरश्चटचटाशब्दः शस्त्राणां पतताममभूत् ॥ ०२१ ॥

नैव स्वे न परे राजन्प्राज्ञायन्त तमोवृते ।
उन्मत्तमिव तत्सर्वं बभूव रजनीमुखे ॥ ०२२ ॥

भौमं रजोऽथ राजेन्द्र शोणितेन प्रशामितम् ।
शातकौम्भैश्च कवचैर्भूषणैश्च तमोऽभ्यगात् ॥ ०२३ ॥

ततः सा भारती सेना मणिहेमविभूषिता ।
द्यौरिवासीत्सनक्षत्रा रजन्यां भरतर्षभ ॥ ०२४ ॥

गोमायुबडसंघुष्टा शक्तिध्वजसमाकुला ।
दारुणाभिरुता घोरा क्ष्वेडितोत्क्रुष्टनादिता ॥ ०२५ ॥

ततोऽभवन्महाशब्दस्तुमुलो लोमहर्षणः ।

समावृण्वन्दिशः सर्वा महेन्द्राशनिनिस्वनः ॥ ०२६ ॥

सा निशीथे महाराज सेनादृश्यत भारती ।
अङ्गदैः कुण्डलैर्निष्कैः शस्त्रैश्चैवावभासिता ॥ ०२७ ॥

तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः ।
निशायां प्रत्यदृश्यन्त मेघा इव सविद्युतः ॥ ०२८ ॥

ऋष्टिशक्तिगदाबाणमुसलप्रासपट्टिशाः ।
संपतन्तो व्यदृश्यन्त भ्राजमाना इवाग्नयः ॥ ०२९ ॥

दुर्योधनपुरोवातां रथनागबलाहकाम् ।
वादित्रघोषस्तनितां चापविद्युद्ध्वजैर्वृताम् ॥ ०३० ॥

द्रोणपाण्डवपर्जन्यां खड्गशक्तिगदाशनिम् ।
शरधारास्त्रपवनां भृशं शीतोष्णसङ्कुलाम् ॥ ०३१ ॥

घोरां विस्मापनीमुग्रां जीवितच्छिदमप्लवाम् ।
तां प्राविशन्नतिभयां सेनां युद्धचिकीर्षवः ॥ ०३२ ॥

तस्मिन्रात्रिमुखे घोरे महाशब्दनिनादिते ।
भीरूणां त्रासजनने शूराणां हर्षवर्धने ॥ ०३३ ॥

रात्रियुद्धे तदा घोरे वर्तमाने सुदारुणे ।
द्रोणमभ्यद्रवन्क्रुद्धाः सहिताः पाण्डुसृञ्जयाः ॥ ०३४ ॥

ये ये प्रमुखतो राजन्न्यवर्तन्त महात्मनः ।
तान्सर्वान्विमुखांश्चक्रे कांश्चिन्निन्ये यमक्षयम् ॥ ०३५ ॥

# अध्याय १३०

धृतराष्ट्र उवाच ॥

तस्मिन्प्रविष्टे दुर्धर्षे सृञ्जयानमितौजसि ।
अमृष्यमाणे संरब्धे का वोऽभूद्वै मतिस्तदा ॥ ००१ ॥

दुर्योधनं तथा पुत्रमुक्त्वा शास्त्रातिगं मम ।
यत्प्राविशदमेयात्मा किं पार्थः प्रत्यपद्यत ॥ ००२ ॥

निहते सैन्धवे वीरे भूरिश्रवसि चैव हि ।
यदभ्यगान्महातेजाः पाञ्चालानपराजितः ॥ ००३ ॥

किममन्यत दुर्धर्षः प्रविष्टे शत्रुतापने ।
दुर्योधनश्च किं कृत्यं प्राप्तकालममन्यत ॥ ००४ ॥

के च तं वरदं वीरमन्वयुर्द्विजसत्तमम् ।
के चास्य पृष्ठतोऽगच्छन्वीराः शूरस्य युध्यतः ॥ ००५ ॥

के पुरस्तादयुध्यन्त निघ्नतः शात्रवान्रणे ॥ ००५ ॥

मन्येऽहं पाण्डवान्सर्वान्भारद्वाजशरार्दितान् ।
शिशिरे कम्पमाना वै कृशा गाव इवाभिभो ॥ ००६ ॥

प्रविश्य स महेष्वासः पाञ्चालानरिमर्दनः ।
कथं नु पुरुषव्याघ्रः पञ्चत्वमुपजग्मिवान् ॥ ००७ ॥

सर्वेषु सैन्येषु च सङ्गतेषु; रात्रौ समेतेषु महारथेषु ।
संलोड्यमानेषु पृथग्विधेषु; के वस्तदानीं मतिमन्त आसन् ॥ ००८ ॥

हतांश्चैव विषक्तांश्च पराभूतांश्च शंससि ।

रथिनो विरथांश्चैव कृतान्युद्धेषु मामकान् ॥ ००९ ॥

कथमेषां तदा तत्र पार्थानामपलायिनाम् ।
प्रकाशमभवद्रात्रौ कथं कुरुषु सञ्जय ॥ ०१० ॥

सञ्जय उवाच ॥

रात्रियुद्धे तदा राजन्वर्तमाने सुदारुणे ।
द्रोणमभ्यद्रवन्रात्रौ पाण्डवाः सहसैनिकाः ॥ ०११ ॥

ततो द्रोणः केकयांश्च धृष्टद्युम्नस्य चात्मजान् ।
प्रेषयन्मृत्युलोकाय सर्वानिषुभिराशुगैः ॥ ०१२ ॥

तस्य प्रमुखतो राजन्येऽवर्तन्त महारथाः ।
तान्सर्वान्प्रेषयामास परलोकाय भारत ॥ ०१३ ॥

प्रमथ्नन्तं तदा वीरं भारद्वाजं महारथम् ।
अभ्यवर्तत सङ्क्रुद्धः शिबी राजन्प्रतापवान् ॥ ०१४ ॥

तमापतन्तं संप्रेक्ष्य पाण्डवानां महारथम् ।
विव्याध दशभिर्द्रोणः सर्वपारशवैः शरैः ॥ ०१५ ॥

तं शिबिः प्रतिविव्याध त्रिंशता निशितैः शरैः ।
सारथिं चास्य भल्लेन स्मयमानो न्यपातयत् ॥ ०१६ ॥

तस्य द्रोणो हयान्हत्वा सारथिं च महात्मनः ।
अथास्य सशिरस्त्राणं शिरः कायादपाहरत् ॥ ०१७ ॥

कलिङ्गानां च सैन्येन कलिङ्गस्य सुतो रणे ।
पूर्वं पितृवधात्क्रुद्धो भीमसेनमुपाद्रवत् ॥ ०१८ ॥

स भीमं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ।
विशोकं त्रिभिराजघ्ने ध्वजमेकेन पत्रिणा ॥ ०१९ ॥

कलिङ्गानां तु तं शूरं क्रुद्धं क्रुद्धो वृकोदरः ।
रथाद्रथमभिद्रुत्य मुष्टिनाभिजघान ह ॥ ०२० ॥

तस्य मुष्टिहतस्याजौ पाण्डवेन बलीयसा ।
सर्वाण्यस्थीनि सहसा प्रापतन्वै पृथक्पृथक् ॥ ०२१ ॥

तं कर्णो भ्रातरश्चास्य नामृष्यन्त महारथाः ।
ते भीमसेनं नाराचैर्जघ्नुराशीविषोपमैः ॥ ०२२ ॥

ततः शत्रुरथं त्यक्त्वा भीमो ध्रुवरथं गतः ।
ध्रुवं चास्यन्तमनिशं मुष्टिना समपोथयत् ॥ ०२३ ॥

स तथा पाण्डुपुत्रेण बलिना निहतोऽपतत् ॥ ०२३ ॥

तं निहत्य महाराज भीमसेनो महाबलः ।
जयरातरथं प्राप्य मुहुः सिंह इवानदत् ॥ ०२४ ॥

जयरातमथाक्षिप्य नदन्सव्येन पाणिना ।
तलेन नाशयामास कर्णस्यैवाग्रतः स्थितम् ॥ ०२५ ॥

कर्णस्तु पाण्डवे शक्तिं काञ्चनीं समवासृजत् ।
ततस्तामेव जग्राह प्रहसन्पाण्डुनन्दनः ॥ ०२६ ॥

कर्णायैव च दुर्धर्षश्चिक्षेपाजौ वृकोदरः ।
तामन्तरिक्षे चिच्छेद शकुनिस्तैलपायिना ॥ ०२७ ॥

ततस्तव सुता राजन्भीमस्य रथमाव्रजन् ।
महता शरवर्षेण छादयन्तो वृकोदरम् ॥ ०२८ ॥

दुर्मदस्य ततो भीमः प्रहसन्निव संयुगे ।
सारथिं च हयांश्चैव शरैर्निन्ये यमक्षयम् ॥ ०२९ ॥

दुर्मदस्तु ततो यानं दुष्कर्णस्यावपुप्लुवे ॥ ०२९ ॥

तावेकरथमारूढौ भ्रातरौ परतापनौ ।
सङ्ग्रामशिरसो मध्ये भीमं द्वावभ्यधावताम् ॥ ०३० ॥

यथाम्बुपतिमित्रौ हि तारकं दैत्यसत्तमम् ॥ ०३० ॥

ततस्तु दुर्मदश्चैव दुष्कर्णश्च तवात्मजौ ।
रथमेकं समारुह्य भीमं बाणैरविध्यताम् ॥ ०३१ ॥

ततः कर्णस्य मिषतो द्रौणेर्दुर्योधनस्य च ।
कृपस्य सोमदत्तस्य बाह्लीकस्य च पाण्डवः ॥ ०३२ ॥

दुर्मदस्य च वीरस्य दुष्कर्णस्य च तं रथम् ।
पादप्रहारेण धरां प्रावेशयदरिंदमः ॥ ०३३ ॥

ततः सुतौ ते बलिनौ शूरौ दुष्कर्णदुर्मदौ ।
मुष्टिनाहत्य सङ्क्रुद्धो ममर्द चरणेन च ॥ ०३४ ॥

ततो हाहाकृते सैन्ये दृष्ट्वा भीमं नृपाब्रुवन् ।
रुद्रोऽयं भीमरूपेण धार्तराष्ट्रेषु गृध्यति ॥ ०३५ ॥

एवमुक्त्वापलायन्त सर्वे भारत पार्थिवाः ।
विसञ्ज्ञावाहयन्वाहान्न च द्वौ सह धावतः ॥ ०३६ ॥

ततो बले भृशलुलिते निशामुखे ; सुपूजितो नृपवृषभैर्वृकोदरः ।
महाबलः कमलविबुद्धलोचनो ; युधिष्ठिरं नृपतिमपूजयद्बली ॥ ०३७ ॥

ततो यमौ द्रुपदविराटकेकया ; युधिष्ठिरश्चापि परां मुदं ययुः ।
वृकोदरं भृशमभिपूजयंश्च ते ; यथान्धके प्रतिनिहते हरं सुराः ॥ ०३८ ॥

ततः सुतास्तव वरुणात्मजोपमा ; रुषान्विताः सह गुरुणा महात्मना ।
वृकोदरं सरथपदातिकुञ्जरा ; युयुत्सवो भृशमभिपर्यवारयन् ॥ ०३९ ॥

ततोऽभवत्तिमिरघनैरिवावृतं ; महाभये भयदमतीव दारुणम् ।
निशामुखे बडवृकगृध्रमोदनं ; महात्मनां नृपवरयुद्धमद्भुतम् ॥ ०४० ॥

---

# अध्याय १३१

सञ्जय उवाच ॥

प्रायोपविष्टे तु हते पुत्रे सात्यकिना ततः ।
सोमदत्तो भृशं क्रुद्धः सात्यकिं वाक्यमब्रवीत् ॥ ००१ ॥

क्षत्रधर्मः पुरा दृष्टो यस्तु देवैर्महात्मभिः ।
तं त्वं सात्वत संत्यज्य दस्युधर्मे कथं रतः ॥ ००२ ॥

पराङ्मुखाय दीनाय न्यस्तशस्त्राय याचते ।
क्षत्रधर्मरतः प्राज्ञः कथं नु प्रहरेद्रणे ॥ ००३ ॥

द्वावेव किल वृष्णीनां तत्र ख्यातौ महारथौ ।
प्रद्युम्नश्च महाबाहुस्त्वं चैव युधि सात्वत ॥ ००४ ॥

कथं प्रायोपविष्टाय पार्थेन छिन्नबाहवे ।

नृशंसं पतनीयं च तादृशं कृतवानसि ॥ ००५ ॥

शपे सात्वत पुत्राभ्यामिष्टेन सुकृतेन च ।
अनतीतामिमां रात्रिं यदि त्वां वीरमानिनम् ॥ ००६ ॥

अरक्ष्यमाणं पार्थेन जिष्णुना ससुतानुजम् ।
न हन्यां निरये घोरे पतेयं वृष्णिपांसन ॥ ००७ ॥

एवमुक्त्वा सुसङ्क्रुद्धः सोमदत्तो महाबलः ।
दध्मौ शङ्खं च तारेण सिंहनादं ननाद च ॥ ००८ ॥

ततः कमलपत्राक्षः सिंहदंष्ट्रो महाबलः ।
सात्वतो भृशसङ्क्रुद्धः सोमदत्तमथाब्रवीत् ॥ ००९ ॥

हतो भूरिश्रवा वीरस्तव पुत्रो महारथः ।
शलश्चैव तथा राजन्भ्रातृव्यसनकर्शितः ॥ ०१० ॥

त्वां चाप्यद्य वधिष्यामि सपुत्रपशुबान्धवम् ।
तिष्ठेदानीं रणे यत्तः कौरवोऽसि विशेषतः ॥ ०११ ॥

यस्मिन्दानं दमः शौचमहिंसा ह्रीर्धृतिः क्षमा ।
अनपायीनि सर्वाणि नित्यं राज्ञि युधिष्ठिरे ॥ ०१२ ॥

मृदङ्गकेतोस्तस्य त्वं तेजसा निहतः पुरा ।
सकर्णसौबलः संख्ये विनाशं समुपेष्यसि ॥ ०१३ ॥

शपेऽहं कृष्णचरणैरिष्टापूर्तेन चैव ह ।
यदि त्वां ससुतं पापं न हन्यां युधि रोषितः ॥ ०१४ ॥

अपयास्यसि चेत्त्यक्त्वा ततो मुक्तो भविष्यसि ॥ ०१४ ॥

एवमाभाष्य चान्योन्यं क्रोधसंरक्तलोचनौ ।
प्रवृत्तौ शरसंपातं कर्तुं पुरुषसत्तमौ ॥ ०१५ ॥

ततो गजसहस्रेण रथानामयुतेन च ।
दुर्योधनः सोमदत्तं परिवार्य व्यवस्थितः ॥ ०१६ ॥

शकुनिश्च सुसङ्क्रुद्धः सर्वशस्त्रभृतां वरः ।
पुत्रपौत्रैः परिवृतो भ्रातृभिश्चेन्द्रविक्रमैः ॥ ०१७ ॥

स्यालस्तव महाबाहुर्वज्रसंहननो युवा ॥ ०१७ ॥

साग्रं शतसहस्रं तु हयानां तस्य धीमतः ।
सोमदत्तं महेष्वासं समन्तात्पर्यरक्षत ॥ ०१८ ॥

रक्ष्यमाणश्च बलिभिश्छादयामास सात्यकिम् ।
तं छाद्यमानं विशिखैर्दृष्ट्वा संनतपर्वभिः ॥ ०१९ ॥

धृष्टद्युम्नोऽभ्ययात्क्रुद्धः प्रगृह्य महतीं चमूम् ॥ ०१९ ॥

चण्डवाताभिसृष्टानामुदधीनामिव स्वनः ।
आसीद्राजन्बलौघानामन्योन्यमभिनिघ्नताम् ॥ ०२० ॥

विव्याध सोमदत्तस्तु सात्वतं नवभिः शरैः ।
सात्यकिर्दशभिश्चैनमवधीत्कुरुपुङ्गवम् ॥ ०२१ ॥

सोऽतिविद्धो बलवता समरे दृढधन्वना ।
रथोपस्थं समासाद्य मुमोह गतचेतनः ॥ ०२२ ॥

तं विमूढं समालक्ष्य सारथिस्त्वरयान्वितः ।
अपोवाह रणाद्वीरं सोमदत्तं महारथम् ॥ ०२३ ॥

तं विसञ्ज्ञं समालोक्य युयुधानशरार्दितम् ।
द्रौणिरभ्यद्रवत्क्रुद्धः सात्वतं रणमूर्धनि ॥ ०२४ ॥

तमापतन्तं संप्रेक्ष्य शैनेयस्य रथं प्रति ।
भैमसेनिः सुसङ्क्रुद्धः प्रत्यमित्रमवारयत् ॥ ०२५ ॥

कार्ष्णायसमयं घोरमृक्षचर्मावृतं महत् ।
युक्तं गजनिभैर्वाहैर्न हयैर्नापि वा गजैः ॥ ०२६ ॥

विक्षिप्तमष्टचक्रेण विवृताक्षेण कूजता ।
ध्वजेनोच्छ्रिततुण्डेन गृध्रराजेन राजता ॥ ०२७ ॥

लोहितार्द्रपताकं तमन्त्रमालाविभूषितम् ।
अष्टचक्रसमायुक्तमास्थाय विपुलं रथम् ॥ ०२८ ॥

शूलमुद्गरधारिण्या शैलपादपहस्तया ।
रक्षसां घोररूपाणामक्षौहिण्या समावृतः ॥ ०२९ ॥

तमुद्यतमहाचापं निशाम्य व्यथिता नृपाः ।
युगान्तकालसमये दण्डहस्तमिवान्तकम् ॥ ०३० ॥

भयार्दिता प्रचुक्षोभ पुत्रस्य तव वाहिनी ।
वायुना क्षोभितावर्ता गङ्गेवोर्ध्वतरङ्गिणी ॥ ०३१ ॥

घटोत्कचप्रयुक्तेन सिंहनादेन भीषिताः ।
प्रसुस्त्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशम् ॥ ०३२ ॥

ततोऽश्मवृष्टिरत्यर्थमासीत्तत्र समन्ततः ।
संध्याकालाधिकबलैः प्रमुक्ता राक्षसैः क्षितौ ॥ ०३३ ॥

आयसानि च चक्राणि भुशुण्ड्यः प्रासतोमराः ।

पतन्त्यविरलाः शूलाः शतघ्न्यः पट्टिशास्तथा ॥ ०३४ ॥

तदुग्रमतिरौद्रं च दृष्ट्वा युद्धं नराधिपाः ।
तनयास्तव कर्णश्च व्यथिताः प्राद्रवन्दिशः ॥ ०३५ ॥

तत्रैकोऽस्त्रबलश्लाघी द्रौणिर्मानी न विव्यथे ।
व्यधमच्च शरैर्मायां घटोत्कचविनिर्मिताम् ॥ ०३६ ॥

निहतायां तु मायायाममर्षी स घटोत्कचः ।
विससर्ज शरान्घोरांस्तेऽश्वत्थामानमाविशन् ॥ ०३७ ॥

भुजगा इव वेगेन वल्मीकं क्रोधमूर्छिताः ।
ते शरा रुधिराभ्यक्ता भित्त्वा शारद्वतीसुतम् ॥ ०३८ ॥

विविशुर्धरणीं शीघ्रा रुक्मपुङ्खाः शिलाशिताः ॥ ०३८ ॥

अश्वत्थामा तु सङ्क्रुद्धो लघुहस्तः प्रतापवान् ।
घटोत्कचमभिक्रुद्धं बिभेद दशभिः शरैः ॥ ०३९ ॥

घटोत्कचोऽतिविद्धस्तु द्रोणपुत्रेण मर्मसु ।
चक्रं शतसहस्रारमगृह्णाद्व्यथितो भृशम् ॥ ०४० ॥

क्षुरान्तं बालसूर्याभं मणिवज्रविभूषितम् ।
अश्वत्थाम्नस्तु चिक्षेप भैमसेनिर्जिघांसया ॥ ०४१ ॥

वेगेन महता गच्छद्विक्षिप्तं द्रौणिना शरैः ।
अभाग्यस्येव सङ्कल्पस्तन्मोघं न्यपतद्भुवि ॥ ०४२ ॥

घटोत्कचस्ततस्तूर्णं दृष्ट्वा चक्रं निपातितम् ।
द्रौणिं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करम् ॥ ०४३ ॥

घटोत्कचसुतः श्रीमान्भिन्नाञ्जनचयोपमः ।
रुरोध द्रौणिमायान्तं प्रभञ्जनमिवाद्रिराट् ॥ ०४४ ॥

पौत्रेण भीमसेनस्य शरैः सोऽञ्जनपर्वणा ।
बभौ मेघेन धाराभिर्गिरिर्मेरुरिवार्दितः ॥ ०४५ ॥

अश्वत्थामा त्वसंभ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः ।
ध्वजमेकेन बाणेन चिच्छेदाञ्जनपर्वणः ॥ ०४६ ॥

द्वाभ्यां तु रथयन्तारं त्रिभिश्चास्य त्रिवेणुकम् ।
धनुरेकेन चिच्छेद चतुर्भिश्चतुरो हयान् ॥ ०४७ ॥

विरथस्योद्यतं हस्ताद्धेमबिन्दुभिराचितम् ।
विशिखेन सुतीक्ष्णेन खड्गमस्य द्विधाकरोत् ॥ ०४८ ॥

गदा हेमाङ्गदा राजंस्तूर्णं हैडिम्बसूनुना ।
भ्राम्योत्क्षिप्ता शरैः सापि द्रौणिनाभ्याहतापतत् ॥ ०४९ ॥

ततोऽन्तरिक्षमुत्पत्य कालमेघ इवोन्नदन् ।
ववर्षाञ्जनपर्वा स द्रुमवर्षं नभस्तलात् ॥ ०५० ॥

ततो मायाधरं द्रौणिर्घटोत्कचसुतं दिवि ।
मार्गणैरभिविव्याध घनं सूर्य इवांशुभिः ॥ ०५१ ॥

सोऽवतीर्य पुनस्तस्थौ रथे हेमपरिष्कृते ।
महीधर इवात्युच्चः श्रीमानञ्जनपर्वतः ॥ ०५२ ॥

तमयस्मयवर्माणं द्रौणिर्भीमात्मजात्मजम् ।
जघानाञ्जनपर्वाणं महेश्वर इवान्धकम् ॥ ०५३ ॥

अथ दृष्ट्वा हतं पुत्रमश्वत्थाम्ना महाबलम् ।

द्रौणेः सकाशमभ्येत्य रोषात्प्रचलिताङ्गदः ॥ ०५४ ॥

प्राह वाक्यमसंभ्रान्तो वीरं शारद्वतीसुतम् ।
दहन्तं पाण्डवानीकं वनमग्निमिवोद्धतम् ॥ ०५५ ॥

तिष्ठ तिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ।
त्वामद्य निहनिष्यामि क्रौञ्चमग्निसुतो यथा ॥ ०५६ ॥

अश्वत्थामोवाच ॥

गच्छ वत्स सहान्यैस्त्वं युध्यस्वामरविक्रम ।
न हि पुत्रेण हैडिम्बे पिता न्याय्यं प्रबाधितुम् ॥ ०५७ ॥

कामं खलु न मे रोषो हैडिम्बे विद्यते त्वयि ।
किं तु रोषान्वितो जन्तुर्हन्यादात्मानमप्युत ॥ ०५८ ॥

सञ्जय उवाच ॥

श्रुत्वैतत्क्रोधताम्राक्षः पुत्रशोकसमन्वितः ।
अश्वत्थामानमायस्तो भैमसेनिरभाषत ॥ ०५९ ॥

किमहं कातरो द्रौणे पृथग्जन इवाहवे ।
भीमात्खल्वहमुत्पन्नः कुरूणां विपुले कुले ॥ ०६० ॥

पाण्डवानामहं पुत्रः समरेष्वनिवर्तिनाम् ।
रक्षसामधिराजोऽहं दशग्रीवसमो बले ॥ ०६१ ॥

तिष्ठ तिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ।
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ ०६२ ॥

इत्युक्त्वा रोषताम्राक्षो राक्षसः सुमहाबलः ।

द्रौणिमभ्यद्रवत्क्रुद्धो गजेन्द्रमिव केसरी ॥ ०६३ ॥

रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः ।
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः ॥ ०६४ ॥

शरवृष्टिं शरैर्द्रौणिरप्राप्तां तां व्यशातयत् ।
ततोऽन्तरिक्षे बाणानां सङ्ग्रामोऽन्य इवाभवत् ॥ ०६५ ॥

अथास्त्रसंघर्षकृतैर्विस्फुलिङ्गैः समाबभौ ।
विभावरीमुखे व्योम खद्योतैरिव चित्रितम् ॥ ०६६ ॥

निशाम्य निहतां मायां द्रौणिना रणमानिना ।
घटोत्कचस्ततो मायां ससर्जान्तर्हितः पुनः ॥ ०६७ ॥

सोऽभवद्गिरिरत्युच्चः शिखरैस्तरुसङ्कटैः ।
शूलप्रासासिमुसलजलप्रस्रवणो महान् ॥ ०६८ ॥

तमञ्जनचयप्रख्यं द्रौणिर्दृष्ट्वा महीधरम् ।
प्रपतद्भिश्च बहुभिः शस्त्रसंघैर्न चुक्षुभे ॥ ०६९ ॥

ततः स्मयन्निव द्रौणिर्वज्रमस्त्रमुदीरयत् ।
स तेनास्त्रेण शैलेन्द्रः क्षिप्तः क्षिप्रमनश्यत ॥ ०७० ॥

ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि ।
अश्मवृष्टिभिरत्युग्रो द्रौणिमाच्छादयद्रणे ॥ ०७१ ॥

अथ संधाय वायव्यमस्त्रमस्त्रविदां वरः ।
व्यधमद्द्रोणतनयो नीलमेघं समुत्थितम् ॥ ०७२ ॥

स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्वतः ।
शतं रथसहस्राणां जघान द्विपदां वरः ॥ ०७३ ॥

स दृष्ट्वा पुनरायान्तं रथेनायतकार्मुकम् ।
घटोत्कचमसंभ्रान्तं राक्षसैर्बहुभिर्वृतम्  ॥ ०७४  ॥

सिंहशार्दूलसदृशैर्मत्तद्विरदविक्रमैः ।
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैरपि  ॥ ०७५  ॥

विवृतास्यशिरोग्रीवैर्हैडिम्बानुचरैः सह ।
पौलस्त्यैर्यातुधानैश्च तामसैश्चोग्रविक्रमैः  ॥ ०७६  ॥

नानाशस्त्रधरैर्वीरैर्नानाकवचभूषणैः ।
महाबलैर्भीमरवैः संरम्भोद्वृत्तलोचनैः  ॥ ०७७  ॥

उपस्थितैस्ततो युद्धे राक्षसैर्युद्धदुर्मदैः ।
विषण्णमभिसंप्रेक्ष्य पुत्रं ते द्रौणिरब्रवीत्  ॥ ०७८  ॥

तिष्ठ दुर्योधनाद्य त्वं न कार्यः संभ्रमस्त्वया ।
सहैभिर्भ्रातृभिर्वीरैः पार्थिवैश्चेन्द्रविक्रमैः  ॥ ०७९  ॥

निहनिष्याम्यमित्रांस्ते न तवास्ति पराजयः ।
सत्यं ते प्रतिजानामि पर्याश्वासय वाहिनीम्  ॥ ०८०  ॥

दुर्योधन उवाच  ॥

न त्वेतदद्भुतं मन्ये यत्ते महदिदं मनः ।
अस्मासु च परा भक्तिस्तव गौतमिनन्दन  ॥ ०८१  ॥

सञ्जय उवाच  ॥

अश्वत्थामानमुक्त्वैवं ततः सौबलमब्रवीत् ।
वृतः शतसहस्रेण रथानां रणशोभिनाम्  ॥ ०८२  ॥

षष्ट्या गजसहस्त्रैश्च प्रयाहि त्वं धनञ्जयम् ।
कर्णश्च वृषसेनश्च कृपो नीलस्तथैव च ॥ ०८३ ॥

उदीच्याः कृतवर्मा च पुरुमित्रः श्रुतार्पणः ।
दुःशासनो निकुम्भश्च कुण्डभेदी उरुक्रमः ॥ ०८४ ॥

पुरञ्जयो दृढरथः पताकी हेमपङ्कजः ।
शल्यारुणीन्द्रसेनाश्च सञ्जयो विजयो जयः ॥ ०८५ ॥

कमलाक्षः पुरुः क्राथी जयवर्मा सुदर्शनः ।
एते त्वामनुयास्यन्ति पत्तीनामयुतानि षट् ॥ ०८६ ॥

जहि भीमं यमौ चोभौ धर्मराजं च मातुल ।
असुरानिव देवेन्द्रो जयाशा मे त्वयि स्थिता ॥ ०८७ ॥

दारितान्द्रौणिना बाणैर्भृशं विक्षतविग्रहान् ।
जहि मातुल कौन्तेयानसुरानिव पावकिः ॥ ०८८ ॥

एवमुक्तो ययौ शीघ्रं पुत्रेण तव सौबलः ।
पिप्रीषुस्ते सुतान्राजन्दिधक्षुश्चैव पाण्डवान् ॥ ०८९ ॥

अथ प्रववृते युद्धं द्रौणिराक्षसयोर्मृधे ।
विभावर्यां सुतुमुलं शक्रप्रह्लादयोरिव ॥ ०९० ॥

ततो घटोत्कचो बाणैर्दशभिर्गौतमीसुतम् ।
जघानोरसि सङ्क्रुद्धो विषाग्निप्रतिमैर्दृढैः ॥ ०९१ ॥

स तैरभ्याहतो गाढं शरैर्भीमसुतेरितैः ।
चचाल रथमध्यस्थो वातोद्धूत इव द्रुमः ॥ ०९२ ॥

भूयश्चाञ्जलिकेनास्य मार्गणेन महाप्रभम् ।
द्रौणिहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः ॥ ०९३ ॥

ततोऽन्यद्द्रौणिरादाय धनुर्भारसहं महत् ।
ववर्ष विशिखांस्तीक्ष्णान्वारिधारा इवाम्बुदः ॥ ०९४ ॥

ततः शारद्वतीपुत्रः प्रेषयामास भारत ।
सुवर्णपुङ्खाञ्शत्रुघ्नान्खचरान्खचरान्प्रति ॥ ०९५ ॥

तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ।
सिंहैरिव बभौ मत्तं गजानामाकुलं कुलम् ॥ ०९६ ॥

विधम्य राक्षसान्बाणैः साश्वसूतरथान्विभुः ।
ददाह भगवान्वह्निर्भूतानीव युगक्षये ॥ ०९७ ॥

स दग्ध्वाक्षौहिणीं बाणैर्नैर्ऋतान्रुरुचे भृशम् ।
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ॥ ०९८ ॥

युगान्ते सर्वभूतानि दग्ध्वेव वसुरुल्बणः ।
रराज जयतां श्रेष्ठो द्रोणपुत्रस्तवाहितान् ॥ ०९९ ॥

तेषु राजसहस्रेषु पाण्डवेयेषु भारत ।
नैनं निरीक्षितुं कश्चिच्छक्नोति द्रौणिमाहवे ॥ १०० ॥

ऋते घटोत्कचाद्वीराद्राक्षसेन्द्रान्महाबलात् ॥ १०० ॥

स पुनर्भरतश्रेष्ठ क्रोधाद्रक्तान्तलोचनः ।
तलं तलेन संहत्य संदश्य दशनच्छदम् ॥ १०१ ॥

स्वसूतमब्रवीत्क्रुद्धो द्रोणपुत्राय मां वह ॥ १०१ ॥

स ययौ घोररूपेण तेन जैत्रपताकिना ।
द्वैरथं द्रोणपुत्रेण पुनरप्यरिसूदनः ॥ १०२ ॥

स चिक्षेप ततः क्रुद्धो द्रोणपुत्राय राक्षसः ।
अष्टचक्रां महारौद्रामशनीं रुद्रनिर्मिताम् ॥ १०३ ॥

तामवप्लुत्य जग्राह द्रौणिर्न्यस्य रथे धनुः ।
चिक्षेप चैनां तस्यैव स्यन्दनात्सोऽवपुप्लुवे ॥ १०४ ॥

साश्वसूतध्वजं वाहं भस्म कृत्वा महाप्रभा ।
विवेश वसुधां भित्त्वा साशनिर्भृशदारुणा ॥ १०५ ॥

द्रौणेस्तत्कर्म दृष्ट्वा तु सर्वभूतान्यपूजयन् ।
यदवप्लुत्य जग्राह घोरां शङ्करनिर्मिताम् ॥ १०६ ॥

धृष्टद्युम्नरथं गत्वा भैमसेनिस्ततो नृप ।
मुमोच निशितान्बाणान्पुनर्द्रौणेर्महोरसि ॥ १०७ ॥

धृष्टद्युम्नोऽप्यसंभ्रान्तो मुमोचाशीविषोपमान् ।
सुवर्णपुङ्खान्विशिखान्द्रोणपुत्रस्य वक्षसि ॥ १०८ ॥

ततो मुमोच नाराचान्द्रौणिस्ताभ्यां सहस्रशः ।
तावप्यग्निशिखाप्रख्यैर्जघ्नतुस्तस्य मार्गणान् ॥ १०९ ॥

अतितीव्रमभूद्युद्धं तयोः पुरुषसिंहयोः ।
योधानां प्रीतिजननं द्रौणेश्च भरतर्षभ ॥ ११० ॥

ततो रथसहस्रेण द्विरदानां शतैस्त्रिभिः ।
षड्भिर्वाजिसहस्रैश्च भीमस्तं देशमाव्रजत् ॥ १११ ॥

ततो भीमात्मजं रक्षो धृष्टद्युम्नं च सानुगम् ।

अयोधयत धर्मात्मा द्रौणिरक्लिष्टकर्मकृत् ॥ ११२ ॥

तत्राद्भुततमं द्रौणिर्दर्शयामास विक्रमम् ।
अशक्यं कर्तुमन्येन सर्वभूतेषु भारत ॥ ११३ ॥

निमेषान्तरमात्रेण साश्वसूतरथद्विपाम् ।
अक्षौहिणीं राक्षसानां शितैर्बाणैरशातयत् ॥ ११४ ॥

मिषतो भीमसेनस्य हैडिम्बेः पार्षतस्य च ।
यमयोर्धर्मपुत्रस्य विजयस्याच्युतस्य च ॥ ११५ ॥

प्रगाढमञ्जोगतिभिर्नाराचैरभिताडिताः ।
निपेतुर्द्विरदा भूमौ द्विश्रृङ्गा इव पर्वताः ॥ ११६ ॥

निकृत्तैर्हस्तिहस्तैश्च विचलद्भिरितस्ततः ।
रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः ॥ ११७ ॥

क्षिप्तैः काञ्चनदण्डैश्च नृपच्छत्रैः क्षितिर्बभौ ।
द्यौरिवोदितचन्द्रार्का ग्रहाकीर्णा युगक्षये ॥ ११८ ॥

प्रवृद्धध्वजमण्डूकां भेरीविस्तीर्णकच्छपाम् ।
छत्रहंसावलीजुष्टां फेनचामरमालिनीम् ॥ ११९ ॥

कङ्कगृध्रमहाग्राहां नैकायुधझषाकुलाम् ।
रथक्षिप्तमहावप्रां पताकारुचिरद्रुमाम् ॥ १२० ॥

शरमीनां महारौद्रां प्रासशक्त्युग्रडुण्डुभाम् ।
मज्जामांसमहापङ्कां कबन्धावर्जितोडुपाम् ॥ १२१ ॥

केशशैवलकल्माषां भीरूणां कश्मलावहाम् ।
नागेन्द्रहययोधानां शरीरव्ययसंभवाम् ॥ १२२ ॥

शोणितौघमहावेगां द्रौणिः प्रावर्तयन्नदीम् ।
योधार्तरवनिर्घोषां क्षतजोर्मिसमाकुलाम् ॥ १२३ ॥

प्रायादतिमहाघोरं यमक्षयमहोदधिम् ।
निहत्य राक्षसान्बाणैर्द्रौणिर्हैडिम्बमार्दयत् ॥ १२४ ॥

पुनरप्यतिसङ्क्रुद्धः सवृकोदरपार्षतान् ।
स नाराचगणैः पार्थान्द्रौणिर्विद्ध्वा महाबलः ॥ १२५ ॥

जघान सुरथं नाम द्रुपदस्य सुतं विभुः ।
पुनः श्रुतञ्जयं नाम सुरथस्यानुजं रणे ॥ १२६ ॥

बलानीकं जयानीकं जयाश्वं चाभिजघ्निवान् ।
श्रुताह्वयं च राजेन्द्र द्रौणिर्निन्ये यमक्षयम् ॥ १२७ ॥

त्रिभिश्चान्यैः शरैस्तीक्ष्णैः सुपुङ्खै रुक्ममालिनम् ।
शत्रुञ्जयं च बलिनं शक्रलोकं निनाय ह ॥ १२८ ॥

जघान स पृषध्रं च चन्द्रदेवं च मानिनम् ।
कुन्तिभोजसुतांश्चाजौ दशभिर्दश जघ्निवान् ॥ १२९ ॥

अश्वत्थामा सुसङ्क्रुद्धः संधायोग्रमजिह्मगम् ।
मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमम् ॥ १३० ॥

यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचम् ॥ १३० ॥

स भित्त्वा हृदयं तस्य राक्षसस्य महाशरः ।
विवेश वसुधां शीघ्रं सपुङ्खः पृथिवीपते ॥ १३१ ॥

तं हतं पतितं ज्ञात्वा धृष्टद्युम्नो महारथः ।

द्रौणेः सकाशाद्राजेन्द्र अपनिन्ये रथान्तरम् ॥ १३२ ॥

तथा पराङ्मुखरथं सैन्यं यौधिष्ठिरं नृप ।
पराजित्य रणे वीरो द्रोणपुत्रो ननाद ह ॥ १३३ ॥

पूजितः सर्वभूतैश्च तव पुत्रैश्च भारत ॥ १३३ ॥

अथ शरशतभिन्नकृत्तदेहै ;र्हतपतितैः क्षणदाचरैः समन्तात् ।
निधनमुपगतैर्मही कृताभू ;द्गिरिशिखरैरिव दुर्गमातिरौद्रा ॥ १३४ ॥

तं सिद्धगन्धर्वपिशाचसंघा ; नागाः सुपर्णाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च द्रौणि ;मपूजयन्नप्सरसः सुराश्च ॥ १३५ ॥

---

# अध्याय १३२

सञ्जय उवाच ॥

द्रुपदस्यात्मजान्दृष्ट्वा कुन्तिभोजसुतांस्तथा ।
द्रोणपुत्रेण निहतान्राक्षसांश्च सहस्रशः ॥ ००१ ॥

युधिष्ठिरो भीमसेनो धृष्टद्युम्नश्च पार्षतः ।
युयुधानश्च संयत्ता युद्धायैव मनो दधुः ॥ ००२ ॥

सोमदत्तः पुनः क्रुद्धो दृष्ट्वा सात्यकिमाहवे ।
महता शरवर्षेण छादयामास सर्वतः ॥ ००३ ॥

ततः समभवद्युद्धमतीव भयवर्धनम् ।

त्वदीयानां परेषां च घोरं विजयकाङ्क्षिणाम्  ॥ ००४  ॥

दशभिः सात्वतस्यार्थे भीमो विव्याध कौरवम् ।
सोमदत्तोऽपि तं वीरं शतेन प्रत्यविध्यत  ॥ ००५  ॥

सात्वतस्त्वभिसङ्क्रुद्धः पुत्राधिभिरभिप्लुतम् ।
वृद्धमृद्धं गुणैः सर्वैर्ययातिमिव नाहुषम्  ॥ ००६  ॥

विव्याध दशभिस्तीक्ष्णैः शरैर्वज्रनिपातिभिः ।
शक्त्या चैनमथाहत्य पुनर्विव्याध सप्तभिः  ॥ ००७  ॥

ततस्तु सात्यकेरर्थे भीमसेनो नवं दृढम् ।
मुमोच परिघं घोरं सोमदत्तस्य मूर्धनि  ॥ ००८  ॥

सात्यकिश्चाग्निसङ्काशं मुमोच शरमुत्तमम् ।
सोमदत्तोरसि क्रुद्धः सुपत्रं निशितं युधि  ॥ ००९  ॥

युगपत्पेततुरथ घोरौ परिघमार्गणौ ।
शरीरे सोमदत्तस्य स पपात महारथः  ॥ ०१०  ॥

व्यामोहिते तु तनये बाह्लीकः समुपाद्रवत् ।
विसृजञ्शरवर्षाणि कालवर्षीव तोयदः  ॥ ०११  ॥

भीमोऽथ सात्वतस्यार्थे बाह्लीकं नवभिः शरैः ।
पीडयन्वै महात्मानं विव्याध रणमूर्धनि  ॥ ०१२  ॥

प्रातिपीयस्तु सङ्क्रुद्धः शक्तिं भीमस्य वक्षसि ।
निचखान महाबाहुः पुरंदर इवाशनिम्  ॥ ०१३  ॥

स तयाभिहतो भीमश्चकम्पे च मुमोह च ।
प्राप्य चेतश्च बलवान्गदामस्मै ससर्ज ह  ॥ ०१४  ॥

सा पाण्डवेन प्रहिता बाह्लीकस्य शिरोऽहरत् ।
स पपात हतः पृथ्व्यां वज्राहत इवाद्रिराट्  ॥ ०१५  ॥

तस्मिन्विनिहते वीरे बाह्लीके पुरुषर्षभे ।
पुत्रास्तेऽभ्यर्दयन्भीमं दश दाशरथेः समाः  ॥ ०१६  ॥

नाराचैर्दशभिर्भीमस्तान्निहत्य तवात्मजान् ।
कर्णस्य दयितं पुत्रं वृषसेनमवाकिरत्  ॥ ०१७  ॥

ततो वृषरथो नाम भ्राता कर्णस्य विश्रुतः ।
जघान भीमं नाराचैस्तमप्यभ्यवधीद्बली  ॥ ०१८  ॥

ततः सप्त रथान्वीरः स्यालानां तव भारत ।
निहत्य भीमो नाराचैः शतचन्द्रमपोथयत्  ॥ ०१९  ॥

अमर्षयन्तो निहतं शतचन्द्रं महारथम् ।
शकुनेर्भ्रातरो वीरा गजाक्षः शरभो विभुः  ॥ ०२०  ॥

अभिद्रुत्य शरैस्तीक्ष्णैर्भीमसेनमताडयन्  ॥ ०२०  ॥

स तुद्यमानो नाराचैर्वृष्टिवेगैरिवर्षभः ।
जघान पञ्चभिर्बाणैः पञ्चैवातिबलो रथान्  ॥ ०२१  ॥

तान्दृष्ट्वा निहतान्वीरान्विचेलुर्नृपसत्तमाः  ॥ ०२१  ॥

ततो युधिष्ठिरः क्रुद्धस्तवानीकमशातयत् ।
मिषतः कुम्भयोनेश्च पुत्राणां च तवानघ  ॥ ०२२  ॥

अम्बष्ठान्मालवाञ्शूरांस्त्रिगर्तान्सशिबीनपि ।
प्राहिणोन्मृत्युलोकाय गणान्युद्धे युधिष्ठिरः  ॥ ०२३  ॥

अभीषाहाञ्शूरसेनान्बाह्लीकान्सवसातिकान् ।
निकृत्य पृथिवीं राजा चक्रे शोणितकर्दमाम्  ॥ ०२४  ॥

यौधेयारट्टराजन्यमद्रकाणां गणान्युधि ।
प्राहिणोन्मृत्युलोकाय शूरान्बाणैर्युधिष्ठिरः  ॥ ०२५  ॥

हताहरत गृह्णीत विध्यत व्यवकृन्तत ।
इत्यासीत्तुमुलः शब्दो युधिष्ठिररथं प्रति  ॥ ०२६  ॥

सैन्यानि द्रावयन्तं तं द्रोणो दृष्ट्वा युधिष्ठिरम् ।
चोदितस्तव पुत्रेण सायकैरभ्यवाकिरत्  ॥ ०२७  ॥

द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण पार्थिवम् ।
विव्याध सोऽस्य तद्दिव्यमस्त्रमस्त्रेण जघ्निवान्  ॥ ०२८  ॥

तस्मिन्विनिहते चास्त्रे भारद्वाजो युधिष्ठिरे ।
वारुणं याम्यमाग्नेयं त्वाष्ट्रं सावित्रमेव च  ॥ ०२९  ॥

चिक्षेप परमक्रुद्धो जिघांसुः पाण्डुनन्दनम्  ॥ ०२९  ॥

क्षिप्तानि क्षिप्यमाणानि तानि चास्त्राणि धर्मजः ।
जघानास्त्रैर्महाबाहुः कुम्भयोनेरवित्रसन्  ॥ ०३०  ॥

सत्यां चिकीर्षमाणस्तु प्रतिज्ञां कुम्भसंभवः ।
प्रादुश्चक्रेऽस्त्रमैन्द्रं वै प्राजापत्यं च भारत  ॥ ०३१  ॥

जिघांसुर्धर्मतनयं तव पुत्रहिते रतः  ॥ ०३१  ॥

पतिः कुरूणां गजसिंहगामी ; विशालवक्षाः पृथुलोहिताक्षः ।
प्रादुश्चकारास्त्रमहीनतेजा ; माहेन्द्रमन्यत्स जघान तेऽस्त्रे  ॥ ०३२  ॥

विहन्यमानेष्वस्त्रेषु द्रोणः क्रोधसमन्वितः ।
युधिष्ठिरवधप्रेप्सुर्ब्राह्ममस्त्रमुदैरयत् ॥ ०३३ ॥

ततो नाज्ञासिषं किञ्चिद्घोरेण तमसावृते ।
सर्वभूतानि च परं त्रासं जग्मुर्महीपते ॥ ०३४ ॥

ब्रह्मास्त्रमुद्यतं दृष्ट्वा कुन्तीपुत्रो युधिष्ठिरः ।
ब्रह्मास्त्रेणैव राजेन्द्र तदस्त्रं प्रत्यवारयत् ॥ ०३५ ॥

ततः सैनिकमुख्यास्ते प्रशशंसुर्नरर्षभौ ।
द्रोणपार्थौ महेष्वासौ सर्वयुद्धविशारदौ ॥ ०३६ ॥

ततः प्रमुच्य कौन्तेयं द्रोणो द्रुपदवाहिनीम् ।
व्यधमद्रोषताम्राक्षो वायव्यास्त्रेण भारत ॥ ०३७ ॥

ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात् ।
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ॥ ०३८ ॥

ततः किरीटी भीमश्च सहसा संन्यवर्तताम् ।
महद्भ्यां रथवंशाभ्यां परिगृह्य बलं तव ॥ ०३९ ॥

बीभत्सुर्दक्षिणं पार्श्वमुत्तरं तु वृकोदरः ।
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ॥ ०४० ॥

तौ तदा सृञ्जयाश्चैव पाञ्चालाश्च महौजसः ।
अन्वगच्छन्महाराज मत्स्याश्च सह सात्वतैः ॥ ०४१ ॥

ततः सा भारती सेना वध्यमाना किरीटिना ।
द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च ॥ ०४२ ॥

नाशक्यन्त महाराज योधा वारयितुं तदा ॥ ०४२ ॥

---

# अध्याय १३३

सञ्जय उवाच ॥

उदीर्यमाणं तद्दृष्ट्वा पाण्डवानां महद्बलम् ।
अविषह्यं च मन्वानः कर्णं दुर्योधनोऽब्रवीत् ॥ ००१ ॥

अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल ।
त्रायस्व समरे कर्ण सर्वान्योधान्महाबल ॥ ००२ ॥

पाञ्चालैर्मत्स्यकैकेयैः पाण्डवैश्च महारथैः ।
वृतान्समन्तात्सङ्क्रुद्धैर्निःश्वसद्भिरिवोरगैः ॥ ००३ ॥

एते नदन्ति संहृष्टाः पाण्डवा जितकाशिनः ।
शक्रोपमाश्च बहवः पाञ्चालानां रथव्रजाः ॥ ००४ ॥

कर्ण उवाच ॥

परित्रातुमिह प्राप्तो यदि पार्थं पुरंदरः ।
तमप्याशु पराजित्य ततो हन्तास्मि पाण्डवम् ॥ ००५ ॥

सत्यं ते प्रतिजानामि समाश्वसिहि भारत ।
हन्तास्मि पाण्डुतनयान्पाञ्चालांश्च समागतान् ॥ ००६ ॥

जयं ते प्रतिजानामि वासवस्येव पावकिः ।
प्रियं तव मया कार्यमिति जीवामि पार्थिव ॥ ००७ ॥

सर्वेषामेव पार्थानां फल्गुनो बलवत्तरः ।
तस्यामोघां विमोक्ष्यामि शक्तिं शक्रविनिर्मिताम् ॥ ००८ ॥

तस्मिन्हते महेष्वासे भ्रातरस्तस्य मानद ।
तव वश्या भविष्यन्ति वनं यास्यन्ति वा पुनः ॥ ००९ ॥

मयि जीवति कौरव्य विषादं मा कृथाः क्वचित् ।
अहं जेष्यामि समरे सहितान्सर्वपाण्डवान् ॥ ०१० ॥

पाञ्चालान्केकयांश्चैव वृष्णींश्चापि समागतान् ।
बाणौघैः शकलीकृत्य तव दास्यामि मेदिनीम् ॥ ०११ ॥

सञ्जय उवाच ॥

एवं ब्रुवाणं कर्णं तु कृपः शारद्वतोऽब्रवीत् ।
स्मयन्निव महाबाहुः सूतपुत्रमिदं वचः ॥ ०१२ ॥

शोभनं शोभनं कर्ण सनाथः कुरुपुङ्गवः ।
त्वया नाथेन राधेय वचसा यदि सिध्यति ॥ ०१३ ॥

बहुशः कत्थसे कर्ण कौरव्यस्य समीपतः ।
न तु ते विक्रमः कश्चिद्दृश्यते बलमेव वा ॥ ०१४ ॥

समागमः पाण्डुसुतैर्दृष्टस्ते बहुशो युधि ।
सर्वत्र निर्जितश्चासि पाण्डवैः सूतनन्दन ॥ ०१५ ॥

ह्रियमाणे तदा कर्ण गन्धर्वैर्धृतराष्ट्रजे ।
तदायुध्यन्त सैन्यानि त्वमेकस्तु पलायथाः ॥ ०१६ ॥

विराटनगरे चापि समेताः सर्वकौरवाः ।

पार्थेन निर्जिता युद्धे त्वं च कर्ण सहानुजः ॥ ०१७ ॥

एकस्याप्यसमर्थस्त्वं फल्गुनस्य रणाजिरे ।
कथमुत्सहसे जेतुं सकृष्णान्सर्वपाण्डवान् ॥ ०१८ ॥

अब्रुवन्कर्ण युध्यस्व बहु कत्थसि सूतज ।
अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुषव्रतम् ॥ ०१९ ॥

गर्जित्वा सूतपुत्र त्वं शारदाभ्रमिवाजलम् ।
निष्फलो दृश्यसे कर्ण तच्च राजा न बुध्यते ॥ ०२० ॥

तावद्गर्जसि राधेय यावत्पार्थं न पश्यसि ।
पुरा पार्थं हि ते दृष्ट्वा दुर्लभं गर्जितं भवेत् ॥ ०२१ ॥

त्वमनासाद्य तान्बाणान्फल्गुनस्य विगर्जसि ।
पार्थसायकविद्धस्य दुर्लभं गर्जितं भवेत् ॥ ०२२ ॥

बाहुभिः क्षत्रियाः शूरा वाग्भिः शूरा द्विजातयः ।
धनुषा फल्गुनः शूरः कर्णः शूरो मनोरथैः ॥ ०२३ ॥

एवं परुषितस्तेन तदा शारद्वतेन सः ।
कर्णः प्रहरतां श्रेष्ठः कृपं वाक्यमथाब्रवीत् ॥ ०२४ ॥

शूरा गर्जन्ति सततं प्रावृषीव बलाहकाः ।
फलं चाशु प्रयच्छन्ति बीजमुप्तमृताविव ॥ ०२५ ॥

दोषमत्र न पश्यामि शूराणां रणमूर्धनि ।
तत्तद्विकत्थमानानां भारं चोद्वहतां मृधे ॥ ०२६ ॥

यं भारं पुरुषो वोढुं मनसा हि व्यवस्यति ।
दैवमस्य ध्रुवं तत्र साहाय्यायोपपद्यते ॥ ०२७ ॥

व्यवसायद्वितीयोऽहं मनसा भारमुद्वहन् ।
गर्जामि यद्यहं विप्र तव किं तत्र नश्यति ॥ ०२८ ॥

वृथा शूरा न गर्जन्ति सजला इव तोयदाः ।
सामर्थ्यमात्मनो ज्ञात्वा ततो गर्जन्ति पण्डिताः ॥ ०२९ ॥

सोऽहमद्य रणे यत्तः सहितौ कृष्णपाण्डवौ ।
उत्सहे तरसा जेतुं ततो गर्जामि गौतम ॥ ०३० ॥

पश्य त्वं गर्जितस्यास्य फलं मे विप्र सानुगः ।
हत्वा पाण्डुसुतानाजौ सहकृष्णान्ससात्वतान् ॥ ०३१ ॥

दुर्योधनाय दास्यामि पृथिवीं हतकण्टकाम् ॥ ०३१ ॥

कृप उवाच ॥

मनोरथप्रलापो मे न ग्राह्यस्तव सूतज ।
यदा क्षिपसि वै कृष्णौ धर्मराजं च पाण्डवम् ॥ ०३२ ॥

ध्रुवस्तत्र जयः कर्ण यत्र युद्धविशारदौ ।
देवगन्धर्वयक्षाणां मनुष्योरगरक्षसाम् ॥ ०३३ ॥

दंशितानामपि रणे अजेयौ कृष्णपाण्डवौ ॥ ०३३ ॥

ब्रह्मण्यः सत्यवाग्दान्तो गुरुदैवतपूजकः ।
नित्यं धर्मरतश्चैव कृतास्त्रश्च विशेषतः ॥ ०३४ ॥

धृतिमांश्च कृतज्ञश्च धर्मपुत्रो युधिष्ठिरः ॥ ०३४ ॥

भ्रातरश्चास्य बलिनः सर्वास्त्रेषु कृतश्रमाः ।

गुरुवृत्तिरताः प्राज्ञा धर्मनित्या यशस्विनः ॥ ०३५ ॥

संबन्धिनश्चेन्द्रवीर्याः स्वनुरक्ताः प्रहारिणः ।
धृष्टद्युम्नः शिखण्डी च दौर्मुखिर्जनमेजयः ॥ ०३६ ॥

चन्द्रसेनो भद्रसेनः कीर्तिधर्मा ध्रुवो धरः ।
वसुचन्द्रो दामचन्द्रः सिंहचन्द्रः सुवेधनः ॥ ०३७ ॥

द्रुपदस्य तथा पुत्रा द्रुपदश्च महास्त्रवित् ।
येषामर्थाय संयत्तो मत्स्यराजः सहानुगः ॥ ०३८ ॥

शतानीकः सुदर्शनः श्रुतानीकः श्रुतध्वजः ।
बलानीको जयानीको जयाश्वो रथवाहनः ॥ ०३९ ॥

चन्द्रोदयः कामरथो विराटभ्रातरः शुभाः ।
यमौ च द्रौपदेयाश्च राक्षसश्च घटोत्कचः ॥ ०४० ॥

येषामर्थाय युध्यन्ते न तेषां विद्यते क्षयः ॥ ०४० ॥

कामं खलु जगत्सर्वं सदेवासुरमानवम् ।
सयक्षराक्षसगणं सभूतभुजगद्विपम् ॥ ०४१ ॥

निःशेषमस्त्रवीर्येण कुर्यातां भीमफल्गुनौ ॥ ०४१ ॥

युधिष्ठिरश्च पृथिवीं निर्दहेद्घोरचक्षुषा ।
अप्रमेयबलः शौरिर्येषामर्थे च दंशितः ॥ ०४२ ॥

कथं तान्संयुगे कर्ण जेतुमुत्सहसे परान् ॥ ०४२ ॥

महानपनयस्त्वेष तव नित्यं हि सूतज ।
यस्त्वमुत्सहसे योद्धुं समरे शौरिणा सह ॥ ०४३ ॥

सञ्जय उवाच ॥

एवमुक्तस्तु राधेयः प्रहसन्भरतर्षभ ।
अब्रवीच्च तदा कर्णो गुरुं शारद्वतं कृपम् ॥ ०४४ ॥

सत्यमुक्तं त्वया ब्रह्मन्पाण्डवान्प्रति यद्वचः ।
एते चान्ये च बहवो गुणाः पाण्डुसुतेषु वै ॥ ०४५ ॥

अजय्याश्च रणे पार्था देवैरपि सवासवैः ।
सदैत्ययक्षगन्धर्वपिशाचोरगराक्षसैः ॥ ०४६ ॥

तथापि पार्थाञ्जेष्यामि शक्त्या वासवदत्तया ॥ ०४६ ॥

ममाप्यमोघा दत्तेयं शक्तिः शक्रेण वै द्विज ।
एतया निहनिष्यामि सव्यसाचिनमाहवे ॥ ०४७ ॥

हते तु पाण्डवे कृष्णो भ्रातरश्चास्य सोदराः ।
अनर्जुना न शक्ष्यन्ति महीं भोक्तुं कथञ्चन ॥ ०४८ ॥

तेषु नष्टेषु सर्वेषु पृथिवीयं ससागरा ।
अयत्नात्कौरवेयस्य वशे स्थास्यति गौतम ॥ ०४९ ॥

सुनीतैरिह सर्वार्थाः सिध्यन्ते नात्र संशयः ।
एतमर्थमहं ज्ञात्वा ततो गर्जामि गौतम ॥ ०५० ॥

त्वं तु वृद्धश्च विप्रश्च अशक्तश्चापि संयुगे ।
कृतस्नेहश्च पार्थेषु मोहान्मामवमन्यसे ॥ ०५१ ॥

यद्येवं वक्ष्यसे भूयो मामप्रियमिह द्विज ।
ततस्ते खड्गमुद्यम्य जिह्वां छेत्स्यामि दुर्मते ॥ ०५२ ॥

यच्चापि पाण्डवान्विप्र स्तोतुमिच्छसि संयुगे ।
भीषयन्सर्वसैन्यानि कौरवेयाणि दुर्मते ॥ ०५३ ॥

अत्रापि शृणु मे वाक्यं यथावद्वदतो द्विज ॥ ०५३ ॥

दुर्योधनश्च द्रोणश्च शकुनिर्दुर्मुखो जयः ।
दुःशासनो वृषसेनो मद्रराजस्त्वमेव च ॥ ०५४ ॥

सोमदत्तश्च भूरिश्च तथा द्रौणिर्विविंशतिः ॥ ०५४ ॥

तिष्ठेयुर्दंशिता यत्र सर्वे युद्धविशारदाः ।
जयेदेतान्रणे को नु शक्रतुल्यबलोऽप्यरिः ॥ ०५५ ॥

शूराश्च हि कृतास्त्राश्च बलिनः स्वर्गलिप्सवः ।
धर्मज्ञा युद्धकुशला हन्युर्युद्धे सुरानपि ॥ ०५६ ॥

एते स्थास्यन्ति सङ्ग्रामे पाण्डवानां वधार्थिनः ।
जयमाकाङ्क्षमाणा हि कौरवेयस्य दंशिताः ॥ ०५७ ॥

दैवायत्तमहं मन्ये जयं सुबलिनामपि ।
यत्र भीष्मो महाबाहुः शेते शरशताचितः ॥ ०५८ ॥

विकर्णश्चित्रसेनश्च बाह्लीकोऽथ जयद्रथः ।
भूरिश्रवा जयश्चैव जलसंधः सुदक्षिणः ॥ ०५९ ॥

शलश्च रथिनां श्रेष्ठो भगदत्तश्च वीर्यवान् ।
एते चान्ये च राजानो देवैरपि सुदुर्जयाः ॥ ०६० ॥

निहताः समरे शूराः पाण्डवैर्बलवत्तराः ।
किमन्यद्दैवसंयोगान्मन्यसे पुरुषाधम ॥ ०६१ ॥

यांश्च तान्स्तौषि सततं दुर्योधनरिपून्द्विज ।
तेषामपि हताः शूराः शतशोऽथ सहस्रशः  ॥ ०६२  ॥

क्षीयन्ते सर्वसैन्यानि कुरूणां पाण्डवैः सह ।
प्रभावं नात्र पश्यामि पाण्डवानां कथञ्चन  ॥ ०६३  ॥

यांस्तान्बलवतो नित्यं मन्यसे त्वं द्विजाधम ।
यतिष्येऽहं यथाशक्ति योद्धुं तैः सह संयुगे  ॥ ०६४  ॥

दुर्योधनहितार्थाय जयो दैवे प्रतिष्ठितः  ॥ ०६४  ॥

---

# अध्याय १३४

सञ्जय उवाच  ॥

तथा परुषितं दृष्ट्वा सूतपुत्रेण मातुलम् ।
खड्गमुद्यम्य वेगेन द्रौणिरभ्यपतद्द्रुतम्  ॥ ००१  ॥

अश्वत्थामोवाच  ॥

कर्ण पश्य सुदुर्बुद्धे तिष्ठेदानीं नराधम ।
एष तेऽद्य शिरः कायादुद्धरामि सुदुर्मते  ॥ ००२  ॥

सञ्जय उवाच  ॥

तमुत्पतन्तं वेगेन राजा दुर्योधनः स्वयम् ।
न्यवारयन्महाराज कृपश्च द्विपदां वरः  ॥ ००३  ॥

कर्ण उवाच ॥

शूरोऽयं समरश्लाघी दुर्मतिश्च द्विजाधमः ।
आसादयतु मद्वीर्यं मुञ्चेमं कुरुसत्तम ॥ ००४ ॥

अश्वत्थामोवाच ॥

तवैतत्क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते ।
दर्पमुत्सिक्तमेतत्ते फल्गुनो नाशयिष्यति ॥ ००५ ॥

दुर्योधन उवाच ॥

अश्वत्थामन्प्रसीदस्व क्षन्तुमर्हसि मानद ।
कोपः खलु न कर्तव्यः सूतपुत्रे कथञ्चन ॥ ००६ ॥

त्वयि कर्णे कृपे द्रोणे मद्रराजेऽथ सौबले ।
महत्कार्यं समायत्तं प्रसीद द्विजसत्तम ॥ ००७ ॥

एते ह्यभिमुखाः सर्वे राधेयेन युयुत्सवः ।
आयान्ति पाण्डवा ब्रह्मन्नाह्वयन्तः समन्ततः ॥ ००८ ॥

सञ्जय उवाच ॥

कर्णोऽपि रथिनां श्रेष्ठश्चापमुद्यम्य वीर्यवान् ।
कौरवाग्र्यैः परिवृतः शक्रो देवगणैरिव ॥ ००९ ॥

पर्यतिष्ठत तेजस्वी स्वबाहुबलमाश्रितः ॥ ००९ ॥

ततः प्रववृते युद्धं कर्णस्य सह पाण्डवैः ।
संरब्धस्य महाराज सिंहनादविनादितम् ॥ ०१० ॥

ततस्ते पाण्डवा राजन्पाञ्चालाश्च यशस्विनः ।
दृष्ट्वा कर्णं महाबाहुमुच्चैः शब्दमथानदन्  ॥ ०११  ॥

अयं कर्णः कुतः कर्णस्तिष्ठ कर्ण महारणे ।
युध्यस्व सहितोऽस्माभिर्दुरात्मन्पुरुषाधम  ॥ ०१२  ॥

अन्ये तु दृष्ट्वा राधेयं क्रोधरक्तेक्षणाब्रुवन् ।
हन्यतामयमुत्सिक्तः सूतपुत्रोऽल्पचेतनः  ॥ ०१३  ॥

सर्वैः पार्थिवशार्दूलैर्नानेनार्थोऽस्ति जीवता ।
अत्यन्तवैरी पार्थानां सततं पापपूरुषः  ॥ ०१४  ॥

एष मूलं ह्यनर्थानां दुर्योधनमते स्थितः ।
हतैनमिति जल्पन्तः क्षत्रियाः समुपाद्रवन्  ॥ ०१५  ॥

महता शरवर्षेण छादयन्तो महारथाः ।
वधार्थं सूतपुत्रस्य पाण्डवेयेन चोदिताः  ॥ ०१६  ॥

तांस्तु सर्वांस्तथा दृष्ट्वा धावमानान्महारथान् ।
न विव्यथे सूतपुत्रो न च त्रासमगच्छत  ॥ ०१७  ॥

दृष्ट्वा नगरकल्पं तमुद्धूतं सैन्यसागरम् ।
पिप्रीषुस्तव पुत्राणां सङ्ग्रामेष्वपराजितः  ॥ ०१८  ॥

सायकौघेन बलवान्क्षिप्रकारी महाबलः ।
वारयामास तत्सैन्यं समन्ताद्भरतर्षभ  ॥ ०१९  ॥

ततस्तु शरवर्षेण पार्थिवास्तमवारयन् ।
धनूंषि ते विधुन्वानाः शतशोऽथ सहस्रशः  ॥ ०२०  ॥

अयोधयन्त राधेयं शक्रं दैत्यगणा इव ॥ ०२० ॥

शरवर्षं तु तत्कर्णः पार्थिवैः समुदीरितम् ।
शरवर्षेण महता समन्ताद्व्यकिरत्प्रभो ॥ ०२१ ॥

तद्युद्धमभवत्तेषां कृतप्रतिकृतैषिणाम् ।
यथा देवासुरे युद्धे शक्रस्य सह दानवैः ॥ ०२२ ॥

तत्राद्भुतमपश्याम सूतपुत्रस्य लाघवम् ।
यदेनं समरे यत्ता नाप्नुवन्त परे युधि ॥ ०२३ ॥

निवार्य च शरौघांस्तान्पार्थिवानां महारथः ।
युगेष्वीषासु छत्रेषु ध्वजेषु च हयेषु च ॥ ०२४ ॥

आत्मनामाङ्कितान्बाणान्राधेयः प्राहिणोच्छितान् ॥ ०२४ ॥

ततस्ते व्याकुलीभूता राजानः कर्णपीडिताः ।
बभ्रमुस्तत्र तत्रैव गावः शीतार्दिता इव ॥ ०२५ ॥

हयानां वध्यमानानां गजानां रथिनां तथा ।
तत्र तत्राभ्यवेक्षामः संघान्कर्णेन पातितान् ॥ ०२६ ॥

शिरोभिः पतितै राजन्बाहुभिश्च समन्ततः ।
आस्तीर्णा वसुधा सर्वा शूराणामनिवर्तिनाम् ॥ ०२७ ॥

हतैश्च हन्यमानैश्च निष्टनद्भिश्च सर्वशः ।
बभूवायोधनं रौद्रं वैवस्वतपुरोपमम् ॥ ०२८ ॥

ततो दुर्योधनो राजा दृष्ट्वा कर्णस्य विक्रमम् ।
अश्वत्थामानमासाद्य तदा वाक्यमुवाच ह ॥ ०२९ ॥

युध्यतेऽसौ रणे कर्णो दंशितः सर्वपार्थिवैः ।
पश्यैतां द्रवतीं सेनां कर्णसायकपीडिताम्  ॥ ०३०  ॥

कार्त्तिकेयेन विध्वस्तामासुरीं पृतनामिव  ॥ ०३०  ॥

दृष्ट्वैतां निर्जितां सेनां रणे कर्णेन धीमता ।
अभियात्येष बीभत्सुः सूतपुत्रजिघांसया  ॥ ०३१  ॥

तद्यथा पश्यमानानां सूतपुत्रं महारथम् ।
न हन्यात्पाण्डवः संख्ये तथा नीतिर्विधीयताम्  ॥ ०३२  ॥

ततो द्रौणिः कृपः शल्यो हार्दिक्यश्च महारथः ।
प्रत्युद्ययुस्तदा पार्थं सूतपुत्रपरीप्सया  ॥ ०३३  ॥

आयान्तं दृश्य कौन्तेयं वृत्रं देवचमूमिव ।
प्रत्युद्ययौ तदा कर्णो यथा शक्रः प्रतापवान्  ॥ ०३४  ॥

धृतराष्ट्र उवाच  ॥

संरब्धं फल्गुनं दृष्ट्वा कालान्तकयमोपमम् ।
कर्णो वैकर्तनः सूत प्रत्यपद्यत्किमुत्तरम्  ॥ ०३५  ॥

स ह्यस्पर्धत पार्थेन नित्यमेव महारथः ।
आशंसते च बीभत्सुं युद्धे जेतुं सुदारुणे  ॥ ०३६  ॥

स तु तं सहसा प्राप्तं नित्यमत्यन्तवैरिणम् ।
कर्णो वैकर्तनः सूत किमुत्तरमपद्यत  ॥ ०३७  ॥

सञ्जय उवाच  ॥

आयान्तं पाण्डवं दृष्ट्वा गजः प्रतिगजं यथा ।

असंभ्रान्ततरः कर्णः पर्त्युदीयाद्धनञ्जयम् ॥ ०३८ ॥

तमापतन्तं वेगेन वैकर्तनमजिह्मगैः ।
वारयामास तेजस्वी पाण्डवः शत्रुतापनः ॥ ०३९ ॥

तं कर्णः शरजालेन छादयामास मारिष ।
विव्याध च सुसङ्क्रुद्धः शरैस्त्रिभिरजिह्मगैः ॥ ०४० ॥

तस्य तल्लाघवं पार्थो नामृष्यत महाबलः ।
तस्मै बाणाञ्शिलाधौतान्प्रसन्नाग्रानजिह्मगान् ॥ ०४१ ॥

प्राहिणोत्सूतपुत्राय त्रिंशतं शत्रुतापनः ।
विव्याध चैनं संरब्धो बाणेनैकेन वीर्यवान् ॥ ०४२ ॥

सव्ये भुजाग्रे बलवान्नाराचेन हसन्निव ।
तस्य विद्धस्य वेगेन कराच्चापं पपात ह ॥ ०४३ ॥

पुनरादाय तच्चापं निमेषार्धान्महाबलः ।
छादयामास बाणौघैः फल्गुनं कृतहस्तवत् ॥ ०४४ ॥

शरवृष्टिं तु तां मुक्तां सूतपुत्रेण भारत ।
व्यधमच्छरवर्षेण स्मयन्निव धनञ्जयः ॥ ०४५ ॥

तौ परस्परमासाद्य शरवर्षेण पार्थिव ।
छादयेतां महेष्वासौ कृतप्रतिकृतैषिणौ ॥ ०४६ ॥

तदद्भुतमभूद्युद्धं कर्णपाण्डवयोर्मृधे ।
क्रुद्धयोर्वाशिताहेतोर्वन्ययोर्गजयोरिव ॥ ०४७ ॥

ततः पार्थो महेष्वासो दृष्ट्वा कर्णस्य विक्रमम् ।
मुष्टिदेशे धनुस्तस्य चिच्छेद त्वरयान्वितः ॥ ०४८ ॥

अश्वांश्च चतुरो भल्लैरनयद्यमसादनम् ।
सारथेश्च शिरः कायादहरच्छत्रुतापनः ॥ ०४९ ॥

अथैनं छिन्नधन्वानं हताश्वं हतसारथिम् ।
विव्याध सायकैः पार्थश्चतुर्भिः पाण्डुनन्दनः ॥ ०५० ॥

हताश्वात्तु रथात्तूर्णमवप्लुत्य नरर्षभः ।
आरुरोह रथं तूर्णं कृपस्य शरपीडितः ॥ ०५१ ॥

राधेयं निर्जितं दृष्ट्वा तावका भरतर्षभ ।
धनञ्जयशरैर्नुन्नाः प्राद्रवन्त दिशो दश ॥ ०५२ ॥

द्रवतस्तान्समालोक्य राजा दुर्योधनो नृप ।
निवर्तयामास तदा वाक्यं चेदमुवाच ह ॥ ०५३ ॥

अलं द्रुतेन वः शूरास्तिष्ठध्वं क्षत्रियर्षभाः ।
एष पार्थवधायाहं स्वयं गच्छामि संयुगे ॥ ०५४ ॥

अहं पार्थान्हनिष्यामि सपाञ्चालान्ससोमकान् ॥ ०५४ ॥

अद्य मे युध्यमानस्य सह गाण्डीवधन्वना ।
द्रक्ष्यन्ति विक्रमं पार्थाः कालस्येव युगक्षये ॥ ०५५ ॥

अद्य मद्बाणजालानि विमुक्तानि सहस्रशः ।
द्रक्ष्यन्ति समरे योधाः शलभानामिवायतीः ॥ ०५६ ॥

अद्य बाणमयं वर्षं सृजतो मम धन्विनः ।
जीमूतस्येव घर्मान्ते द्रक्ष्यन्ति युधि सैनिकाः ॥ ०५७ ॥

जेष्याम्यद्य रणे पार्थं सायकैर्नतपर्वभिः ।

तिष्ठध्वं समरे शूरा भयं त्यजत फल्गुनात् ॥ ०५८ ॥

न हि मद्वीर्यमासाद्य फल्गुनः प्रसहिष्यति ।
यथा वेलां समासाद्य सागरो मकरालयः ॥ ०५९ ॥

इत्युक्त्वा प्रययौ राजा सैन्येन महता वृतः ।
फल्गुनं प्रति दुर्धर्षः क्रोधसंरक्तलोचनः ॥ ०६० ॥

तं प्रयान्तं महाबाहुं दृष्ट्वा शारद्वतस्तदा ।
अश्वत्थामानमासाद्य वाक्यमेतदुवाच ह ॥ ०६१ ॥

एष राजा महाबाहुरमर्षी क्रोधमूर्छितः ।
पतङ्गवृत्तिमास्थाय फल्गुनं योद्धुमिच्छति ॥ ०६२ ॥

यावन्नः पश्यमानानां प्राणान्पार्थेन सङ्गतः ।
न जह्यात्पुरुषव्याघ्रस्तावद्वारय कौरवम् ॥ ०६३ ॥

यावत्फल्गुनबाणानां गोचरं नाधिगच्छति ।
कौरवः पार्थिवो वीरस्तावद्वारय तं द्रुतम् ॥ ०६४ ॥

यावत्पार्थशरैर्घोरैर्निर्मुक्तोरगसंनिभैः ।
न भस्मीक्रियते राजा तावद्युद्धान्निवार्यताम् ॥ ०६५ ॥

अयुक्तमिव पश्यामि तिष्ठत्स्वस्मासु मानद ।
स्वयं युद्धाय यद्राजा पार्थं यात्यसहायवान् ॥ ०६६ ॥

दुर्लभं जीवितं मन्ये कौरव्यस्य किरीटिना ।
युध्यमानस्य पार्थेन शार्दूलेनेव हस्तिनः ॥ ०६७ ॥

मातुलेनैवमुक्तस्तु द्रौणिः शस्त्रभृतां वरः ।
दुर्योधनमिदं वाक्यं त्वरितं समभाषत ॥ ०६८ ॥

मयि जीवति गान्धारे न युद्धं गन्तुमर्हसि ।
मामनादृत्य कौरव्य तव नित्यं हितैषिणम् ॥ ०६९ ॥

न हि ते संभ्रमः कार्यः पार्थस्य विजयं प्रति ।
अहमावारयिष्यामि पार्थं तिष्ठ सुयोधन ॥ ०७० ॥

दुर्योधन उवाच ॥

आचार्यः पाण्डुपुत्रान्वै पुत्रवत्परिरक्षति ।
त्वमप्युपेक्षां कुरुषे तेषु नित्यं द्विजोत्तम ॥ ०७१ ॥

मम वा मन्दभाग्यत्वान्मन्दस्ते विक्रमो युधि ।
धर्मराजप्रियार्थं वा द्रौपद्या वा न विद्म तत् ॥ ०७२ ॥

धिगस्तु मम लुब्धस्य यत्कृते सर्वबान्धवाः ।
सुखार्हाः परमं दुःखं प्राप्नुवन्त्यपराजिताः ॥ ०७३ ॥

को हि शस्त्रभृतां मुख्यो महेश्वरसमो युधि ।
शत्रून्न क्षपयेच्छक्तो यो न स्याद्गौतमीसुतः ॥ ०७४ ॥

अश्वत्थामन्प्रसीदस्व नाशयैतान्ममाहितान् ।
तवास्त्रगोचरे शक्ताः स्थातुं देवापि नानघ ॥ ०७५ ॥

पाञ्चालान्सोमकांश्चैव जहि द्रौणे सहानुगान् ।
वयं शेषान्हनिष्यामस्त्वयैव परिरक्षिताः ॥ ०७६ ॥

एते हि सोमका विप्र पाञ्चालाश्च यशस्विनः ।
मम सैन्येषु संरब्धा विचरन्ति दवाग्निवत् ॥ ०७७ ॥

तान्वारय महाबाहो केकयांश्च नरोत्तम ।

पुरा कुर्वन्ति निःशेषं रक्ष्यमाणाः किरीटिना ॥ ०७८ ॥

आदौ वा यदि वा पश्चात्तवेदं कर्म मारिष ।
त्वमुत्पन्नो महाबाहो पाञ्चालानां वधं प्रति ॥ ०७९ ॥

करिष्यसि जगत्सर्वमपाञ्चालं किलाच्युत ।
एवं सिद्धाब्रुवन्वाचो भविष्यति च तत्तथा ॥ ०८० ॥

न तेऽस्त्रगोचरे शक्ताः स्थातुं देवाः सवासवाः ।
किमु पार्थाः सपाञ्चालाः सत्यमेतद्वचो मम ॥ ०८१ ॥

---

# अध्याय १३५

सञ्जय उवाच ॥

दुर्योधनेनैवमुक्तो द्रौणिराहवदुर्मदः ।
प्रत्युवाच महाबाहो यथा वदसि कौरव ॥ ००१ ॥

प्रिया हि पाण्डवा नित्यं मम चापि पितुश्च मे ।
तथैवावां प्रियौ तेषां न तु युद्धे कुरूद्वह ॥ ००२ ॥

शक्तितस्तात युध्यामस्त्यक्त्वा प्राणानभीतवत् ॥ ००२ ॥

अहं कर्णश्च शल्यश्च कृपो हार्दिक्य एव च ।
निमेषात्पाण्डवीं सेनां क्षपयेम नृपोत्तम ॥ ००३ ॥

ते चापि कौरवीं सेनां निमेषार्धात्कुरूद्वह ।
क्षपयेयुर्महाबाहो न स्याम यदि संयुगे ॥ ००४ ॥

युध्यतां पाण्डवाञ्शक्त्या तेषां चास्मान्युयुत्सताम् ।
तेजस्तु तेज आसाद्य प्रशमं याति भारत ॥ ००५ ॥

अशक्या तरसा जेतुं पाण्डवानामनीकिनी ।
जीवत्सु पाण्डुपुत्रेषु तद्धि सत्यं ब्रवीमि ते ॥ ००६ ॥

आत्मार्थं युध्यमानास्ते समर्थाः पाण्डुनन्दनाः ।
किमर्थं तव सैन्यानि न हनिष्यन्ति भारत ॥ ००७ ॥

त्वं हि लुब्धतमो राजन्निकृतिज्ञश्च कौरव ।
सर्वातिशङ्की मानी च ततोऽस्मानतिशङ्कसे ॥ ००८ ॥

अहं तु यत्नमास्थाय त्वदर्थे त्यक्तजीवितः ।
एष गच्छामि सङ्ग्रामं त्वत्कृते कुरुनन्दन ॥ ००९ ॥

योत्स्येऽहं शत्रुभिः सार्धं जेष्यामि च वरान्वरान् ।
पाञ्चालैः सह योत्स्यामि सोमकैः केकयैस्तथा ॥ ०१० ॥

पाण्डवेयैश्च सङ्ग्रामे त्वत्प्रियार्थमरिंदम ॥ ०१० ॥

अद्य मद्बाणनिर्दग्धाः पाञ्चालाः सोमकास्तथा ।
सिंहेनेवार्दिता गावो विद्रविष्यन्ति सर्वतः ॥ ०११ ॥

अद्य धर्मसुतो राजा दृष्ट्वा मम पराक्रमम् ।
अश्वत्थाममयं लोकं मंस्यते सह सोमकैः ॥ ०१२ ॥

आगमिष्यति निर्वेदं धर्मपुत्रो युधिष्ठिरः ।
दृष्ट्वा विनिहतान्संख्ये पाञ्चालान्सोमकैः सह ॥ ०१३ ॥

ये मां युद्धेऽभियोत्स्यन्ति तान्हनिष्यामि भारत ।

न हि ते वीर मुच्येरन्मद्बाह्वन्तरमागताः ॥ ०१४ ॥

एवमुक्त्वा महाबाहुः पुत्रं दुर्योधनं तव ।
अभ्यवर्तत युद्धाय द्रावयन्सर्वधन्विनः ॥ ०१५ ॥

चिकीर्षुस्तव पुत्राणां प्रियं प्राणभृतां वरः ॥ ०१५ ॥

ततोऽब्रवीत्सकैकेयान्पाञ्चालान्गौतमीसुतः ।
प्रहरध्वमितः सर्वे मम गात्रे महारथाः ॥ ०१६ ॥

स्थिरीभूताश्च युध्यध्वं दर्शयन्तोऽस्त्रलाघवम् ॥ ०१६ ॥

एवमुक्तास्तु ते सर्वे शस्त्रवृष्टिमपातयन् ।
द्रौणिं प्रति महाराज जलं जलधरा इव ॥ ०१७ ॥

तान्निहत्य शरान्द्रौणिर्दश वीरानपोथयत् ।
प्रमुखे पाण्डुपुत्राणां धृष्टद्युम्नस्य चाभिभो ॥ ०१८ ॥

ते हन्यमानाः समरे पाञ्चालाः सृञ्जयास्तथा ।
परित्यज्य रणे द्रौणिं व्यद्रवन्त दिशो दश ॥ ०१९ ॥

तान्दृष्ट्वा द्रवतः शूरान्पाञ्चालान्सहसोमकान् ।
धृष्टद्युम्नो महाराज द्रौणिमभ्यद्रवद्युधि ॥ ०२० ॥

ततः काञ्चनचित्राणां सजलाम्बुदनादिनाम् ।
वृतः शतेन शूराणां रथानामनिवर्तिनाम् ॥ ०२१ ॥

पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महारथः ।
द्रौणिमित्यब्रवीद्वाक्यं दृष्ट्वा योधान्निपातितान् ॥ ०२२ ॥

आचार्यपुत्र दुर्बुद्धे किमन्यैर्निहतैस्तव ।

समागच्छ मया सार्धं यदि शूरोऽसि संयुगे ॥ ०२३ ॥

अहं त्वां निहनिष्यामि तिष्ठेदानीं ममाग्रतः ॥ ०२३ ॥

ततस्तमाचार्यसुतं धृष्टद्युम्नः प्रतापवान् ।
मर्मभिद्भिः शरैस्तीक्ष्णैर्जघान भरतर्षभ ॥ ०२४ ॥

ते तु पङ्क्तीकृता द्रौणिं शरा विविशुराशुगाः ।
रुक्मपुङ्खाः प्रसन्नाग्राः सर्वकायावदारणाः ॥ ०२५ ॥

मध्वर्थिन इवोद्दामा भ्रमराः पुष्पितं द्रुमम् ॥ ०२५ ॥

सोऽतिविद्धो भृशं क्रुद्धः पदाक्रान्त इवोरगः ।
मानी द्रौणिरसंभ्रान्तो बाणपाणिरभाषत ॥ ०२६ ॥

धृष्टद्युम्न स्थिरो भूत्वा मुहूर्तं प्रतिपालय ।
यावत्त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् ॥ ०२७ ॥

द्रौणिरेवमथाभाष्य पार्षतं परवीरहा ।
छादयामास बाणौघैः समन्ताल्लघुहस्तवत् ॥ ०२८ ॥

स छाद्यमानः समरे द्रौणिना युद्धदुर्मदः ।
द्रौणिं पाञ्चालतनयो वाग्भिरातर्जयत्तदा ॥ ०२९ ॥

न जानीषे प्रतिज्ञां मे विप्रोत्पत्तिं तथैव च ।
द्रोणं हत्वा किल मया हन्तव्यस्त्वं सुदुर्मते ॥ ०३० ॥

ततस्त्वाहं न हन्म्यद्य द्रोणे जीवति संयुगे ॥ ०३० ॥

इमां तु रजनीं प्राप्तामप्रभातां सुदुर्मते ।
निहत्य पितरं तेऽद्य ततस्त्वामपि संयुगे ॥ ०३१ ॥

नेष्यामि मृत्युलोकायेत्येवं मे मनसि स्थितम् ॥ ०३१ ॥

यस्ते पार्थेषु विद्वेषो या भक्तिः कौरवेषु च ।
तां दर्शय स्थिरो भूत्वा न मे जीवन्विमोक्ष्यसे ॥ ०३२ ॥

यो हि ब्राह्मण्यमुत्सृज्य क्षत्रधर्मरतो द्विजः ।
स वध्यः सर्वलोकस्य यथा त्वं पुरुषाधम ॥ ०३३ ॥

इत्युक्तः परुषं वाक्यं पार्षतेन द्विजोत्तमः ।
क्रोधमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ०३४ ॥

निर्दहन्निव चक्षुर्भ्यां पार्षतं सोऽभ्यवैक्षत ।
छादयामास च शरैर्निःश्वसन्पन्नगो यथा ॥ ०३५ ॥

स छाद्यमानः समरे द्रौणिना राजसत्तम ।
सर्वपाञ्चालसेनाभिः संवृतो रथसत्तमः ॥ ०३६ ॥

नाकम्पत महाबाहुः स्वधैर्यं समुपाश्रितः ।
सायकांश्चैव विविधानश्वत्थाम्नि मुमोच ह ॥ ०३७ ॥

तौ पुनः संन्यवर्तेतां प्राणद्यूतपरे रणे ।
निवारयन्तौ बाणौघैः परस्परममर्षिणौ ॥ ०३८ ॥

उत्सृजन्तौ महेष्वासौ शरवृष्टीः समन्ततः ॥ ०३८ ॥

द्रौणिपार्षतयोर्युद्धं घोररूपं भयानकम् ।
दृष्ट्वा संपूजयामासुः सिद्धचारणवातिकाः ॥ ०३९ ॥

शरौघैः पूरयन्तौ तावाकाशं प्रदिशस्तथा ।
अलक्ष्यौ समयुध्येतां महत्कृत्वा शरैस्तमः ॥ ०४० ॥

नृत्यमानाविव रणे मण्डलीकृतकार्मुकौ ।
परस्परवधे यत्तौ परस्परजयैषिणौ ॥ ०४१ ॥

अयुध्येतां महाबाहू चित्रं लघु च सुष्ठु च ।
संपूज्यमानौ समरे योधमुख्यैः सहस्रशः ॥ ०४२ ॥

तौ प्रयुद्धौ रणे दृष्ट्वा वने वन्यौ गजाविव ।
उभयोः सेनयोर्हर्षस्तुमुलः समपद्यत ॥ ०४३ ॥

सिंहनादरवाश्चासन्दध्मुः शङ्खांश्च मारिष ।
वादित्राण्यभ्यवाद्यन्त शतशोऽथ सहस्रशः ॥ ०४४ ॥

तस्मिंस्तु तुमुले युद्धे भीरूणां भयवर्धने ।
मुहूर्तमिव तद्युद्धं समरूपं तदाभवत् ॥ ०४५ ॥

ततो द्रौणिर्महाराज पार्षतस्य महात्मनः ।
ध्वजं धनुस्तथा छत्रमुभौ च पार्ष्णिसारथी ॥ ०४६ ॥

सूतमश्वांश्च चतुरो निहत्याभ्यद्रवद्रणे ॥ ०४६ ॥

पाञ्चालांश्चैव तान्सर्वान्बाणैः संनतपर्वभिः ।
व्यद्रावयदमेयात्मा शतशोऽथ सहस्रशः ॥ ०४७ ॥

ततः प्रविव्यथे सेना पाण्डवी भरतर्षभ ।
दृष्ट्वा द्रौणेर्महत्कर्म वासवस्येव संयुगे ॥ ०४८ ॥

शतेन च शतं हत्वा पाञ्चालानां महारथः ।
त्रिभिश्च निशितैर्बाणैर्हत्वा त्रीन्वै महारथान् ॥ ०४९ ॥

द्रौणिर्द्रुपदपुत्रस्य फल्गुनस्य च पश्यतः ।

नाशयामास पाञ्चालान्भूयिष्ठं ये व्यवस्थिताः ॥ ०५० ॥

ते वध्यमानाः पाञ्चालाः समरे सह सृञ्जयैः ।
अगच्छन्द्रौणिमुत्सृज्य विप्रकीर्णरथध्वजाः ॥ ०५१ ॥

स जित्वा समरे शत्रून्द्रोणपुत्रो महारथः ।
ननाद सुमहानादं तपान्ते जलदो यथा ॥ ०५२ ॥

स निहत्य बहूञ्शूरानश्वत्थामा व्यरोचत ।
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः ॥ ०५३ ॥

संपूज्यमानो युधि कौरवेयै ;र्विजित्य संख्येऽरिगणान्सहस्रशः ।
व्यरोचत द्रोणसुतः प्रतापवा ;न्यथा सुरेन्द्रोऽरिगणान्निहत्य ॥ ०५४ ॥

---

# अध्याय १३६

सञ्जय उवाच ॥

ततो युधिष्ठिरश्चैव भीमसेनश्च पाण्डवः ।
द्रोणपुत्रं महाराज समन्तात्पर्यवारयन् ॥ ००१ ॥

ततो दुर्योधनो राजा भारद्वाजेन संवृतः ।
अभ्ययात्पाण्डवान्संख्ये ततो युद्धमवर्तत ॥ ००२ ॥

घोररूपं महाराज भीरूणां भयवर्धनम् ॥ ००२ ॥

अम्बष्ठान्मालवान्वङ्गाञ्शिबींस्त्रैगर्तकानपि ।
प्राहिणोन्मृत्युलोकाय गणान्क्रुद्धो युधिष्ठिरः ॥ ००३ ॥

अभीषाहाञ्शूरसेनान्क्षत्रियान्युद्धदुर्मदान् ।
निकृत्य पृथिवीं चक्रे भीमः शोणितकर्दमाम्  ॥ ००४  ॥

यौधेयारट्टराजन्यान्मद्रकांश्च गणान्युधि ।
प्राहिणोन्मृत्युलोकाय किरीटी निशितैः शरैः  ॥ ००५  ॥

प्रगाढमञ्जोगतिभिर्नाराचैरभिपीडिताः ।
निपेतुर्द्विरदा भूमौ द्विशृङ्गा इव पर्वताः  ॥ ००६  ॥

निकृत्तैर्हस्तिहस्तैश्च लुठमानैस्ततस्ततः ।
रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः  ॥ ००७  ॥

क्षिप्तैः कनकचित्रैश्च नृपच्छत्रैः क्षितिर्बभौ ।
द्यौरिवादित्यचन्द्राद्यैर्ग्रहैः कीर्णा युगक्षये  ॥ ००८  ॥

हत प्रहरताभीता विध्यत व्यवकृन्तत ।
इत्यासीत्तुमुलः शब्दः शोणाश्वस्य रथं प्रति  ॥ ००९  ॥

द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण संयुगे ।
व्यधमत्तान्यथा वायुर्मेघानिव दुरत्ययः  ॥ ०१०  ॥

ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात् ।
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः  ॥ ०११  ॥

ततः किरीटी भीमश्च सहसा संन्यवर्तताम् ।
महता रथवंशेन परिगृह्य बलं तव  ॥ ०१२  ॥

बीभत्सुर्दक्षिणं पार्श्वमुत्तरं तु वृकोदरः ।
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम्  ॥ ०१३  ॥

तौ तदा सृञ्जयाश्चैव पाञ्चालाश्च महारथाः ।
अन्वगच्छन्महाराज मत्स्याश्च सह सोमकैः ॥ ०१४ ॥

तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
महत्या सेनया सार्धं जग्मुर्द्रोणरथं प्रति ॥ ०१५ ॥

ततः सा भरती सेना वध्यमाना किरीटिना ।
तमसा निद्रया चैव पुनरेव व्यदीर्यत ॥ ०१६ ॥

द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च ।
न शक्यन्ते महाराज योधा वारयितुं तदा ॥ ०१७ ॥

सा पाण्डुपुत्रस्य शरैर्दार्यमाणा महाचमूः ।
तमसा संवृते लोके व्यद्रवत्सर्वतोमुखी ॥ ०१८ ॥

उत्सृज्य शतशो वाहांस्तत्र केचिन्नराधिपाः ।
प्राद्रवन्त महाराज भयाविष्टाः समन्ततः ॥ ०१९ ॥

---

# अध्याय १३७

सञ्जय उवाच ॥

सोमदत्तं तु संप्रेक्ष्य विधुन्वानं महद्धनुः ।
सात्यकिः प्राह यन्तारं सोमदत्ताय मां वह ॥ ००१ ॥

न ह्यहत्वा रणे शत्रुं बाह्लीकं कौरवाधमम् ।
निवर्तिष्ये रणात्सूत सत्यमेतद्वचो मम ॥ ००२ ॥

ततः संप्रेषयद्यन्ता सैन्धवांस्तान्महाजवान् ।
तुरङ्गमाञ्शङ्खवर्णान्सर्वशब्दातिगान्रणे ॥ ००३ ॥

तेऽवहन्युयुधानं तु मनोमारुतरंहसः ।
यथेन्द्रं हरयो राजन्पुरा दैत्यवधोद्यतम् ॥ ००४ ॥

तमापतन्तं संप्रेक्ष्य सात्वतं रभसं रणे ।
सोमदत्तो महाबाहुरसंभ्रान्तोऽभ्यवर्तत ॥ ००५ ॥

विमुञ्चञ्शरवर्षाणि पर्जन्य इव वृष्टिमान् ।
छादयामास शैनेयं जलदो भास्करं यथा ॥ ००६ ॥

असंभ्रान्तश्च समरे सात्यकिः कुरुपुङ्गवम् ।
छादयामास बाणौघैः समन्ताद्भरतर्षभ ॥ ००७ ॥

सोमदत्तस्तु तं षष्ट्या विव्याधोरसि माधवम् ।
सात्यकिश्चापि तं राजन्नविध्यत्सायकैः शितैः ॥ ००८ ॥

तावन्योन्यं शरैः कृत्तौ व्यराजेतां नरर्षभौ ।
सुपुष्पौ पुष्पसमये पुष्पिताविव किंशुकौ ॥ ००९ ॥

रुधिरोक्षितसर्वाङ्गौ कुरुवृष्णियशस्करौ ।
परस्परमवेक्षेतां दहन्ताविव लोचनैः ॥ ०१० ॥

रथमण्डलमार्गेषु चरन्तावरिमर्दनौ ।
घोररूपौ हि तावास्तां वृष्टिमन्ताविवाम्बुदौ ॥ ०११ ॥

शरसंभिन्नगात्रौ तौ सर्वतः शकलीकृतौ ।
श्वाविधाविव राजेन्द्र व्यदृष्येतां शरक्षतौ ॥ ०१२ ॥

सुवर्णपुङ्खैरिषुभिराचितौ तौ व्यरोचताम् ।
खद्योतैरावृतौ राजन्प्रावृषीव वनस्पती ॥ ०१३ ॥

संप्रदीपितसर्वाङ्गौ सायकैस्तौ महारथौ ।
अदृश्येतां रणे क्रुद्धावुल्काभिरिव कुञ्जरौ ॥ ०१४ ॥

ततो युधि महाराज सोमदत्तो महारथः ।
अर्धचन्द्रेण चिच्छेद माधवस्य महद्धनुः ॥ ०१५ ॥

अथैनं पञ्चविंशत्या सायकानां समार्पयत् ।
त्वरमाणस्त्वराकाले पुनश्च दशभिः शरैः ॥ ०१६ ॥

अथान्यद्धनुरादाय सात्यकिर्वेगवत्तरम् ।
पञ्चभिः सायकैस्तूर्णं सोमदत्तमविध्यत ॥ ०१७ ॥

ततोऽपरेण भल्लेन ध्वजं चिच्छेद काञ्चनम् ।
बाह्लीकस्य रणे राजन्सात्यकिः प्रहसन्निव ॥ ०१८ ॥

सोमदत्तस्त्वसंभ्रान्तो दृष्ट्वा केतुं निपातितम् ।
शैनेयं पञ्चविंशत्या सायकानां समाचिनोत् ॥ ०१९ ॥

सात्वतोऽपि रणे क्रुद्धः सोमदत्तस्य धन्विनः ।
धनुश्चिच्छेद समरे क्षुरप्रेण शितेन ह ॥ ०२० ॥

अथैनं रुक्मपुङ्खानां शतेन नतपर्वणाम् ।
आचिनोद्बहुधा राजन्भग्नदंष्ट्रमिव द्विपम् ॥ ०२१ ॥

अथान्यद्धनुरादाय सोमदत्तो महारथः ।
सात्यकिं छादयामास शरवृष्ट्या महाबलः ॥ ०२२ ॥

सोमदत्तं तु सङ्क्रुद्धो रणे विव्याध सात्यकिः ।

सात्यकिं चेषुजालेन सोमदत्तो अपीडयत्  ॥ ०२३  ॥

दशभिः सात्वतस्यार्थे भीमोऽहन्बाह्लिकात्मजम् ।
सोमदत्तोऽप्यसंभ्रान्तः शैनेयमवधीच्छरैः  ॥ ०२४  ॥

ततस्तु सात्वतस्यार्थे भैमसेनिर्नवं दृढम् ।
मुमोच परिघं घोरं सोमदत्तस्य वक्षसि  ॥ ०२५  ॥

तमापतन्तं वेगेन परिघं घोरदर्शनम् ।
द्विधा चिच्छेद समरे प्रहसन्निव कौरवः  ॥ ०२६  ॥

स पपात द्विधा छिन्न आयसः परिघो महान् ।
महीधरस्येव महच्छिखरं वज्रदारितम्  ॥ ०२७  ॥

ततस्तु सात्यकी राजन्सोमदत्तस्य संयुगे ।
धनुश्चिच्छेद भल्लेन हस्तावापं च पञ्चभिः  ॥ ०२८  ॥

चतुर्भिस्तु शरैस्तूर्णं चतुरस्तुरगोत्तमान् ।
समीपं प्रेषयामास प्रेतराजस्य भारत  ॥ ०२९  ॥

सारथेश्च शिरः कायाद्भल्लेन नतपर्वणा ।
जहार रथशार्दूलः प्रहसञ्शिनिपुङ्गवः  ॥ ०३०  ॥

ततः शरं महाघोरं ज्वलन्तमिव पावकम् ।
मुमोच सात्वतो राजन्स्वर्णपुङ्खं शिलाशितम्  ॥ ०३१  ॥

स विमुक्तो बलवता शैनेयेन शरोत्तमः ।
घोरस्तस्योरसि विभो निपपाताशु भारत  ॥ ०३२  ॥

सोऽतिविद्धो बलवता सात्वतेन महारथः ।
सोमदत्तो महाबाहुर्निपपात ममार च  ॥ ०३३  ॥

तं दृष्ट्वा निहतं तत्र सोमदत्तं महारथाः ।
महता शरवर्षेण युयुधानमुपाद्रवन् ॥ ०३४ ॥

छाद्यमानं शरैर्दृष्ट्वा युयुधानं युधिष्ठिरः ।
महत्या सेनया सार्धं द्रोणानीकमुपाद्रवत् ॥ ०३५ ॥

ततो युधिष्ठिरः क्रुद्धस्तावकानां महाबलम् ।
शरैर्विद्रावयामास भारद्वाजस्य पश्यतः ॥ ०३६ ॥

सैन्यानि द्रावयन्तं तु द्रोणो दृष्ट्वा युधिष्ठिरम् ।
अभिदुद्राव वेगेन क्रोधसंरक्तलोचनः ॥ ०३७ ॥

ततः सुनिशितैर्बाणैः पार्थं विव्याध सप्तभिः ।
सोऽतिविद्धो महाबाहुः सृक्किणी परिसंलिहन् ॥ ०३८ ॥

युधिष्ठिरस्य चिच्छेद ध्वजं कार्मुकमेव च ॥ ०३८ ॥

स छिन्नधन्वा त्वरितस्त्वराकाले नृपोत्तमः ।
अन्यदादत्त वेगेन कार्मुकं समरे दृढम् ॥ ०३९ ॥

ततः शरसहस्रेण द्रोणं विव्याध पार्थिवः ।
साश्वसूतध्वजरथं तदद्भुतमिवाभवत् ॥ ०४० ॥

ततो मुहूर्तं व्यथितः शरघातप्रपीडितः ।
निषसाद रथोपस्थे द्रोणो भरतसत्तम ॥ ०४१ ॥

प्रतिलभ्य ततः सञ्ज्ञां मुहूर्ताद्द्विजसत्तमः ।
क्रोधेन महताविष्टो वायव्यास्त्रमवासृजत् ॥ ०४२ ॥

असंभ्रान्तस्ततः पार्थो धनुराकृष्य वीर्यवान् ।
तदस्त्रमस्त्रेण रणे स्तम्भयामास भारत ॥ ०४३ ॥

ततोऽब्रवीद्वासुदेवः कुन्तीपुत्रं युधिष्ठिरम् ।
युधिष्ठिर महाबाहो यत्त्वा वक्ष्यामि तच्छृणु ॥ ०४४ ॥

उपारमस्व युद्धाय द्रोणाद्भरतसत्तम ।
गृध्यते हि सदा द्रोणो ग्रहणे तव संयुगे ॥ ०४५ ॥

नानुरूपमहं मन्ये युद्धमस्य त्वया सह ।
योऽस्य सृष्टो विनाशाय स एनं श्वो हनिष्यति ॥ ०४६ ॥

परिवर्ज्य गुरुं याहि यत्र राजा सुयोधनः ।
भीमश्च रथशार्दूलो युध्यते कौरवैः सह ॥ ०४७ ॥

वासुदेववचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
मुहूर्तं चिन्तयित्वा तु ततो दारुणमाहवम् ॥ ०४८ ॥

प्रायाद्द्रुतममित्रघ्नो यत्र भीमो व्यवस्थितः ।
विनिघ्नंस्तावकान्योधान्व्यादितास्य इवान्तकः ॥ ०४९ ॥

रथघोषेण महता नादयन्वसुधातलम् ।
पर्जन्य इव घर्मान्ते नादयन्वै दिशो दश ॥ ०५० ॥

भीमस्य निघ्नतः शत्रून्पार्ष्णिं जग्राह पाण्डवः ।
द्रोणोऽपि पाण्डुपाञ्चालान्व्यधमद्रजनीमुखे ॥ ०५१ ॥

---

# अध्याय १३८

सञ्जय उवाच ॥

वर्तमाने तथा युद्धे घोररूपे भयावहे ।
तमसा संवृते लोके रजसा च महीपते ॥ ००१ ॥

नापश्यन्त रणे योधाः परस्परमवस्थिताः ॥ ००१ ॥

अनुमानेन सञ्ज्ञाभिर्युद्धं तद्ववृते महत् ।
नरनागाश्वमथनं परमं लोमहर्षणम् ॥ ००२ ॥

द्रोणकर्णकृपा वीरा भीमपार्षतसात्यकाः ।
अन्योन्यं क्षोभयामासुः सैन्यानि नृपसत्तम ॥ ००३ ॥

वध्यमानानि सैन्यानि समन्तात्तैर्महारथैः ।
तमसा रजसा चैव समन्ताद्विप्रदुद्रुवुः ॥ ००४ ॥

ते सर्वतो विद्रवन्तो योधा वित्रस्तचेतसः ।
अहन्यन्त महाराज धावमानाश्च संयुगे ॥ ००५ ॥

महारथसहस्राणि जघ्नुरन्योन्यमाहवे ।
अन्धे तमसि मूढानि पुत्रस्य तव मन्त्रिते ॥ ००६ ॥

ततः सर्वाणि सैन्यानि सेनागोपाश्च भारत ।
व्यमुह्यन्त रणे तत्र तमसा संवृते सति ॥ ००७ ॥

धृतराष्ट्र उवाच ॥

तेषां संलोड्यमानानां पाण्डवैर्निहतौजसाम् ।
अन्धे तमसि मग्नानामासीत्का वो मतिस्तदा ॥ ००८ ॥

कथं प्रकाशस्तेषां वा मम सैन्येषु वा पुनः ।
बभूव लोके तमसा तथा सञ्जय संवृते ॥ ००९ ॥

सञ्जय उवाच ॥

ततः सर्वाणि सैन्यानि हतशिष्टानि यानि वै ।
सेनागोप्तॄनथादिश्य पुनर्व्यूहमकल्पयत् ॥ ०१० ॥

द्रोणः पुरस्ताज्जघने तु शल्य ;स्तथा द्रौणिः पार्श्वतः सौबलश्च ।
स्वयं तु सर्वाणि बलानि राज ;न्राजाभ्ययाद्गोपयन्वै निशायाम् ॥ ०११ ॥

उवाच सर्वांश्च पदातिसंघा ;न्दुर्योधनः पार्थिव सान्त्वपूर्वम् ।
उत्सृज्य सर्वे परमायुधानि ; गृह्णीत हस्तैर्ज्वलितान्प्रदीपान् ॥ ०१२ ॥

ते चोदिताः पार्थिवसत्तमेन ; ततः प्रहृष्टा जगृहुः प्रदीपान् ।
सा भूय एव ध्वजिनी विभक्ता ; व्यरोचताग्निप्रभया निशायाम् ॥ ०१३ ॥

महाधनैराभरणैश्च दिव्यैः ; शस्त्रैः प्रदीप्तैरभिसंपतद्भिः ।
क्षणेन सर्वे विहिताः प्रदीपा ; व्यदीपयंश्च ध्वजिनीं तदाशु ॥ ०१४ ॥

सर्वास्तु सेना व्यतिसेव्यमानाः ; पदातिभिः पावकतैलहस्तैः ।
प्रकाश्यमाना ददृशुर्निशायां ; यथान्तरिक्षे जलदास्तडिद्भिः ॥ ०१५ ॥

प्रकाशितायां तु तथा ध्वजिन्यां ; द्रोणोऽग्निकल्पः प्रतपन्समन्तात् ।
रराज राजेन्द्र सुवर्णवर्मा ; मध्यं गतः सूर्य इवांशुमाली ॥ ०१६ ॥

जाम्बूनदेष्वाभरणेषु चैव ; निष्केषु शुद्धेषु शरावरेषु ।
पीतेषु शस्त्रेषु च पावकस्य ; प्रतिप्रभास्तत्र ततो बभूवुः ॥ ०१७ ॥

गदाश्च शैक्याः परिघाश्च शुभ्रा ; रथेषु शक्त्यश्च विवर्तमानाः ।
प्रतिप्रभा रश्मिभिराजमीढ ; पुनः पुनः सञ्जनयन्ति दीप्ताः ॥ ०१८ ॥

छत्राणि बालव्यजनानुषङ्गा ; दीप्ता महोल्काश्च तथैव राजन् ।

व्याघूर्णमानाश्च सुवर्णमाला ; व्यायच्छतां तत्र तदा विरेजुः ॥ ०१९ ॥

शस्त्रप्रभाभिश्च विराजमानं ; दीपप्रभाभिश्च तदा बलं तत् ।
प्रकाशितं चाभरणप्रभाभि ;र्भृशं प्रकाशं नृपते बभूव ॥ ०२० ॥

पीतानि शस्त्राण्यसृगुक्षितानि ; वीरावधूतानि तनुद्रुहाणि ।
दीप्तां प्रभां प्राजनयन्त तत्र ; तपात्यये विद्युदिवान्तरिक्षे ॥ ०२१ ॥

प्रकम्पितानामभिघातवेगै ;रभिघ्नतां चापततां जवेन ।
वक्त्राण्यशोभन्त तदा नराणां ; वाय्वीरितानीव महाम्बुजानि ॥ ०२२ ॥

महावने दाव इव प्रदीप्ते ; यथा प्रभा भास्करस्यापि नश्येत् ।
तथा तवासीद्ध्वजिनी प्रदीप्ता ; महाभये भारत भीमरूपा ॥ ०२३ ॥

तत्संप्रदीप्तं बलमस्मदीयं ; निशाम्य पार्थास्त्वरितास्तथैव ।
सर्वेषु सैन्येषु पदातिसंघा ;न्चोदयंस्तेऽथ चक्रुः प्रदीपान् ॥ ०२४ ॥

गजे गजे सप्त कृताः प्रदीपा ; रथे रथे चैव दश प्रदीपाः ।
द्वावश्वपृष्ठे परिपार्श्वतोऽन्ये ; ध्वजेषु चान्ये जघनेषु चान्ये ॥ ०२५ ॥

सेनासु सर्वासु च पार्श्वतोऽन्ये ; पश्चात्पुरस्ताच्च समन्ततश्च ।
मध्ये तथान्ये ज्वलिताग्निहस्ताः ; सेनाद्वयेऽपि स्म नरा विचेरुः ॥ ०२६ ॥

सर्वेषु सैन्येषु पदातिसंघा ; व्यामिश्रिता हस्तिरथाश्ववृन्दैः ।
मध्ये तथान्ये ज्वलिताग्निहस्ता ; व्यदीपयन्पाण्डुसुतस्य सेनाम् ॥ ०२७ ॥

तेन प्रदीप्तेन तथा प्रदीप्तं ; बलं तदासीद्बलवद्बलेन ।
भाः कुर्वता भानुमता ग्रहेण ; दिवाकरेणाग्निरिवाभितप्तः ॥ ०२८ ॥

तयोः प्रभाः पृथिवीमन्तरिक्षं ; सर्वा व्यतिक्रम्य दिशश्च वृद्धाः ।
तेन प्रकाशेन भृशं प्रकाशं ; बभूव तेषां तव चैव सैन्यम् ॥ ०२९ ॥

तेन प्रकाशेन दिवङ्गमेन ; संबोधिता देवगणाश्च राजन् ।
गन्धर्वयक्षासुरसिद्धसंघाः ; समागमन्नप्सरसश्च सर्वाः ॥ ०३० ॥

तद्देवगन्धर्वसमाकुलं च ; यक्षासुरेन्द्राप्सरसां गणैश्च ।
हतैश्च वीरैर्दिवमारुहद्भि ;रायोधनं दिव्यकल्पं बभूव ॥ ०३१ ॥

रथाश्वनागाकुलदीपदीप्तं ; संरब्धयोधाहतविद्रुताश्वम् ।
महद्बलं व्यूढरथाश्वनागं ; सुरासुरव्यूहसमं बभूव ॥ ०३२ ॥

तच्छक्तिसंघाकुलचण्डवातं ; महारथाभ्रं रथवाजिघोषम् ।
शस्त्रौघवर्षं रुधिराम्बुधारं ; निशि प्रवृत्तं नरदेवयुद्धम् ॥ ०३३ ॥

तस्मिन्महाग्निप्रतिमो महात्मा ; संतापयन्पाण्डवान्विप्रमुख्यः ।
गभस्तिभिर्मध्यगतो यथार्को ; वर्षात्यये तद्वदभून्नरेन्द्र ॥ ०३४ ॥

---

# अध्याय १३९

सञ्जय उवाच ॥

प्रकाशिते तथा लोके रजसा च तमोवृते ।
समाजग्मुरथो वीराः परस्परवधैषिणः ॥ ००१ ॥

ते समेत्य रणे राजञ्शस्त्रप्रासासिधारिणः ।
परस्परमुदैक्षन्त परस्परकृतागसः ॥ ००२ ॥

प्रदीपानां सहस्रैश्च दीप्यमानैः समन्ततः ।
विरराज तदा भूमिर्द्यौर्ग्रहैरिव भारत ॥ ००३ ॥

उल्काशतैः प्रज्वलितै रणभूमिर्व्यराजत ।
दह्यमानेव लोकानामभावे वै वसुंधरा ॥ ००४ ॥

प्रादीप्यन्त दिशः सर्वाः प्रदीपैस्तैः समन्ततः ।
वर्षाप्रदोषे खद्योतैर्वृता वृक्षा इवाबभुः ॥ ००५ ॥

असज्जन्त ततो वीरा वीरेष्वेव पृथक्पृथक् ।
नागा नागैः समाजग्मुस्तुरगाः सह वाजिभिः ॥ ००६ ॥

रथा रथवरैरेव समाजग्मुर्मुदान्विताः ।
तस्मिन्रात्रिमुखे घोरे पुत्रस्य तव शासनात् ॥ ००७ ॥

ततोऽर्जुनो महाराज कौरवाणामनीकिनीम् ।
व्यधमत्त्वरया युक्तः क्षपयन्सर्वपार्थिवान् ॥ ००८ ॥

धृतराष्ट्र उवाच ॥

तस्मिन्प्रविष्टे संरब्धे मम पुत्रस्य वाहिनीम् ।
अमृष्यमाणे दुर्धर्षे किं व आसीन्मनस्तदा ॥ ००९ ॥

किममन्यन्त सैन्यानि प्रविष्टे शत्रुतापने ।
दुर्योधनश्च किं कृत्यं प्राप्तकालममन्यत ॥ ०१० ॥

के चैनं समरे वीरं प्रत्युद्ययुररिंदमम् ।
केऽरक्षन्दक्षिणं चक्रं के च द्रोणस्य सव्यतः ॥ ०११ ॥

के पृष्ठतोऽस्य ह्यभवन्वीरा वीरस्य युध्यतः ।
के पुरस्तादगच्छन्त निघ्नतः शात्रवान्रणे ॥ ०१२ ॥

यत्प्राविशन्महेष्वासः पाञ्चालानपराजितः ।

नृत्यन्निव नरव्याघ्रो रथमार्गेषु वीर्यवान्  ॥ ०१३  ॥

ददाह च शरैर्द्रोणः पाञ्चालानां रथव्रजान् ।
धूमकेतुरिव क्रुद्धः स कथं मृत्युमीयिवान्  ॥ ०१४  ॥

अव्यग्रानेव हि परान्कथयस्यपराजितान् ।
हतांश्चैव विषण्णांश्च विप्रकीर्णांश्च शंससि  ॥ ०१५  ॥

रथिनो विरथांश्चैव कृतान्युद्धेषु मामकान्  ॥ ०१५  ॥

सञ्जय उवाच  ॥

द्रोणस्य मतमाज्ञाय योद्धुकामस्य तां निशाम् ।
दुर्योधनो महाराज वश्यान्भ्रातॄनभाषत  ॥ ०१६  ॥

विकर्णं चित्रसेनं च महाबाहुं च कौरवम् ।
दुर्धर्षं दीर्घबाहुं च ये च तेषां पदानुगाः  ॥ ०१७  ॥

द्रोणं यत्ताः पराक्रान्ताः सर्वे रक्षत पृष्ठतः ।
हार्दिक्यो दक्षिणं चक्रं शल्यश्चैवोत्तरं तथा  ॥ ०१८  ॥

त्रिगर्तानां च ये शूरा हतशिष्टा महारथाः ।
तांश्चैव सर्वान्पुत्रस्ते समचोदयदग्रतः  ॥ ०१९  ॥

आचार्यो हि सुसंयत्तो भृशं यत्ताश्च पाण्डवाः ।
तं रक्षत सुसंयत्ता निघ्नन्तं शात्रवान्रणे  ॥ ०२०  ॥

द्रोणो हि बलवान्युद्धे क्षिप्रहस्तः पराक्रमी ।
निर्जयेत्त्रिदशान्युद्धे किमु पार्थान्ससोमकान्  ॥ ०२१  ॥

ते यूयं सहिताः सर्वे भृशं यत्ता महारथाः ।

द्रोणं रक्षत पाञ्चाल्याद्धृष्टद्युम्नान्महारथात् ॥ ०२२ ॥

पाण्डवेयेषु सैन्येषु योधं पश्याम्यहं न तम् ।
यो जयेत रणे द्रोणं धृष्टद्युम्नादृते नृपाः ॥ ०२३ ॥

तस्य सर्वात्मना मन्ये भारद्वाजस्य रक्षणम् ।
स गुप्तः सोमकान्हन्यात्सृञ्जयांश्च सराजकान् ॥ ०२४ ॥

सृञ्जयेष्वथ सर्वेषु निहतेषु चमूमुखे ।
धृष्टद्युम्नं रणे द्रौणिर्नाशयिष्यत्यसंशयम् ॥ ०२५ ॥

तथार्जुनं रणे कर्णो विजेष्यति महारथः ।
भीमसेनमहं चापि युद्धे जेष्यामि दंशितः ॥ ०२६ ॥

सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति ।
तस्माद्रक्षत सङ्ग्रामे द्रोणमेव महारथाः ॥ ०२७ ॥

इत्युक्त्वा भरतश्रेष्ठ पुत्रो दुर्योधनस्तव ।
व्यादिदेश ततः सैन्यं तस्मिंस्तमसि दारुणे ॥ ०२८ ॥

ततः प्रववृते युद्धं रात्रौ तद्भरतर्षभ ।
उभयोः सेनयोर्घोरं विजयं प्रति काङ्क्षिणोः ॥ ०२९ ॥

अर्जुनः कौरवं सैन्यमर्जुनं चापि कौरवाः ।
नानाशस्त्रसमावापैरन्योन्यं पर्यपीडयन् ॥ ०३० ॥

द्रौणिः पाञ्चालराजानं भारद्वाजश्च सृञ्जयान् ।
छादयामासतुः संख्ये शरैः संनतपर्वभिः ॥ ०३१ ॥

पाण्डुपाञ्चालसेनानां कौरवाणां च मारिष ।
आसीन्निष्टानको घोरो निघ्नतामितरेतरम् ॥ ०३२ ॥

नैवास्माभिर्न पूर्वैर्नो दृष्टं पूर्वं तथाविधम् ।
युद्धं यादृशमेवासीत्तां रात्रिं सुमहाभयम् ॥ ०३३ ॥

---

# अध्याय १४०

सञ्जय उवाच ॥

वर्तमाने तथा रौद्रे रात्रियुद्धे विशां पते ।
सर्वभूतक्षयकरे धर्मपुत्रो युधिष्ठिरः ॥ ००१ ॥

अब्रवीत्पाण्डवांश्चैव पाञ्चालांश्च ससोमकान् ।
अभ्यद्रवत गच्छध्वं द्रोणमेव जिघांसया ॥ ००२ ॥

राज्ञस्ते वचनाद्राजन्पाञ्चालाः सोमकास्तथा ।
द्रोणमेवाभ्यवर्तन्त नदन्तो भैरवान्रवान् ॥ ००३ ॥

तान्वयं प्रतिगर्जन्तः प्रत्युद्यातास्त्वमर्षिताः ।
यथाशक्ति यथोत्साहं यथासत्त्वं च संयुगे ॥ ००४ ॥

कृतवर्मा च हार्दिक्यो युधिष्ठिरमुपाद्रवत् ।
द्रोणं प्रति जिघांसन्तं मत्तो मत्तमिव द्विपम् ॥ ००५ ॥

शैनेयं शरवर्षाणि विकिरन्तं समन्ततः ।
अभ्ययात्कौरवो राजन्भूरिः सङ्ग्राममूर्धनि ॥ ००६ ॥

सहदेवमथायान्तं द्रोणप्रेप्सुं महारथम् ।
कर्णो वैकर्तनो राजन्वारयामास पाण्डवम् ॥ ००७ ॥

भीमसेनमथायान्तं व्यादितास्यमिवान्तकम् ।
स्वयं दुर्योधनो युद्धे प्रतीपं मृत्युमाव्रजत् ॥ ००८ ॥

नकुलं च युधां श्रेष्ठं सर्वयुद्धविशारदम् ।
शकुनिः सौबलो राजन्वारयामास सत्वरः ॥ ००९ ॥

शिखण्डिनमथायान्तं रथेन रथिनां वरम् ।
कृपो शारद्वतो राजन्वारयामास संयुगे ॥ ०१० ॥

प्रतिविन्ध्यमथायान्तं मयूरसदृशैर्हयैः ।
दुःशासनो महाराज यत्तो यत्तमवारयत् ॥ ०११ ॥

भैमसेनिमथायान्तं मायाशतविशारदम् ।
अश्वत्थामा पितुर्मानं कुर्वाणः प्रत्यषेधयत् ॥ ०१२ ॥

द्रुपदं वृषसेनस्तु ससैन्यं सपदानुगम् ।
वारयामास समरे द्रोणप्रेप्सुं महारथम् ॥ ०१३ ॥

विराटं द्रुतमायान्तं द्रोणस्य निधनं प्रति ।
मद्रराजः सुसङ्क्रुद्धो वारयामास भारत ॥ ०१४ ॥

शतानीकमथायान्तं नाकुलिं रभसं रणे ।
चित्रसेनो रुरोधाशु शरैर्द्रोणवधेप्सया ॥ ०१५ ॥

अर्जुनं च युधां श्रेष्ठं प्राद्रवन्तं महारथम् ।
अलम्बुसो महाराज राक्षसेन्द्रो न्यवारयत् ॥ ०१६ ॥

तथा द्रोणं महेष्वासं निघ्नन्तं शात्रवान्रणे ।
धृष्टद्युम्नोऽथ पाञ्चाल्यो हृष्टरूपमवारयत् ॥ ०१७ ॥

तथान्यान्पाण्डुपुत्राणां समायातान्महारथान् ।
तावका रथिनो राजन्वारयामासुरोजसा ॥ ०१८ ॥

गजारोहा गजैस्तूर्णं संनिपत्य महामृधे ।
योधयन्तः स्म दृश्यन्ते शतशोऽथ सहस्रशः ॥ ०१९ ॥

निशीथे तुरगा राजन्नाद्रवन्तः परस्परम् ।
समदृश्यन्त वेगेन पक्षवन्त इवाद्रयः ॥ ०२० ॥

सादिनः सादिभिः सार्धं प्रासशक्त्यृष्टिपाणयः ।
समागच्छन्महाराज विनदन्तः पृथक्पृथक् ॥ ०२१ ॥

नरास्तु बहवस्तत्र समाजग्मुः परस्परम् ।
गदाभिर्मुसलैश्चैव नानाशस्त्रैश्च संघशः ॥ ०२२ ॥

कृतवर्मा तु हार्दिक्यो धर्मपुत्रं युधिष्ठिरम् ।
वारयामास सङ्क्रुद्धो वेलेवोद्वृत्तमर्णवम् ॥ ०२३ ॥

युधिष्ठिरस्तु हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः ।
पुनर्विव्याध विंशत्या तिष्ठ तिष्ठेति चाब्रवीत् ॥ ०२४ ॥

कृतवर्मा तु सङ्क्रुद्धो धर्मपुत्रस्य मारिष ।
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः ॥ ०२५ ॥

अथान्यद्धनुरादाय धर्मपुत्रो युधिष्ठिरः ।
हार्दिक्यं दशभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ०२६ ॥

माधवस्तु रणे विद्धो धर्मपुत्रेण मारिष ।
प्राकम्पत च रोषेण सप्तभिश्चार्दयच्छरैः ॥ ०२७ ॥

तस्य पार्थो धनुश्छित्त्वा हस्तावापं निकृत्य च ।

प्राहिणोन्निशितान्बाणान्पञ्च राजञ्शिलाशितान् ॥ ०२८ ॥

ते तस्य कवचं भित्त्वा हेमचित्रं महाधनम् ।
प्राविशन्धरणीमुग्रा वल्मीकमिव पन्नगाः ॥ ०२९ ॥

अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम् ।
विव्याध पाण्डवं षष्ठ्या सूतं च नवभिः शरैः ॥ ०३० ॥

तस्य शक्तिममेयात्मा पाण्डवो भुजगोपमाम् ।
चिक्षेप भरतश्रेष्ठ रथे न्यस्य महद्धनुः ॥ ०३१ ॥

सा हेमचित्रा महती पाण्डवेन प्रवेरिता ।
निर्भिद्य दक्षिणं बाहुं प्राविशद्धरणीतलम् ॥ ०३२ ॥

एतस्मिन्नेव काले तु गृह्य पार्थः पुनर्धनुः ।
हार्दिक्यं छादयामास शरैः संनतपर्वभिः ॥ ०३३ ॥

ततस्तु समरे शूरो वृष्णीनां प्रवरो रथी ।
व्यश्वसूतरथं चक्रे निमेषार्धाद्युधिष्ठिरम् ॥ ०३४ ॥

ततस्तु पाण्डवो ज्येष्ठः खड्गचर्म समाददे ।
तदस्य निशितैर्बाणैर्व्यधमन्माधवो रणे ॥ ०३५ ॥

तोमरं तु ततो गृह्य स्वर्णदण्डं दुरासदम् ।
प्रेषयत्समरे तूर्णं हार्दिक्यस्य युधिष्ठिरः ॥ ०३६ ॥

तमापतन्तं सहसा धर्मराजभुजच्युतम् ।
द्विधा चिच्छेद हार्दिक्यः कृतहस्तः स्मयन्निव ॥ ०३७ ॥

ततः शरशतेनाजौ धर्मपुत्रमवाकिरत् ।
कवचं चास्य सङ्क्रुद्धः शरैस्तीक्ष्णैरदारयत् ॥ ०३८ ॥

हार्दिक्यशरसंछिन्नं कवचं तन्महात्मनः ।
व्यशीर्यत रणे राजंस्ताराजालमिवाम्बरात्  ॥ ०३९  ॥

स छिन्नधन्वा विरथः शीर्णवर्मा शरार्दितः ।
अपायासीद्रणात्तूर्णं धर्मपुत्रो युधिष्ठिरः  ॥ ०४०  ॥

कृतवर्मा तु निर्जित्य धर्मपुत्रं युधिष्ठिरम् ।
पुनर्द्रोणस्य जुगुपे चक्रमेव महाबलः  ॥ ०४१  ॥

---

# अध्याय १४१

सञ्जय उवाच  ॥

भूरिस्तु समरे राजञ्शैनेयं रथिनां वरम् ।
आपतन्तमपासेधत्प्रपानादिव कुञ्जरम्  ॥ ००१  ॥

अथैनं सात्यकिः क्रुद्धः पञ्चभिर्निशितैः शरैः ।
विव्याध हृदये तूर्णं प्रास्रवत्तस्य शोणितम्  ॥ ००२  ॥

तथैव कौरवो युद्धे शैनेयं युद्धदुर्मदम् ।
दशभिर्विशिखैस्तीक्ष्णैरविध्यत भुजान्तरे  ॥ ००३  ॥

तावन्योन्यं महाराज ततक्षाते शरैर्भृशम् ।
क्रोधसंरक्तनयनौ क्रोधाद्विस्फार्य कार्मुके  ॥ ००४  ॥

तयोरासीन्महाराज शस्त्रवृष्टिः सुदारुणा ।

क्रुद्धयोः सायकमुचोर्यमान्तकनिकाशयोः ॥ ००५ ॥

तावन्योन्यं शरै राजन्प्रच्छाद्य समरे स्थितौ ।
मुहूर्तं चैव तद्युद्धं समरूपमिवाभवत् ॥ ००६ ॥

ततः क्रुद्धो महाराज शैनेयः प्रहसन्निव ।
धनुश्चिच्छेद समरे कौरव्यस्य महात्मनः ॥ ००७ ॥

अथैनं छिन्नधन्वानं नवभिर्निशितैः शरैः ।
विव्याध हृदये तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ००८ ॥

सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
धनुरन्यत्समादाय सात्वतं प्रत्यविध्यत ॥ ००९ ॥

स विद्ध्वा सात्वतं बाणैस्त्रिभिरेव विशां पते ।
धनुश्चिच्छेद भल्लेन सुतीक्ष्णेन हसन्निव ॥ ०१० ॥

छिन्नधन्वा महाराज सात्यकिः क्रोधमूर्छितः ।
प्रजहार महावेगां शक्तिं तस्य महोरसि ॥ ०११ ॥

स तु शक्त्या विभिन्नाङ्गो निपपात रथोत्तमात् ।
लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ०१२ ॥

तं तु दृष्ट्वा हतं शूरमश्वत्थामा महारथः ।
अभ्यधावत वेगेन शैनेयं प्रति संयुगे ॥ ०१३ ॥

अभ्यवर्षच्छरौघेण मेरुं वृष्ट्या यथाम्बुदः ॥ ०१३ ॥

तमापतन्तं संरब्धं शैनेयस्य रथं प्रति ।
घटोत्कचोऽब्रवीद्राजन्नादं मुक्त्वा महारथः ॥ ०१४ ॥

तिष्ठ तिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ।
एष त्वाद्य हनिष्यामि महिषं स्कन्दराडिव ॥ ०१५ ॥

युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ ०१५ ॥

इत्युक्त्वा रोषताम्राक्षो राक्षसः परवीरहा ।
द्रौणिमभ्यद्रवत्क्रुद्धो गजेन्द्रमिव केसरी ॥ ०१६ ॥

रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः ।
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः ॥ ०१७ ॥

शरवृष्टिं तु तां प्राप्तां शरैराशीविषोपमैः ।
शातयामास समरे तरसा द्रौणिरुत्स्मयन् ॥ ०१८ ॥

ततः शरशतैस्तीक्ष्णैर्मर्मभेदिभिराशुगैः ।
समाचिनोद्राक्षसेन्द्रं घटोत्कचमरिंदम ॥ ०१९ ॥

स शरैराचितस्तेन राक्षसो रणमूर्धनि ।
व्यकाशत महाराज श्वाविच्छललितो यथा ॥ ०२० ॥

ततः क्रोधसमाविष्टो भैमसेनिः प्रतापवान् ।
शरैरवचकर्तोग्रैर्द्रौणिं वज्राशनिस्वनैः ॥ ०२१ ॥

क्षुरप्रैरर्धचन्द्रैश्च नाराचैः सशिलीमुखैः ।
वराहकर्णैर्नालीकैस्तीक्ष्णैश्चापि विकर्णिभिः ॥ ०२२ ॥

तां शस्त्रवृष्टिमतुलां वज्राशनिसमस्वनाम् ।
पतन्तीमुपरि क्रुद्धो द्रौणिरव्यथितेन्द्रियः ॥ ०२३ ॥

सुदुःसहां शरैर्घोरैर्दिव्यास्त्रप्रतिमन्त्रितैः ।
व्यधमत्स महातेजा महाभ्राणीव मारुतः ॥ ०२४ ॥

ततोऽन्तरिक्षे बाणानां सङ्ग्रामोऽन्य इवाभवत् ।
घोररूपो महाराज योधानां हर्षवर्धनः ॥ ०२५ ॥

ततोऽस्त्रसंघर्षकृतैर्विस्फुलिङ्गैः समन्ततः ।
बभौ निशामुखे व्योम खद्योतैरिव संवृतम् ॥ ०२६ ॥

स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्वतः ।
प्रियार्थं तव पुत्राणां राक्षसं समवाकिरत् ॥ ०२७ ॥

ततः प्रववृते युद्धं द्रौणिराक्षसयोर्मृधे ।
विगाढे रजनीमध्ये शक्रप्रह्लादयोरिव ॥ ०२८ ॥

ततो घटोत्कचो बाणैर्दशभिर्द्रौणिमाहवे ।
जघानोरसि सङ्क्रुद्धः कालज्वलनसंनिभैः ॥ ०२९ ॥

स तैरभ्यायतैर्विद्धो राक्षसेन महाबलः ।
चचाल समरे द्रौणिर्वातनुन्न इव द्रुमः ॥ ०३० ॥

स मोहमनुसंप्राप्तो ध्वजयष्टिं समाश्रितः ॥ ०३० ॥

ततो हाहाकृतं सैन्यं तव सर्वं जनाधिप ।
हतं स्म मेनिरे सर्वे तावकास्तं विशां पते ॥ ०३१ ॥

तं तु दृष्ट्वा तथावस्थमश्वत्थामानमाहवे ।
पाञ्चालाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे ॥ ०३२ ॥

प्रतिलभ्य ततः सञ्ज्ञामश्वत्थामा महाबलः ।
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः ॥ ०३३ ॥

मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमम् ।

यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचम्  ॥ ०३४  ॥

स भित्त्वा हृदयं तस्य राक्षसस्य शरोत्तमः ।
विवेश वसुधामुग्रः सुपुङ्खः पृथिवीपते  ॥ ०३५  ॥

सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
राक्षसेन्द्रः सुबलवान्द्रौणिना रणमानिना  ॥ ०३६  ॥

दृष्ट्वा विमूढं हैडिम्बं सारथिस्तं रणाजिरात् ।
द्रौणेः सकाशात्संभ्रान्तस्त्वपनिन्ये त्वरान्वितः  ॥ ०३७  ॥

तथा तु समरे विद्ध्वा राक्षसेन्द्रं घटोत्कचम् ।
ननाद सुमहानादं द्रोणपुत्रो महाबलः  ॥ ०३८  ॥

पूजितस्तव पुत्रैश्च सर्वयोधैश्च भारत ।
वपुषा प्रतिजज्वाल मध्याह्न इव भास्करः  ॥ ०३९  ॥

भीमसेनं तु युध्यन्तं भारद्वाजरथं प्रति ।
स्वयं दुर्योधनो राजा प्रत्यविध्यच्छितैः शरैः  ॥ ०४०  ॥

तं भीमसेनो नवभिः शरैर्विव्याध मारिष ।
दुर्योधनोऽपि विंशत्या शराणां प्रत्यविध्यत  ॥ ०४१  ॥

तौ सायकैरवच्छन्नावदृश्येतां रणाजिरे ।
मेघजालसमाच्छन्नौ नभसीवेन्दुभास्करौ  ॥ ०४२  ॥

अथ दुर्योधनो राजा भीमं विव्याध पत्रिभिः ।
पञ्चभिर्भरतश्रेष्ठ तिष्ठ तिष्ठेति चाब्रवीत्  ॥ ०४३  ॥

तस्य भीमो धनुश्छित्त्वा ध्वजं च नवभिः शरैः ।
विव्याध कौरवश्रेष्ठं नवत्या नतपर्वणाम्  ॥ ०४४  ॥

ततो दुर्योधनः क्रुद्धो भीमसेनस्य मारिष ।
चिक्षेप स शरान्राजन्पश्यतां सर्वधन्विनाम्  ॥ ०४५  ॥

तान्निहत्य शरान्भीमो दुर्योधनधनुश्च्युतान् ।
कौरवं पञ्चविंशत्या क्षुद्रकाणां समार्पयत्  ॥ ०४६  ॥

दुर्योधनस्तु सङ्क्रुद्धो भीमसेनस्य मारिष ।
क्षुरप्रेण धनुश्छित्त्वा दशभिः प्रत्यविध्यत  ॥ ०४७  ॥

अथान्यद्धनुरादाय भीमसेनो महाबलः ।
विव्याध नृपतिं तूर्णं सप्तभिर्निशितैः शरैः  ॥ ०४८  ॥

तदप्यस्य धनुः क्षिप्रं चिच्छेद लघुहस्तवत् ।
द्वितीयं च तृतीयं च चतुर्थं पञ्चमं तथा  ॥ ०४९  ॥

आत्तमात्तं महाराज भीमस्य धनुराच्छिनत् ।
तव पुत्रो महाराज जितकाशी मदोत्कटः  ॥ ०५०  ॥

स तदा छिद्यमानेषु कार्मुकेषु पुनः पुनः ।
शक्तिं चिक्षेप समरे सर्वपारशवीं शुभाम्  ॥ ०५१  ॥

अप्राप्तामेव तां शक्तिं त्रिधा चिच्छेद कौरवः ।
पश्यतः सर्वलोकस्य भीमस्य च महात्मनः  ॥ ०५२  ॥

ततो भीमो महाराज गदां गुर्वीं महाप्रभाम् ।
चिक्षेपाविध्य वेगेन दुर्योधनरथं प्रति  ॥ ०५३  ॥

ततः सा सहसा वाहांस्तव पुत्रस्य संयुगे ।
सारथिं च गदा गुर्वी ममर्द भरतर्षभ  ॥ ०५४  ॥

पुत्रस्तु तव राजेन्द्र रथाद्धेमपरिष्कृतात् ।
आप्लुतः सहसा यानं नन्दकस्य महात्मनः ॥ ०५५ ॥

ततो भीमो हतं मत्वा तव पुत्रं महारथम् ।
सिंहनादं महच्चक्रे तर्जयन्निव कौरवान् ॥ ०५६ ॥

तावकाः सैनिकाश्चापि मेनिरे निहतं नृपम् ।
ततो विचुक्रुशुः सर्वे हा हेति च समन्ततः ॥ ०५७ ॥

तेषां तु निनदं श्रुत्वा त्रस्तानां सर्वयोधिनाम् ।
भीमसेनस्य नादं च श्रुत्वा राजन्महात्मनः ॥ ०५८ ॥

ततो युधिष्ठिरो राजा हतं मत्वा सुयोधनम् ।
अभ्यवर्तत वेगेन यत्र पार्थो वृकोदरः ॥ ०५९ ॥

पाञ्चालाः केकया मत्स्याः सृञ्जयाश्च विशां पते ।
सर्वोद्योगेनाभिजग्मुर्द्रोणमेव युयुत्सया ॥ ०६० ॥

तत्रासीत्सुमहद्युद्धं द्रोणस्याथ परैः सह ।
घोरे तमसि मग्नानां निघ्नतामितरेतरम् ॥ ०६१ ॥

---

# अध्याय १४२

सञ्जय उवाच ॥

सहदेवमथायान्तं द्रोणप्रेप्सुं विशां पते ।
कर्णो वैकर्तनो युद्धे वारयामास भारत ॥ ००१ ॥

सहदेवस्तु राधेयं विद्ध्वा नवभिराशुगैः ।
पुनर्विव्याध दशभिर्निशितैर्नतपर्वभिः ॥ ००२ ॥

तं कर्णः प्रतिविव्याध शतेन नतपर्वणाम् ।
सज्यं चास्य धनुः शीघ्रं चिच्छेद लघुहस्तवत् ॥ ००३ ॥

ततोऽन्यद्धनुरादाय माद्रीपुत्रः प्रतापवान् ।
कर्णं विव्याध विंशत्या तदद्भुतमिवाभवत् ॥ ००४ ॥

तस्य कर्णो हयान्हत्वा शरैः संनतपर्वभिः ।
सारथिं चास्य भल्लेन द्रुतं निन्ये यमक्षयम् ॥ ००५ ॥

विरथः सहदेवस्तु खड्गं चर्म समाददे ।
तदप्यस्य शरैः कर्णो व्यधमत्प्रहसन्निव ॥ ००६ ॥

ततो गुर्वीं महाघोरां हेमचित्रां महागदाम् ।
प्रेषयामास समरे वैकर्तनरथं प्रति ॥ ००७ ॥

तामापतन्तीं सहसा सहदेवप्रवेरिताम् ।
व्यष्टम्भयच्छरैः कर्णो भूमौ चैनामपातयत् ॥ ००८ ॥

गदां विनिहतां दृष्ट्वा सहदेवस्त्वरान्वितः ।
शक्तिं चिक्षेप कर्णाय तामप्यस्याच्छिनच्छरैः ॥ ००९ ॥

ससंभ्रमस्ततस्तूर्णमवप्लुत्य रथोत्तमात् ।
सहदेवो महाराज दृष्ट्वा कर्णं व्यवस्थितम् ॥ ०१० ॥

रथचक्रं ततो गृह्य मुमोचाधिरथिं प्रति ॥ ०१० ॥

तमापतन्तं सहसा कालचक्रमिवोद्यतम् ।
शरैरनेकसाहस्रैरच्छिनत्सूतनन्दनः ॥ ०११ ॥

तस्मिंस्तु वितथे चक्रे कृते तेन महात्मना ।
वार्यमाणश्च विशिखैः सहदेवो रणं जहौ ॥ ०१२ ॥

तमभिद्रुत्य राधेयो मुहूर्ताद्भरतर्षभ ।
अब्रवीत्प्रहसन्वाक्यं सहदेवं विशां पते ॥ ०१३ ॥

मा युध्यस्व रणे वीर विशिष्टै रथिभिः सह ।
सदृशैर्युध्य माद्रेय वचो मे मा विशङ्किथाः ॥ ०१४ ॥

अथैनं धनुषोऽग्रेण तुदन्भूयोऽब्रवीद्वचः ।
एषोऽर्जुनो रणे यत्तो युध्यते कुरुभिः सह ॥ ०१५ ॥

तत्र गच्छस्व माद्रेय गृहं वा यदि मन्यसे ॥ ०१५ ॥

एवमुक्त्वा तु तं कर्णो रथेन रथिनां वरः ।
प्रायात्पाञ्चालपाण्डूनां सैन्यानि प्रहसन्निव ॥ ०१६ ॥

वधप्राप्तं तु माद्रेयं नावधीत्समरेऽरिहा ।
कुन्त्याः स्मृत्वा वचो राजन्सत्यसंधो महारथः ॥ ०१७ ॥

सहदेवस्ततो राजन्विमनाः शरपीडितः ।
कर्णवाक्शल्यतप्तश्च जीवितान्निरविद्यत ॥ ०१८ ॥

आरुरोह रथं चापि पाञ्चाल्यस्य महात्मनः ।
जनमेजयस्य समरे त्वरायुक्तो महारथः ॥ ०१९ ॥

विराटं सहसेनं तु द्रोणार्थे द्रुतमागतम् ।
मद्रराजः शरौघेण छादयामास धन्विनम् ॥ ०२० ॥

तयोः समभवद्युद्धं समरे दृढधन्विनोः ।

यादृशं ह्यभवद्राजञ्जम्भवासवयोः पुरा ॥ ०२१ ॥

मद्रराजो महाराज विराटं वाहिनीपतिम् ।
आजघ्ने त्वरितं तीक्ष्णैः शतेन नतपर्वणाम् ॥ ०२२ ॥

प्रतिविव्याध तं राजा नवभिर्निशितैः शरैः ।
पुनश्चैव त्रिसप्तत्या भूयश्चैव शतेन ह ॥ ०२३ ॥

तस्य मद्राधिपो हत्वा चतुरो रथवाजिनः ।
सूतं ध्वजं च समरे रथोपस्थादपातयत् ॥ ०२४ ॥

हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ।
तस्थौ विस्फारयंश्चापं विमुञ्चंश्च शिताञ्शरान् ॥ ०२५ ॥

शतानीकस्ततो दृष्ट्वा भ्रातरं हतवाहनम् ।
रथेनाभ्यपतत्तूर्णं सर्वलोकस्य पश्यतः ॥ ०२६ ॥

शतानीकमथायान्तं मद्रराजो महामृधे ।
विशिखैर्बहुभिर्विद्ध्वा ततो निन्ये यमक्षयम् ॥ ०२७ ॥

तस्मिंस्तु निहते वीरे विराटो रथसत्तमः ।
आरुरोह रथं तूर्णं तमेव ध्वजमालिनम् ॥ ०२८ ॥

ततो विस्फार्य नयने क्रोधाद्द्विगुणविक्रमः ।
मद्रराजरथं तूर्णं छादयामास पत्रिभिः ॥ ०२९ ॥

ततो मद्राधिपः क्रुद्धः शतेन नतपर्वणाम् ।
आजघानोरसि दृढं विराटं वाहिनीपतिम् ॥ ०३० ॥

सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
कश्मलं चाविशत्तीव्रं विराटो भरतर्षभ ॥ ०३१ ॥

सारथिस्तमपोवाह समरे शरविक्षतम्  ॥ ०३१  ॥

ततः सा महती सेना प्राद्रवन्निशि भारत ।
वध्यमाना शरशतैः शल्येनाहवशोभिना  ॥ ०३२  ॥

तां दृष्ट्वा विद्रुतां सेनां वासुदेवधनञ्जयौ ।
प्रायातां तत्र राजेन्द्र यत्र शल्यो व्यवस्थितः  ॥ ०३३  ॥

तौ तु प्रत्युद्ययौ राजन्राक्षसेन्द्रो ह्यलम्बुसः ।
अष्टचक्रसमायुक्तमास्थाय प्रवरं रथम्  ॥ ०३४  ॥

तुरङ्गममुखैर्युक्तं पिशाचैर्घोरदर्शनैः ।
लोहितार्द्रपताकं तं रक्तमाल्यविभूषितम्  ॥ ०३५  ॥

कार्ष्णायसमयं घोरमृक्षचर्मावृतं महत्  ॥ ०३५  ॥

रौद्रेण चित्रपक्षेण विवृताक्षेण कूजता ।
ध्वजेनोच्छ्रिततुण्डेन गृध्रराजेन राजता  ॥ ०३६  ॥

स बभौ राक्षसो राजन्भिन्नाञ्जनचयोपमः ।
रुरोधार्जुनमायान्तं प्रभञ्जनमिवाद्रिराट्  ॥ ०३७  ॥

किरन्बाणगणान्राजञ्शतशोऽर्जुनमूर्धनि  ॥ ०३७  ॥

अतितीव्रमभूद्युद्धं नरराक्षसयोर्मृधे ।
द्रष्टॄणां प्रीतिजननं सर्वेषां भरतर्षभ  ॥ ०३८  ॥

तमर्जुनः शतेनैव पत्रिणामभ्यताडयत् ।
नवभिश्च शितैर्बाणैश्चिच्छेद ध्वजमुच्छ्रितम्  ॥ ०३९  ॥

सारथिं च त्रिभिर्बाणैस्त्रिभिरेव त्रिवेणुकम् ।
धनुरेकेन चिच्छेद चतुर्भिश्चतुरो हयान्  ॥ ०४०  ॥

विरथस्योद्यतं खड्गं शरेणास्य द्विधाच्छिनत्  ॥ ०४०  ॥

अथैनं निशितैर्बाणैश्चतुर्भिर्भरतर्षभ ।
पार्थोऽर्दयद्राक्षसेन्द्रं स विद्धः प्राद्रवद्भयात्  ॥ ०४१  ॥

तं विजित्यार्जुनस्तूर्णं द्रोणान्तिकमुपाययौ ।
किरञ्शरगणात्राजन्नरवारणवाजिषु  ॥ ०४२  ॥

वध्यमाना महाराज पाण्डवेन यशस्विना ।
सैनिका न्यपतन्नुर्व्यां वातनुन्ना इव द्रुमाः  ॥ ०४३  ॥

तेषु तूत्साद्यमानेषु फल्गुनेन महात्मना ।
संप्राद्रवद्बलं सर्वं पुत्राणां ते विशां पते  ॥ ०४४  ॥

---

# अध्याय १४३

सञ्जय उवाच  ॥

शतानीकं शरैस्तूर्णं निर्दहन्तं चमूं तव ।
चित्रसेनस्तव सुतो वारयामास भारत  ॥ ००१  ॥

नाकुलिश्चित्रसेनं तु नाराचेनार्दयद्भृशम् ।
स च तं प्रतिविव्याध दशभिर्निशितैः शरैः  ॥ ००२  ॥

चित्रसेनो महाराज शतानीकं पुनर्युधि ।
नवभिर्निशितैर्बाणैराजघान स्तनान्तरे ॥ ००३ ॥

नाकुलिस्तस्य विशिखैर्वर्म संनतपर्वभिः ।
गात्रात्सञ्च्यावयामास तदद्भुतमिवाभवत् ॥ ००४ ॥

सोऽपेतवर्मा पुत्रस्ते विरराज भृशं नृप ।
उत्सृज्य काले राजेन्द्र निर्मोकमिव पन्नगः ॥ ००५ ॥

ततोऽस्य निशितैर्बाणैर्ध्वजं चिच्छेद नाकुलिः ।
धनुश्चैव महाराज यतमानस्य संयुगे ॥ ००६ ॥

स छिन्नधन्वा समरे विवर्मा च महारथः ।
धनुरन्यन्महाराज जग्राहारिविदारणम् ॥ ००७ ॥

ततस्तूर्णं चित्रसेनो नाकुलिं नवभिः शरैः ।
विव्याध समरे क्रुद्धो भरतानां महारथः ॥ ००८ ॥

शतानीकोऽथ सङ्क्रुद्धश्चित्रसेनस्य मारिष ।
जघान चतुरो वाहान्सारथिं च नरोत्तमः ॥ ००९ ॥

अवप्लुत्य रथात्तस्माच्चित्रसेनो महारथः ।
नाकुलिं पञ्चविंशत्या शराणामार्दयद्बली ॥ ०१० ॥

तस्य तत्कुर्वतः कर्म नकुलस्य सुतो रणे ।
अर्धचन्द्रेण चिच्छेद चापं रत्नविभूषितम् ॥ ०११ ॥

स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
आरुरोह रथं तूर्णं हार्दिक्यस्य महात्मनः ॥ ०१२ ॥

द्रुपदं तु सहानीकं द्रोणप्रेप्सुं महारथम् ।

वृषसेनोऽभ्ययात्तूर्णं किरञ्शरशतैस्तदा ॥ ०१३ ॥

यज्ञसेनस्तु समरे कर्णपुत्रं महारथम् ।
षष्ट्या शराणां विव्याध बाह्वोरुरसि चानघ ॥ ०१४ ॥

वृषसेनस्तु सङ्क्रुद्धो यज्ञसेनं रथे स्थितम् ।
बहुभिः सायकैस्तीक्ष्णैराजघान स्तनान्तरे ॥ ०१५ ॥

तावुभौ शरनुन्नाङ्गौ शरकण्टकिनौ रणे ।
व्यभ्राजेतां महाराज श्वाविधौ शललैरिव ॥ ०१६ ॥

रुक्मपुङ्खैरजिह्माग्रैः शरैश्छिन्नतनुच्छदौ ।
रुधिरौघपरिक्लिन्नौ व्यभ्राजेतां महामृधे ॥ ०१७ ॥

तपनीयनिभौ चित्रौ कल्पवृक्षाविवाद्भुतौ ।
किंशुकाविव चोत्फुल्लौ व्यकाशेतां रणाजिरे ॥ ०१८ ॥

वृषसेनस्ततो राजन्नवभिर्द्रुपदं शरैः ।
विद्ध्वा विव्याध सप्तत्या पुनश्चान्यैस्त्रिभिः शरैः ॥ ०१९ ॥

ततः शरसहस्राणि विमुञ्चन्विबभौ तदा ।
कर्णपुत्रो महाराज वर्षमाण इवाम्बुदः ॥ ०२० ॥

ततस्तु द्रुपदानीकं शरैश्छिन्नतनुच्छदम् ।
संप्राद्रवद्रणे राजन्निशीथे भैरवे सति ॥ ०२१ ॥

प्रदीपैर्हि परित्यक्तैर्ज्वलद्भिस्तैः समन्ततः ।
व्यराजत मही राजन्वीताभ्रा द्यौरिव ग्रहैः ॥ ०२२ ॥

तथाङ्गदैर्निपतितैर्व्यराजत वसुंधरा ।
प्रावृट्काले महाराज विद्युद्भिरिव तोयदः ॥ ०२३ ॥

ततः कर्णसुतत्रस्ताः सोमका विप्रदुद्रुवुः ।
यथेन्द्रभयवित्रस्ता दानवास्तारकामये ॥ ०२४ ॥

तेनार्द्यमानाः समरे द्रवमाणाश्च सोमकाः ।
व्यराजन्त महाराज प्रदीपैरवभासिताः ॥ ०२५ ॥

तांस्तु निर्जित्य समरे कर्णपुत्रो व्यरोचत ।
मध्यंदिनमनुप्राप्तो घर्मांशुरिव भारत ॥ ०२६ ॥

तेषु राजसहस्रेषु तावकेषु परेषु च ।
एक एव ज्वलंस्तस्थौ वृषसेनः प्रतापवान् ॥ ०२७ ॥

स विजित्य रणे शूरान्सोमकानां महारथान् ।
जगाम त्वरितस्तत्र यत्र राजा युधिष्ठिरः ॥ ०२८ ॥

प्रतिविन्ध्यमथ क्रुद्धं प्रदहन्तं रणे रिपून् ।
दुःशासनस्तव सुतः प्रत्युद्गच्छन्महारथः ॥ ०२९ ॥

तयोः समागमो राजंश्चित्ररूपो बभूव ह ।
व्यपेतजलदे व्योम्नि बुधभार्गवयोरिव ॥ ०३० ॥

प्रतिविन्ध्यं तु समरे कुर्वाणं कर्म दुष्करम् ।
दुःशासनस्त्रिभिर्बाणैर्ललाटे समविध्यत ॥ ०३१ ॥

सोऽतिविद्धो बलवता पुत्रेण तव धन्विना ।
विरराज महाबाहुः सशृङ्ग इव पर्वतः ॥ ०३२ ॥

दुःशासनं तु समरे प्रतिविन्ध्यो महारथः ।
नवभिः सायकैर्विद्ध्वा पुनर्विव्याध सप्तभिः ॥ ०३३ ॥

तत्र भारत पुत्रस्ते कृतवान्कर्म दुष्करम् ।
प्रतिविन्ध्यहयानुग्रैः पातयामास यच्छरैः ॥ ०३४ ॥

सारथिं चास्य भल्लेन ध्वजं च समपातयत् ।
रथं च शतशो राजन्व्यधमत्तस्य धन्विनः ॥ ०३५ ॥

पताकाश्च स तूणीरान्रश्मीन्योक्त्राणि चाभिभो ।
चिच्छेद तिलशः क्रुद्धः शरैः संनतपर्वभिः ॥ ०३६ ॥

विरथः स तु धर्मात्मा धनुष्पाणिरवस्थितः ।
अयोधयत्तव सुतं किरञ्शरशतान्बहून् ॥ ०३७ ॥

क्षुरप्रेण धनुस्तस्य चिच्छेद कृतहस्तवत् ।
अथैनं दशभिर्भल्लैश्छिन्नधन्वानमार्दयत् ॥ ०३८ ॥

तं दृष्ट्वा विरथं तत्र भ्रातरोऽस्य महारथाः ।
अन्ववर्तन्त वेगेन महत्या सेनया सह ॥ ०३९ ॥

आप्लुतः स ततो यानं सुतसोमस्य भास्वरम् ।
धनुर्गृह्य महाराज विव्याध तनयं तव ॥ ०४० ॥

ततस्तु तावकाः सर्वे परिवार्य सुतं तव ।
अभ्यवर्तन्त सङ्ग्रामे महत्या सेनया वृताः ॥ ०४१ ॥

ततः प्रववृते युद्धं तव तेषां च भारत ।
निशीथे दारुणे काले यमराष्ट्रविवर्धनम् ॥ ०४२ ॥

# अध्याय १४४

सञ्जय उवाच ॥

नकुलं रभसं युद्धे निघ्नन्तं वाहिनीं तव ।
अभ्ययात्सौबलः क्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ ००१ ॥

कृतवैरौ तु तौ वीरावन्योन्यवधकाङ्क्षिणौ ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ००२ ॥

यथैव सौबलः क्षिप्रं शरवर्षाणि मुञ्चति ।
तथैव नकुलो राजञ्शिक्षां संदर्शयन्युधि ॥ ००३ ॥

तावुभौ समरे शूरौ शरकण्टकिनौ तदा ।
व्यराजेतां महाराज कण्टकैरिव शाल्मली ॥ ००४ ॥

सुजिह्मं प्रेक्षमाणौ च राजन्विवृतलोचनौ ।
क्रोधसंरक्तनयनौ निर्दहन्तौ परस्परम् ॥ ००५ ॥

स्यालस्तु तव सङ्क्रुद्धो माद्रीपुत्रं हसन्निव ।
कर्णिनैकेन विव्याध हृदये निशितेन ह ॥ ००६ ॥

नकुलस्तु भृशं विद्धः स्यालेन तव धन्विना ।
निषसाद रथोपस्थे कश्मलं चैनमाविशत् ॥ ००७ ॥

अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं तथागतम् ।
ननाद शकुनी राजंस्तपान्ते जलदो यथा ॥ ००८ ॥

प्रतिलभ्य ततः सञ्ज्ञां नकुलः पाण्डुनन्दनः ।
अभ्ययात्सौबलं भूयो व्यात्तानन इवान्तकः ॥ ००९ ॥

सङ्क्रुद्धः शकुनिं षष्ट्या विव्याध भरतर्षभ ।
पुनश्चैव शतेनैव नाराचानां स्तनान्तरे ॥ ०१० ॥

ततोऽस्य सशरं चापं मुष्टिदेशे स चिच्छिदे ।
ध्वजं च त्वरितं छित्त्वा रथाद्भूमावपातयत् ॥ ०११ ॥

सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
तं विसञ्ज्ञं निपतितं दृष्ट्वा स्यालं तवानघ ॥ ०१२ ॥

अपोवाह रथेनाशु सारथिर्ध्वजिनीमुखात् ॥ ०१२ ॥

ततः सञ्चुक्रुशुः पार्था ये च तेषां पदानुगाः ।
निर्जित्य च रणे शत्रून्नकुलः शत्रुतापनः ॥ ०१३ ॥

अब्रवीत्सारथिं क्रुद्धो द्रोणानीकाय मां वह ॥ ०१३ ॥

तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः ।
प्रायात्तेन रणे राजन्येन द्रोणोऽन्वयुध्यत ॥ ०१४ ॥

शिखण्डिनं तु समरे द्रोणप्रेप्सुं विशां पते ।
कृपः शारद्वतो यत्तः प्रत्युद्गच्छत्सुवेगितः ॥ ०१५ ॥

गौतमं द्रुतमायान्तं द्रोणान्तिकमरिंदमम् ।
विव्याध नवभिर्भल्लैः शिखण्डी प्रहसन्निव ॥ ०१६ ॥

तमाचार्यो महाराज विद्ध्वा पञ्चभिराशुगैः ।
पुनर्विव्याध विंशत्या पुत्राणां प्रियकृत्तव ॥ ०१७ ॥

महद्युद्धं तयोरासीद्घोररूपं विशां पते ।
यथा देवासुरे युद्धे शम्बरामरराजयोः ॥ ०१८ ॥

शरजालावृतं व्योम चक्रतुस्तौ महारथौ ।
प्रकृत्या घोररूपं तदासीद्घोरतरं पुनः ॥ ०१९ ॥

रात्रिश्च भरतश्रेष्ठ योधानां युद्धशालिनाम् ।
कालरात्रिनिभा ह्यासीद्घोररूपा भयावहा ॥ ०२० ॥

शिखण्डी तु महाराज गौतमस्य महद्धनुः ।
अर्धचन्द्रेण चिच्छेद सज्यं सविशिखं तदा ॥ ०२१ ॥

तस्य क्रुद्धः कृपो राजञ्शक्तिं चिक्षेप दारुणाम् ।
स्वर्णदण्डामकुण्ठाग्रां कर्मारपरिमार्जिताम् ॥ ०२२ ॥

तामापतन्तीं चिच्छेद शिखण्डी बहुभिः शरैः ।
सापतन्मेदिनीं दीप्ता भासयन्ती महाप्रभा ॥ ०२३ ॥

अथान्यद्धनुरादाय गौतमो रथिनां वरः ।
प्राच्छादयच्छितैर्बाणैर्महाराज शिखण्डिनम् ॥ ०२४ ॥

स छाद्यमानः समरे गौतमेन यशस्विना ।
व्यषीदत रथोपस्थे शिखण्डी रथिनां वरः ॥ ०२५ ॥

सीदन्तं चैनमालोक्य कृपः शारद्वतो युधि ।
आजघ्ने बहुभिर्बाणैर्जिघांसन्निव भारत ॥ ०२६ ॥

विमुखं तं रणे दृष्ट्वा याज्ञसेनिं महारथम् ।
पाञ्चालाः सोमकाश्चैव परिवव्रुः समन्ततः ॥ ०२७ ॥

तथैव तव पुत्राश्च परिवव्रुर्द्विजोत्तमम् ।
महत्या सेनया सार्धं ततो युद्धमभूत्पुनः ॥ ०२८ ॥

रथानां च रणे राजन्नन्योन्यमभिधावताम् ।

बभूव तुमुलः शब्दो मेघानां नदतामिव ॥ ०२९ ॥

द्रवतां सादिनां चैव गजानां च विशां पते ।
अन्योन्यमभितो राजन्क्रूरमायोधनं बभौ ॥ ०३० ॥

पत्तीनां द्रवतां चैव पदशब्देन मेदिनी ।
अकम्पत महाराज भयत्रस्तेव चाङ्गना ॥ ०३१ ॥

रथा रथान्समासाद्य प्रद्रुता वेगवत्तरम् ।
न्यगृह्णन्बहवो राजञ्शलभान्वायसा इव ॥ ०३२ ॥

तथा गजान्प्रभिन्नांश्च सुप्रभिन्ना महागजाः ।
तस्मिन्नेव पदे यत्ता निगृह्णन्ति स्म भारत ॥ ०३३ ॥

सादी सादिनमासाद्य पदाती च पदातिनम् ।
समासाद्य रणेऽन्योन्यं संरब्धा नातिचक्रमुः ॥ ०३४ ॥

धावतां द्रवतां चैव पुनरावर्ततामपि ।
बभूव तत्र सैन्यानां शब्दः सुतुमुलो निशि ॥ ०३५ ॥

दीप्यमानाः प्रदीपाश्च रथवारणवाजिषु ।
अदृश्यन्त महाराज महोल्का इव खाच्च्युताः ॥ ०३६ ॥

सा निशा भरतश्रेष्ठ प्रदीपैरवभासिता ।
दिवसप्रतिमा राजन्बभूव रणमूर्धनि ॥ ०३७ ॥

आदित्येन यथा व्याप्तं तमो लोके प्रणश्यति ।
तथा नष्टं तमो घोरं दीपैर्दीप्तैरलङ्कृतम् ॥ ०३८ ॥

शस्त्राणां कवचानां च मणीनां च महात्मनाम् ।
अन्तर्दधुः प्रभाः सर्वा दीपैस्तैरवभासिताः ॥ ०३९ ॥

तस्मिन्कोलाहले युद्धे वर्तमाने निशामुखे ।
अवधीत्समरे पुत्रं पिता भरतसत्तम ॥ ०४० ॥

पुत्रश्च पितरं मोहात्सखायं च सखा तथा ।
संबन्धिनं च संबन्धी स्वस्रीयं चापि मातुलः ॥ ०४१ ॥

स्वे स्वान्परे परांश्चापि निजघ्नुरितरेतरम् ।
निर्मर्यादमभूद्युद्धं रात्रौ घोरं भयावहम् ॥ ०४२ ॥

---

# अध्याय १४५

सञ्जय उवाच ॥

तस्मिन्सुतुमुले युद्धे वर्तमाने भयावहे ।
धृष्टद्युम्नो महाराज द्रोणमेवाभ्यवर्तत ॥ ००१ ॥

संमृजानो धनुः श्रेष्ठं ज्यां विकर्षन्पुनः पुनः ।
अभ्यवर्तत द्रोणस्य रथं रुक्मविभूषितम् ॥ ००२ ॥

धृष्टद्युम्नं तदायान्तं द्रोणस्यान्तचिकीर्षया ।
परिवव्रुर्महाराज पाञ्चालाः पाण्डवैः सह ॥ ००३ ॥

तथा परिवृतं दृष्ट्वा द्रोणमाचार्यसत्तमम् ।
पुत्रास्ते सर्वतो यत्ता ररक्षुर्द्रोणमाहवे ॥ ००४ ॥

बलार्णवौ ततस्तौ तु समेयातां निशामुखे ।

वातोद्धूतौ क्षुब्धसत्त्वौ भैरवौ सागराविव ॥ ००५ ॥

ततो द्रोणं महाराज पाञ्चाल्यः पञ्चभिः शरैः ।
विव्याध हृदये तूर्णं सिंहनादं ननाद च ॥ ००६ ॥

तं द्रोणः पञ्चविंशत्या विद्ध्वा भारत संयुगे ।
चिच्छेदान्येन भल्लेन धनुरस्य महाप्रभम् ॥ ००७ ॥

धृष्टद्युम्नस्तु निर्विद्धो द्रोणेन भरतर्षभ ।
उत्ससर्ज धनुस्तूर्णं संदश्य दशनच्छदम् ॥ ००८ ॥

ततः क्रुद्धो महाराज धृष्टद्युम्नः प्रतापवान् ।
आददेऽन्यद्धनुः श्रेष्ठं द्रोणस्यान्तचिकीर्षया ॥ ००९ ॥

विकृष्य च धनुश्चित्रमाकर्णात्परवीरहा ।
द्रोणस्यान्तकरं घोरं व्यसृजत्सायकं ततः ॥ ०१० ॥

स विसृष्टो बलवता शरो घोरो महामृधे ।
भासयामास तत्सैन्यं दिवाकर इवोदितः ॥ ०११ ॥

तं दृष्ट्वा तु शरं घोरं देवगन्धर्वमानवाः ।
स्वस्त्यस्तु समरे राजन्द्रोणायेत्यब्रुवन्वचः ॥ ०१२ ॥

तं तु सायकमप्राप्तमाचार्यस्य रथं प्रति ।
कर्णो द्वादशधा राजंश्चिच्छेद कृतहस्तवत् ॥ ०१३ ॥

स छिन्नो बहुधा राजन्सूतपुत्रेण मारिष ।
निपपात शरस्तूर्णं निकृत्तः कर्णसायकैः ॥ ०१४ ॥

छित्त्वा तु समरे बाणं शरैः संनतपर्वभिः ।
धृष्टद्युम्नं रणे कर्णो विव्याध दशभिः शरैः ॥ ०१५ ॥

पञ्चभिर्द्रोणपुत्रस्तु स्वयं द्रोणश्च सप्तभिः ।
शल्यश्च नवभिर्बाणैस्त्रिभिर्दुःशासनस्तथा ॥ ०१६ ॥

दुर्योधनश्च विंशत्या शकुनिश्चापि पञ्चभिः ।
पाञ्चाल्यं त्वरिताविध्यन्सर्व एव महारथाः ॥ ०१७ ॥

स विद्धः सप्तभिर्वीरैर्द्रोणत्राणार्थमाहवे ।
सर्वानसंभ्रमाद्राजन्प्रत्यविध्यत्त्रिभिस्त्रिभिः ॥ ०१८ ॥

द्रोणं द्रौणिं च कर्णं च विव्याध तव चात्मजम् ॥ ०१८ ॥

ते विद्धा धन्विना तेन धृष्टद्युम्नं पुनर्मृधे ।
विव्यधुः पञ्चभिस्तूर्णमेकैको रथिनां वरः ॥ ०१९ ॥

द्रुमसेनस्तु सङ्क्रुद्धो राजन्विव्याध पत्रिणा ।
त्रिभिश्चान्यैः शरैस्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ०२० ॥

स तु तं प्रतिविव्याध त्रिभिस्तीक्ष्णैरजिह्मगैः ।
स्वर्णपुङ्खैः शिलाधौतैः प्राणान्तकरणैर्युधि ॥ ०२१ ॥

भल्लेनान्येन तु पुनः सुवर्णोज्ज्वलकुण्डलम् ।
उन्ममाथ शिरः कायाद्द्रुमसेनस्य वीर्यवान् ॥ ०२२ ॥

तच्छिरो न्यपतद्भूमौ संदष्टौष्ठपुटं रणे ।
महावातसमुद्धूतं पक्वं तालफलं यथा ॥ ०२३ ॥

तांश्च विद्ध्वा पुनर्वीरान्वीरः सुनिशितैः शरैः ।
राधेयस्याच्छिनद्भल्लैः कार्मुकं चित्रयोधिनः ॥ ०२४ ॥

न तु तन्ममृषे कर्णो धनुषश्छेदनं तथा ।

निकर्तनमिवात्युग्रो लाङ्गूलस्य यथा हरिः ॥ ०२५ ॥

सोऽन्यद्धनुः समादाय क्रोधरक्तेक्षणः श्वसन् ।
अभ्यवर्षच्छरौघैस्तं धृष्टद्युम्नं महाबलम् ॥ ०२६ ॥

दृष्ट्वा तु कर्णं संरब्धं ते वीराः षड्रथर्षभाः ।
पाञ्चाल्यपुत्रं त्वरिताः परिवव्रुर्जिघांसया ॥ ०२७ ॥

षण्णां योधप्रवीराणां तावकानां पुरस्कृतम् ।
मृत्योरास्यमनुप्राप्तं धृष्टद्युम्नममंस्महि ॥ ०२८ ॥

एतस्मिन्नेव काले तु दाशार्हो विकिरञ्शरान् ।
धृष्टद्युम्नं पराक्रान्तं सात्यकिः प्रत्यपद्यत ॥ ०२९ ॥

तमायान्तं महेष्वासं सात्यकिं युद्धदुर्मदम् ।
राधेयो दशभिर्बाणैः प्रत्यविध्यदजिह्मगैः ॥ ०३० ॥

तं सात्यकिर्महाराज विव्याध दशभिः शरैः ।
पश्यतां सर्ववीराणां मा गास्तिष्ठेति चाब्रवीत् ॥ ०३१ ॥

स सात्यकेस्तु बलिनः कर्णस्य च महात्मनः ।
आसीत्समागमो घोरो बलिवासवयोरिव ॥ ०३२ ॥

त्रासयंस्तलघोषेण क्षत्रियान्क्षत्रियर्षभः ।
राजीवलोचनं कर्णं सात्यकिः प्रत्यविध्यत ॥ ०३३ ॥

कम्पयन्निव घोषेण धनुषो वसुधां बली ।
सूतपुत्रो महाराज सात्यकिं प्रत्ययोधयत् ॥ ०३४ ॥

विपाठकर्णिनाराचैर्वत्सदन्तैः क्षुरैरपि ।
कर्णः शरशतैश्चापि शैनेयं प्रत्यविध्यत ॥ ०३५ ॥

तथैव युयुधानोऽपि वृष्णीनां प्रवरो रथः ।
अभ्यवर्षच्छरैः कर्णं तद्युद्धमभवत्समम् ॥ ०३६ ॥

तावकाश्च महाराज कर्णपुत्रश्च दंशितः ।
सात्यकिं विव्यधुस्तूर्णं समन्तान्निशितैः शरैः ॥ ०३७ ॥

अस्त्रैरस्त्राणि संवार्य तेषां कर्णस्य चाभिभो ।
अविध्यत्सात्यकिः क्रुद्धो वृषसेनं स्तनान्तरे ॥ ०३८ ॥

तेन बाणेन निर्विद्धो वृषसेनो विशां पते ।
न्यपतत्स रथे मूढो धनुरुत्सृज्य वीर्यवान् ॥ ०३९ ॥

ततः कर्णो हतं मत्वा वृषसेनं महारथः ।
पुत्रशोकाभिसंतप्तः सात्यकिं प्रत्यपीडयत् ॥ ०४० ॥

पीड्यमानस्तु कर्णेन युयुधानो महारथः ।
विव्याध बहुभिः कर्णं त्वरमाणः पुनः पुनः ॥ ०४१ ॥

स कर्णं दशभिर्विद्ध्वा वृषसेनं च सप्तभिः ।
सहस्तावापधनुषी तयोश्चिच्छेद सात्वतः ॥ ०४२ ॥

तावन्ये धनुषी सज्ये कृत्वा शत्रुभयङ्करे ।
युयुधानमविध्येतां समन्तान्निशितैः शरैः ॥ ०४३ ॥

वर्तमाने तु सङ्ग्रामे तस्मिन्वीरवरक्षये ।
अतीव शुश्रुवे राजन्गाण्डीवस्य महास्वनः ॥ ०४४ ॥

श्रुत्वा तु रथनिर्घोषं गाण्डीवस्य च निस्वनम् ।
सूतपुत्रोऽब्रवीद्राजन्दुर्योधनमिदं वचः ॥ ०४५ ॥

एष सर्वाञ्शिबीन्हत्वा मुख्यशश्च नरर्षभान् ।
पौरवांश्च महेष्वासान्गाण्डीवनिनदो महान्  ॥ ०४६  ॥

श्रूयते रथघोषश्च वासवस्येव नर्दतः ।
करोति पाण्डवो व्यक्तं कर्मौपयिकमात्मनः  ॥ ०४७  ॥

एषा विदीर्यते राजन्बहुधा भारती चमूः ।
विप्रकीर्णान्यनीकानि नावतिष्ठन्ति कर्हिचित्  ॥ ०४८  ॥

वातेनेव समुद्धूतमभ्रजालं विदीर्यते ।
सव्यसाचिनमासाद्य भिन्ना नौरिव सागरे  ॥ ०४९  ॥

द्रवतां योधमुख्यानां गाण्डीवप्रेषितैः शरैः ।
विद्धानां शतशो राजञ्श्रूयते निनदो महान्  ॥ ०५०  ॥

निशीथे राजशार्दूल स्तनयित्नोरिवाम्बरे  ॥ ०५०  ॥

हाहाकाररवांश्चैव सिंहनादांश्च पुष्कलान् ।
शृणु शब्दान्बहुविधानर्जुनस्य रथं प्रति  ॥ ०५१  ॥

अयं मध्ये स्थितोऽस्माकं सात्यकिः सात्वताधमः ।
इह चेल्लभ्यते लक्ष्यं कृत्स्नाञ्जेष्यामहे परान्  ॥ ०५२  ॥

एष पाञ्चालराजस्य पुत्रो द्रोणेन सङ्गतः ।
सर्वतः संवृतो योधै राजन्पुरुषसत्तमैः  ॥ ०५३  ॥

सात्यकिं यदि हन्यामो धृष्टद्युम्नं च पार्षतम् ।
असंशयं महाराज ध्रुवो नो विजयो भवेत्  ॥ ०५४  ॥

सौभद्रवदिमौ वीरौ परिवार्य महारथौ ।
प्रयतामो महाराज निहन्तुं वृष्णिपार्षतौ  ॥ ०५५  ॥

सव्यसाची पुरोऽभ्येति द्रोणानीकाय भारत ।
संसक्तं सात्यकिं ज्ञात्वा बहुभिः कुरुपुङ्गवैः ॥ ०५६ ॥

तत्र गच्छन्तु बहवः प्रवरा रथसत्तमाः ।
यावत्पार्थो न जानाति सात्यकिं बहुभिर्वृतम् ॥ ०५७ ॥

ते त्वरध्वं यथा शूराः शराणां मोक्षणे भृशम् ।
यथा तूर्णं व्रजत्येष परलोकाय माधवः ॥ ०५८ ॥

कर्णस्य मतमाज्ञाय पुत्रस्ते प्राह सौबलम् ।
यथेन्द्रः समरे राजन्प्राह विष्णुं यशस्विनम् ॥ ०५९ ॥

वृतः सहस्रैर्दशभिर्गजानामनिवर्तिनाम् ।
रथैश्च दशसाहस्रैर्वृतो याहि धनञ्जयम् ॥ ०६० ॥

दुःशासनो दुर्विषहः सुबाहुर्दुष्प्रधर्षणः ।
एते त्वामनुयास्यन्ति पत्तिभिर्बहुभिर्वृताः ॥ ०६१ ॥

जहि कृष्णौ महाबाहो धर्मराजं च मातुल ।
नकुलं सहदेवं च भीमसेनं च भारत ॥ ०६२ ॥

देवानामिव देवेन्द्रे जयाशा मे त्वयि स्थिता ।
जहि मातुल कौन्तेयानसुरानिव पावकिः ॥ ०६३ ॥

एवमुक्तो ययौ पार्थान्पुत्रेण तव सौबलः ।
महत्या सेनया सार्धं तव पुत्रैस्तथा विभो ॥ ०६४ ॥

प्रियार्थं तव पुत्राणां दिधक्षुः पाण्डुनन्दनान् ।
ततः प्रववृते युद्धं तावकानां परैः सह ॥ ०६५ ॥

प्रयाते सौबले राजन्पाण्डवानामनीकिनीम् ।
बलेन महता युक्तः सूतपुत्रस्तु सात्वतम्  ॥ ०६६  ॥

अभ्ययात्त्वरितं युद्धे किरञ्शरशतान्बहून् ।
तथैव पाण्डवाः सर्वे सात्यकिं पर्यवारयन्  ॥ ०६७  ॥

महद्युद्धं तदासीत्तु द्रोणस्य निशि भारत ।
धृष्टद्युम्नेन शूरेण पाञ्चालैश्च महात्मनः  ॥ ०६८  ॥

---

# अध्याय १४६

सञ्जय उवाच  ॥

ततस्ते प्राद्रवन्सर्वे त्वरिता युद्धदुर्मदाः ।
अमृष्यमाणाः संरब्धा युयुधानरथं प्रति  ॥ ००१  ॥

ते रथैः कल्पितै राजन्हेमरूप्यविभूषितैः ।
सादिभिश्च गजैश्चैव परिवव्रुः स्म सात्वतम्  ॥ ००२  ॥

अथैनं कोष्ठकीकृत्य सर्वतस्ते महारथाः ।
सिंहनादांस्तदा चक्रुस्तर्जयन्तः स्म सात्यकिम्  ॥ ००३  ॥

तेऽभ्यवर्षञ्शरैस्तीक्ष्णैः सात्यकिं सत्यविक्रमम् ।
त्वरमाणा महावीर्या माधवस्य वधैषिणः  ॥ ००४  ॥

तान्दृष्ट्वा पततस्तूर्णं शैनेयः परवीरहा ।
प्रत्यगृह्णान्महाबाहुः प्रमुञ्चन्विशिखान्बहून्  ॥ ००५  ॥

तत्र वीरो महेष्वासः सात्यकिर्युद्धदुर्मदः ।
निचकर्त शिरांस्युग्रैः शरैः संनतपर्वभिः ॥ ००६ ॥

हस्तिहस्तान्हयग्रीवान्बाहूनपि च सायुधान् ।
क्षुरप्रैः पातयामास तावकानां स माधवः ॥ ००७ ॥

पतितैश्चामरैश्चैव श्वेतच्छत्रैश्च भारत ।
बभूव धरणी पूर्णा नक्षत्रैर्द्यौरिव प्रभो ॥ ००८ ॥

तेषां तु युयुधानेन युध्यतां युधि भारत ।
बभूव तुमुलः शब्दः प्रेतानामिव क्रन्दताम् ॥ ००९ ॥

तेन शब्देन महता पूरितासीद्वसुंधरा ।
रात्रिः समभवच्चैव तीव्ररूपा भयावहा ॥ ०१० ॥

दीर्यमाणं बलं दृष्ट्वा युयुधानशराहतम् ।
श्रुत्वा च विपुलं नादं निशीथे लोमहर्षणम् ॥ ०११ ॥

सुतस्तवाब्रवीद्राजन्सारथिं रथिनां वरः ।
यत्रैष शब्दस्तत्राश्वांश्चोदयेति पुनः पुनः ॥ ०१२ ॥

तेन सञ्चोद्यमानस्तु ततस्तांस्तुरगोत्तमान् ।
सूतः सञ्चोदयामास युयुधानरथं प्रति ॥ ०१३ ॥

ततो दुर्योधनः क्रुद्धो दृढधन्वा जितक्लमः ।
शीघ्रहस्तश्चित्रयोधी युयुधानमुपाद्रवत् ॥ ०१४ ॥

ततः पूर्णायतोत्सृष्टैर्मांसशोणितभोजनैः ।
दुर्योधनं द्वादशभिर्माधवः प्रत्यविध्यत ॥ ०१५ ॥

दुर्योधनस्तेन तथा पूर्वमेवार्दितः शरैः ।

शैनेयं दशभिर्बाणैः प्रत्यविध्यदमर्षितः ॥ ०१६ ॥

ततः समभवद्युद्धमाकुलं भरतर्षभ ।
पाञ्चालानां च सर्वेषां भारतानां च दारुणम् ॥ ०१७ ॥

शैनेयस्तु रणे क्रुद्धस्तव पुत्रं महारथम् ।
सायकानामशीत्या तु विव्याधोरसि भारत ॥ ०१८ ॥

ततोऽस्य वाहान्समरे शरैर्निन्ये यमक्षयम् ।
सारथिं च रथात्तूर्णं पातयामास पत्रिणा ॥ ०१९ ॥

हताश्वे तु रथे तिष्ठन्पुत्रस्तव विशां पते ।
मुमोच निशितान्बाणाञ्शैनेयस्य रथं प्रति ॥ ०२० ॥

शरान्पञ्चाशतस्तांस्तु शैनेयः कृतहस्तवत् ।
चिच्छेद समरे राजन्प्रेषितांस्तनयेन ते ॥ ०२१ ॥

अथापरेण भल्लेन मुष्टिदेशे महद्धनुः ।
चिच्छेद रभसो युद्धे तव पुत्रस्य मारिष ॥ ०२२ ॥

विरथो विधनुष्कश्च सर्वलोकेश्वरः प्रभुः ।
आरुरोह रथं तूर्णं भास्वरं कृतवर्मणः ॥ ०२३ ॥

दुर्योधने परावृत्ते शैनेयस्तव वाहिनीम् ।
द्रावयामास विशिखैर्निशामध्ये विशां पते ॥ ०२४ ॥

शकुनिश्चार्जुनं राजन्परिवार्य समन्ततः ।
रथैरनेकसाहस्रैर्गजैश्चैव सहस्रशः ॥ ०२५ ॥

तथा हयसहस्रैश्च तुमुलं सर्वतोऽकरोत् ॥ ०२५ ॥

ते महास्त्राणि दिव्यानि विकिरन्तोऽर्जुनं प्रति ।
अर्जुनं योधयन्ति स्म क्षत्रियाः कालचोदिताः ॥ ०२६ ॥

तान्यर्जुनः सहस्राणि रथवारणवाजिनाम् ।
प्रत्यवारयदायस्तः प्रकुर्वन्विपुलं क्षयम् ॥ ०२७ ॥

ततस्तु समरे शूरः शकुनिः सौबलस्तदा ।
विव्याध निशितैर्बाणैरर्जुनं प्रहसन्निव ॥ ०२८ ॥

पुनश्चैव शतेनास्य संरुरोध महारथम् ।
तमर्जुनस्तु विंशत्या विव्याध युधि भारत ॥ ०२९ ॥

अथेतरान्महेष्वासांस्त्रिभिस्त्रिभिरविध्यत ।
संवार्य तान्बाणगणैर्युधि राजन्धनञ्जयः ॥ ०३० ॥

अवधीत्तावकान्योधान्वज्रपाणिरिवासुरान् ॥ ०३० ॥

भुजैश्छिन्नैर्महाराज शरीरैश्च सहस्रशः ।
समास्तीर्णा धरा तत्र बभौ पुष्पैरिवाचिता ॥ ०३१ ॥

स विद्धा शकुनिं भूयः पञ्चभिर्नतपर्वभिः ।
उलूकं त्रिभिराजघ्ने त्रिभिरेव महायसैः ॥ ०३२ ॥

तमुलूकस्तथा विद्धा वासुदेवमताडयत् ।
ननाद च महानादं पूरयन्वसुधातलम् ॥ ०३३ ॥

अर्जुनस्तु द्रुतं गत्वा शकुनेर्धनुराच्छिनत् ।
निन्ये च चतुरो वाहान्यमस्य सदनं प्रति ॥ ०३४ ॥

ततो रथादवप्लुत्य सौबलो भरतर्षभ ।
उलूकस्य रथं तूर्णमारुरोह विशां पते ॥ ०३५ ॥

तावेकरथमारूढौ पितापुत्रौ महारथौ ।
पार्थं सिषिचतुर्बाणैर्गिरिं मेघाविवोत्थितौ ॥ ०३६ ॥

तौ तु विद्ध्वा महाराज पाण्डवो निशितैः शरैः ।
विद्रावयंस्तव चमूं शतशो व्यधमच्छरैः ॥ ०३७ ॥

अनिलेन यथाभ्राणि विच्छिन्नानि समन्ततः ।
विच्छिन्नानि तथा राजन्बलान्यासन्विशां पते ॥ ०३८ ॥

तद्बलं भरतश्रेष्ठ वध्यमानं तथा निशि ।
प्रदुद्राव दिशः सर्वा वीक्षमाणं भयार्दितम् ॥ ०३९ ॥

उत्सृज्य वाहान्समरे चोदयन्तस्तथापरे ।
संभ्रान्ताः पर्यधावन्त तस्मिंस्तमसि दारुणे ॥ ०४० ॥

विजित्य समरे योधांस्तावकान्भरतर्षभ ।
दध्मतुर्मुदितौ शङ्खौ वासुदेवधनञ्जयौ ॥ ०४१ ॥

धृष्टद्युम्नो महाराज द्रोणं विद्ध्वा त्रिभिः शरैः ।
चिच्छेद धनुषस्तूर्णं ज्यां शरेण शितेन ह ॥ ०४२ ॥

तन्निधाय धनुर्नीडे द्रोणः क्षत्रियमर्दनः ।
आददेऽन्यद्धनुः शूरो वेगवत्सारवत्तरम् ॥ ०४३ ॥

धृष्टद्युम्नं ततो द्रोणो विद्ध्वा सप्तभिराशुगैः ।
सारथिं पञ्चभिर्बाणै राजन्विव्याध संयुगे ॥ ०४४ ॥

तं निवार्य शरैस्तूर्णं धृष्टद्युम्नो महारथः ।
व्यधमत्कौरवीं सेनां शतशोऽथ सहस्रशः ॥ ०४५ ॥

वध्यमाने बले तस्मिंस्तव पुत्रस्य मारिष ।
प्रावर्तत नदी घोरा शोणितौघतरङ्गिणी ॥ ०४६ ॥

उभयोः सेनयोर्मध्ये नराश्वद्विपवाहिनी ।
यथा वैतरणी राजन्यमराष्ट्रपुरं प्रति ॥ ०४७ ॥

द्रावयित्वा तु तत्सैन्यं धृष्टद्युम्नः प्रतापवान् ।
अत्यराजत तेजस्वी शक्रो देवगणेष्विव ॥ ०४८ ॥

अथ दध्मुर्महाशङ्खान्धृष्टद्युम्नशिखण्डिनौ ।
यमौ च युयुधानश्च पाण्डवश्च वृकोदरः ॥ ०४९ ॥

जित्वा रथसहस्राणि तावकानां महारथाः ।
सिंहनादरवांश्चक्रुः पाण्डवा जितकाशिनः ॥ ०५० ॥

पश्यतस्तव पुत्रस्य कर्णस्य च मदोत्कटाः ।
तथा द्रोणस्य शूरस्य द्रौणेश्चैव विशां पते ॥ ०५१ ॥

---

# अध्याय १४७

सञ्जय उवाच ॥

विद्रुतं स्वबलं दृष्ट्वा वध्यमानं महात्मभिः ।
क्रोधेन महताविष्टः पुत्रस्तव विशां पते ॥ ००१ ॥

अभ्येत्य सहसा कर्णं द्रोणं च जयतां वरम् ।
अमर्षवशमापन्नो वाक्यज्ञो वाक्यमब्रवीत् ॥ ००२ ॥

भवद्भ्यामिह सङ्ग्रामो क्रुद्धाभ्यां संप्रवर्तितः ।
आहवे निहतं दृष्ट्वा सैन्धवं सव्यसाचिना ॥ ००३ ॥

निहन्यमानां पाण्डूनां बलेन मम वाहिनीम् ।
भूत्वा तद्विजये शक्तावशक्ताविव पश्यतः ॥ ००४ ॥

यद्यहं भवतोस्त्याज्यो न वाच्योऽस्मि तदैव हि ।
आवां पाण्डुसुतान्संख्ये जेष्याव इति मानदौ ॥ ००५ ॥

तदैवाहं वचः श्रुत्वा भवद्भ्यामनुसंमतम् ।
कृतवान्पाण्डवैः सार्धं वैरं योधविनाशनम् ॥ ००६ ॥

यदि नाहं परित्याज्यो भवद्भ्यां पुरुषर्षभौ ।
युध्येतामनुरूपेण विक्रमेण सुविक्रमौ ॥ ००७ ॥

वाक्प्रतोदेन तौ वीरौ प्रणुन्नौ तनयेन ते ।
प्रावर्तयेतां तौ युद्धं घट्टिताविव पन्नगौ ॥ ००८ ॥

ततस्तौ रथिनां श्रेष्ठौ सर्वलोकधनुर्धरौ ।
शैनेयप्रमुखान्पार्थानभिदुद्रुवतू रणे ॥ ००९ ॥

तथैव सहिताः पार्थाः स्वेन सैन्येन संवृताः ।
अभ्यवर्तन्त तौ वीरौ नर्दमानौ मुहुर्मुहुः ॥ ०१० ॥

अथ द्रोणो महेष्वासो दशभिः शिनिपुङ्गवम् ।
अविध्यत्त्वरितं क्रुद्धः सर्वशस्त्रभृतां वरः ॥ ०११ ॥

कर्णश्च दशभिर्बाणैः पुत्रश्च तव सप्तभिः ।
दशभिर्वृषसेनश्च सौबलश्चापि सप्तभिः ॥ ०१२ ॥

एते कौरव सङ्क्रन्दे शैनेयं पर्यवारयन् ॥ ०१२ ॥

दृष्ट्वा च समरे द्रोणं निघ्नन्तं पाण्डवीं चमूम् ।
विव्यधुः सोमकास्तूर्णं समन्ताच्छरवृष्टिभिः ॥ ०१३ ॥

ततो द्रोणोऽहरत्प्राणान्क्षत्रियाणां विशां पते ।
रश्मिभिर्भास्करो राजंस्तमसामिव भारत ॥ ०१४ ॥

द्रोणेन वध्यमानानां पाञ्चालानां विशां पते ।
शुश्रुवे तुमुलः शब्दः क्रोशतामितरेतरम् ॥ ०१५ ॥

पुत्रानन्ये पितॄनन्ये भ्रातॄनन्ये च मातुलान् ।
भागिनेयान्वयस्यांश्च तथा संबन्धिबान्धवान् ॥ ०१६ ॥

उत्सृज्योत्सृज्य गच्छन्ति त्वरिता जीवितेप्सवः ॥ ०१६ ॥

अपरे मोहिता मोहात्तमेवाभिमुखा ययुः ।
पाण्डवानां रणे योधाः परलोकं तथापरे ॥ ०१७ ॥

सा तथा पाण्डवी सेना वध्यमाना महात्मभिः ।
निशि संप्राद्रवद्राजन्नुत्सृज्योल्काः सहस्रशः ॥ ०१८ ॥

पश्यतो भीमसेनस्य विजयस्याच्युतस्य च ।
यमयोर्धर्मपुत्रस्य पार्षतस्य च पश्यतः ॥ ०१९ ॥

तमसा संवृते लोके न प्राज्ञायत किञ्चन ।
कौरवाणां प्रकाशेन दृश्यन्ते तु द्रुताः परे ॥ ०२० ॥

द्रवमाणं तु तत्सैन्यं द्रोणकर्णौ महारथौ ।
जघ्नतुः पृष्ठतो राजन्किरन्तौ सायकान्बहून् ॥ ०२१ ॥

पाञ्चालेषु प्रभग्नेषु दीर्यमाणेषु सर्वशः ।

जनार्दनो दीनमनाः प्रत्यभाषत फल्गुनम्  ॥ ०२२  ॥

द्रोणकर्णौ महेष्वासावेतौ पार्षतसात्यकी ।
पाञ्चालांश्चैव सहितौ जघ्नतुः सायकैर्भृशम्  ॥ ०२३  ॥

एतयोः शरवर्षेण प्रभग्ना नो महारथाः ।
वार्यमाणापि कौन्तेय पृतना नावतिष्ठते  ॥ ०२४  ॥

एतावावां सर्वसैन्यैर्व्यूढैः सम्यगुदायुधैः ।
द्रोणं च सूतपुत्रं च प्रयतावः प्रबाधितुम्  ॥ ०२५  ॥

एतौ हि बलिनौ शूरौ कृतास्त्रौ जितकाशिनौ ।
उपेक्षितौ बलं क्रुद्धौ नाशयेतां निशामिमाम्  ॥ ०२६  ॥

एष भीमोऽभियात्युग्रः पुनरावर्त्य वाहिनीम्  ॥ ०२६  ॥

वृकोदरं तथायान्तं दृष्ट्वा तत्र जनार्दनः ।
पुनरेवाब्रवीद्राजन्हर्षयन्निव पाण्डवम्  ॥ ०२७  ॥

एष भीमो रणश्लाघी वृतः सोमकपाण्डवैः ।
रुषितोऽभ्येति वेगेन द्रोणकर्णौ महाबलौ  ॥ ०२८  ॥

एतेन सहितो युध्य पाञ्चालैश्च महारथैः ।
आश्वासनार्थं सर्वेषां सैन्यानां पाण्डुनन्दन  ॥ ०२९  ॥

ततस्तौ पुरुषव्याघ्रावुभौ माधवपाण्डवौ ।
द्रोणकर्णौ समासाद्य धिष्ठितौ रणमूर्धनि  ॥ ०३०  ॥

ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत् ।
ततो द्रोणश्च कर्णश्च परान्ममृदतुर्युधि  ॥ ०३१  ॥

स संप्रहारस्तुमुलो निशि प्रत्यभवन्महान् ।
यथा सागरयो राजंश्चन्द्रोदयविवृद्धयोः ॥ ०३२ ॥

तत उत्सृज्य पाणिभ्यः प्रदीपांस्तव वाहिनी ।
युयुधे पाण्डवैः सार्धमुन्मत्तवदहःक्षये ॥ ०३३ ॥

रजसा तमसा चैव संवृते भृशदारुणे ।
केवलं नामगोत्रेण प्रायुध्यन्त जयैषिणः ॥ ०३४ ॥

अश्रूयन्त हि नामानि श्राव्यमाणानि पार्थिवैः ।
प्रहरद्भिर्महाराज स्वयंवर इवाहवे ॥ ०३५ ॥

निःशब्दमासीत्सहसा पुनः शब्दो महानभूत् ।
क्रुद्धानां युध्यमानानां जयतां जीयतामपि ॥ ०३६ ॥

यत्र यत्र स्म दृश्यन्ते प्रदीपाः कुरुसत्तम ।
तत्र तत्र स्म ते शूरा निपतन्ति पतङ्गवत् ॥ ०३७ ॥

तथा संयुध्यमानानां विगाढाभून्महानिशा ।
पाण्डवानां च राजेन्द्र कौरवाणां च सर्वशः ॥ ०३८ ॥

---

# अध्याय १४८

सञ्जय उवाच ॥

ततः कर्णो रणे दृष्ट्वा पार्षतं परवीरहा ।
आजघानोरसि शरैर्दशभिर्मर्मभेदिभिः ॥ ००१ ॥

प्रतिविव्याध तं तूर्णं धृष्टद्युम्नोऽपि मारिष ।
पञ्चभिः सायकैर्हृष्टस्तिष्ठ तिष्ठेति चाब्रवीत्  ॥ ००२  ॥

तावन्योन्यं शरैः संख्ये संछाद्य सुमहारथौ ।
पुनः पूर्णायतोत्सृष्टैर्विव्यधाते परस्परम्  ॥ ००३  ॥

ततः पाञ्चालमुख्यस्य धृष्टद्युम्नस्य संयुगे ।
सारथिं चतुरश्चाश्वान्कर्णो विव्याध सायकैः  ॥ ००४  ॥

कार्मुकप्रवरं चास्य प्रचिच्छेद शितैः शरैः ।
सारथिं चास्य भल्लेन रथनीडादपातयत्  ॥ ००५  ॥

धृष्टद्युम्नस्तु विरथो हताश्वो हतसारथिः ।
गृहीत्वा परिघं घोरं कर्णस्याश्वानपीपिषत्  ॥ ००६  ॥

विद्धश्च बहुभिस्तेन शरैराशीविषोपमैः ।
ततो युधिष्ठिरानीकं पद्भ्यामेवान्ववर्तत  ॥ ००७  ॥

आरुरोह रथं चापि सहदेवस्य मारिष  ॥ ००७  ॥

कर्णस्यापि रथे वाहानन्यान्सूतो न्ययोजयत् ।
शङ्खवर्णान्महावेगान्सैन्धवान्साधुवाहिनः  ॥ ००८  ॥

लब्धलक्ष्यस्तु राधेयः पाञ्चालानां महारथान् ।
अभ्यपीडयदायस्तः शरैर्मेघ इवाचलान्  ॥ ००९  ॥

सा पीड्यमाना कर्णेन पाञ्चालानां महाचमूः ।
संप्राद्रवत्सुसंत्रस्ता सिंहेनेवार्दिता मृगी  ॥ ०१०  ॥

पतितास्तुरगेभ्यश्च गजेभ्यश्च महीतले ।

रथेभ्यश्च नरास्तूर्णमदृश्यन्त ततस्ततः ॥ ०११ ॥

धावमानस्य योधस्य क्षुरप्रैः स महामृधे ।
बाहू चिच्छेद वै कर्णः शिरश्चैव सकुण्डलम् ॥ ०१२ ॥

ऊरू चिच्छेद चान्यस्य गजस्थस्य विशां पते ।
वाजिपृष्ठगतस्यापि भूमिष्ठस्य च मारिष ॥ ०१३ ॥

नाज्ञासिषुर्धावमाना बहवश्च महारथाः ।
संछिन्नान्यात्मगात्राणि वाहनानि च संयुगे ॥ ०१४ ॥

ते वध्यमानाः समरे पाञ्चालाः सृञ्जयैः सह ।
तृणप्रस्पन्दनाच्चापि सूतपुत्रं स्म मेनिरे ॥ ०१५ ॥

अपि स्वं समरे योधं धावमानं विचेतसः ।
कर्णमेवाभ्यमन्यन्त ततो भीता द्रवन्ति ते ॥ ०१६ ॥

तान्यनीकानि भग्नानि द्रवमाणानि भारत ।
अभ्यद्रवद्द्रुतं कर्णः पृष्ठतो विकिरञ्शरान् ॥ ०१७ ॥

अवेक्षमाणास्तेऽन्योन्यं सुसंमूढा विचेतसः ।
नाशक्नुवन्नवस्थातुं काल्यमाना महात्मना ॥ ०१८ ॥

कर्णेनाभ्याहता राजन्पाञ्चालाः परमेषुभिः ।
द्रोणेन च दिशः सर्वा वीक्षमाणाः प्रदुद्रुवुः ॥ ०१९ ॥

ततो युधिष्ठिरो राजा स्वसैन्यं प्रेक्ष्य विद्रुतम् ।
अपयाने मतिं कृत्वा फल्गुनं वाक्यमब्रवीत् ॥ ०२० ॥

पश्य कर्णं महेष्वासं धनुष्पाणिमवस्थितम् ।
निशीथे दारुणे काले तपन्तमिव भास्करम् ॥ ०२१ ॥

कर्णसायकनुन्नानां क्रोशतामेष निस्वनः ।
अनिशं श्रूयते पार्थ त्वद्बन्धूनामनाथवत् ॥ ०२२ ॥

यथा विसृजतश्चास्य संदधानस्य चाशुगान् ।
पश्यामि जयविक्रान्तं क्षपयिष्यति नो ध्रुवम् ॥ ०२३ ॥

यदत्रानन्तरं कार्यं प्राप्तकालं प्रपश्यसि ।
कर्णस्य वधसंयुक्तं तत्कुरुष्व धनञ्जय ॥ ०२४ ॥

एवमुक्तो महाबाहुः पार्थः कृष्णमथाब्रवीत् ।
भीतः कुन्तीसुतो राजा राधेयस्यातिविक्रमात् ॥ ०२५ ॥

एवं गते प्राप्तकालं कर्णानीके पुनः पुनः ।
भवान्व्यवस्यतां क्षिप्रं द्रवते हि वरूथिनी ॥ ०२६ ॥

द्रोणसायकनुन्नानां भग्नानां मधुसूदन ।
कर्णेन त्रास्यमानानामवस्थानं न विद्यते ॥ ०२७ ॥

पश्यामि च तथा कर्णं विचरन्तमभीतवत् ।
द्रवमाणान्रथोदारान्किरन्तं विशिखैः शितैः ॥ ०२८ ॥

नैतदस्योत्सहे सोढुं चरितं रणमूर्धनि ।
प्रत्यक्षं वृष्णिशार्दूल पादस्पर्शमिवोरगः ॥ ०२९ ॥

स भवानत्र यात्वाशु यत्र कर्णो महारथः ।
अहमेनं वधिष्यामि मां वैष मधुसूदन ॥ ०३० ॥

वासुदेव उवाच ॥

पश्यामि कर्णं कौन्तेय देवराजमिवाहवे ।

विचरन्तं नरव्याघ्रमतिमानुषविक्रमम्  ॥ ०३१  ॥

नैतस्यान्योऽस्ति समरे प्रत्युद्याता धनञ्जय ।
ऋते त्वां पुरुषव्याघ्र राक्षसाद्वा घटोत्कचात्  ॥ ०३२  ॥

न तु तावदहं मन्ये प्राप्तकालं तवानघ ।
समागमं महाबाहो सूतपुत्रेण संयुगे  ॥ ०३३  ॥

दीप्यमाना महोल्केव तिष्ठत्यस्य हि वासवी ।
त्वदर्थं हि महाबाहो रौद्ररूपं बिभर्ति च  ॥ ०३४  ॥

घटोत्कचस्तु राधेयं प्रत्युद्यातु महाबलः ।
स हि भीमेन बलिना जातः सुरपराक्रमः  ॥ ०३५  ॥

तस्मिन्नस्त्राणि दिव्यानि राक्षसान्यासुराणि च ।
सततं चानुरक्तो वो हितैषी च घटोत्कचः  ॥ ०३६  ॥

विजेष्यति रणे कर्णमिति मे नात्र संशयः  ॥ ०३६  ॥

सञ्जय उवाच  ॥

एवमुक्त्वा महाबाहुः पार्थं पुष्करलोचनः ।
आजुहावाथ तद्रक्षः तच्चासीत्प्रादुरग्रतः  ॥ ०३७  ॥

कवची स शरी खड्गी सधन्वा च विशां पते ।
अभिवाद्य ततः कृष्णं पाण्डवं च धनञ्जयम्  ॥ ०३८  ॥

अब्रवीत्तं तदा हृष्टस्त्वयमस्म्यनुशाधि माम्  ॥ ०३८  ॥

ततस्तं मेघसङ्काशं दीप्तास्यं दीप्तकुण्डलम् ।
अभ्यभाषत हैडिम्बं दाशार्हः प्रहसन्निव  ॥ ०३९  ॥

घटोत्कच विजानीहि यत्त्वां वक्ष्यामि पुत्रक ।
प्राप्तो विक्रमकालोऽयं तव नान्यस्य कस्यचित् ॥ ०४० ॥

स भवान्मज्जमानानां बन्धूनां त्वं प्लवो यथा ।
विविधानि तवास्त्राणि सन्ति माया च राक्षसी ॥ ०४१ ॥

पश्य कर्णेन हैडिम्ब पाण्डवानामनीकिनी ।
काल्यमाना यथा गावः पालेन रणमूर्धनि ॥ ०४२ ॥

एष कर्णो महेष्वासो मतिमान्दृढविक्रमः ।
पाण्डवानामनीकेषु निहन्ति क्षत्रियर्षभान् ॥ ०४३ ॥

किरन्तः शरवर्षाणि महान्ति दृढधन्विनः ।
न शक्नुवन्त्यवस्थातुं पीड्यमानाः शरार्चिषा ॥ ०४४ ॥

निशीथे सूतपुत्रेण शरवर्षेण पीडिताः ।
एते द्रवन्ति पाञ्चालाः सिंहस्येव भयान्मृगाः ॥ ०४५ ॥

एतस्यैवं प्रवृद्धस्य सूतपुत्रस्य संयुगे ।
निषेद्धा विद्यते नान्यस्त्वदृते भीमविक्रम ॥ ०४६ ॥

स त्वं कुरु महाबाहो कर्म युक्तमिहात्मनः ।
मातुलानां पितॄणां च तेजसोऽस्त्रबलस्य च ॥ ०४७ ॥

एतदर्थं हि हैडिम्ब पुत्रानिच्छन्ति मानवाः ।
कथं नस्तारयेद्दुःखात्स त्वं तारय बान्धवान् ॥ ०४८ ॥

तव ह्यस्त्रबलं भीमं मायाश्च तव दुस्तराः ।
सङ्ग्रामे युध्यमानस्य सततं भीमनन्दन ॥ ०४९ ॥

पाण्डवानां प्रभग्नानां कर्णेन शितसायकैः ।

मज्जतां धार्तराष्ट्रेषु भव पारं परंतप ॥ ०५० ॥

रात्रौ हि राक्षसा भूयो भवन्त्यमितविक्रमाः ।
बलवन्तः सुदुर्धर्षाः शूरा विक्रान्तचारिणः ॥ ०५१ ॥

जहि कर्णं महेष्वासं निशीथे मायया रणे ।
पार्था द्रोणं वधिष्यन्ति धृष्टद्युम्नपुरोगमाः ॥ ०५२ ॥

केशवस्य वचः श्रुत्वा बीभत्सुरपि राक्षसम् ।
अभ्यभाषत कौरव्य घटोत्कचमरिंदमम् ॥ ०५३ ॥

घटोत्कच भवांश्चैव दीर्घबाहुश्च सात्यकिः ।
मतौ मे सर्वसैन्येषु भीमसेनश्च पाण्डवः ॥ ०५४ ॥

स भवान्यातु कर्णेन द्वैरथं युध्यतां निशि ।
सात्यकिः पृष्ठगोपस्ते भविष्यति महारथः ॥ ०५५ ॥

जहि कर्णं रणे शूरं सात्वतेन सहायवान् ।
यथेन्द्रस्तारकं पूर्वं स्कन्देन सह जघ्निवान् ॥ ०५६ ॥

घटोत्कच उवाच ॥

अलमेवास्मि कर्णाय द्रोणायालं च सत्तम ।
अन्येषां क्षत्रियाणां च कृतास्त्राणां महात्मनाम् ॥ ०५७ ॥

अद्य दास्यामि सङ्ग्रामं सूतपुत्राय तं निशि ।
यं जनाः संप्रवक्ष्यन्ति यावद्भूमिर्धरिष्यति ॥ ०५८ ॥

न चात्र शूरान्मोक्ष्यामि न भीतान्न कृताञ्जलीन् ।
सर्वानेव वधिष्यामि राक्षसं धर्ममास्थितः ॥ ०५९ ॥

सञ्जय उवाच ॥

एवमुक्त्वा महाबाहुर्हैडिम्बः परवीरहा ।
अभ्ययात्तुमुले कर्णं तव सैन्यं विभीषयन् ॥ ०६० ॥

तमापतन्तं सङ्क्रुद्धं दीप्तास्यमिव पन्नगम् ।
अभ्यस्यन्परमेष्वासः प्रतिजग्राह सूतजः ॥ ०६१ ॥

तयोः समभवद्युद्धं कर्णराक्षसयोर्निशि ।
गर्जतो राजशार्दूल शक्रप्रह्रादयोरिव ॥ ०६२ ॥

---

# अध्याय १४९

सञ्जय उवाच ॥

दृष्ट्वा घटोत्कचं राजन्सूतपुत्ररथं प्रति ।
प्रयान्तं त्वरया युक्तं जिघांसुं कर्णमाहवे ॥ ००१ ॥

अब्रवीत्तव पुत्रस्तु दुःशासनमिदं वचः ।
एतद्रक्षो रणे तूर्णं दृष्ट्वा कर्णस्य विक्रमम् ॥ ००२ ॥

अभियाति द्रुतं कर्णं तद्वारय महारथम् ।
वृतः सैन्येन महता याहि यत्र महाबलः ॥ ००३ ॥

कर्णो वैकर्तनो युद्धे राक्षसेन युयुत्सति ।
रक्ष कर्णं रणे यत्तो वृतः सैन्येन मानद ॥ ००४ ॥

एतस्मिन्नन्तरे राजञ्जटासुरसुतो बली ।
दुर्योधनमुपागम्य प्राह प्रहरतां वरः ॥ ००५ ॥

दुर्योधन तवामित्रान्प्रख्यातान्युद्धदुर्मदान् ।
पाण्डवान्हन्तुमिच्छामि त्वयाज्ञप्तः सहानुगान् ॥ ००६ ॥

जटासुरो मम पिता रक्षसामग्रणीः पुरा ।
प्रयुज्य कर्म रक्षोघ्नं क्षुद्रैः पार्थैर्निपातितः ॥ ००७ ॥

तस्यापचितिमिच्छामि त्वद्दिष्टो गन्तुमीश्वर ॥ ००७ ॥

तमब्रवीत्ततो राजा प्रीयमाणः पुनः पुनः ।
द्रोणकर्णादिभिः सार्धं पर्याप्तोऽहं द्विषद्वधे ॥ ००८ ॥

त्वं तु गच्छ मयाज्ञप्तो जहि युद्धे घटोत्कचम् ॥ ००८ ॥

तथेत्युक्त्वा महाकायः समाहूय घटोत्कचम् ।
जटासुरिर्भैमसेनिं नानाशस्त्रैरवाकिरत् ॥ ००९ ॥

अलंबलं च कर्णं च कुरुसैन्यं च दुस्तरम् ।
हैडिम्बः प्रममाथैको महावातोऽम्बुदानिव ॥ ०१० ॥

ततो मायामयं दृष्ट्वा रथं तूर्णमलंबलः ।
घटोत्कचं शरव्रातैर्नानालिङ्गैः समार्दयत् ॥ ०११ ॥

विद्ध्वा च बहुभिर्बाणैर्भैमसेनिमलंबलः ।
व्यद्रावयच्छरव्रातैः पाण्डवानामनीकिनीम् ॥ ०१२ ॥

तेन विद्राव्यमाणानि पाण्डुसैन्यानि मारिष ।
निशीथे विप्रकीर्यन्त वातनुन्ना घना इव ॥ ०१३ ॥

घटोत्कचशरैर्नुन्ना तथैव कुरुवाहिनी ।
निशीथे प्राद्रवद्राजन्नुत्सृज्योल्काः सहस्रशः  ॥ ०१४  ॥

अलंबलस्ततः क्रुद्धो भैमसेनिं महामृधे ।
आजघ्ने निशितैर्बाणैस्तोत्त्रैरिव महाद्विपम्  ॥ ०१५  ॥

तिलशस्तस्य तद्यानं सूतं सर्वायुधानि च ।
घटोत्कचः प्रचिच्छेद प्राणदच्चातिदारुणम्  ॥ ०१६  ॥

ततः कर्णं शरव्रातैः कुरूनन्यान्सहस्रशः ।
अलंबलं चाभ्यवर्षन्मेघो मेरुमिवाचलम्  ॥ ०१७  ॥

ततः सञ्चुक्षुभे सैन्यं कुरूणां राक्षसार्दितम् ।
उपर्युपरि चान्योन्यं चतुरङ्गं ममर्द ह  ॥ ०१८  ॥

जटासुरिर्महाराज विरथो हतसारथिः ।
घटोत्कचं रणे क्रुद्धो मुष्टिनाभ्यहनद्दृढम्  ॥ ०१९  ॥

मुष्टिनाभिहतस्तेन प्रचचाल घटोत्कचः ।
क्षितिकम्पे यथा शैलः सवृक्षगणगुल्मवान्  ॥ ०२०  ॥

ततः स परिघाभेन द्विड्संघघ्नेन बाहुना ।
जटासुरिं भैमसेनिरवधीन्मुष्टिना भृशम्  ॥ ०२१  ॥

तं प्रमथ्य ततः क्रुद्धस्तूर्णं हैडिम्बिराक्षिपत् ।
दोर्भ्यामिन्द्रध्वजाभाभ्यां निष्पिपेष महीतले  ॥ ०२२  ॥

अलंबलोऽपि विक्षिप्य समुत्क्षिप्य च राक्षसम् ।
घटोत्कचं रणे रोषान्निष्पिपेष महीतले  ॥ ०२३  ॥

तयोः समभवद्युद्धं गर्जतोरतिकाययोः ।

घटोत्कचालंबलयोस्तुमुलं लोमहर्षणम्  ॥ ०२४  ॥

विशेषयन्तावन्योन्यं मायाभिरतिमायिनौ ।
युयुधाते महावीर्याविन्द्रवैरोचनाविव  ॥ ०२५  ॥

पावकाम्बुनिधी भूत्वा पुनर्गरुडतक्षकौ ।
पुनर्मेघमहावातौ पुनर्वज्रमहाचलौ  ॥ ०२६  ॥

पुनः कुञ्जरशार्दूलौ पुनः स्वर्भानुभास्करौ  ॥ ०२६  ॥

एवं मायाशतसृजावन्योन्यवधकाङ्क्षिणौ ।
भृशं चित्रमयुध्येतामलंबलघटोत्कचौ  ॥ ०२७  ॥

परिघैश्च गदाभिश्च प्रासमुद्गरपट्टिशैः ।
मुसलैः पर्वताग्रैश्च तावन्योन्यं निजघ्नतुः  ॥ ०२८  ॥

हयाभ्यां च गजाभ्यां च पदातिरथिनौ पुनः ।
युयुधाते महामायौ राक्षसप्रवरौ युधि  ॥ ०२९  ॥

ततो घटोत्कचो राजन्नलंबलवधेप्सया ।
उत्पपात भृशं क्रुद्धः श्येनवन्निपपात ह  ॥ ०३०  ॥

गृहीत्वा च महाकायं राक्षसेन्द्रमलंबलम् ।
उद्यम्य न्यवधीद्भूमौ मयं विष्णुरिवाहवे  ॥ ०३१  ॥

ततो घटोत्कचः खड्गमुद्गृह्याद्भुतदर्शनम् ।
चकर्त कायाद्धि शिरो भीमं विकृतदर्शनम्  ॥ ०३२  ॥

तच्छिरो रुधिराभ्यक्तं गृह्य केशेषु राक्षसः ।
घटोत्कचो ययावाशु दुर्योधनरथं प्रति  ॥ ०३३  ॥

अभ्येत्य च महाबाहुः स्मयमानः स राक्षसः ।
रथेऽस्य निक्षिप्य शिरो विकृताननमूर्धजम्  ॥ ०३४  ॥

प्राणदद्भैरवं नादं प्रावृषीव बलाहकः  ॥ ०३४  ॥

अब्रवीच्च ततो राजन्दुर्योधनमिदं वचः ।
एष ते निहतो बन्धुस्त्वया दृष्टोऽस्य विक्रमः  ॥ ०३५  ॥

पुनर्द्रष्टासि कर्णस्य निष्ठामेतां तथात्मनः  ॥ ०३५  ॥

एवमुक्त्वा ततः प्रायात्कर्णं प्रति जनेश्वर ।
किरञ्शरशतांस्तीक्ष्णान्विमुञ्चन्कर्णमूर्धनि  ॥ ०३६  ॥

ततः समभवद्युद्धं घोररूपं भयानकम् ।
विस्मापनं महाराज नरराक्षसयोर्मृधे  ॥ ०३७  ॥

---

# अध्याय १५०

धृतराष्ट्र उवाच  ॥

यत्र वैकर्तनः कर्णो राक्षसश्च घटोत्कचः ।
निशीथे समसज्जेतां तद्युद्धमभवत्कथम्  ॥ ००१  ॥

कीदृशं चाभवद्युद्धं तस्य घोरस्य रक्षसः ।
रथश्च कीदृशस्तस्य मायाः सर्वायुधानि च  ॥ ००२  ॥

किंप्रमाणा हयास्तस्य रथकेतुर्धनुस्तथा ।

कीदृशं वर्म चैवास्य कण्ठत्राणं च कीदृशम्  ॥ ००३  ॥

पृष्टस्त्वमेतदाचक्ष्व कुशलो ह्यसि सञ्जय  ॥ ००३  ॥

सञ्जय उवाच  ॥

लोहिताक्षो महाकायस्ताम्रास्यो निम्नितोदरः ।
ऊर्ध्वरोमा हरिश्मश्रुः शङ्कुकर्णो महाहनुः  ॥ ००४  ॥

आकर्णाद्दारितास्यश्च तीक्ष्णदंष्ट्रः करालवान् ।
सुदीर्घताम्रजिह्वोष्ठो लम्बभ्रूः स्थूलनासिकः  ॥ ००५  ॥

नीलाङ्गो लोहितग्रीवो गिरिवर्ष्मा भयङ्करः ।
महाकायो महाबाहुर्महाशीर्षो महाबलः  ॥ ००६  ॥

विकचः परुषस्पर्शो विकटोद्बद्धपिण्डिकः ।
स्थूलस्फिग्गूढनाभिश्च शिथिलोपचयो महान्  ॥ ००७  ॥

तथैव हस्ताभरणी महामायोऽङ्गदी तथा ।
उरसा धारयन्निष्कमग्निमालां यथाचलः  ॥ ००८  ॥

तस्य हेममयं चित्रं बहुरूपाङ्गशोभितम् ।
तोरणप्रतिमं शुभ्रं किरीटं मूर्ध्न्यशोभत  ॥ ००९  ॥

कुण्डले बालसूर्याभे मालां हेममयीं शुभाम् ।
धारयन्विपुलं कांस्यं कवचं च महाप्रभम्  ॥ ०१०  ॥

किङ्किणीशतनिर्घोषं रक्तध्वजपताकिनम् ।
ऋक्षचर्मावनद्धाङ्गं नल्वमात्रं महारथम्  ॥ ०११  ॥

सर्वायुधवरोपेतमास्थितो ध्वजमालिनम् ।

अष्टचक्रसमायुक्तं मेघगम्भीरनिस्वनम् ॥ ०१२ ॥

तत्र मातङ्गसङ्काशा लोहिताक्षा विभीषणाः ।
कामवर्णजवा युक्ता बलवन्तोऽवहन्हयाः ॥ ०१३ ॥

राक्षसोऽस्य विरूपाक्षः सूतो दीप्तास्यकुण्डलः ।
रश्मिभिः सूर्यरश्म्याभैः सञ्जग्राह हयान्रणे ॥ ०१४ ॥

स तेन सहितस्तस्थावरुणेन यथा रविः ॥ ०१४ ॥

संसक्त इव चाभ्रेण यथाद्रिर्महता महान् ।
दिवस्पृक्सुमहान्केतुः स्यन्दनेऽस्य समुच्छ्रितः ॥ ०१५ ॥

रक्तोत्तमाङ्गः क्रव्यादो गृध्रः परमभीषणः ॥ ०१५ ॥

वासवाशनिनिर्घोषं दृढज्यमभिविक्षिपन् ।
व्यक्तं किष्कुपरीणाहं द्वादशारत्नि कार्मुकम् ॥ ०१६ ॥

रथाक्षमात्रैरिषुभिः सर्वाः प्रच्छादयन्दिशः ।
तस्यां वीरापहारिण्यां निशायां कर्णमभ्ययात् ॥ ०१७ ॥

तस्य विक्षिपतश्चापं रथे विष्टभ्य तिष्ठतः ।
अश्रूयत धनुर्घोषो विस्फूर्जितमिवाशनेः ॥ ०१८ ॥

तेन वित्रास्यमानानि तव सैन्यानि भारत ।
समकम्पन्त सर्वाणि सिन्धोरिव महोर्मयः ॥ ०१९ ॥

तमापतन्तं संप्रेक्ष्य विरूपाक्षं विभीषणम् ।
उत्स्मयन्निव राधेयस्त्वरमाणोऽभ्यवारयत् ॥ ०२० ॥

ततः कर्णोऽभ्ययादेनमस्यन्नस्यन्तममन्तिकात् ।

मातङ्ग इव मातङ्गं यूथर्षभ इवर्षभम् ॥ ०२१ ॥

स संनिपातस्तुमुलस्तयोरासीद्विशां पते ।
कर्णराक्षसयो राजन्निन्द्रशम्बरयोरिव ॥ ०२२ ॥

तौ प्रगृह्य महावेगे धनुषी भीमनिस्वने ।
प्राच्छादयेतामन्योन्यं तक्षमाणौ महेषुभिः ॥ ०२३ ॥

ततः पूर्णायतोत्सृष्टैः शरैः संनतपर्वभिः ।
न्यवारयेतामन्योन्यं कांस्ये निर्भिद्य वर्मणी ॥ ०२४ ॥

तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ ।
रथशक्तिभिरन्योन्यं विशिखैश्च ततक्षतुः ॥ ०२५ ॥

संछिन्दन्तौ हि गात्राणि संदधानौ च सायकान् ।
धक्ष्यमाणौ शरव्रातैर्नोदीक्षितुमशक्नुताम् ॥ ०२६ ॥

तौ तु विक्षतसर्वाङ्गौ रुधिरौघपरिप्लुतौ ।
व्यभ्राजेतां यथा वारिप्रस्रुतौ गैरिकाचलौ ॥ ०२७ ॥

तौ शराग्रविभिन्नाङ्गौ निर्भिन्दन्तौ परस्परम् ।
नाकम्पयेतामन्योन्यं यतमानौ महाद्युती ॥ ०२८ ॥

तत्प्रवृत्तं निशायुद्धं चिरं सममिवाभवत् ।
प्राणयोर्दीव्यतो राजन्कर्णराक्षसयोर्मृधे ॥ ०२९ ॥

तस्य संदधतस्तीक्ष्णाञ्शरांश्चासक्तमस्यतः ।
धनुर्घोषेण वित्रस्ताः स्वे परे च तदाभवन् ॥ ०३० ॥

घटोत्कचं यदा कर्णो विशेषयति नो नृप ॥ ०३० ॥

ततः प्रादुष्करोद्दिव्यमस्त्रमस्त्रविदां वरः ।
कर्णेन विहितं दृष्ट्वा दिव्यमस्त्रं घटोत्कचः ॥ ०३१ ॥

प्रादुश्चक्रे महामायां राक्षसः पाण्डुनन्दनः ॥ ०३१ ॥

शूलमुद्गरधारिण्या शैलपादपहस्तया ।
रक्षसां घोररूपाणां महत्या सेनया वृतः ॥ ०३२ ॥

तमुद्यतमहाचापं दृष्ट्वा ते व्यथिता नृपाः ।
भूतान्तकमिवायान्तं कालदण्डोग्रधारिणम् ॥ ०३३ ॥

घटोत्कचप्रमुक्तेन सिंहनादेन भीषिताः ।
प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशम् ॥ ०३४ ॥

ततोऽश्मवृष्टिरत्युग्रा महत्यासीत्समन्ततः ।
अर्धरात्रेऽधिकबलैर्विमुक्ता रक्षसां बलैः ॥ ०३५ ॥

आयसानि च चक्राणि भुशुण्ड्यः शक्तितोमराः ।
पतन्त्यविरलाः शूलाः शतघ्न्यः पट्टिशास्तथा ॥ ०३६ ॥

तदुग्रमतिरौद्रं च दृष्ट्वा युद्धं नराधिपाः ।
पुत्राश्च तव योधाश्च व्यथिता विप्रदुद्रुवुः ॥ ०३७ ॥

तत्रैकोऽस्त्रबलश्लाघी कर्णो मानी न विव्यथे ।
व्यधमच्च शरैर्मायां घटोत्कचविनिर्मिताम् ॥ ०३८ ॥

मायायां तु प्रहीणायाममर्षात्स घटोत्कचः ।
विससर्ज शरान्घोरान्सूतपुत्रं त आविशन् ॥ ०३९ ॥

ततस्ते रुधिराभ्यक्ता भित्त्वा कर्णं महाहवे ।
विविशुर्धरणीं बाणाः सङ्क्रुद्धा इव पन्नगाः ॥ ०४० ॥

सूतपुत्रस्तु सङ्क्रुद्धो लघुहस्तः प्रतापवान् ।
घटोत्कचमतिक्रम्य बिभेद दशभिः शरैः ॥ ०४१ ॥

घटोत्कचो विनिर्भिन्नः सूतपुत्रेण मर्मसु ।
चक्रं दिव्यं सहस्रारमगृह्णाद्व्यथितो भृशम् ॥ ०४२ ॥

क्षुरान्तं बालसूर्याभं मणिरत्नविभूषितम् ।
चिक्षेपाधिरथेः क्रुद्धो भैमसेनिर्जिघांसया ॥ ०४३ ॥

प्रविद्धमतिवेगेन विक्षिप्तं कर्णसायकैः ।
अभाग्यस्येव सङ्कल्पस्तन्मोघमपतद्भुवि ॥ ०४४ ॥

घटोत्कचस्तु सङ्क्रुद्धो दृष्ट्वा चक्रं निपातितम् ।
कर्णं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करम् ॥ ०४५ ॥

सूतपुत्रस्त्वसंभ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः ।
घटोत्कचरथं तूर्णं छादयामास पत्रिभिः ॥ ०४६ ॥

घटोत्कचेन क्रुद्धेन गदा हेमाङ्गदा तदा ।
क्षिप्ता भ्राम्य शरैः सापि कर्णेनाभ्याहतापतत् ॥ ०४७ ॥

ततोऽन्तरिक्षमुत्पत्य कालमेघ इवोन्नदन् ।
प्रववर्ष महाकायो द्रुमवर्षं नभस्तलात् ॥ ०४८ ॥

ततो मायाविनं कर्णो भीमसेनसुतं दिवि ।
मार्गणैरभिविव्याध घनं सूर्य इवांशुभिः ॥ ०४९ ॥

तस्य सर्वान्हयान्हत्वा संछिद्य शतधा रथम् ।
अभ्यवर्षच्छरैः कर्णः पर्जन्य इव वृष्टिमान् ॥ ०५० ॥

न चास्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम् ।
सोऽदृश्यत मुहूर्तेन श्वाविच्छललितो यथा ॥ ०५१ ॥

न हयान्न रथं तस्य न ध्वजं न घटोत्कचम् ।
दृष्टवन्तः स्म समरे शरौघैरभिसंवृतम् ॥ ०५२ ॥

स तु कर्णस्य तद्दिव्यमस्त्रमस्त्रेण शातयन् ।
मायायुद्धेन मायावी सूतपुत्रमयोधयत् ॥ ०५३ ॥

सोऽयोधयत्तदा कर्णं मायया लाघवेन च ।
अलक्ष्यमाणोऽथ दिवि शरजालेषु संपतन् ॥ ०५४ ॥

भैमसेनिर्महामायो मायया कुरुसत्तम ।
प्रचकार महामायां मोहयन्निव भारत ॥ ०५५ ॥

स स्म कृत्वा विरूपाणि वदनान्यशुभाननः ।
अग्रसत्सूतपुत्रस्य दिव्यान्यस्त्राणि मायया ॥ ०५६ ॥

पुनश्चापि महाकायः संछिन्नः शतधा रणे ।
गतसत्त्वो निरुत्साहः पतितः खाद्व्यदृश्यत ॥ ०५७ ॥

हतं तं मन्यमानाः स्म प्राणदन्कुरुपुङ्गवाः ॥ ०५७ ॥

अथ देहैर्नवैरन्यैर्दिक्षु सर्वास्वदृश्यत ।
पुनश्चापि महाकायः शतशीर्षः शतोदरः ॥ ०५८ ॥

व्यदृश्यत महाबाहुर्मैनाक इव पर्वतः ।
अङ्गुष्ठमात्रो भूत्वा च पुनरेव स राक्षसः ॥ ०५९ ॥

सागरोर्मिरिवोद्धूतस्तिर्यगूर्ध्वमवर्तत ॥ ०५९ ॥

वसुधां दारयित्वा च पुनरप्सु न्यमज्जत ।
अदृश्यत तदा तत्र पुनरुन्मज्जितोऽन्यतः ॥ ०६० ॥

सोऽवतीर्य पुनस्तस्थौ रथे हेमपरिष्कृते ।
क्षितिं द्यां च दिशश्चैव माययावृत्य दंशितः ॥ ०६१ ॥

गत्वा कर्णरथाभ्याशं विचलत्कुण्डलाननः ।
प्राह वाक्यमसंभ्रान्तः सूतपुत्रं विशां पते ॥ ०६२ ॥

तिष्ठेदानीं न मे जीवन्सूतपुत्र गमिष्यसि ।
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ ०६३ ॥

इत्युक्त्वा रोषताम्राक्षं रक्षः क्रूरपराक्रमम् ।
उत्पपातान्तरिक्षं च जहास च सुविस्वरम् ॥ ०६४ ॥

कर्णमभ्याहनच्चैव गजेन्द्रमिव केसरी ॥ ०६४ ॥

रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः ।
रथिनामृषभं कर्णं धाराभिरिव तोयदः ॥ ०६५ ॥

शरवृष्टिं च तां कर्णो दूरप्राप्तामशातयत् ॥ ०६५ ॥

दृष्ट्वा च विहतां मायां कर्णेन भरतर्षभ ।
घटोत्कचस्ततो मायां ससर्जान्तर्हितः पुनः ॥ ०६६ ॥

सोऽभवद्गिरिरित्युच्चः शिखरैस्तरुसङ्कटैः ।
शूलप्रासासिमुसलजलप्रस्रवणो महान् ॥ ०६७ ॥

तमञ्जनचयप्रख्यं कर्णो दृष्ट्वा महीधरम् ।
प्रपातैरायुधान्युग्राण्युद्वहन्तं न चुक्षुभे ॥ ०६८ ॥

स्मयन्निव ततः कर्णो दिव्यमस्त्रमुदीरयत् ।
ततः सोऽस्त्रेण शैलेन्द्रो विक्षिप्तो वै व्यनश्यत ॥ ०६९ ॥

ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि ।
अश्मवृष्टिभिरत्युग्रः सूतपुत्रमवाकिरत् ॥ ०७० ॥

अथ संधाय वायव्यमस्त्रमस्त्रविदां वरः ।
व्यधमत्कालमेघं तं कर्णो वैकर्तनो वृषा ॥ ०७१ ॥

स मार्गणगणैः कर्णो दिशः प्रच्छाद्य सर्वशः ।
जघानास्त्रं महाराज घटोत्कचसमीरितम् ॥ ०७२ ॥

ततः प्रहस्य समरे भैमसेनिर्महाबलः ।
प्रादुश्चक्रे महामायां कर्णं प्रति महारथम् ॥ ०७३ ॥

स दृष्ट्वा पुनरायान्तं रथेन रथिनां वरम् ।
घटोत्कचमसंभ्रान्तं राक्षसैर्बहुभिर्वृतम् ॥ ०७४ ॥

सिंहशार्दूलसदृशैर्मत्तद्विरदविक्रमैः ।
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैस्तथा ॥ ०७५ ॥

नानाशस्त्रधरैर्घोरैर्नानाकवचभूषणैः ।
वृतं घटोत्कचं क्रूरैर्मरुद्भिरिव वासवम् ॥ ०७६ ॥

दृष्ट्वा कर्णो महेष्वासो योधयामास राक्षसम् ॥ ०७६ ॥

घटोत्कचस्ततः कर्णं विद्ध्वा पञ्चभिराशुगैः ।
ननाद भैरवं नादं भीषयन्सर्वपार्थिवान् ॥ ०७७ ॥

भूयश्चाञ्जलिकेनाथ समार्गणगणं महत् ।
कर्णहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः ॥ ०७८ ॥

अथान्यद्धनुरादाय दृढं भारसहं महत् ।
व्यकर्षत बलात्कर्ण इन्द्रायुधमिवोच्छ्रितम्  ॥ ०७९  ॥

ततः कर्णो महाराज प्रेषयामास सायकान् ।
सुवर्णपुङ्खाञ्शत्रुघ्नान्खचरान्राक्षसान्प्रति  ॥ ०८०  ॥

तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ।
सिंहेनेवार्दितं वन्यं गजानामाकुलं कुलम्  ॥ ०८१  ॥

विधम्य राक्षसान्बाणैः साश्वसूतगजान्विभुः ।
ददाह भगवान्वह्निर्भूतानीव युगक्षये  ॥ ०८२  ॥

स हत्वा राक्षसीं सेनां शुशुभे सूतनन्दनः ।
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः  ॥ ०८३  ॥

तेषु राजसहस्रेषु पाण्डवेयेषु मारिष ।
नैनं निरीक्षितुमपि कश्चिच्छक्नोति पार्थिव  ॥ ०८४  ॥

ऋते घटोत्कचाद्राजन्राक्षसेन्द्रान्महाबलात् ।
भीमवीर्यबलोपेतात्क्रुद्धाद्वैवस्वतादिव  ॥ ०८५  ॥

तस्य क्रुद्धस्य नेत्राभ्यां पावकः समजायत ।
महोल्काभ्यां यथा राजन्सार्चिषः स्नेहबिन्दवः  ॥ ०८६  ॥

तलं तलेन संहत्य संदश्य दशनच्छदम् ।
रथमास्थाय च पुनर्मायया निर्मितं पुनः  ॥ ०८७  ॥

युक्तं गजनिभैर्वाहैः पिशाचवदनैः खरैः ।
स सूतमब्रवीत्क्रुद्धः सूतपुत्राय मा वह  ॥ ०८८  ॥

स ययौ घोररूपेण रथेन रथिनां वरः ।
द्वैरथं सूतपुत्रेण पुनरेव विशां पते ॥ ०८९ ॥

स चिक्षेप पुनः क्रुद्धः सूतपुत्राय राक्षसः ।
अष्टचक्रां महाघोरामशनिं रुद्रनिर्मिताम् ॥ ०९० ॥

तामवप्लुत्य जग्राह कर्णो न्यस्य रथे धनुः ।
चिक्षेप चैनां तस्यैव स्यन्दनात्सोऽवपुप्लुवे ॥ ०९१ ॥

साश्वसूतध्वजं यानं भस्म कृत्वा महाप्रभा ।
विवेश वसुधां भित्त्वा सुरास्तत्र विसिस्मियुः ॥ ०९२ ॥

कर्णं तु सर्वभूतानि पूजयामासुरञ्जसा ।
यदवप्लुत्य जग्राह देवसृष्टां महाशनिम् ॥ ०९३ ॥

एवं कृत्वा रणे कर्ण आरुरोह रथं पुनः ।
ततो मुमोच नाराचान्सूतपुत्रः परंतपः ॥ ०९४ ॥

अशक्यं कर्तुमन्येन सर्वभूतेषु मानद ।
यदकार्षीत्तदा कर्णः सङ्ग्रामे भीमदर्शने ॥ ०९५ ॥

स हन्यमानो नाराचैर्धाराभिरिव पर्वतः ।
गन्धर्वनगराकारः पुनरन्तरधीयत ॥ ०९६ ॥

एवं स वै महामायो मायया लाघवेन च ।
अस्त्राणि तानि दिव्यानि जघान रिपुसूदनः ॥ ०९७ ॥

निहन्यमानेष्वस्त्रेषु मायया तेन रक्षसा ।
असंभ्रान्तस्ततः कर्णस्तद्रक्षः प्रत्ययुध्यत ॥ ०९८ ॥

ततः क्रुद्धो महाराज भैमसेनिर्महाबलः ।

चकार बहुधात्मानं भीषयाणो नराधिपान् ॥ ०९९ ॥

ततो दिग्भ्यः समापेतुः सिंहव्याघ्रतरक्षवः ।
अग्निजिह्वाश्च भुजगा विहगाश्चाप्ययोमुखाः ॥ १०० ॥

स कीर्यमाणो निशितैः कर्णचापच्युतैः शरैः ।
नगराद्रिवनप्रख्यस्तत्रैवान्तरधीयत ॥ १०१ ॥

राक्षसाश्च पिशाचाश्च यातुधानाः शलावृकाः ।
ते कर्णं भक्षयिष्यन्तः सर्वतः समुपाद्रवन् ॥ १०२ ॥

अथैनं वाग्भिरुग्राभिस्त्रासयां चक्रिरे तदा ॥ १०२ ॥

उद्यतैर्बहुभिर्घोरैरायुधैः शोणितोक्षितैः ।
तेषामनेकैरेकैकं कर्णो विव्याध चाशुगैः ॥ १०३ ॥

प्रतिहत्य तु तां मायां दिव्येनास्त्रेण राक्षसीम् ।
आजघान हयानस्य शरैः संनतपर्वभिः ॥ १०४ ॥

ते भग्ना विकृताङ्गाश्च छिन्नपृष्ठाश्च सायकैः ।
वसुधामन्वपद्यन्त पश्यतस्तस्य रक्षसः ॥ १०५ ॥

स भग्नमायो हैडिम्बः कर्णं वैकर्तनं ततः ।
एष ते विदधे मृत्युमित्युक्त्वान्तरधीयत ॥ १०६ ॥

---

# अध्याय १५१

सञ्जय उवाच ॥

तस्मिंस्तथा वर्तमाने कर्णराक्षसयोर्मृधे ।
अलायुधो राक्षसेन्द्रो वीर्यवानभ्यवर्तत ॥ ००१ ॥

महत्या सेनया युक्तः सुयोधनमुपागमत् ।
राक्षसानां विरूपाणां सहस्रैः परिवारितः ॥ ००२ ॥

नानारूपधरैर्वीरैः पूर्ववैरमनुस्मरन् ॥ ००२ ॥

तस्य ज्ञातिर्हि विक्रान्तो ब्राह्मणादो बको हतः ।
किर्मीरश्च महातेजा हिडिम्बश्च सखा तथा ॥ ००३ ॥

स दीर्घकालाध्युषितं पूर्ववैरमनुस्मरन् ।
विज्ञायैतन्निशायुद्धं जिघांसुर्भीममाहवे ॥ ००४ ॥

स मत्त इव मातङ्गः सङ्क्रुद्ध इव चोरगः ।
दुर्योधनमिदं वाक्यमब्रवीद्युद्धलालसः ॥ ००५ ॥

विदितं ते महाराज यथा भीमेन राक्षसाः ।
हिडिम्बबककिर्मीरा निहता मम बान्धवाः ॥ ००६ ॥

परामर्शश्च कन्याया हिडिम्बायाः कृतः पुरा ।
किमन्यद्राक्षसानन्यानस्मांश्च परिभूय ह ॥ ००७ ॥

तमहं सगणं राजन्सवाजिरथकुञ्जरम् ।
हैडिम्बं च सहामात्यं हन्तुमभ्यागतः स्वयम् ॥ ००८ ॥

अद्य कुन्तीसुतान्सर्वान्वासुदेवपुरोगमान् ।
हत्वा संभक्षयिष्यामि सर्वैरनुचरैः सह ॥ ००९ ॥

निवारय बलं सर्वं वयं योत्स्याम पाण्डवान् ॥ ००९ ॥

तस्य तद्वचनं श्रुत्वा हृष्टो दुर्योधनस्तदा ।
प्रतिपूज्याब्रवीद्वाक्यं भ्रातृभिः परिवारितः ॥ ०१० ॥

त्वां पुरस्कृत्य सगणं वयं योत्स्यामहे परान् ।
न हि वैरान्तमनसः स्थास्यन्ति मम सैनिकाः ॥ ०११ ॥

एवमस्त्विति राजानमुक्त्वा राक्षसपुङ्गवः ।
अभ्ययात्त्वरितो भीमं सहितः पुरुषाशनैः ॥ ०१२ ॥

दीप्यमानेन वपुषा रथेनादित्यवर्चसा ।
तादृशेनैव राजेन्द्र यादृशेन घटोत्कचः ॥ ०१३ ॥

तस्याप्यतुलनिर्घोषो बहुतोरणचित्रितः ।
ऋक्षचर्मावनद्धाङ्गो नल्वमात्रो महारथः ॥ ०१४ ॥

तस्यापि तुरगाः शीघ्रा हस्तिकायाः खरस्वनाः ।
शतं युक्ता महाकाया मांसशोणितभोजनाः ॥ ०१५ ॥

तस्यापि रथनिर्घोषो महामेघरवोपमः ।
तस्यापि सुमहच्चापं दृढज्यं बलवत्तरम् ॥ ०१६ ॥

तस्याप्यक्षसमा बाणा रुक्मपुङ्खाः शिलाशिताः ।
सोऽपि वीरो महाबाहुर्यथैव स घटोत्कचः ॥ ०१७ ॥

तस्यापि गोमायुबडाभिगुप्तो ; बभूव केतुर्ज्वलनार्कतुल्यः ।
स चापि रूपेण घटोत्कचस्य ; श्रीमत्तमो व्याकुलदीपितास्यः ॥ ०१८ ॥

दीप्ताङ्गदो दीप्तकिरीटमाली ; बद्धस्रगुष्णीषनिबद्धखड्गः ।
गदी भुशुण्डी मुसली हली च ; शरासनी वारणतुल्यवर्ष्मा ॥ ०१९ ॥

रथेन तेनानलवर्चसा च ; विद्रावयन्पाण्डववाहिनीं ताम् ।
रराज संख्ये परिवर्तमानो ; विद्युन्माली मेघ इवान्तरिक्षे ॥ ०२० ॥

ते चापि सर्वे प्रवरा नरेन्द्रा ; महाबला वर्मिणश्चर्मिणश्च ।
हर्षान्विता युयुधुस्तत्र राज ;न्समन्ततः पाण्डवयोधवीराः ॥ ०२१ ॥

---

# अध्याय १५२

सञ्जय उवाच ॥

तमागतमभिप्रेक्ष्य भीमकर्माणमाहवे ।
हर्षमाहारयां चक्रुः कुरवः सर्व एव ते ॥ ००१ ॥

तथैव तव पुत्रास्ते दुर्योधनपुरोगमाः ।
अप्लवाः प्लवमासाद्य तर्तुकामा इवार्णवम् ॥ ००२ ॥

पुनर्जातमिवात्मानं मन्वानाः पार्थिवास्तदा ।
अलायुधं राक्षसेन्द्रं स्वागतेनाभ्यपूजयन् ॥ ००३ ॥

तस्मिंस्त्वमानुषे युद्धे वर्तमाने भयावहे ।
कर्णराक्षसयोर्नक्तं दारुणप्रतिदर्शने ॥ ००४ ॥

उपप्रैक्षन्त पाञ्चालाः स्मयमानाः सराजकाः ।
तथैव तावका राजन्घूर्णमानास्ततस्ततः ॥ ००५ ॥

चुक्रुशुर्नेदमस्तीति द्रोणद्रौणिकृपादयः ।
तत्कर्म दृष्ट्वा संभ्रान्ता हैडिम्बस्य रणाजिरे ॥ ००६ ॥

सर्वमाविग्नमभवद्धाहाभूतमचेतनम् ।
तव सैन्यं महाराज निराशं कर्णजीविते ॥ ००७ ॥

दुर्योधनस्तु संप्रेक्ष्य कर्णमार्तिं परां गतम् ।
अलायुधं राक्षसेन्द्रमाहूयेदमथाब्रवीत् ॥ ००८ ॥

एष वैकर्तनः कर्णो हैडिम्बेन समागतः ।
कुरुते कर्म सुमहद्यदस्यौपयिकं मृधे ॥ ००९ ॥

पश्यैतान्पार्थिवाञ्शूरान्निहतान्भैमसेनिना ।
नानाशस्त्रैरभिहतान्पादपानिव दन्तिना ॥ ०१० ॥

तवैष भागः समरे राजमध्ये मया कृतः ।
तवैवानुमते वीर तं विक्रम्य निबर्हय ॥ ०११ ॥

पुरा वैकर्तनं कर्णमेष पापो घटोत्कचः ।
मायाबलमुपाश्रित्य कर्शयत्यरिकर्शनः ॥ ०१२ ॥

एवमुक्तः स राज्ञा तु राक्षसस्तीव्रविक्रमः ।
तथेत्युक्त्वा महाबाहुर्घटोत्कचमुपाद्रवत् ॥ ०१३ ॥

ततः कर्णं समुत्सृज्य भैमसेनिरपि प्रभो ।
प्रत्यमित्रमुपायान्तं मर्दयामास मार्गणैः ॥ ०१४ ॥

तयोः समभवद्युद्धं क्रुद्धयो राक्षसेन्द्रयोः ।
मत्तयोर्वाशिताहेतोर्द्विपयोरिव कानने ॥ ०१५ ॥

रक्षसा विप्रमुक्तस्तु कर्णोऽपि रथिनां वरः ।
अभ्यद्रवद्भीमसेनं रथेनादित्यवर्चसा ॥ ०१६ ॥

तमायान्तमनादृत्य दृष्ट्वा ग्रस्तं घटोत्कचम् ।

अलायुधेन समरे सिंहेनेव गवां पतिम् ॥ ०१७ ॥

रथेनादित्यवपुषा भीमः प्रहरतां वरः ।
किरञ्शरौघान्प्रययावलायुधरथं प्रति ॥ ०१८ ॥

तमायान्तमभिप्रेक्ष्य स तदालायुधः प्रभो ।
घटोत्कचं समुत्सृज्य भीमसेनं समाह्वयत् ॥ ०१९ ॥

तं भीमः सहसाभ्येत्य राक्षसान्तकरः प्रभो ।
सगणं राक्षसेन्द्रं तं शरवर्षैरवाकिरत् ॥ ०२० ॥

तथैवालायुधो राजञ्शिलाधौतैरजिह्मगैः ।
अभ्यवर्षत कौन्तेयं पुनः पुनररिंदमः ॥ ०२१ ॥

तथा ते राक्षसाः सर्वे भीमसेनमुपाद्रवन् ।
नानाप्रहरणा भीमास्त्वत्सुतानां जयैषिणः ॥ ०२२ ॥

स ताड्यमानो बलिभिर्भीमसेनो महाबलः ।
पञ्चभिः पञ्चभिः सर्वांस्तानविध्यच्छितैः शरैः ॥ ०२३ ॥

ते वध्यमाना भीमेन राक्षसाः खरयोनयः ।
विनेदुस्तुमुलान्नादान्दुद्रुवुश्च दिशो दश ॥ ०२४ ॥

तांस्त्रास्यमानान्भीमेन दृष्ट्वा रक्षो महाबलम् ।
अभिदुद्राव वेगेन शरैश्चैनमवाकिरत् ॥ ०२५ ॥

तं भीमसेनः समरे तीक्ष्णाग्रैरक्षिणोच्छरैः ।
अलायुधस्तु तानस्तान्भीमेन विशिखान्रणे ॥ ०२६ ॥

चिच्छेद कांश्चित्समरे त्वरया कांश्चिदग्रहीत् ॥ ०२६ ॥

स तं दृष्ट्वा राक्षसेन्द्रं भीमो भीमपराक्रमः ।
गदां चिक्षेप वेगेन वज्रपातोपमां तदा ॥ ०२७ ॥

तामापतन्तीं वेगेन गदां ज्वालाकुलां ततः ।
गदया ताडयामास सा गदा भीममाव्रजत् ॥ ०२८ ॥

स राक्षसेन्द्रं कौन्तेयः शरवर्षैरवाकिरत् ।
तानप्यस्याकरोन्मोघान्राक्षसो निशितैः शरैः ॥ ०२९ ॥

ते चापि राक्षसाः सर्वे सैनिका भीमरूपिणः ।
शासनाद्राक्षसेन्द्रस्य निजघ्नू रथकुञ्जरान् ॥ ०३० ॥

पाञ्चालाः सृञ्जयाश्चैव वाजिनः परमद्विपाः ।
न शान्तिं लेभिरे तत्र रक्षसैर्भृशपीडिताः ॥ ०३१ ॥

तं तु दृष्ट्वा महाघोरं वर्तमानं महाहवे ।
अब्रवीत्पुरुषश्रेष्ठो धनञ्जयमिदं वचः ॥ ०३२ ॥

पश्य भीमं महाबाहो राक्षसेन्द्रवशं गतम् ।
पदवीमस्य गच्छ त्वं मा विचारय पाण्डव ॥ ०३३ ॥

धृष्टद्युम्नः शिखण्डी च युधामन्यूत्तमौजसौ ।
सहिता द्रौपदेयाश्च कर्णं यान्तु महारथाः ॥ ०३४ ॥

नकुलः सहदेवश्च युयुधानश्च वीर्यवान् ।
इतरान्राक्षसान्घ्नन्तु शासनात्तव पाण्डव ॥ ०३५ ॥

त्वमपीमां महाबाहो चमूं द्रोणपुरस्कृताम् ।
वारयस्व नरव्याघ्र महद्धि भयमागतम् ॥ ०३६ ॥

एवमुक्ते तु कृष्णेन यथोद्दिष्टा महारथाः ।

जग्मुर्वैकर्तनं कर्णं राक्षसांश्चेतरान्रणे ॥ ०३७ ॥

अथ पूर्णायतोत्सृष्टैः शरैराशीविषोपमैः ।
धनुश्चिच्छेद भीमस्य राक्षसेन्द्रः प्रतापवान् ॥ ०३८ ॥

हयांश्चास्य शितैर्बाणैः सारथिं च महाबलः ।
जघान मिषतः संख्ये भीमसेनस्य भारत ॥ ०३९ ॥

सोऽवतीर्य रथोपस्थाद्धताश्वो हतसारथिः ।
तस्मै गुर्वीं गदां घोरां स विनद्योत्ससर्ज ह ॥ ०४० ॥

ततस्तां भीमनिर्घोषामापतन्तीं महागदाम् ।
गदया राक्षसो घोरो निजघान ननाद च ॥ ०४१ ॥

तद्दृष्ट्वा राक्षसेन्द्रस्य घोरं कर्म भयावहम् ।
भीमसेनः प्रहृष्टात्मा गदामाशु परामृशत् ॥ ०४२ ॥

तयोः समभवद्युद्धं तुमुलं नरराक्षसोः ।
गदानिपातसंह्रादैर्भुवं कम्पयतोर्भृशम् ॥ ०४३ ॥

गदाविमुक्तौ तौ भूयः समासाद्येतरेतरम् ।
मुष्टिभिर्वज्रसंह्रादैरन्योन्यमभिजघ्नतुः ॥ ०४४ ॥

रथचक्रैर्युगैरक्षैरधिष्ठानैरुपस्करैः ।
यथासन्नमुपादाय निजघ्नतुरमर्षणौ ॥ ०४५ ॥

तौ विक्षरन्तौ रुधिरं समासाद्येतरेतरम् ।
मत्ताविव महानागावकृष्येतां पुनः पुनः ॥ ०४६ ॥

तमपश्यद्धृषीकेशः पाण्डवानां हिते रतः ।
स भीमसेनरक्षार्थं हैडिम्बं प्रत्यचोदयत् ॥ ०४७ ॥

# अध्याय १५३

सञ्जय उवाच ॥

संप्रेक्ष्य समरे भीमं रक्षसा ग्रस्तमन्तिकात् ।
वासुदेवोऽब्रवीद्वाक्यं घटोत्कचमिदं तदा ॥ ००१ ॥

पश्य भीमं महाबाहो रक्षसा ग्रस्तमन्तिकात् ।
पश्यतां सर्वसैन्यानां तव चैव महाद्युते ॥ ००२ ॥

स कर्ण त्वं समुत्सृज्य राक्षसेन्द्रमलायुधम् ।
जहि क्षिप्रं महाबाहो पश्चात्कर्णं वधिष्यसि ॥ ००३ ॥

स वार्ष्णेयवचः श्रुत्वा कर्णमुत्सृज्य वीर्यवान् ।
युयुधे राक्षसेन्द्रेण बकभ्रात्रा घटोत्कचः ॥ ००४ ॥

तयोः सुतुमुलं युद्धं बभूव निशि रक्षसोः ॥ ००४ ॥

अलायुधस्य योधांस्तु राक्षसान्भीमदर्शनान् ।
वेगेनापततः शूरान्प्रगृहीतशरासनान् ॥ ००५ ॥

आत्तायुधः सुसङ्क्रुद्धो युयुधानो महारथः ।
नकुलः सहदेवश्च चिच्छिदुर्निशितैः शरैः ॥ ००६ ॥

सर्वांश्च समरे राजन्किरीटी क्षत्रियर्षभान् ।
परिचिक्षेप बीभत्सुः सर्वतः प्रक्षिपञ्शरान् ॥ ००७ ॥

कर्णश्च समरे राजन्व्यद्रावयत पार्थिवान् ।
धृष्टद्युम्नशिखण्ड्यादीन्पाञ्चालानां महारथान्  ॥ ००८  ॥

तान्वध्यमानान्दृष्ट्वा तु भीमो भीमपराक्रमः ।
अभ्ययात्त्वरितः कर्णं विशिखान्विकिरन्रणे  ॥ ००९  ॥

ततस्तेऽप्याययुर्हत्वा राक्षसान्यत्र सूतजः ।
नकुलः सहदेवश्च सात्यकिश्च महारथः  ॥ ०१०  ॥

ते कर्णं योधयामासुः पाञ्चाला द्रोणमेव च  ॥ ०१०  ॥

अलायुधस्तु सङ्क्रुद्धो घटोत्कचमरिंदमम् ।
परिघेणातिकायेन ताडयामास मूर्धनि  ॥ ०११  ॥

स तु तेन प्रहारेण भैमसेनिर्महाबलः ।
ईषन्मूर्छान्वितोऽऽत्मानं संस्तम्भयत वीर्यवान्  ॥ ०१२  ॥

ततो दीप्ताग्निसङ्काशां शतघण्टामलङ्कृताम् ।
चिक्षेप समरे तस्मै गदां काञ्चनभूषणाम्  ॥ ०१३  ॥

सा हयान्सारथिं चैव रथं चास्य महास्वना ।
चूर्णयामास वेगेन विसृष्टा भीमकर्मणा  ॥ ०१४  ॥

स भग्नहयचक्राक्षो विशीर्णध्वजकूबरः ।
उत्पपात रथात्तूर्णं मायामास्थाय राक्षसीम्  ॥ ०१५  ॥

स समास्थाय मायां तु ववर्ष रुधिरं बहु ।
विद्युद्विभ्राजितं चासीत्तिमिराभ्राकुलं नभः  ॥ ०१६  ॥

ततो वज्रनिपाताश्च साशनिस्तनयित्नवः ।
महांश्चटचटाशब्दस्तत्रासीद्धि महाहवे  ॥ ०१७  ॥

तां प्रेक्ष्य विहितां मायां राक्षसो राक्षसेन तु ।
ऊर्ध्वमुत्पत्य हैडिम्बस्तां मायां माययावधीत्  ॥ ०१८  ॥

सोऽभिवीक्ष्य हतां मायां मायावी माययैव हि ।
अश्मवर्षं सुतुमुलं विससर्ज घटोत्कचे  ॥ ०१९  ॥

अश्मवर्षं स तद्घोरं शरवर्षेण वीर्यवान् ।
दिशो विध्वंसयामास तदद्भुतमिवाभवत्  ॥ ०२०  ॥

ततो नानाप्रहरणैरन्योन्यमभिवर्षताम् ।
आयसैः परिघैः शूलैर्गदामुसलमुद्गरैः  ॥ ०२१  ॥

पिनाकैः करवालैश्च तोमरप्रासकम्पनैः ।
नाराचैर्निशितैर्भल्लैः शरैश्चक्रैः परश्वधैः  ॥ ०२२  ॥

अयोगुडैर्भिण्डिपालैर्गोशीर्षोलूखलैरपि ।
उत्पाट्य च महाशाखैर्विविधैर्जगतीरुहैः  ॥ ०२३  ॥

शमीपीलुकरीरैश्च शम्याकैश्चैव भारत ।
इङ्गुदैर्बदरीभिश्च कोविदारैश्च पुष्पितैः  ॥ ०२४  ॥

पलाशैररिमेदैश्च प्लक्षन्यग्रोधपिप्पलैः ।
महद्भिः समरे तस्मिन्नन्योन्यमभिजघ्नतुः  ॥ ०२५  ॥

विविधैः पर्वताग्रैश्च नानाधातुभिराचितैः ।
तेषां शब्दो महानासीद्वज्राणां भिद्यतामिव  ॥ ०२६  ॥

युद्धं तदभवद्घोरं भैम्यलायुधयोर्नृप ।
हरीन्द्रयोर्यथा राजन्वालिसुग्रीवयोः पुरा  ॥ ०२७  ॥

तौ युद्ध्वा विविधैर्घोरैरायुधैर्विशिखैस्तथा ।
प्रगृह्य निशितौ खड्गावन्योन्यमभिजघ्नतुः ॥ ०२८ ॥

तावन्योन्यमभिद्रुत्य केशेषु सुमहाबलौ ।
भुजाभ्यां पर्यगृह्णीतां महाकायौ महाबलौ ॥ ०२९ ॥

तौ भिन्नगात्रौ प्रस्वेदं सुस्रुवाते जनाधिप ।
रुधिरं च महाकायावभिवृष्टाविवाचलौ ॥ ०३० ॥

अथाभिपत्य वेगेन समुद्भ्राम्य च राक्षसम् ।
बलेनाक्षिप्य हैडिम्बश्चकर्तास्य शिरो महत् ॥ ०३१ ॥

सोऽपहृत्य शिरस्तस्य कुण्डलाभ्यां विभूषितम् ।
तदा सुतुमुलं नादं ननाद सुमहाबलः ॥ ०३२ ॥

हतं दृष्ट्वा महाकायं बकज्ञातिमरिंदमम् ।
पाञ्चालाः पाण्डवाश्चैव सिंहनादान्विनेदिरे ॥ ०३३ ॥

ततो भेरीसहस्राणि शङ्खानामयुतानि च ।
अवादयन्पाण्डवेयास्तस्मिन्रक्षसि पातिते ॥ ०३४ ॥

अतीव सा निशा तेषां बभूव विजयावहा ।
विद्योतमाना विबभौ समन्ताद्दीपमालिनी ॥ ०३५ ॥

अलायुधस्य तु शिरो भैमसेनिर्महाबलः ।
दुर्योधनस्य प्रमुखे चिक्षेप गतचेतनम् ॥ ०३६ ॥

अथ दुर्योधनो राजा दृष्ट्वा हतमलायुधम् ।
बभूव परमोद्विग्नः सह सैन्येन भारत ॥ ०३७ ॥

तेन ह्यस्य प्रतिज्ञातं भीमसेनमहं युधि ।

हन्तेति स्वयमागम्य स्मरता वैरमुत्तमम् ॥ ०३८ ॥

ध्रुवं स तेन हन्तव्य इत्यमन्यत पार्थिवः ।
जीवितं चिरकालाय भ्रातॄणां चाप्यमन्यत ॥ ०३९ ॥

स तं दृष्ट्वा विनिहतं भीमसेनात्मजेन वै ।
प्रतिज्ञां भीमसेनस्य पूर्णामेवाभ्यमन्यत ॥ ०४० ॥

---

# अध्याय १५४

सञ्जय उवाच ॥

निहत्यालायुधं रक्षः प्रहृष्टात्मा घटोत्कचः ।
ननाद विविधान्नादान्वाहिन्याः प्रमुखे स्थितः ॥ ००१ ॥

तस्य तं तुमुलं शब्दं श्रुत्वा कुञ्जरकम्पनम् ।
तावकानां महाराज भयमासीत्सुदारुणम् ॥ ००२ ॥

अलायुधविषक्तं तु भैमसेनिं महाबलम् ।
दृष्ट्वा कर्णो महाबाहुः पाञ्चालान्समुपाद्रवत् ॥ ००३ ॥

दशभिर्दशभिर्बाणैर्धृष्टद्युम्नशिखण्डिनौ ।
दृढैः पूर्णायतोत्सृष्टैर्बिभेद नतपर्वभिः ॥ ००४ ॥

ततः परमनाराचैर्युधामन्यूत्तमौजसौ ।
सात्यकिं च रथोदारं कम्पयामास मार्गणैः ॥ ००५ ॥

तेषामभ्यस्यतां तत्र सर्वेषां सव्यदक्षिणम् ।
मण्डलान्येव चापानि व्यदृश्यन्त जनाधिप ॥ ००६ ॥

तेषां ज्यातलनिर्घोषो रथनेमिस्वनश्च ह ।
मेघानामिव घर्मान्ते बभूव तुमुलो निशि ॥ ००७ ॥

ज्यानेमिघोषस्तनयित्नुमान्वै ; धनुस्तडिन्मण्डलकेतुशृङ्गः ।
शरौघवर्षाकुलवृष्टिमांश्च ; सङ्ग्राममेघः स बभूव राजन् ॥ ००८ ॥

तदुद्धतं शैल इवाप्रकम्प्यो ; वर्षं महच्छैलसमानसारः ।
विध्वंसयामास रणे नरेन्द्र ; वैकर्तनः शत्रुगणावमर्दी ॥ ००९ ॥

ततोऽतुलैर्वज्रनिपातकल्पैः ; शितैः शरैः काञ्चनचित्रपुङ्खैः ।
शत्रून्व्यपोहत्समरे महात्मा ; वैकर्तनः पुत्रहिते रतस्ते ॥ ०१० ॥

संछिन्नभिन्नध्वजिनश्च के चि ;त्केचिच्छरैरर्दितभिन्नदेहाः ।
केचिद्विसूता विहयाश्च के चि ;द्वैकर्तनेनाशु कृता बभूवुः ॥ ०११ ॥

अविन्दमानास्त्वथ शर्म संख्ये ; यौधिष्ठिरं ते बलमन्वपद्यन् ।
तान्प्रेक्ष्य भग्नान्विमुखीकृतांश्च ; घटोत्कचो रोषमतीव चक्रे ॥ ०१२ ॥

आस्थाय तं काञ्चनरत्नचित्रं ; रथोत्तमं सिंह इवोन्ननाद ।
वैकर्तनं कर्णमुपेत्य चापि ; विव्याध वज्रप्रतिमैः पृषत्कैः ॥ ०१३ ॥

तौ कर्णिनाराचशिलीमुखैश्च ; नालीकदण्डैश्च सवत्सदन्तैः ।
वराहकर्णैः सविषाणशृङ्गैः ; क्षुरप्रवर्षैश्च विनेदतुः खम् ॥ ०१४ ॥

तद्बाणधारावृतमन्तरिक्षं ; तिर्यग्गताभिः समरे रराज ।
सुवर्णपुङ्खज्वलितप्रभाभि ;र्विचित्रपुष्पाभिरिव स्रजाभिः ॥ ०१५ ॥

समं हि तावप्रतिमप्रभावा ;वन्योन्यमाजघ्नतुरुत्तमास्त्रैः ।

तयोर्हि वीरोत्तमयोर्न कश्चि ;द्ददर्श तस्मिन्समरे विशेषम्  ॥ ०१६  ॥

अतीव तच्चित्रमतीव रूपं ; बभूव युद्धं रविभीमसून्वोः ।
समाकुलं शस्त्रनिपातघोरं ; दिवीव राह्वंशुमतोः प्रतप्तम्  ॥ ०१७  ॥

घटोत्कचो यदा कर्णं न विशेषयते नृप ।
तदा प्रादुश्चकारोग्रमस्त्रमस्त्रविदां वरः  ॥ ०१८  ॥

तेनास्त्रेण हयान्पूर्वं हत्वा कर्णस्य राक्षसः ।
सारथिं चैव हैडिम्बः क्षिप्रमन्तरधीयत  ॥ ०१९  ॥

धृतराष्ट्र उवाच  ॥

तथा ह्यन्तर्हिते तस्मिन्कूटयोधिनि राक्षसे ।
मामकैः प्रतिपन्नं यत्तन्ममाचक्ष्व सञ्जय  ॥ ०२०  ॥

सञ्जय उवाच  ॥

अन्तर्हितं राक्षसं तं विदित्वा ; संप्राक्रोशन्कुरवः सर्व एव ।
कथं नायं राक्षसः कूटयोधी ; हन्यात्कर्णं समरेऽदृश्यमानः  ॥ ०२१  ॥

ततः कर्णो लघुचित्रास्त्रयोधी ; सर्वा दिशो व्यावृणोद्बाणजालैः ।
न वै किञ्चिद्व्यापतत्तत्र भूतं ; तमोभूते सायकैरन्तरिक्षे  ॥ ०२२  ॥

न चाददानो न च संदधानो ; न चेषुधी स्पृशमानः कराग्रैः ।
अदृश्यद्वै लाघवात्सूतपुत्रः ; सर्वं बाणैश्छादयानोऽन्तरिक्षम्  ॥ ०२३  ॥

ततो मायां विहितामन्तरिक्षे ; घोरां भीमां दारुणां राक्षसेन ।
संपश्यामो लोहिताभ्रप्रकाशां ; देदीप्यन्तीमग्निशिखामिवोग्राम्  ॥ ०२४  ॥

ततस्तस्या विद्युतः प्रादुरास ;न्नुल्काश्चापि ज्वलिताः कौरवेन्द्र ।

घोषश्चान्यः प्रादुरासीत्सुघोरः ; सहस्रशो नदतां दुन्दुभीनाम्  ॥ ०२५  ॥

ततः शराः प्रापतन्रुक्मपुङ्खाः ; शक्त्यः प्रासा मुसलान्यायुधानि ।
परश्वधास्तैलधौताश्च खड्गाः ; प्रदीप्ताग्राः पट्टिशास्तोमराश्च  ॥ ०२६  ॥

मयूखिनः परिघा लोहबद्धा ; गदाश्चित्राः शितधाराश्च शूलाः ।
गुर्व्यो गदा हेमपट्टावनद्धाः ; शतघ्न्यश्च प्रादुरासन्समन्तात्  ॥ ०२७  ॥

महाशिलाश्चापतंस्तत्र तत्र ; सहस्रशः साशनयः सवज्राः ।
चक्राणि चानेकशतक्षुराणि ; प्रादुर्बभूवुर्ज्वलनप्रभाणि  ॥ ०२८  ॥

तां शक्तिपाषाणपरश्वधानां ; प्रासासिवज्राशनिमुद्गराणाम् ।
वृष्टिं विशालां ज्वलितां पतन्तीं ; कर्णः शरौघैर्न शशाक हन्तुम्  ॥ ०२९  ॥

शराहतानां पततां हयानां ; वज्राहतानां पततां गजानाम् ।
शिलाहतानां च महारथानां ; महान्निनादः पततां बभूव  ॥ ०३०  ॥

सुभीमनानाविधशस्त्रपातै ;र्घटोत्कचेनाभिहतं समन्तात् ।
दौर्योधनं तद्बलमार्तरूप ;मावर्तमानं ददृशे भ्रमन्तम्  ॥ ०३१  ॥

हाहाकृतं संपरिवर्तमानं ; संलीयमानं च विषण्णरूपम् ।
ते त्वार्यभावात्पुरुषप्रवीराः ; पराङ्मुखा न बभूवुस्तदानीम्  ॥ ०३२  ॥

तां राक्षसीं घोरतरां सुभीमां ; वृष्टिं महाशस्त्रमयीं पतन्तीम् ।
दृष्ट्वा बलौघांश्च निपात्यमाना ;न्महद्भयं तव पुत्रान्विवेश  ॥ ०३३  ॥

शिवाश्च वैश्वानरदीप्तजिह्वाः ; सुभीमनादाः शतशो नदन्त्यः ।
रक्षोगणान्नर्दतश्चाभिवीक्ष्य ; नरेन्द्रयोधा व्यथिता बभूवुः  ॥ ०३४  ॥

ते दीप्तजिह्वाननतीक्ष्णदंष्ट्रा ; विभीषणाः शैलनिकाशकायाः ।
नभोगताः शक्तिविषक्तहस्ता ; मेघा व्यमुञ्चन्निव वृष्टिमार्गम्  ॥ ०३५  ॥

तैराहतास्ते शरशक्तिशूलै ;र्गदाभिरुग्रैः परिघैश्च दीप्तैः ।
वज्रैः पिनाकैरशनिप्रहारै ;श्चक्रैः शतघ्न्युन्मथिताश्च पेतुः ॥ ०३६ ॥

हुडा भुशुण्ड्योऽश्मगुडाः शतघ्न्यः ; स्थूणाश्च कार्ष्णायसपट्टनद्धाः ।
अवाकिरंस्तव पुत्रस्य सैन्यं ; तथा रौद्रं कश्मलं प्रादुरासीत् ॥ ०३७ ॥

निष्कीर्णान्त्रा विहतैरुत्तमाङ्गैः ; संभग्नाङ्गाः शेरते तत्र शूराः ।
भिन्ना हयाः कुञ्जराश्चावभग्नाः ; सञ्चूर्णिताश्चैव रथाः शिलाभिः ॥ ०३८ ॥

एवं महच्छस्त्रवर्षं सृजन्त ;स्ते यातुधाना भुवि घोररूपाः ।
मायाः सृष्टास्तत्र घटोत्कचेन ; नामुञ्चन्वै याचमानं न भीतम् ॥ ०३९ ॥

तस्मिन्घोरे कुरुवीरावमर्दे ; कालोत्सृष्टे क्षत्रियाणामभावे ।
ते वै भग्नाः सहसा व्यद्रवन्त ; प्राक्रोशन्तः कौरवाः सर्व एव ॥ ०४० ॥

पलायध्वं कुरवो नैतदस्ति ; सेन्द्रा देवा घ्नन्ति नः पाण्डवार्थे ।
तथा तेषां मज्जतां भारतानां ; न स्म द्वीपस्तत्र कश्चिद्बभूव ॥ ०४१ ॥

तस्मिन्सङ्क्रन्दे तुमुले वर्तमाने ; सैन्ये भग्ने लीयमाने कुरूणाम् ।
अनीकानां प्रविभागेऽप्रकाशे ; न ज्ञायन्ते कुरवो नेतरे वा ॥ ०४२ ॥

निर्मर्यादे विद्रवे घोररूपे ; सर्वा दिशः प्रेक्षमाणाः स्म शून्याः ।
तां शस्त्रवृष्टिमुरसा गाहमानं ; कर्णं चैकं तत्र राजन्नपश्यम् ॥ ०४३ ॥

ततो बाणैरावृणोदन्तरिक्षं ; दिव्यां मायां योधयन्राक्षसस्य ।
ह्रीमान्कुर्वन्दुष्करमार्यकर्म ; नैवामुह्यत्संयुगे सूतपुत्रः ॥ ०४४ ॥

ततो भीताः समुदैक्षन्त कर्णं ; राजन्सर्वे सैन्धवा बाह्लिकाश्च ।
असंमोहं पूजयन्तोऽस्य संख्ये ; संपश्यन्तो विजयं राक्षसस्य ॥ ०४५ ॥

तेनोत्सृष्टा चक्रयुक्ता शतघ्नी ; समं सर्वांश्चतुरोऽश्वाञ्जघान ।
ते जानुभिर्जगतीमन्वपद्य ;न्गतासवो निर्दशनाक्षिजिह्वाः ॥ ०४६ ॥

ततो हताश्वादवरुह्य वाहा ;दन्तर्मनाः कुरुषु प्राद्रवत्सु ।
दिव्ये चास्त्रे मायया वध्यमाने ; नैवामुह्यच्चिन्तयन्प्राप्तकालम् ॥ ०४७ ॥

ततोऽब्रुवन्कुरवः सर्व एव ; कर्णं दृष्ट्वा घोररूपां च मायाम् ।
शक्त्या रक्षो जहि कर्णाद्य तूर्णं ; नश्यन्त्येते कुरवो धार्तराष्ट्राः ॥ ०४८ ॥

करिष्यतः किं च नो भीमपार्थौ ; तपन्तमेनं जहि रक्षो निशीथे ।
यो नः सङ्ग्रामाद्घोररूपाद्विमुच्ये ;त्स नः पार्थान्समरे योधयेत ॥ ०४९ ॥

तस्मादेनं राक्षसं घोररूपं ; जहि शक्त्या दत्तया वासवेन ।
मा कौरवाः सर्व एवेन्द्रकल्पा ; रात्रीमुखे कर्ण नेशुः सयोधाः ॥ ०५० ॥

स वध्यमानो रक्षसा वै निशीथे ; दृष्ट्वा राजन्नश्यमानं बलं च ।
महच्च श्रुत्वा निनदं कौरवाणां ; मतिं दध्रे शक्तिमोक्षाय कर्णः ॥ ०५१ ॥

स वै क्रुद्धः सिंह इवात्यमर्षी ; नामर्षयत्प्रतिघातं रणे तम् ।
शक्तिं श्रेष्ठां वैजयन्तीमसह्यां ; समाददे तस्य वधं चिकीर्षन् ॥ ०५२ ॥

यासौ राजन्निहिता वर्षपूगा ;न्वधायाजौ सत्कृता फल्गुनस्य ।
यां वै प्रादात्सूतपुत्राय शक्रः ; शक्तिं श्रेष्ठां कुण्डलाभ्यां निमाय ॥ ०५३ ॥

तां वै शक्तिं लेलिहानां प्रदीप्तां ; पाशैर्युक्तामन्तकस्येव रात्रिम् ।
मृत्योः स्वसारं ज्वलितामिवोल्कां ; वैकर्तनः प्राहिणोद्राक्षसाय ॥ ०५४ ॥

तामुत्तमां परकायापहन्त्रीं ; दृष्ट्वा सौतेर्बाहुसंस्थां ज्वलन्तीम् ।
भीतं रक्षो विप्रदुद्राव राज ;न्कृत्वात्मानं विन्ध्यपादप्रमाणम् ॥ ०५५ ॥

दृष्ट्वा शक्तिं कर्णबाह्वन्तरस्थां ; नेदुर्भूतान्यन्तरिक्षे नरेन्द्र ।

ववुर्वातास्तुमुलाश्चापि राज ;न्सनिर्घाता चाशानिर्गां जगाम ॥ ०५६ ॥

सा तां मायां भस्म कृत्वा ज्वलन्ती ; भित्त्वा गाढं हृदयं राक्षसस्य ।
ऊर्ध्वं ययौ दीप्यमाना निशायां ; नक्षत्राणामन्तराण्याविशन्ती ॥ ०५७ ॥

युद्धा चित्रैर्विविधैः शस्त्रपूगै ;र्दिव्यैर्वीरो मानुषै राक्षसैश्च ।
नदन्नादान्विविधान्भैरवांश्च ; प्राणानिष्टांस्त्याजितः शक्रशक्त्या ॥ ०५८ ॥

इदं चान्यच्चित्रमाश्चर्यरूपं ; चकारासौ कर्म शत्रुक्षयाय ।
तस्मिन्काले शक्तिनिर्भिन्नमर्मा ; बभौ राजन्मेघशैलप्रकाशः ॥ ०५९ ॥

ततोऽन्तरिक्षादपतद्गतासुः ; स राक्षसेन्द्रो भुवि भिन्नदेहः ।
अवाक्शिराः स्तब्धगात्रो विजिह्वो ; घटोत्कचो महदास्थाय रूपम् ॥ ०६० ॥

स तद्रूपं भैरवं भीमकर्मा ; भीमं कृत्वा भैमसेनिः पपात ।
हतोऽप्येवं तव सैन्येकदेश ;मपोथयत्कौरवान्भीषयाणः ॥ ०६१ ॥

ततो मिश्राः प्राणदन्सिंहनादै ;र्भेर्यः शङ्खा मुरजाश्चानकाश्च ।
दग्धां मायां निहतं राक्षसं च ; दृष्ट्वा हृष्टाः प्राणदन्कौरवेयाः ॥ ०६२ ॥

ततः कर्णः कुरुभिः पूज्यमानो ; यथा शक्रो वृत्रवधे मरुद्भिः ।
अन्वारूढस्तव पुत्रं रथस्थं ; हृष्टश्चापि प्राविशत्स्वं स सैन्यम् ॥ ०६३ ॥

---

# द्रोणवधपर्व

## अध्याय १५५

सञ्जय उवाच ॥

हैडिम्बं निहतं दृष्ट्वा विकीर्णमिव पर्वतम् ।
पाण्डवा दीनमनसः सर्वे बाष्पाकुलेक्षणाः ॥ ००१ ॥

वासुदेवस्तु हर्षेण महताभिपरिप्लुतः ।
ननाद सिंहवन्नादं व्यथयन्निव भारत ॥ ००२ ॥

विनद्य च महानादं पर्यष्वजत फल्गुनम् ॥ ००२ ॥

स विनद्य महानादमभीशून्संनियम्य च ।
ननर्त हर्षसंवीतो वातोद्धूत इव द्रुमः ॥ ००३ ॥

ततो विनिर्भ्राम्य पुनः पार्थमास्फोट्य चासकृत् ।
रथोपस्थगतो भीमं प्राणदत्पुनरच्युतः ॥ ००४ ॥

प्रहृष्टमनसं ज्ञात्वा वासुदेवं महाबलम् ।
अब्रवीदर्जुनो राजन्नातिहृष्टमना इव ॥ ००५ ॥

अतिहर्षोऽयमस्थाने तवाद्य मधुसूदन ।
शोकस्थाने परे प्राप्ते हैडिम्बस्य वधेन वै ॥ ००६ ॥

विमुखानि च सैन्यानि हतं दृष्ट्वा घटोत्कचम् ।
वयं च भृशमाविग्ना हैडिम्बस्य निपातनात् ॥ ००७ ॥

नैतत्कारणमल्पं हि भविष्यति जनार्दन ।

तदद्य शंस मे पृष्टः सत्यं सत्यवतां वर ॥ ००८ ॥

यद्येतन्न रहस्यं ते वक्तुमर्हस्यरिंदम ।
धैर्यस्य वैकृतं ब्रूहि त्वमद्य मधुसूदन ॥ ००९ ॥

समुद्रस्येव सङ्क्षोभो मेरोरिव विसर्पणम् ।
तथैतल्लाघवं मन्ये तव कर्म जनार्दन ॥ ०१० ॥

वासुदेव उवाच ॥

अतिहर्षमिमं प्राप्तं शृणु मे त्वं धनञ्जय ।
अतीव मनसः सद्यः प्रसादकरमुत्तमम् ॥ ०११ ॥

शक्तिं घटोत्कचेनेमां व्यंसयित्वा महाद्युते ।
कर्णं निहतमेवाजौ विद्धि सद्यो धनञ्जय ॥ ०१२ ॥

शक्तिहस्तं पुनः कर्णं को लोकेऽस्ति पुमानिह ।
य एनमभितस्तिष्ठेत्कार्त्तिकेयमिवाहवे ॥ ०१३ ॥

दिष्ट्यापनीतकवचो दिष्ट्यापहृतकुण्डलः ।
दिष्ट्या च व्यंसिता शक्तिरमोघास्य घटोत्कचे ॥ ०१४ ॥

यदि हि स्यात्सकवचस्तथैव च सकुण्डलः ।
सामरानपि लोकांस्त्रीनेकः कर्णो जयेद्बली ॥ ०१५ ॥

वासवो वा कुबेरो वा वरुणो वा जलेश्वरः ।
यमो वा नोत्सहेत्कर्णं रणे प्रतिसमासितुम् ॥ ०१६ ॥

गाण्डीवमायम्य भवांश्चक्रं वाहं सुदर्शनम् ।
न शक्तौ स्वो रणे जेतुं तथायुक्तं नरर्षभम् ॥ ०१७ ॥

त्वद्धितार्थं तु शक्रेण मायया हृतकुण्डलः ।
विहीनकवचश्चायं कृतः परपुरञ्जयः ॥ ०१८ ॥

उत्कृत्य कवचं यस्मात्कुण्डले विमले च ते ।
प्रादाच्छक्राय कर्णो वै तेन वैकर्तनः स्मृतः ॥ ०१९ ॥

आशीविष इव क्रुद्धः स्तम्भितो मन्त्रतेजसा ।
तथाद्य भाति कर्णो मे शान्तज्वाल इवानलः ॥ ०२० ॥

यदा प्रभृति कर्णाय शक्तिर्दत्ता महात्मना ।
वासवेन महाबाहो प्राप्ता यासौ घटोत्कचे ॥ ०२१ ॥

कुण्डलाभ्यां निमायाथ दिव्येन कवचेन च ।
तां प्राप्यामन्यत वृषा सततं त्वां हतं रणे ॥ ०२२ ॥

एवं गतेऽपि शक्योऽयं हन्तुं नान्येन केनचित् ।
ऋते त्वा पुरुषव्याघ्र शपे सत्येन चानघ ॥ ०२३ ॥

ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः ।
रिपुष्वपि दयावांश्च तस्मात्कर्णो वृषा स्मृतः ॥ ०२४ ॥

युद्धशौण्डो महाबाहुर्नित्योद्यतशरासनः ।
केसरीव वने मर्दन्मत्तमातङ्गयूथपान् ॥ ०२५ ॥

विमदान्रथशार्दूलान्कुरुते रणमूर्धनि ॥ ०२५ ॥

मध्यङ्गत इवादित्यो यो न शक्यो निरीक्षितुम् ।
त्वदीयैः पुरुषव्याघ्र योधमुख्यैर्महात्मभिः ॥ ०२६ ॥

शरजालसहस्रांशुः शरदीव दिवाकरः ॥ ०२६ ॥

तपान्ते तोयदो यद्वच्छरधाराः क्षरत्यसौ ।
दिव्यास्त्रजलदः कर्णः पर्जन्य इव वृष्टिमान्  ॥ ०२७  ॥

सोऽद्य मानुषतां प्राप्तो विमुक्तः शक्रदत्तया  ॥ ०२७  ॥

एको हि योगोऽस्य भवेद्वधाय ; छिद्रे ह्येनं स्वप्रमत्तः प्रमत्तम् ।
कृच्छ्रप्राप्तं रथचक्रे निमग्ने ; हन्याः पूर्वं त्वं तु सञ्ज्ञां विचार्य  ॥ ०२८  ॥

जरासंधश्चेदिराजो महात्मा ; महाबलश्चैकलव्यो निषादः ।
एकैकशो निहताः सर्व एव ; योगैस्तैस्तैस्त्वद्धितार्थं मयैव  ॥ ०२९  ॥

अथापरे निहता राक्षसेन्द्रा ; हिडिम्बकिर्मीरबकप्रधानाः ।
अलायुधः परसैन्यावमर्दी ; घटोत्कचश्चोग्रकर्मा तरस्वी  ॥ ०३०  ॥

---

# अध्याय १५६

अर्जुन उवाच  ॥

कथमस्मद्धितार्थं ते कैश्च योगैर्जनार्दन ।
जरासंधप्रभृतयो घातिताः पृथिवीष्वराः  ॥ ००१  ॥

वासुदेव उवाच  ॥

जरासंधश्चेदिराजो नैषादिश्च महाबलः ।
यदि स्युर्न हताः पूर्वमिदानीं स्युर्भयङ्कराः  ॥ ००२  ॥

सुयोधनस्तानवश्यं वृणुयाद्रथसत्तमान् ।
तेऽस्माभिर्नित्यसंदुष्टाः संश्रयेयुश्च कौरवान्  ॥ ००३  ॥

ते हि वीरा महात्मानः कृतास्त्रा दृढयोधिनः ।
धार्तराष्ट्रीं चमूं कृत्स्नां रक्षेयुरमरा इव ॥ ००४ ॥

सूतपुत्रो जरासंधश्चेदिराजो निषादजः ।
सुयोधनं समाश्रित्य तपेरन्पृथिवीमिमाम् ॥ ००५ ॥

योगैरपि हता यैस्ते तान्मे शृणु धनञ्जय ।
अजय्या हि विना योगैर्मृधे ते दैवतैरपि ॥ ००६ ॥

एकैको हि पृथक्तेषां समस्तां सुरवाहिनीम् ।
योधयेत्समरे पार्थ लोकपालाभिरक्षिताम् ॥ ००७ ॥

जरासंधो हि रुषितो रौहिणेयप्रधर्षितः ।
अस्मद्वधार्थं चिक्षेप गदां वै लोहितामुखीम् ॥ ००८ ॥

सीमन्तमिव कुर्वाणां नभसः पावकप्रभाम् ।
व्यदृश्यतापतन्ती सा शक्रमुक्ता यथाशनिः ॥ ००९ ॥

तामापतन्तीं दृष्ट्वैव गदां रोहिणिनन्दनः ।
प्रतिघातार्थमस्त्रं वै स्थूणाकर्णमवासृजत् ॥ ०१० ॥

अस्त्रवेगप्रतिहता सा गदा प्रापतद्भुवि ।
दारयन्ती धरां देवीं कम्पयन्तीव पर्वतान् ॥ ०११ ॥

तत्र स्म राक्षसी घोरा जरा नामाशुविक्रमा ।
संधयामास तं जातं जरासंधमरिंदमम् ॥ ०१२ ॥

द्वाभ्यां जातो हि मातृभ्यामर्धदेहः पृथक्पृथक् ।
तया स संधितो यस्माज्जरासंधस्ततः स्मृतः ॥ ०१३ ॥

सा तु भूमिगता पार्थ हता ससुतबान्धवा ।
गदया तेन चास्त्रेण स्थूणाकर्णेन राक्षसी ॥ ०१४ ॥

विनाभूतः स गदया जरासंधो महामृधे ।
निहतो भीमसेनेन पश्यतस्ते धनञ्जय ॥ ०१५ ॥

यदि हि स्याद्गदापाणिर्जरासंधः प्रतापवान् ।
सेन्द्रा देवा न तं हन्तुं रणे शक्ता नरोत्तम ॥ ०१६ ॥

त्वद्धितार्थं हि नैषादिरङ्गुष्ठेन वियोजितः ।
द्रोणेनाचार्यकं कृत्वा छद्मना सत्यविक्रमः ॥ ०१७ ॥

स तु बद्धाङ्गुलित्राणो नैषादिर्दृढविक्रमः ।
अस्यन्नेको वनचरो बभौ राम इवापरः ॥ ०१८ ॥

एकलव्यं हि साङ्गुष्ठमशक्ता देवदानवाः ।
सराक्षसोरगाः पार्थ विजेतुं युधि कर्हिचित् ॥ ०१९ ॥

किमु मानुषमात्रेण शक्यः स्यात्प्रतिवीक्षितुम् ।
दृढमुष्टिः कृती नित्यमस्यमानो दिवानिशम् ॥ ०२० ॥

त्वद्धितार्थं तु स मया हतः सङ्ग्राममूर्धनि ।
चेदिराजश्च विक्रान्तः प्रत्यक्षं निहतस्तव ॥ ०२१ ॥

स चाप्यशक्यः सङ्ग्रामे जेतुं सर्वैः सुरासुरैः ।
वधार्थं तस्य जातोऽहमन्येषां च सुरद्विषाम् ॥ ०२२ ॥

त्वत्सहायो नरव्याघ्र लोकानां हितकाम्यया ।
हिडिम्बबककिर्मीरा भीमसेनेन पातिताः ॥ ०२३ ॥

रावणेन समप्राणा ब्रह्मयज्ञविनाशनाः ॥ ०२३ ॥

हतस्तथैव मायावी हैडिम्बेनाप्यलायुधः ।
हैडिम्बश्चाप्युपायेन शक्त्या कर्णेन घातितः ॥ ०२४ ॥

यदि ह्येनं नाहनिष्यत्कर्णः शक्त्या महामृधे ।
मया वध्योऽभविष्यत्स भैमसेनिर्घटोत्कचः ॥ ०२५ ॥

मया न निहतः पूर्वमेष युष्मत्प्रियेप्सया ।
एष हि ब्राह्मणद्वेषी यज्ञद्वेषी च राक्षसः ॥ ०२६ ॥

धर्मस्य लोप्ता पापात्मा तस्मादेष निपातितः ।
व्यंसिता चाप्युपायेन शक्रदत्ता मयानघ ॥ ०२७ ॥

ये हि धर्मस्य लोप्तारो वध्यास्ते मम पाण्डव ।
धर्मसंस्थापनार्थं हि प्रतिज्ञैषा ममाव्यया ॥ ०२८ ॥

ब्रह्म सत्यं दमः शौचं धर्मो ह्रीः श्रीर्धृतिः क्षमा ।
यत्र तत्र रमे नित्यमहं सत्येन ते शपे ॥ ०२९ ॥

न विषादस्त्वया कार्यः कर्णं वैकर्तनं प्रति ।
उपदेक्ष्याम्युपायं ते येन तं प्रसहिष्यसि ॥ ०३० ॥

सुयोधनं चापि रणे हनिष्यति वृकोदरः ।
तस्य चापि वधोपायं वक्ष्यामि तव पाण्डव ॥ ०३१ ॥

वर्धते तुमुलस्त्वेष शब्दः परचमूं प्रति ।
विद्रवन्ति च सैन्यानि त्वदीयानि दिशो दश ॥ ०३२ ॥

लब्धलक्ष्या हि कौरव्या विधमन्ति चमूं तव ।
दहत्येष च वः सैन्यं द्रोणः प्रहरतां वरः ॥ ०३३ ॥

# अध्याय १५७

धृतराष्ट्र उवाच ॥

एकवीरवधे मोघा शक्तिः सूतात्मजे यदा ।
कस्मात्सर्वान्समुत्सृज्य स तां पार्थे न मुक्तवान् ॥ ००१ ॥

तस्मिन्हते हता हि स्युः सर्वे पाण्डवसृञ्जयाः ।
एकवीरवधे कस्मान्न युद्धे जयमादधत् ॥ ००२ ॥

आहूतो न निवर्तेयमिति तस्य महाव्रतम् ।
स्वयमाह्वयितव्यः स सूतपुत्रेण फल्गुनः ॥ ००३ ॥

ततो द्वैरथमानीय फल्गुनं शक्रदत्तया ।
न जघान वृषा कस्मात्तन्ममाचक्ष्व सञ्जय ॥ ००४ ॥

नूनं बुद्धिविहीनश्चाप्यसहायश्च मे सुतः ।
शत्रुभिर्व्यंसितोपायः कथं नु स जयेदरीन् ॥ ००५ ॥

या ह्यस्य परमा शक्तिर्जयस्य च परायणम् ।
सा शक्तिर्वासुदेवेन व्यंसितास्य घटोत्कचे ॥ ००६ ॥

कुणेर्यथा हस्तगतं ह्रियेद्बिल्वं बलीयसा ।
तथा शक्तिरमोघा सा मोघीभूता घटोत्कचे ॥ ००७ ॥

यथा वराहस्य शुनश्च युध्यतो ;स्तयोरभावे श्वपचस्य लाभः ।
मन्ये विद्वन्वासुदेवस्य तद्व ;द्युद्धे लाभः कर्णहैडिम्बयोर्वै ॥ ००८ ॥

घटोत्कचो यदि हन्याद्धि कर्णं ; परो लाभः स भवेत्पाण्डवानाम् ।
वैकर्तनो वा यदि तं निहन्या ;त्तथापि कृत्यं शक्तिनाशात्कृतं स्यात्  ॥ ००९  ॥

इति प्राज्ञः प्रज्ञयैतद्विचार्य ; घटोत्कचं सूतपुत्रेण युद्धे ।
अयोधयद्वासुदेवो नृसिंहः ; प्रियं कुर्वन्पाण्डवानां हितं च  ॥ ०१०  ॥

सञ्जय उवाच  ॥

एतच्चिकीर्षितं ज्ञात्वा कर्णे मधुनिहा नृप ।
नियोजयामास तदा द्वैरथे राक्षसेश्वरम्  ॥ ०११  ॥

घटोत्कचं महावीर्यं महाबुद्धिर्जनार्दनः ।
अमोघाया विघातार्थं राजन्दुर्मन्त्रिते तव  ॥ ०१२  ॥

तदैव कृतकार्या हि वयं स्याम कुरूद्वह ।
न रक्षेद्यदि कृष्णस्तं पार्थं कर्णान्महारथात्  ॥ ०१३  ॥

साश्वध्वजरथः संख्ये धृतराष्ट्र पतेद्भुवि ।
विना जनार्दनं पार्थो योगानामीश्वरं प्रभुम्  ॥ ०१४  ॥

तैस्तैरुपायैर्बहुभी रक्ष्यमाणः स पार्थिव ।
जयत्यभिमुखः शत्रून्पार्थः कृष्णेन पालितः  ॥ ०१५  ॥

सविशेषं त्वमोघायाः कृष्णोऽरक्षत पाण्डवम् ।
हन्यात्क्षिप्ता हि कौन्तेयं शक्तिर्वृक्षमिवाशनिः  ॥ ०१६  ॥

धृतराष्ट्र उवाच  ॥

विरोधी च कुमन्त्री च प्राज्ञमानी ममात्मजः ।
यस्यैष समतिक्रान्तो वधोपायो जयं प्रति  ॥ ०१७  ॥

तवापि समतिक्रान्तमेतद्गावल्गणे कथम् ।
एतमर्थं महाबुद्धे यत्त्वया नावबोधितः ॥ ०१८ ॥

सञ्जय उवाच ॥

दुर्योधनस्य शकुनेर्मम दुःशासनस्य च ।
रात्रौ रात्रौ भवत्येषा नित्यमेव समर्थना ॥ ०१९ ॥

श्वः सर्वसैन्यानुत्सृज्य जहि कर्ण धनञ्जयम् ।
प्रेष्यवत्पाण्डुपाञ्चालानुपभोक्ष्यामहे ततः ॥ ०२० ॥

अथ वा निहते पार्थे पाण्डुष्वन्यतमं ततः ।
स्थापयेद्युधि वार्ष्णेयस्तस्मात्कृष्णो निपात्यताम् ॥ ०२१ ॥

कृष्णो हि मूलं पाण्डूनां पार्थः स्कन्ध इवोद्गतः ।
शाखा इवेतरे पार्थाः पाञ्चालाः पत्रसञ्ज्ञिताः ॥ ०२२ ॥

कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः ।
कृष्णः परायणं चैषां ज्योतिषामिव चन्द्रमाः ॥ ०२३ ॥

तस्मात्पर्णानि शाखाश्च स्कन्धं चोत्सृज्य सूतज ।
कृष्णं निकृन्धि पाण्डूनां मूलं सर्वत्र सर्वदा ॥ ०२४ ॥

हन्याद्यदि हि दाशार्हं कर्णो यादवनन्दनम् ।
कृत्स्ना वसुमती राजन्वशे ते स्यान्न संशयः ॥ ०२५ ॥

यदि हि स निहतः शयीत भूमौ ; यदुकुलपाण्डवनन्दनो महात्मा ।
ननु तव वसुधा नरेन्द्र सर्वा ; सगिरिसमुद्रवना वशं व्रजेत ॥ ०२६ ॥

सा तु बुद्धिः कृताप्येवं जाग्रति त्रिदशेश्वरे ।
अप्रमेये हृषीकेशे युद्धकाले व्यमुह्यत ॥ ०२७ ॥

अर्जुनं चापि कौन्तेयं सदा रक्षति केशवः ।
न ह्येनमैच्छत्प्रमुखे सौतेः स्थापयितुं रणे ॥ ०२८ ॥

अन्यांश्चास्मै रथोदारानुपस्थापयदच्युतः ।
अमोघां तां कथं शक्तिं मोघां कुर्यामिति प्रभो ॥ ०२९ ॥

ततः कृष्णं महाबाहुः सात्यकिः सत्यविक्रमः ।
पप्रच्छ रथशार्दूल कर्णं प्रति महारथम् ॥ ०३० ॥

अयं च प्रत्ययः कर्णे शक्त्या चामितविक्रम ।
किमर्थं सूतपुत्रेण न मुक्ता फल्गुने तु सा ॥ ०३१ ॥

वासुदेव उवाच ॥

दुःषासनश्च कर्णश्च शकुनिश्च ससैन्धवः ।
सततं मन्त्रयन्ति स्म दुर्योधनपुरोगमाः ॥ ०३२ ॥

कर्ण कर्ण महेष्वास रणेऽमितपराक्रम ।
नान्यस्य शक्तिरेषा ते मोक्तव्या जयतां वर ॥ ०३३ ॥

ऋते महारथात्पार्थात्कुन्तीपुत्राद्धनञ्जयात् ।
स हि तेषामतियशा देवानामिव वासवः ॥ ०३४ ॥

तस्मिन्विनिहते सर्वे पाण्डवाः सृञ्जयैः सह ।
भविष्यन्ति गतात्मानः सुरा इव निरग्नयः ॥ ०३५ ॥

तथेति च प्रतिज्ञातं कर्णेन शिनिपुङ्गव ।
हृदि नित्यं तु कर्णस्य वधो गाण्डीवधन्वनः ॥ ०३६ ॥

अहमेव तु राधेयं मोहयामि युधां वर ।

यतो नावसृजच्छक्तिं पाण्डवे श्वेतवाहने ॥ ०३७ ॥

फल्गुनस्य हि तां मृत्युमवगम्य युयुत्सतः ।
न निद्रा न च मे हर्षो मनसोऽस्ति युधां वर ॥ ०३८ ॥

घटोत्कचे व्यंसितां तु दृष्ट्वा तां शिनिपुङ्गव ।
मृत्योरास्यान्तरान्मुक्तं पश्याम्यद्य धनञ्जयम् ॥ ०३९ ॥

न पिता न च मे माता न यूयं भ्रातरस्तथा ।
न च प्राणास्तथा रक्ष्या यथा बीभत्सुराहवे ॥ ०४० ॥

त्रैलोक्यराज्याद्यत्किञ्चिद्भवेदन्यत्सुदुर्लभम् ।
नेच्छेयं सात्वताहं तद्विना पार्थं धनञ्जयम् ॥ ०४१ ॥

अतः प्रहर्षः सुमहान्युयुधानाद्य मेऽभवत् ।
मृतं प्रत्यागतमिव दृष्ट्वा पार्थं धनञ्जयम् ॥ ०४२ ॥

अतश्च प्रहितो युद्धे मया कर्णाय राक्षसः ।
न ह्यन्यः समरे रात्रौ शक्तः कर्णं प्रबाधितुम् ॥ ०४३ ॥

सञ्जय उवाच ॥

इति सात्यकये प्राह तदा देवकिनन्दनः ।
धनञ्जयहिते युक्तस्तत्प्रिये सततं रतः ॥ ०४४ ॥

---

# अध्याय १५८

धृतराष्ट्र उवाच ॥

कर्णदुर्योधनादीनां शकुनेः सौबलस्य च ।
अपनीतं महत्तात तव चैव विशेषतः ॥ ००१ ॥

यदाजानीत तां शक्तिमेकघ्नीं सततं रणे ।
अनिवार्यामसह्यां च देवैरपि सवासवैः ॥ ००२ ॥

सा किमर्थं न कर्णेन प्रवृत्ते समरे पुरा ।
न देवकीसुते मुक्ता फल्गुने वापि सञ्जय ॥ ००३ ॥

सञ्जय उवाच ॥

सङ्ग्रामाद्विनिवृत्तानां सर्वेषां नो विशां पते ।
रात्रौ कुरुकुलश्रेष्ठ मन्त्रोऽयं समजायत ॥ ००४ ॥

प्रभातमात्रे श्वोभूते केशवायार्जुनाय वा ।
शक्तिरेषा विमोक्तव्या कर्ण कर्णेति नित्यशः ॥ ००५ ॥

ततः प्रभातसमये राजन्कर्णस्य दैवतैः ।
अन्येषां चैव योधानां सा बुद्धिर्नश्यते पुनः ॥ ००६ ॥

दैवमेव परं मन्ये यत्कर्णो हस्तसंस्थया ।
न जघान रणे पार्थं कृष्णं वा देवकीसुतम् ॥ ००७ ॥

तस्य हस्तस्थिता शक्तिः कालरात्रिरिवोद्यता ।
दैवोपहतबुद्धित्वान्न तां कर्णो विमुक्तवान् ॥ ००८ ॥

कृष्णे वा देवकीपुत्रे मोहितो देवमायया ।
पार्थे वा शक्रकल्पे वै वधार्थं वासवीं प्रभो ॥ ००९ ॥

धृतराष्ट्र उवाच ॥

दैवेनैव हता यूयं स्वबुद्ध्या केशवस्य च ।
गता हि वासवी हत्वा तृणभूतं घटोत्कचम्  ॥ ०१०  ॥

कर्णश्च मम पुत्राश्च सर्वे चान्ये च पार्थिवाः ।
अनेन दुष्प्रणीतेन गता वैवस्वतक्षयम्  ॥ ०११  ॥

भूय एव तु मे शंस यथा युद्धमवर्तत ।
कुरूणां पाण्डवानां च हैडिम्बे निहते तदा  ॥ ०१२  ॥

ये च तेऽभ्यद्रवन्द्रोणं व्यूढानीकाः प्रहारिणः ।
सृञ्जयाः सह पाञ्चालैस्तेऽप्यकुर्वन्कथं रणम्  ॥ ०१३  ॥

सौमदत्तेर्वधाद्द्रोणमायस्तं सैन्धवस्य च ।
अमर्षाज्जीवितं त्यक्त्वा गाहमानं वरूथिनीम्  ॥ ०१४  ॥

जृम्भमाणमिव व्याघ्रं व्यात्ताननमिवान्तकम् ।
कथं प्रत्युद्ययुर्द्रोणमस्यन्तं पाण्डुसृञ्जयाः  ॥ ०१५  ॥

आचार्यं ये च तेऽरक्षन्दुर्योधनपुरोगमाः ।
द्रौणिकर्णकृपास्तात तेऽप्यकुर्वन्किमाहवे  ॥ ०१६  ॥

भारद्वाजं जिघांसन्तौ सव्यसाचिवृकोदरौ ।
समार्छन्मामका युद्धे कथं सञ्जय शंस मे  ॥ ०१७  ॥

सिन्धुराजवधेनेमे घटोत्कचवधेन ते ।
अमर्षिताः सुसङ्क्रुद्धा रणं चक्रुः कथं निशि  ॥ ०१८  ॥

सञ्जय उवाच  ॥

हते घटोत्कचे राजन्कर्णेन निशि राक्षसे ।

प्रणदत्सु च हृष्टेषु तावकेषु युयुत्सुषु ॥ ०१९ ॥

आपतत्सु च वेगेन वध्यमाने बलेऽपि च ।
विगाढायां रजन्यां च राजा दैन्यं परं गतः ॥ ०२० ॥

अब्रवीच्च महाबाहुर्भीमसेनं परंतपः ।
आवारय महाबाहो धार्तराष्ट्रस्य वाहिनीम् ॥ ०२१ ॥

हैडिम्बस्याभिघातेन मोहो मामाविशन्महान् ॥ ०२१ ॥

एवं भीमं समादिश्य स्वरथे समुपाविशत् ।
अश्रुपूर्णमुखो राजा निःश्वसंश्च पुनः पुनः ॥ ०२२ ॥

कश्मलं प्राविशद्घोरं दृष्ट्वा कर्णस्य विक्रमम् ॥ ०२२ ॥

तं तथा व्यथितं दृष्ट्वा कृष्णो वचनमब्रवीत् ।
मा व्यथां कुरु कौन्तेय नैतत्त्वय्युपपद्यते ॥ ०२३ ॥

वैक्लव्यं भरतश्रेष्ठ यथा प्राकृतपूरुषे ॥ ०२३ ॥

उत्तिष्ठ राजन्युध्यस्व वह गुर्वीं धुरं विभो ।
त्वयि वैक्लव्यमापन्ने संशयो विजये भवेत् ॥ ०२४ ॥

श्रुत्वा कृष्णस्य वचनं धर्मराजो युधिष्ठिरः ।
विमृज्य नेत्रे पाणिभ्यां कृष्णं वचनमब्रवीत् ॥ ०२५ ॥

विदिता ते महाबाहो धर्माणां परमा गतिः ।
ब्रह्महत्याफलं तस्य यः कृतं नावबुध्यते ॥ ०२६ ॥

अस्माकं हि वनस्थानां हैडिम्बेन महात्मना ।
बालेनापि सता तेन कृतं साह्यं जनार्दन ॥ ०२७ ॥

अस्त्रहेतोर्गतं ज्ञात्वा पाण्डवं श्वेतवाहनम् ।
असौ कृष्ण महेष्वासः काम्यके मामुपस्थितः ॥ ०२८ ॥

उषितश्च सहास्माभिर्यावन्नासीद्धनञ्जयः ॥ ०२८ ॥

गन्धमादनयात्रायां दुर्गेभ्यश्च स्म तारिताः ।
पाञ्चाली च परिश्रान्ता पृष्ठेनोढा महात्मना ॥ ०२९ ॥

आरम्भाच्चैव युद्धानां यदेष कृतवान्प्रभो ।
मदर्थं दुष्करं कर्म कृतं तेन महात्मना ॥ ०३० ॥

स्वभावाद्या च मे प्रीतिः सहदेवे जनार्दन ।
सैव मे द्विगुणा प्रीती राक्षसेन्द्रे घटोत्कचे ॥ ०३१ ॥

भक्तश्च मे महाबाहुः प्रियोऽस्याहं प्रियश्च मे ।
येन विन्दामि वार्ष्णेय कश्मलं शोकतापितः ॥ ०३२ ॥

पश्य सैन्यानि वार्ष्णेय द्राव्यमाणानि कौरवैः ।
द्रोणकर्णौ च संयत्तौ पश्य युद्धे महारथौ ॥ ०३३ ॥

निशीथे पाण्डवं सैन्यमाभ्यां पश्य प्रमर्दितम् ।
गजाभ्यामिव मत्ताभ्यां यथा नडवनं महत् ॥ ०३४ ॥

अनादृत्य बलं बाह्वोर्भीमसेनस्य माधव ।
चित्रास्त्रतां च पार्थस्य विक्रमन्ते स्म कौरवाः ॥ ०३५ ॥

एष द्रोणश्च कर्णश्च राजा चैव सुयोधनः ।
निहत्य राक्षसं युद्धे हृष्टा नर्दन्ति संयुगे ॥ ०३६ ॥

कथमस्मासु जीवत्सु त्वयि चैव जनार्दन ।

हैडिम्बः प्राप्तवान्मृत्युं सूतपुत्रेण सङ्गतः ॥ ०३७ ॥

कदर्थीकृत्य नः सर्वान्पश्यतः सव्यसाचिनः ।
निहतो राक्षसः कृष्ण भैमसेनिर्महाबलः ॥ ०३८ ॥

यदाभिमन्युर्निहतो धार्तराष्ट्रैर्दुरात्मभिः ।
नासीत्तत्र रणे कृष्ण सव्यसाची महारथः ॥ ०३९ ॥

निरुद्धाश्च वयं सर्वे सैन्धवेन दुरात्मना ।
निमित्तमभवद्द्रोणः सपुत्रस्तत्र कर्मणि ॥ ०४० ॥

उपदिष्टो वधोपायः कर्णस्य गुरुणा स्वयम् ।
व्यायच्छतश्च खड्गेन द्विधा खड्गं चकार ह ॥ ०४१ ॥

व्यसने वर्तमानस्य कृतवर्मा नृशंसवत् ।
अश्वाञ्जघान सहसा तथोभौ पार्ष्णिसारथी ॥ ०४२ ॥

तथेतरे महेष्वासाः सौभद्रं युध्यपातयन् ॥ ०४२ ॥

अल्पे च कारणे कृष्ण हतो गाण्डीवधन्वना ।
सैन्धवो यादवश्रेष्ठ तच्च नातिप्रियं मम ॥ ०४३ ॥

यदि शत्रुवधे न्याय्यो भवेत्कर्तुं च पाण्डवैः ।
द्रोणकर्णौ रणे पूर्वं हन्तव्याविति मे मतिः ॥ ०४४ ॥

एतौ मूलं हि दुःखानामस्माकं पुरुषर्षभ ।
एतौ रणे समासाद्य पराश्वस्तः सुयोधनः ॥ ०४५ ॥

यत्र वध्यो भवेद्द्रोणः सूतपुत्रश्च सानुगः ।
तत्रावधीन्महाबाहुः सैन्धवं दूरवासिनम् ॥ ०४६ ॥

अवश्यं तु मया कार्यः सूतपुत्रस्य निग्रहः ।
ततो यास्याम्यहं वीर स्वयं कर्णजिघांसया ॥ ०४७ ॥

भीमसेनो महाबाहुर्द्रोणानीकेन सङ्गतः ॥ ०४७ ॥

एवमुक्त्वा ययौ तूर्णं त्वरमाणो युधिष्ठिरः ।
स विस्फार्य महच्चापं शङ्खं प्रध्माप्य भैरवम् ॥ ०४८ ॥

ततो रथसहस्रेण गजानां च शतैस्त्रिभिः ।
वाजिभिः पञ्चसाहस्रैस्त्रिसाहस्रैः प्रभद्रकैः ॥ ०४९ ॥

वृतः शिखण्डी त्वरितो राजानं पृष्ठतोऽन्वयात् ॥ ०४९ ॥

ततो भेरीः समाजघ्नुः शङ्खान्दध्मुश्च दंशिताः ।
पाञ्चालाः पाण्डवाश्चैव युधिष्ठिरपुरोगमाः ॥ ०५० ॥

ततोऽब्रवीन्महाबाहुर्वासुदेवो धनञ्जयम् ।
एष प्रयाति त्वरितो क्रोधाविष्टो युधिष्ठिरः ॥ ०५१ ॥

जिघांसुः सूतपुत्रस्य तस्योपेक्षा न युज्यते ॥ ०५१ ॥

एवमुक्त्वा हृषीकेशः शीघ्रमश्वानचोदयत् ।
दूरं च यातं राजानमन्वगच्छज्जनार्दनः ॥ ०५२ ॥

तं दृष्ट्वा सहसा यान्तं सूतपुत्रजिघांसया ।
शोकोपहतसङ्कल्पं दह्यमानमिवाग्निना ॥ ०५३ ॥

अभिगम्याब्रवीद्व्यासो धर्मपुत्रं युधिष्ठिरम् ॥ ०५३ ॥

कर्णमासाद्य सङ्ग्रामे दिष्ट्या जीवति फल्गुनः ।
सव्यसाचिवधाकाङ्क्षी शक्तिं रक्षितवान्हि सः ॥ ०५४ ॥

न चागाद्द्वैरथं जिष्णुर्दिष्ट्या तं भरतर्षभ ।
सृजेतां स्पर्धिनावेतौ दिव्यान्यस्त्राणि सर्वशः  ॥ ०५५  ॥

वध्यमानेषु चास्त्रेषु पीडितः सूतनन्दनः ।
वासवीं समरे शक्तिं ध्रुवं मुञ्चेद्युधिष्ठिर  ॥ ०५६  ॥

ततो भवेत्ते व्यसनं घोरं भरतसत्तम ।
दिष्ट्या रक्षो हतं युद्धे सूतपुत्रेण मानद  ॥ ०५७  ॥

वासवीं कारणं कृत्वा कालेनापहतो ह्यसौ ।
तवैव कारणाद्रक्षो निहतं तात संयुगे  ॥ ०५८  ॥

मा क्रुधो भरतश्रेष्ठ मा च शोके मनः कृथाः ।
प्राणिनामिह सर्वेषामेषा निष्ठा युधिष्ठिर  ॥ ०५९  ॥

भ्रातृभिः सहितः सर्वैः पार्थिवैश्च महात्मभिः ।
कौरवान्समरे राजन्नभियुध्यस्व भारत  ॥ ०६०  ॥

पञ्चमे दिवसे चैव पृथिवी ते भविष्यति  ॥ ०६०  ॥

नित्यं च पुरुषव्याघ्र धर्ममेव विचिन्तय ।
आनृशंस्यं तपो दानं क्षमां सत्यं च पाण्डव  ॥ ०६१  ॥

सेवेथाः परमप्रीतो यतो धर्मस्ततो जयः ।
इत्युक्त्वा पाण्डवं व्यासस्तत्रैवान्तरधीयत  ॥ ०६२  ॥

# अध्याय १५९

सञ्जय उवाच ॥

घटोत्कचे तु निहते सूतपुत्रेण तां निशाम् ।
दुःखामर्षवशं प्राप्तो धर्मपुत्रो युधिष्ठिरः ॥ ००१ ॥

दृष्ट्व भीमेन महतीं वार्यमाणां चमूं तव ।
धृष्टद्युम्नमुवाचेदं कुम्भयोनिं निवारय ॥ ००२ ॥

त्वं हि द्रोणविनाशाय समुत्पन्नो हुताशनात् ।
सशरः कवची खड्गी धन्वी च परतापनः ॥ ००३ ॥

अभिद्रव रणे हृष्टो न च ते भीः कथञ्चन ॥ ००३ ॥

जनमेजयः शिखण्डी च दौर्मुखिश्च यशोधनः ।
अभिद्रवन्तु संहृष्टाः कुम्भयोनिं समन्ततः ॥ ००४ ॥

नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ।
द्रुपदश्च विराटश्च पुत्रभ्रातृसमन्वितौ ॥ ००५ ॥

सात्यकिः केकयाश्चैव पाण्डवश्च धनञ्जयः ।
अभिद्रवन्तु वेगेन भारद्वाजवधेप्सया ॥ ००६ ॥

तथैव रथिनः सर्वे हस्त्यश्वं यच्च किञ्चन ।
पादाताश्च रणे द्रोणं प्रापयन्तु महारथम् ॥ ००७ ॥

तथाज्ञप्तास्तु ते सर्वे पाण्डवेन महात्मना ।
अभ्यद्रवन्त वेगेन कुम्भयोनिं युयुत्सया ॥ ००८ ॥

आगच्छतस्तान्सहसा सर्वोद्योगेन पाण्डवान् ।

प्रतिजग्राह समरे द्रोणः शस्त्रभृतां वरः  ॥ ००९  ॥

ततो दुर्योधनो राजा सर्वोद्योगेन पाण्डवान् ।
अभ्यद्रवत्सुसङ्क्रुद्ध इच्छन्द्रोणस्य जीवितम्  ॥ ०१०  ॥

ततः प्रववृते युद्धं श्रान्तवाहनसैनिकम् ।
पाण्डवानां कुरूणां च गर्जतामितरेतरम्  ॥ ०११  ॥

निद्रान्धास्ते महाराज परिश्रान्ताश्च संयुगे ।
नाभ्यपद्यन्त समरे काञ्चिच्चेष्टां महारथाः  ॥ ०१२  ॥

त्रियामा रजनी चैषा घोररूपा भयानका ।
सहस्रयामप्रतिमा बभूव प्राणहारिणी  ॥ ०१३  ॥

वध्यतां च तथा तेषां क्षतानां च विशेषतः  ॥ ०१३  ॥

अहो रात्रिः समाजज्ञे निद्रान्धानां विशेषतः ।
सर्वे ह्यासन्निरुत्साहाः क्षत्रिया दीनचेतसः  ॥ ०१४  ॥

तव चैव परेषां च गतास्त्रा विगतेषवः  ॥ ०१४  ॥

ते तथा पारयन्तश्च ह्रीमन्तश्च विशेषतः ।
स्वधर्ममनुपश्यन्तो न जहुः स्वामनीकिनीम्  ॥ ०१५  ॥

शस्त्राण्यन्ये समुत्सृज्य निद्रान्धाः शेरते जनाः ।
गजेष्वन्ये रथेष्वन्ये हयेष्वन्ये च भारत  ॥ ०१६  ॥

निद्रान्धा नो बुबुधिरे काञ्चिच्चेष्टां नराधिपाः ।
तेऽन्योन्यं समरे योधाः प्रेषयन्त यमक्षयम्  ॥ ०१७  ॥

स्वप्नायमानास्त्वपरे परानिति विचेतसः ।

आत्मानं समरे जघ्नुः स्वानेव च परानपि ॥ ०१८ ॥

नानावाचो विमुञ्चन्तो निद्रान्धास्ते महारणे ।
योद्धव्यमिति तिष्ठन्तो निद्रासंसक्तलोचनाः ॥ ०१९ ॥

संमर्द्यान्ये रणे केचिन्निद्रान्धाश्च परस्परम् ।
जघ्नुः शूरा रणे राजंस्तस्मिंस्तमसि दारुणे ॥ ०२० ॥

हन्यमानं तथात्मानं परेभ्यो बहवो जनाः ।
नाभ्यजानन्त समरे निद्रया मोहिता भृशम् ॥ ०२१ ॥

तेषामेतादृशीं चेष्टां विज्ञाय पुरुषर्षभः ।
उवाच वाक्यं बीभत्सुरुच्चैः संनादयन्दिशः ॥ ०२२ ॥

श्रान्ता भवन्तो निद्रान्धाः सर्वे एव सवाहनाः ।
तमसा चावृते सैन्ये रजसा बहुलेन च ॥ ०२३ ॥

ते यूयं यदि मन्यध्वमुपारमत सैनिकाः ।
निमीलयत चात्रैव रणभूमौ मुहूर्तकम् ॥ ०२४ ॥

ततो विनिद्रा विश्रान्ताश्चन्द्रमस्युदिते पुनः ।
संसाधयिष्यथान्योन्यं स्वर्गाय कुरुपाण्डवाः ॥ ०२५ ॥

तद्वचः सर्वधर्मज्ञा धार्मिकस्य निशम्य ते ।
अरोचयन्त सैन्यानि तथा चान्योन्यमब्रुवन् ॥ ०२६ ॥

चुक्रुशुः कर्ण कर्णेति राजन्दुर्योधनेति च ।
उपारमत पाण्डूनां विरता हि वरूथिनी ॥ ०२७ ॥

तथा विक्रोशमानस्य फल्गुनस्य ततस्ततः ।
उपारमत पाण्डूनां सेना तव च भारत ॥ ०२८ ॥

तामस्य वाचं देवाश्च ऋषयश्च महात्मनः ।
सर्वसैन्यानि चाक्षुद्राः प्रहृष्टाः प्रत्यपूजयन् ॥ ०२९ ॥

तत्संपूज्य वचोऽक्रूरं सर्वसैन्यानि भारत ।
मुहूर्तमस्वपन्राजञ्श्रान्तानि भरतर्षभ ॥ ०३० ॥

सा तु संप्राप्य विश्रामं ध्वजिनी तव भारत ।
सुखमाप्तवती वीरमर्जुनं प्रत्यपूजयत् ॥ ०३१ ॥

त्वयि वेदास्तथास्त्राणि त्वयि बुद्धिपराक्रमौ ।
धर्मस्त्वयि महाबाहो दया भूतेषु चानघ ॥ ०३२ ॥

यच्चाश्वस्तास्तवेच्छामः शर्म पार्थ तदस्तु ते ।
मनसश्च प्रियानर्थान्वीर क्षिप्रमवाप्नुहि ॥ ०३३ ॥

इति ते तं नरव्याघ्रं प्रशंसन्तो महारथाः ।
निद्रया समवाक्षिप्तास्तूष्णीमासन्विशां पते ॥ ०३४ ॥

अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे ।
गजस्कन्धगताश्चान्ये शेरते चापरे क्षितौ ॥ ०३५ ॥

सायुधाः सगदाश्चैव सखड्गाः सपरश्वधाः ।
सप्रासकवचाश्चान्ये नराः सुप्ताः पृथक्पृथक् ॥ ०३६ ॥

गजास्ते पन्नगाभोगैर्हस्तैर्भूरेणुरूषितैः ।
निद्रान्धा वसुधां चक्रुर्घ्राणनिःश्वासशीतलाम् ॥ ०३७ ॥

गजाः शुशुभिरे तत्र निःश्वसन्तो महीतले ।
विशीर्णा गिरयो यद्वन्निःश्वसद्भिर्महोरगैः ॥ ०३८ ॥

समां च विषमां चक्रुः खुराग्रैर्विक्षतां महीम् ।
हयाः काञ्चनयोक्त्राश्च केसरालम्बिभिर्युगैः ॥ ०३९ ॥

सुषुपुस्तत्र राजेन्द्र युक्ता वाहेषु सर्वशः ॥ ०३९ ॥

तत्तथा निद्रया भग्नमवाचमस्वपद्बलम् ।
कुशलैरिव विन्यस्तं पटे चित्रमिवाद्भुतम् ॥ ०४० ॥

ते क्षत्रियाः कुण्डलिनो युवानः ; परस्परं सायकविक्षताङ्गाः ।
कुम्भेषु लीनाः सुषुपुर्गजानां ; कुचेषु लग्ना इव कामिनीनाम् ॥ ०४१ ॥

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ ०४२ ॥

ततो मुहूर्ताद्भगवान्पुरस्ताच्छशलक्षणः ।
अरुणं दर्शयामास ग्रसञ्ज्योतिःप्रभं प्रभुः ॥ ०४३ ॥

अरुणस्य तु तस्यानु जातरूपसमप्रभम् ।
रश्मिजालं महच्चन्द्रो मन्दं मन्दमवासृजत् ॥ ०४४ ॥

उत्सारयन्तः प्रभया तमस्ते चन्द्ररश्मयः ।
पर्यगच्छञ्शनैः सर्वा दिशः खं च क्षितिं तथा ॥ ०४५ ॥

ततो मुहूर्ताद्भुवनं ज्योतिर्भूतमिवाभवत् ।
अप्रख्यमप्रकाशं च जगामाशु तमस्तथा ॥ ०४६ ॥

प्रतिप्रकाशिते लोके दिवाभूते निशाकरे ।
विचेरुर्न विचेरुश्च राजन्नक्तञ्चरास्ततः ॥ ०४७ ॥

बोध्यमानं तु तत्सैन्यं राजंश्चन्द्रस्य रश्मिभिः ।
बुबुधे शतपत्राणां वनं महदिवाम्भसि ॥ ०४८ ॥

यथा चन्द्रोदयोद्धूतः क्षुभितः सागरो भवेत् ।
तथा चन्द्रोदयोद्धूतः स बभूव बलार्णवः ॥ ०४९ ॥

ततः प्रववृते युद्धं पुनरेव विशां पते ।
लोके लोकविनाशाय परं लोकमभीप्सताम् ॥ ०५० ॥

---

# अध्याय १६०

सञ्जय उवाच ॥

ततो दुर्योधनो द्रोणमभिगम्येदमब्रवीत् ।
अमर्षवशमापन्नो जनयन्हर्षतेजसी ॥ ००१ ॥

न मर्षणीयाः सङ्ग्रामे विश्रमन्तः श्रमान्विताः ।
सपत्ना ग्लानमनसो लब्धलक्ष्या विशेषतः ॥ ००२ ॥

तत्तु मर्षितमस्माभिर्भवतः प्रियकाम्यया ।
त एते परिविश्रान्ताः पाण्डवा बलवत्तराः ॥ ००३ ॥

सर्वथा परिहीनाः स्म तेजसा च बलेन च ।
भवता पाल्यमानास्ते विवर्धन्ते पुनः पुनः ॥ ००४ ॥

दिव्यान्यस्त्राणि सर्वाणि ब्रह्मास्त्रादीनि यान्यपि ।
तानि सर्वाणि तिष्ठन्ति भवत्येव विशेषतः ॥ ००५ ॥

न पाण्डवेया न वयं नान्ये लोके धनुर्धराः ।
युध्यमानस्य ते तुल्याः सत्यमेतद्ब्रवीमि ते ॥ ००६ ॥

ससुरासुरगन्धर्वानिमा.ण्ल्लोकान्द्विजोत्तम ।
सर्वास्त्रविद्भवान्हन्याद्दिव्यैरस्त्रैर्न संशयः ॥ ००७ ॥

स भवान्मर्षयत्येनांस्त्वत्तो भीतान्विशेषतः ।
शिष्यत्वं वा पुरस्कृत्य मम वा मन्दभाग्यताम् ॥ ००८ ॥

एवमुद्धर्षितो द्रोणः कोपितश्चात्मजेन ते ।
समन्युरब्रवीद्राजन्दुर्योधनमिदं वचः ॥ ००९ ॥

स्थविरः सन्परं शक्त्या घटे दुर्योधनाहवे ।
अतः परं मया कार्यं क्षुद्रं विजयगृद्धिना ॥ ०१० ॥

अनस्त्रविदयं सर्वो हन्तव्योऽस्त्रविदा जनः ॥ ०१० ॥

यद्भवान्मन्यते चापि शुभं वा यदि वाशुभम् ।
तद्वै कर्तास्मि कौरव्य वचनात्तव नान्यथा ॥ ०११ ॥

निहत्य सर्वपाञ्चालान्युद्धे कृत्वा पराक्रमम् ।
विमोक्ष्ये कवचं राजन्सत्येनायुधमालभे ॥ ०१२ ॥

मन्यसे यच्च कौन्तेयमर्जुनं श्रान्तमाहवे ।
तस्य वीर्यं महाबाहो श‍ृणु सत्येन कौरव ॥ ०१३ ॥

तं न देवा न गन्धर्वा न यक्षा न च राक्षसाः ।
उत्सहन्ते रणे सोढुं कुपितं सव्यसाचिनम् ॥ ०१४ ॥

खाण्डवे येन भगवान्प्रत्युद्यातः सुरेश्वरः ।
सायकैर्वारितश्चापि वर्षमाणो महात्मना ॥ ०१५ ॥

यक्षा नागास्तथा दैत्या ये चान्ये बलगर्विताः ।

निहताः पुरुषेन्द्रेण तच्चापि विदितं तव ॥ ०१६ ॥

गन्धर्वा घोषयात्रायां चित्रसेनादयो जिताः ।
यूयं तैर्ह्रियमाणाश्च मोक्षिता दृढधन्वना ॥ ०१७ ॥

निवातकवचाश्चापि देवानां शत्रवस्तथा ।
सुरैरवध्याः सङ्ग्रामे तेन वीरेण निर्जिताः ॥ ०१८ ॥

दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।
विजिग्ये पुरुषव्याघ्रः स शक्यो मानुषैः कथम् ॥ ०१९ ॥

प्रत्यक्षं चैव ते सर्वं यथा बलमिदं तव ।
क्षपितं पाण्डुपुत्रेण चेष्टतां नो विशां पते ॥ ०२० ॥

तं तथाभिप्रशंसन्तमर्जुनं कुपितस्तदा ।
द्रोणं तव सुतो राजन्पुनरेवेदमब्रवीत् ॥ ०२१ ॥

अहं दुःशासनः कर्णः शकुनिर्मातुलश्च मे ।
हनिष्यामोऽर्जुनं संख्ये द्वैधीकृत्याद्य भारतीम् ॥ ०२२ ॥

तस्य तद्वचनं श्रुत्वा भारद्वाजो हसन्निव ।
अन्ववर्तत राजानं स्वस्ति तेऽस्त्विति चाब्रवीत् ॥ ०२३ ॥

को हि गाण्डीवधन्वानं ज्वलन्तमिव तेजसा ।
अक्षयं क्षपयेत्कश्चित्क्षत्रियः क्षत्रियर्षभम् ॥ ०२४ ॥

तं न वित्तपतिर्नेन्द्रो न यमो न जलेश्वरः ।
नासुरोरगरक्षांसि क्षपयेयुः सहायुधम् ॥ ०२५ ॥

मूढास्त्वेतानि भाषन्ते यानीमान्यात्थ भारत ।
युद्धे ह्यर्जुनमासाद्य स्वस्तिमान्को व्रजेद्गृहान् ॥ ०२६ ॥

त्वं तु सर्वातिशङ्कित्वान्निष्ठुरः पापनिश्चयः ।
श्रेयसस्त्वद्धिते युक्तांस्तत्तद्वक्तुमिहेच्छसि ॥ ०२७ ॥

गच्छ त्वमपि कौन्तेयमात्मार्थेभ्यो हि माचिरम् ।
त्वमप्याशंससे योद्धुं कुलजः क्षत्रियो ह्यसि ॥ ०२८ ॥

इमान्किं पार्थिवान्सर्वान्घातयिष्यस्यनागसः ।
त्वमस्य मूलं वैरस्य तस्मादासादयार्जुनम् ॥ ०२९ ॥

एष ते मातुलः प्राज्ञः क्षत्रधर्ममनुव्रतः ।
दूर्द्यूतदेवी गान्धारिः प्रयात्वर्जुनमाहवे ॥ ०३० ॥

एषोऽक्षकुशलो जिह्मो द्यूतकृत्कितवः शठः ।
देविता निकृतिप्रज्ञो युधि जेष्यति पाण्डवान् ॥ ०३१ ॥

त्वया कथितमत्यन्तं कर्णेन सह हृष्टवत् ।
असकृच्छून्यवन्मोहाद्धृतराष्ट्रस्य शृण्वतः ॥ ०३२ ॥

अहं च तात कर्णश्च भ्राता दुःशासनश्च मे ।
पाण्डुपुत्रान्हनिष्यामः सहिताः समरे त्रयः ॥ ०३३ ॥

इति ते कत्थमानस्य श्रुतं संसदि संसदि ।
अनुतिष्ठ प्रतिज्ञां तां सत्यवाग्भव तैः सह ॥ ०३४ ॥

एष ते पाण्डवः शत्रुरविषह्योऽग्रतः स्थितः ।
क्षत्रधर्ममवेक्षस्व श्लाघ्यस्तव वधो जयात् ॥ ०३५ ॥

दत्तं भुक्तमधीतं च प्राप्तमैश्वर्यमीप्सितम् ।
कृतकृत्योऽनृणश्चासि मा भैर्युध्यस्व पाण्डवम् ॥ ०३६ ॥

इत्युक्त्वा समरे द्रोणो न्यवर्तत यतः परे ।
द्वैधीकृत्य ततः सेनां युद्धं समभवत्तदा ॥ ०३७ ॥

---

# अध्याय १६१

सञ्जय उवाच ॥

त्रिभागमात्रशेषायां रात्र्यां युद्धमवर्तत ।
कुरूणां पाण्डवानां च संहृष्टानां विशां पते ॥ ००१ ॥

अथ चन्द्रप्रभां मुष्णन्नादित्यस्य पुरःसरः ।
अरुणोऽभ्युदयां चक्रे ताम्रीकुर्वन्निवाम्बरम् ॥ ००२ ॥

ततो द्वैधीकृते सैन्ये द्रोणः सोमकपाण्डवान् ।
अभ्यद्रवत्सपाञ्चालान्दुर्योधनपुरोगमः ॥ ००३ ॥

द्वैधीभूतान्कुरून्दृष्ट्वा माधवोऽर्जुनमब्रवीत् ।
सपत्नान्सव्यतः कुर्मि सव्यसाचिन्निमान्कुरून् ॥ ००४ ॥

स माधवमनुज्ञाय कुरुष्वेति धनञ्जयः ।
द्रोणकर्णौ महेष्वासौ सव्यतः पर्यवर्तत ॥ ००५ ॥

अभिप्रायं तु कृष्णस्य ज्ञात्वा परपुरञ्जयः ।
आजिशीर्षगतं दृष्ट्वा भीमसेनं समासदत् ॥ ००६ ॥

भीम उवाच ॥

अर्जुनार्जुन बीभत्सो शृणु मे तत्त्वतो वचः ।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ॥ ००७ ॥

अस्मिंश्चेदागते काले श्रेयो न प्रतिपत्स्यसे ।
असंभावितरूपः सन्नानृशंस्यं करिष्यसि ॥ ००८ ॥

सत्यश्रीधर्मयशसां वीर्येणानृण्यमाप्नुहि ।
भिन्ध्यनीकं युधां श्रेष्ठ सव्यसाचिन्निमान्कुरु ॥ ००९ ॥

सञ्जय उवाच ॥

स सव्यसाची भीमेन चोदितः केशवेन च ।
कर्णद्रोणावतिक्रम्य समन्तात्पर्यवारयत् ॥ ०१० ॥

तमाजिशीर्षमायान्तं दहन्तं क्षत्रियर्षभान् ।
पराक्रान्तं पराक्रम्य यतन्तः क्षत्रियर्षभाः ॥ ०११ ॥

नाशक्नुवन्वारयितुं वर्धमानमिवानलम् ॥ ०११ ॥

अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
अभ्यवर्षञ्शरव्रातैः कुन्तीपुत्रं धनञ्जयम् ॥ ०१२ ॥

तेषामस्त्राणि सर्वेषामुत्तमास्त्रविदां वरः ।
कदर्थीकृत्य राजेन्द्र शरवर्षैरवाकिरत् ॥ ०१३ ॥

अस्त्रैरस्त्राणि संवार्य लघुहस्तो धनञ्जयः ।
सर्वानविध्यन्निशितैर्दशभिर्दशभिः शरैः ॥ ०१४ ॥

उद्धूता रजसो वृष्टिः शरवृष्टिस्तथैव च ।
तमश्च घोरं शब्दश्च तदा समभवन्महान् ॥ ०१५ ॥

न द्यौर्न भूमिर्न दिशः प्राज्ञायन्त तथा गते ।
सैन्येन रजसा मूढं सर्वमन्धमिवाभवत्  ॥ ०१६  ॥

नैव ते न वयं राजन्प्रज्ञासिष्म परस्परम् ।
उद्देशेन हि तेन स्म समयुध्यन्त पार्थिवाः  ॥ ०१७  ॥

विरथा रथिनो राजन्समासाद्य परस्परम् ।
केषेशु समसज्जन्त कवचेषु भुजेषु च  ॥ ०१८  ॥

हताश्वा हतसूताश्च निश्चेष्टा रथिनस्तदा ।
जीवन्त इव तत्र स्म व्यदृश्यन्त भयार्दिताः  ॥ ०१९  ॥

हतान्गजान्समाश्लिष्य पर्वतानिव वाजिनः ।
गतसत्त्वा व्यदृश्यन्त तथैव सह सादिभिः  ॥ ०२०  ॥

ततस्त्वभ्यवसृत्यैव सङ्ग्रामादुत्तरां दिशम् ।
अतिष्ठदाहवे द्रोणो विधूम इव पावकः  ॥ ०२१  ॥

तमाजिशीर्षादेकान्तमपक्रान्तं निशाम्य तु ।
समकम्पन्त सैन्यानि पाण्डवानां विशां पते  ॥ ०२२  ॥

भ्राजमानं श्रिया युक्तं ज्वलन्तमिव तेजसा ।
द्रोणं दृष्ट्वारयस्त्रेसुश्चेलुर्मम्लुश्च मारिष  ॥ ०२३  ॥

आह्वयन्तं परानीकं प्रभिन्नमिव वारणम् ।
नैनं शशंसिरे जेतुं दानवा वासवं यथा  ॥ ०२४  ॥

केचिदासन्निरुत्साहाः केचित्क्रुद्धा मनस्विनः ।
विस्मिताश्चाभवन्केचित्केचिदासन्नमर्षिताः  ॥ ०२५  ॥

हस्तैर्हस्ताग्रमपरे प्रत्यपिंषन्नराधिपाः ।

अपरे दशनैरोष्ठानदशन्क्रोधमूर्छिताः ॥ ०२६ ॥

व्याक्षिपन्नायुधानन्ये ममृदुश्चापरे भुजान् ।
अन्ये चान्वपतन्द्रोणं त्यक्तात्मानो महौजसः ॥ ०२७ ॥

पाञ्चालास्तु विशेषेण द्रोणसायकपीडिताः ।
समसज्जन्त राजेन्द्र समरे भृशवेदनाः ॥ ०२८ ॥

ततो विराटद्रुपदौ द्रोणं प्रतिययू रणे ।
तथा चरन्तं सङ्ग्रामे भृशं समरदुर्जयम् ॥ ०२९ ॥

द्रुपदस्य ततः पौत्रास्त्रय एव विशां पते ।
चेदयश्च महेष्वासा द्रोणमेवाभ्ययुर्युधि ॥ ०३० ॥

तेषां द्रुपदपौत्राणां त्रयाणां निशितैः शरैः ।
त्रिभिर्द्रोणोऽहरत्प्राणांस्ते हता न्यपतन्भुवि ॥ ०३१ ॥

ततो द्रोणोऽजयद्युद्धे चेदिकेकयसृञ्जयान् ।
मत्स्यांश्चैवाजयत्सर्वान्भारद्वाजो महारथः ॥ ०३२ ॥

ततस्तु द्रुपदः क्रोधाच्छरवर्षमवाकिरत् ।
द्रोणं प्रति महाराज विराटश्चैव संयुगे ॥ ०३३ ॥

ततो द्रोणः सुपीताभ्यां भल्लाभ्यामरिमर्दनः ।
द्रुपदं च विराटं च प्रैषीद्वैवस्वतक्षयम् ॥ ०३४ ॥

हते विराटे द्रुपदे केकयेषु तथैव च ।
तथैव चेदिमत्स्येषु पाञ्चालेषु तथैव च ॥ ०३५ ॥

हतेषु त्रिषु वीरेषु द्रुपदस्य च नप्तृषु ॥ ०३५ ॥

द्रोणस्य कर्म तद्दृष्ट्वा कोपदुःखसमन्वितः ।
शशाप रथिनां मध्ये धृष्टद्युम्नो महामनाः ॥ ०३६ ॥

इष्टापूर्तात्तथा क्षात्राद्ब्राह्मण्याच्च स नश्यतु ।
द्रोणो यस्याद्य मुच्येत यो वा द्रोणात्पराङ्मुखः ॥ ०३७ ॥

इति तेषां प्रतिश्रुत्य मध्ये सर्वधनुष्मताम् ।
आयाद्द्रोणं सहानीकः पाञ्चाल्यः परवीरहा ॥ ०३८ ॥

पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन्पाण्डवान्यतः ॥ ०३८ ॥

दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
सोदर्याश्च यथा मुख्यास्तेऽरक्षन्द्रोणमाहवे ॥ ०३९ ॥

रक्ष्यमाणं तथा द्रोणं समरे तैर्महात्मभिः ।
यतमानापि पाञ्चाला न शेकुः प्रतिवीक्षितुम् ॥ ०४० ॥

तत्राक्रुध्यद्भीमसेनो धृष्टद्युम्नस्य मारिष ।
स एनं वाग्भिरुग्राभिस्ततक्ष पुरुषर्षभ ॥ ०४१ ॥

द्रुपदस्य कुले जातः सर्वास्त्रेष्वस्त्रवित्तमः ।
कः क्षत्रियो मन्यमानः प्रेक्षेतारिमवस्थितम् ॥ ०४२ ॥

पितृपुत्रवधं प्राप्य पुमान्कः परिहापयेत् ।
विशेषतस्तु शपथं शपित्वा राजसंसदि ॥ ०४३ ॥

एष वैश्वानर इव समिद्धः स्वेन तेजसा ।
शरचापेन्धनो द्रोणः क्षत्रं दहति तेजसा ॥ ०४४ ॥

पुरा करोति निःशेषां पाण्डवानामनीकिनीम् ।

स्थिताः पश्यत मे कर्म द्रोणमेव व्रजाम्यहम्  ॥ ०४५  ॥

इत्युक्त्वा प्राविशत्क्रुद्धो द्रोणानीकं वृकोदरः ।
दृढैः पूर्णायतोत्सृष्टैर्द्रावयंस्तव वाहिनीम्  ॥ ०४६  ॥

धृष्टद्युम्नोऽपि पाञ्चाल्यः प्रविश्य महतीं चमूम् ।
आससाद रणे द्रोणं तदासीत्तुमुलं महत्  ॥ ०४७  ॥

नैव नस्तादृशं युद्धं दृष्टपूर्वं न च श्रुतम् ।
यथा सूर्योदये राजन्समुत्पिञ्जोऽभवन्महान्  ॥ ०४८  ॥

संसक्तानि व्यदृश्यन्त रथवृन्दानि मारिष ।
हतानि च विकीर्णानि शरीराणि शरीरिणाम्  ॥ ०४९  ॥

केचिदन्यत्र गच्छन्तः पथि चान्यैरुपद्रुताः ।
विमुखाः पृष्ठतश्चान्ये ताड्यन्ते पार्श्वतोऽपरे  ॥ ०५०  ॥

तथा संसक्तयुद्धं तदभवद्भृशदारुणम् ।
अथ संध्यागतः सूर्यः क्षणेन समपद्यत  ॥ ०५१  ॥

---

# अध्याय १६२

सञ्जय उवाच  ॥

ते तथैव महाराज दंशिता रणमूर्धनि ।
संध्यागतं सहस्रांशुमादित्यमुपतस्थिरे  ॥ ००१  ॥

उदिते तु सहस्रांशौ तप्तकाञ्चनसप्रभे ।
प्रकाशितेषु लोकेषु पुनर्युद्धमवर्तत ॥ ००२ ॥

द्वंद्वानि यानि तत्रासन्संसक्तानि पुरोदयात् ।
तान्येवाभ्युदिते सूर्ये समसज्जन्त भारत ॥ ००३ ॥

रथैर्हया हयैर्नागाः पादाताश्चापि कुञ्जरैः ।
हया हयैः समाजग्मुः पादाताश्च पदातिभिः ॥ ००४ ॥

संसक्ताश्च वियुक्ताश्च योधाः संन्यपतन्रणे ॥ ००४ ॥

ते रात्रौ कृतकर्माणः श्रान्ताः सूर्यस्य तेजसा ।
क्षुत्पिपासापरीताङ्गा विसञ्ज्ञा बहवोऽभवन् ॥ ००५ ॥

शङ्खभेरीमृदङ्गानां कुञ्जराणां च गर्जताम् ।
विस्फारितविकृष्टानां कार्मुकाणां च कूजताम् ॥ ००६ ॥

शब्दः समभवद्राजन्दिविस्पृग्भरतर्षभ ।
द्रवतां च पदातीनां शस्त्राणां विनिपात्यताम् ॥ ००७ ॥

हयानां हेषतां चैव रथानां च निवर्तताम् ।
क्रोशतां गर्जतां चैव तदासीत्तुमुलं महत् ॥ ००८ ॥

विवृद्धस्तुमुलः शब्दो द्यामगच्छन्महास्वनः ।
नानायुधनिकृत्तानां चेष्टतामातुरः स्वनः ॥ ००९ ॥

भूमावश्रूयत महांस्तदासीत्कृपणं महत् ।
पततां पतितानां च पत्त्यश्वरथहस्तिनाम् ॥ ०१० ॥

तेषु सर्वेष्वनीकेषु व्यतिषक्तेष्वनेकशः ।
स्वे स्वाञ्जघ्नुः परे स्वांश्च स्वे परांश्च परान्परे ॥ ०११ ॥

वीरबाहुविसृष्टाश्च योधेषु च गजेषु च ।
असयः प्रत्यदृश्यन्त वाससां नेजनेष्विव ॥ ०१२ ॥

उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः ।
स एव शब्दस्तद्रूपो वाससां निज्यतामिव ॥ ०१३ ॥

अर्धासिभिस्तथा खड्गैस्तोमरैः सपरश्वधैः ।
निकृष्टयुद्धं संसक्तं महदासीत्सुदारुणम् ॥ ०१४ ॥

गजाश्वकायप्रभवां नरदेहप्रवाहिनीम् ।
शस्त्रमत्स्यसुसंपूर्णां मांसशोणितकर्दमाम् ॥ ०१५ ॥

आर्तनादस्वनवतीं पताकावस्त्रफेनिलाम् ।
नदीं प्रावर्तयन्वीराः परलोकप्रवाहिनीम् ॥ ०१६ ॥

शरशक्त्यर्दिताः क्लान्ता रात्रिमूढाल्पचेतसः ।
विष्टभ्य सर्वगात्राणि व्यतिष्ठन्गजवाजिनः ॥ ०१७ ॥

संशुष्कवदना वीराः शिरोभिश्चारुकुण्डलैः ॥ ०१७ ॥

युद्धोपकरणैश्चान्यैस्तत्र तत्र प्रकाशितैः ।
क्रव्यादसंघैराकीर्णं मृतैरर्धमृतैरपि ॥ ०१८ ॥

नासीद्रथपथस्तत्र सर्वमायोधनं प्रति ॥ ०१८ ॥

मज्जत्सु चक्रेषु रथान्सत्त्वमास्थाय वाजिनः ।
कथञ्चिदवहञ्श्रान्ता वेपमानाः शरार्दिताः ॥ ०१९ ॥

कुलसत्त्वबलोपेता वाजिनो वारणोपमाः ॥ ०१९ ॥

विह्वलं तत्समुद्भ्रान्तं सभयं भारतातुरम् ।
बलमासीत्तदा सर्वमृते द्रोणार्जुनावुभौ ॥ ०२० ॥

तावेवास्तां निलयनं तावार्तायनमेव च ।
तावेवान्ये समासाद्य जग्मुर्वैवस्वतक्षयम् ॥ ०२१ ॥

आविग्नमभवत्सर्वं कौरवाणां महद्बलम् ।
पाञ्चालानां च संसक्तं न प्राज्ञायत किञ्चन ॥ ०२२ ॥

अन्तकाक्रीडसदृशे भीरूणां भयवर्धने ।
पृथिव्यां राजवंशानामुत्थिते महति क्षये ॥ ०२३ ॥

न तत्र कर्णं न द्रोणं नार्जुनं न युधिष्ठिरम् ।
न भीमसेनं न यमौ न पाञ्चाल्यं न सात्यकिम् ॥ ०२४ ॥

न च दुःशासनं द्रौणिं न दुर्योधनसौबलौ ।
न कृपं मद्रराजं वा कृतवर्माणमेव च ॥ ०२५ ॥

न चान्यान्नैव चात्मानं न क्षितिं न दिशस्तथा ।
पश्याम राजन्संसक्तान्सैन्येन रजसावृतान् ॥ ०२६ ॥

संभ्रान्ते तुमुले घोरे रजोमेघे समुत्थिते ।
द्वितीयामिव संप्राप्ताममन्यन्त निशां तदा ॥ ०२७ ॥

न ज्ञायन्ते कौरवेया न पाञ्चाला न पाण्डवाः ।
न दिशो न दिवं नोर्वीं न समं विषमं तथा ॥ ०२८ ॥

हस्तसंस्पर्शमापन्नान्परान्वाप्यथ वा स्वकान् ।
न्यपातयंस्तदा युद्धे नराः स्म विजयैषिणः ॥ ०२९ ॥

उद्धूतत्वात्तु रजसः प्रसेकाच्छोणितस्य च ।

प्रशशाम रजो भौमं शीघ्रत्वादनिलस्य च ॥ ०३० ॥

तत्र नागा हया योधा रथिनोऽथ पदातयः ।
पारिजातवनानीव व्यरोचन्रुधिरोक्षिताः ॥ ०३१ ॥

ततो दुर्योधनः कर्णो द्रोणो दुःशासनस्तथा ।
पाण्डवैः समसज्जन्त चतुर्भिश्चतुरो रथाः ॥ ०३२ ॥

दुर्योधनः सह भ्रात्रा यमाभ्यां समसज्जत ।
वृकोदरेण राधेयो भारद्वाजेन चार्जुनः ॥ ०३३ ॥

तद्घोरं महदाश्चर्यं सर्वे प्रैक्षन्समन्ततः ।
रथर्षभाणामुग्राणां संनिपातममानुषम् ॥ ०३४ ॥

रथमार्गैर्विचित्रैश्च विचित्ररथसङ्कुलम् ।
अपश्यन्रथिनो युद्धं विचित्रं चित्रयोधिनाम् ॥ ०३५ ॥

यतमानाः पराक्रान्ताः परस्परजिगीषवः ।
जीमूता इव घर्मान्ते शरवर्षैरवाकिरन् ॥ ०३६ ॥

ते रथान्सूर्यसङ्काशानास्थिताः पुरुषर्षभाः ।
अशोभन्त यथा मेघाः शारदाः समुपस्थिताः ॥ ०३७ ॥

स्पर्धिनस्ते महेष्वासाः कृतयत्ना धनुर्धराः ।
अभ्यगच्छंस्तथान्योन्यं मत्ता गजवृषा इव ॥ ०३८ ॥

न नूनं देहभेदोऽस्ति काले तस्मिन्समागते ।
यत्र सर्वे न युगपद्व्यशीर्यन्त महारथाः ॥ ०३९ ॥

बाहुभिश्चरणैश्छिन्नैः शिरोभिश्चारुकुण्डलैः ।
कार्मुकैर्विशिखैः प्रासैः खड्गैः परशुपट्टिशैः ॥ ०४० ॥

नालीकक्षुरनाराचैर्नखरैः शक्तितोमरैः ।
अन्यैश्च विविधाकारैर्धौतैः प्रहरणोत्तमैः ॥ ०४१ ॥

चित्रैश्च विविधाकारैः शरीरावरणैरपि ।
विचित्रैश्च रथैर्भग्नैर्हतैश्च गजवाजिभिः ॥ ०४२ ॥

शून्यैश्च नगराकारैर्हतयोधध्वजै रथैः ।
अमनुष्यैर्हयैस्त्रस्तैः कृष्यमाणैस्ततस्ततः ॥ ०४३ ॥

वातायमानैरसकृद्धतवीरैरलङ्कृतैः ।
व्यजनैः कङ्कटैश्चैव ध्वजैश्च विनिपातितैः ॥ ०४४ ॥

छत्रैराभरणैर्वस्त्रैर्माल्यैश्च सुसुगन्धिभिः ।
हारैः किरीटैर्मुकुटैरुष्णीषैः किङ्किणीगणैः ॥ ०४५ ॥

उरस्यैर्मणिभिर्निष्कैश्चूडामणिभिरेव च ।
आसीदायोधनं तत्र नभस्तारागणैरिव ॥ ०४६ ॥

ततो दुर्योधनस्यासीन्नकुलेन समागमः ।
अमर्षितेन क्रुद्धस्य क्रुद्धेनामर्षितस्य च ॥ ०४७ ॥

अपसव्यं चकाराथ माद्रीपुत्रस्तवात्मजम् ।
किरञ्शरशतैर्हृष्टस्तत्र नादो महानभूत् ॥ ०४८ ॥

अपसव्यं कृतः संख्ये भ्रातृव्येनात्यमर्षिणा ।
सोऽमर्षितस्तमप्याजौ प्रतिचक्रेऽपसव्यतः ॥ ०४९ ॥

ततः प्रतिचिकीर्षन्तमपसव्यं तु ते सुतम् ।
न्यवारयत तेजस्वी नकुलश्चित्रमार्गवित् ॥ ०५० ॥

सर्वतो विनिवार्यैनं शरजालेन पीडयन् ।
विमुखं नकुलश्चक्रे तत्सैन्याः समपूजयन् ॥ ०५१ ॥

तिष्ठ तिष्ठेति नकुलो बभाषे तनयं तव ।
संस्मृत्य सर्वदुःखानि तव दुर्मन्त्रितेन च ॥ ०५२ ॥

---

# अध्याय १६३

सञ्जय उवाच ॥

ततो दुःशासनः क्रुद्धः सहदेवमुपाद्रवत् ।
रथवेगेन तीव्रेण कम्पयन्निव मेदिनीम् ॥ ००१ ॥

तस्यापतत एवाशु भल्लेनामित्रकर्शनः ।
माद्रीसुतः शिरो यन्तुः सशिरस्त्राणमच्छिनत् ॥ ००२ ॥

नैनं दुःशासनः सूतं नापि कश्चन सैनिकः ।
हृतोत्तमाङ्गमाशुत्वात्सहदेवेन बुद्धवान् ॥ ००३ ॥

यदा त्वसङ्गृहीतत्वात्प्रयान्त्यश्वा यथासुखम् ।
ततो दुःशासनः सूतं बुद्धवान्गतचेतसम् ॥ ००४ ॥

स हयान्संनिगृह्याजौ स्वयं हयविशारदः ।
युयुधे रथिनां श्रेष्ठश्चित्रं लघु च सुष्ठु च ॥ ००५ ॥

तदस्यापूजयन्कर्म स्वे परे चैव संयुगे ।
हतसूतरथेनाजौ व्यचरद्यदभीतवत् ॥ ००६ ॥

सहदेवस्तु तानश्वांस्तीक्ष्णैर्बाणैरवाकिरत् ।
पीड्यमानाः शरैश्चाशु प्राद्रवंस्ते ततस्ततः ॥ ००७ ॥

स रश्मिषु विषक्तत्वादुत्ससर्ज शरासनम् ।
धनुषा कर्म कुर्वंस्तु रश्मीन्स पुनरुत्सृजत् ॥ ००८ ॥

छिद्रेषु तेषु तं बाणैर्माद्रीपुत्रोऽभ्यवाकिरत् ।
परीप्संस्त्वत्सुतं कर्णस्तदन्तरमवापतत् ॥ ००९ ॥

वृकोदरस्ततः कर्णं त्रिभिर्भल्लैः समाहितैः ।
आकर्णपूर्णैरभ्यघ्नन्बाह्वोरुरसि चानदत् ॥ ०१० ॥

संन्यवर्तत तं कर्णः संघट्टित इवोरगः ।
तदभूत्तुमुलं युद्धं भीमराधेययोस्तदा ॥ ०११ ॥

तौ वृषाविव सङ्क्रुद्धौ विवृत्तनयनावुभौ ।
वेगेन महतान्योन्यं संरब्धावभिपेततुः ॥ ०१२ ॥

अभिसंश्लिष्टयोस्तत्र तयोराहवशौण्डयोः ।
अभिन्नशरपातत्वाद्गदायुद्धमवर्तत ॥ ०१३ ॥

गदया भीमसेनस्तु कर्णस्य रथकूबरम् ।
बिभेदाशु तदा राजंस्तदद्भुतमिवाभवत् ॥ ०१४ ॥

ततो भीमस्य राधेयो गदामादाय वीर्यवान् ।
अवासृजद्रथे तां तु बिभेद गदया गदाम् ॥ ०१५ ॥

ततो भीमः पुनर्गुर्वीं चिक्षेपाधिरथेर्गदाम् ।
तां शरैर्दशभिः कर्णः सुपुङ्खैः सुसमाहितैः ॥ ०१६ ॥

प्रत्यविध्यत्पुनश्चान्यैः सा भीमं पुनराव्रजत् ॥ ०१६ ॥

तस्याः प्रतिनिपातेन भीमस्य विपुलो ध्वजः ।
पपात सारथिश्चास्य मुमोह गदया हतः ॥ ०१७ ॥

स कर्णे सायकानष्टौ व्यसृजत्क्रोधमूर्छितः ।
ध्वजे शरासने चैव शरावापे च भारत ॥ ०१८ ॥

ततः पुनस्तु राधेयो हयानस्य रथेषुभिः ।
ऋष्यवर्णाञ्जघानाशु तथोभौ पार्ष्णिसारथी ॥ ०१९ ॥

स विपन्नरथो भीमो नकुलस्याप्लुतो रथम् ।
हरिर्यथा गिरेः शृङ्गं समाक्रामदरिंदमः ॥ ०२० ॥

तथा द्रोणार्जुनौ चित्रमयुध्येतां महारथौ ।
आचार्यशिष्यौ राजेन्द्र कृतप्रहरणौ युधि ॥ ०२१ ॥

लघुसंधानयोगाभ्यां रथयोश्च रणेन च ।
मोहयन्तौ मनुष्याणां चक्षूंषि च मनांसि च ॥ ०२२ ॥

उपारमन्त ते सर्वे योधास्माकं परे तथा ।
अदृष्टपूर्वं पश्यन्तस्तद्युद्धं गुरुशिष्ययोः ॥ ०२३ ॥

विचित्रान्पृतनामध्ये रथमार्गानुदीर्यतः ।
अन्योन्यमपसव्यं च कर्तुं वीरौ तदैषतुः ॥ ०२४ ॥

पराक्रमं तयोर्योधा ददृशुस्तं सुविस्मिताः ॥ ०२४ ॥

तयोः समभवद्युद्धं द्रोणपाण्डवयोर्महत् ।
आमिषार्थं महाराज गगने श्येनयोरिव ॥ ०२५ ॥

यद्यच्चकार द्रोणस्तु कुन्तीपुत्रजिगीषया ।

तत्तत्प्रतिजघानाशु प्रहसंस्तस्य पाण्डवः ॥ ०२६ ॥

यदा द्रोणो न शक्नोति पाण्डवस्य विशेषणे ।
ततः प्रादुश्चकारास्त्रमस्त्रमार्गविशारदः ॥ ०२७ ॥

ऐन्द्रं पाशुपतं त्वाष्ट्रं वायव्यमथ वारुणम् ।
मुक्तं मुक्तं द्रोणचापात्तज्जघान धनञ्जयः ॥ ०२८ ॥

अस्त्राण्यस्त्रैर्यदा तस्य विधिवद्धन्ति पाण्डवः ।
ततोऽस्त्रैः परमैर्दिव्यैर्द्रोणः पार्थमवाकिरत् ॥ ०२९ ॥

यद्यदस्त्रं स पार्थाय प्रयुङ्क्ते विजिगीषया ।
तस्यास्त्रस्य विघातार्थं तत्तत्स कुरुतेऽर्जुनः ॥ ०३० ॥

स वध्यमानेष्वस्त्रेषु दिव्येष्वपि यथाविधि ।
अर्जुनेनार्जुनं द्रोणो मनसैवाभ्यपूजयत् ॥ ०३१ ॥

मेने चात्मानमधिकं पृथिव्यामपि भारत ।
तेन शिष्येण सर्वेभ्यः शस्त्रविद्भ्यः समन्ततः ॥ ०३२ ॥

वार्यमाणस्तु पार्थेन तथा मध्ये महात्मनाम् ।
यतमानोऽर्जुनं प्रीत्या प्रत्यवारयदुत्स्मयन् ॥ ०३३ ॥

ततोऽन्तरिक्षे देवाश्च गन्धर्वाश्च सहस्रशः ।
ऋषयः सिद्धसंघाश्च व्यतिष्ठन्त दिदृक्षया ॥ ०३४ ॥

तदप्सरोभिराकीर्णं यक्षराक्षससङ्कुलम् ।
श्रीमदाकाशमभवद्भूयो मेघाकुलं यथा ॥ ०३५ ॥

तत्र स्मान्तर्हिता वाचो व्यचरन्त पुनः पुनः ।
द्रोणस्य स्तवसंयुक्ताः पार्थस्य च महात्मनः ॥ ०३६ ॥

विसृज्यमानेष्वस्त्रेषु ज्वालयत्सु दिशो दश ॥ ०३६ ॥

नैवेदं मानुषं युद्धं नासुरं न च राक्षसम् ।
न दैवं न च गान्धर्वं ब्राह्मं ध्रुवमिदं परम् ॥ ०३७ ॥

विचित्रमिदमाश्चर्यं न नो दृष्टं न च श्रुतम् ॥ ०३७ ॥

अति पाण्डवमाचार्यो द्रोणं चाप्यति पाण्डवः ।
नानयोरन्तरं द्रष्टुं शक्यमस्त्रेण केनचित् ॥ ०३८ ॥

यदि रुद्रो द्विधाकृत्य युध्येतात्मानमात्मना ।
तत्र शक्योपमा कर्तुमन्यत्र तु न विद्यते ॥ ०३९ ॥

ज्ञानमेकस्थमाचार्ये ज्ञानं योगश्च पाण्डवे ।
शौर्यमेकस्थमाचार्ये बलं शौर्यं च पाण्डवे ॥ ०४० ॥

नेमौ शक्यौ महेष्वासौ रणे क्षेपयितुं परैः ।
इच्छमानौ पुनरिमौ हन्येतां सामरं जगत् ॥ ०४१ ॥

इत्यब्रुवन्महाराज दृष्ट्वा तौ पुरुषर्षभौ ।
अन्तर्हितानि भूतानि प्रकाशानि च संघशः ॥ ०४२ ॥

ततो द्रोणो ब्राह्ममस्त्रं प्रादुश्चक्रे महामतिः ।
संतापयन्रणे पार्थं भूतान्यन्तर्हितानि च ॥ ०४३ ॥

ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
ववौ च विषमो वायुः सागराश्चापि चुक्षुभुः ॥ ०४४ ॥

ततस्त्रासो महानासीत्कुरुपाण्डवसेनयोः ।
सर्वेषां चैव भूतानामुद्यतेऽस्त्रे महात्मना ॥ ०४५ ॥

ततः पार्थोऽप्यसंभ्रान्तस्तदस्त्रं प्रतिजघ्निवान् ।
ब्रह्मास्त्रेणैव राजेन्द्र ततः सर्वमशीशमत् ॥ ०४६ ॥

यदा न गम्यते पारं तयोरन्यतरस्य वा ।
ततः सङ्कुलयुद्धेन तद्युद्धं व्यकुलीकृतम् ॥ ०४७ ॥

नाज्ञायत ततः किञ्चित्पुनरेव विशां पते ।
प्रवृत्ते तुमुले युद्धे द्रोणपाण्डवयोर्मृधे ॥ ०४८ ॥

शरजालैः समाकीर्णे मेघजालैरिवाम्बरे ।
न स्म संपतते कश्चिदन्तरिक्षचरस्तदा ॥ ०४९ ॥

---

# अध्याय १६४

सञ्जय उवाच ॥

तस्मिंस्तथा वर्तमाने नराश्वगजसङ्क्षये ।
दुःशासनो महाराज धृष्टद्युम्नमयोधयत् ॥ ००१ ॥

स तु रुक्मरथासक्तो दुःशासनशरार्दितः ।
अमर्षात्तव पुत्रस्य शरैर्वाहानवाकिरत् ॥ ००२ ॥

क्षणेन स रथस्तस्य सध्वजः सहसारथिः ।
नादृश्यत महाराज पार्षतस्य शरैश्चितः ॥ ००३ ॥

दुःशासनस्तु राजेन्द्र पाञ्चाल्यस्य महात्मनः ।
नाशकत्प्रमुखे स्थातुं शरजालप्रपीडितः ॥ ००४ ॥

स तु दुःशासनं बाणैर्विमुखीकृत्य पार्षतः ।
किरञ्शरसहस्राणि द्रोणमेवाभ्ययाद्रणे ॥ ००५ ॥

प्रत्यपद्यत हार्दिक्यः कृतवर्मा तदन्तरम् ।
सोदर्याणां त्रयश्चैव त एनं पर्यवारयन् ॥ ००६ ॥

तं यमौ पृष्ठतोऽन्वैतां रक्षन्तौ पुरुषर्षभौ ।
द्रोणायाभिमुखं यान्तं दीप्यमानमिवानलम् ॥ ००७ ॥

संप्रहारमकुर्वंस्ते सर्वे सप्त महारथाः ।
अमर्षिताः सत्त्ववन्तः कृत्वा मरणमग्रतः ॥ ००८ ॥

शुद्धात्मानः शुद्धवृत्ता राजन्स्वर्गपुरस्कृताः ।
आर्यं युद्धमकुर्वन्त परस्परजिगीषवः ॥ ००९ ॥

शुक्लाभिजनकर्माणो मतिमन्तो जनाधिपाः ।
धर्मयुद्धमयुध्यन्त प्रेक्षन्तो गतिमुत्तमाम् ॥ ०१० ॥

न तत्रासीदधर्मिष्ठमशस्त्रं युद्धमेव च ।
नात्र कर्णी न नालीको न लिप्तो न च वस्तकः ॥ ०११ ॥

न सूची कपिशो नात्र न गवास्थिर्गजास्थिकः ।
इषुरासीन्न संश्लिष्टो न पूतिर्न च जिह्मगः ॥ ०१२ ॥

ऋजून्येव विशुद्धानि सर्वे शस्त्राण्यधारयन् ।
सुयुद्धेन परा.ल्लोकानीप्सन्तः कीर्तिमेव च ॥ ०१३ ॥

तदासीत्तुमुलं युद्धं सर्वदोषविवर्जितम् ।
चतुर्णां तव योधानां तैस्त्रिभिः पाण्डवैः सह ॥ ०१४ ॥

धृष्टद्युम्नस्तु तान्हित्वा तव राजन्नरथर्षभान् ।
यमाभ्यां वारितान्दृष्ट्वा शीघ्रास्त्रो द्रोणमभ्ययात्  ॥ ०१५  ॥

निवारितास्तु ते वीरास्तयोः पुरुषसिंहयोः ।
समसज्जन्त चत्वारो वाताः पर्वतयोरिव  ॥ ०१६  ॥

द्वाभ्यां द्वाभ्यां यमौ सार्धं रथाभ्यां रथपुङ्गवौ ।
समासक्तौ ततो द्रोणं धृष्टद्युम्नोऽभ्यवर्तत  ॥ ०१७  ॥

दृष्ट्वा द्रोणाय पाञ्चाल्यं व्रजन्तं युद्धदुर्मदम् ।
यमाभ्यां तांश्च संसक्तांस्तदन्तरमुपाद्रवत्  ॥ ०१८  ॥

दुर्योधनो महाराज किरञ्शोणितभोजनान् ।
तं सात्यकिः शीघ्रतरं पुनरेवाभ्यवर्तत  ॥ ०१९  ॥

तौ परस्परमासाद्य समीपे कुरुमाधवौ ।
हसमानौ नृशार्दूलावभीतौ समगच्छताम्  ॥ ०२०  ॥

बाल्ये वृत्तानि सर्वाणि प्रीयमाणौ विचिन्त्य तौ ।
अन्योन्यं प्रेक्षमाणौ च हसमानौ पुनः पुनः  ॥ ०२१  ॥

अथ दुर्योधनो राजा सात्यकिं प्रत्यभाषत ।
प्रियं सखायं सततं गर्हयन्वृत्तमात्मनः  ॥ ०२२  ॥

धिक्क्रोधं धिक्सखे लोभं धिङ्मोहं धिगमर्षितम् ।
धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम्  ॥ ०२३  ॥

यत्त्वं मामभिसंधत्से त्वां चाहं शिनिपुङ्गव ।
त्वं हि प्राणैः प्रियतरो ममाहं च सदा तव  ॥ ०२४  ॥

स्मरामि तानि सर्वाणि बाल्ये वृत्तानि यानि नौ ।

तानि सर्वाणि जीर्णानि सांप्रतं नौ रणाजिरे ॥ ०२५ ॥

किमन्यत्क्रोधलोभाभ्यां युध्यामि त्वाद्य सात्वत ॥ ०२५ ॥

तं तथावादिनं राजन्सात्यकिः प्रत्यभाषत ।
प्रहसन्विशिखांस्तीक्ष्णानुद्यम्य परमास्त्रवित् ॥ ०२६ ॥

नेयं सभा राजपुत्र न चाचार्यनिवेशनम् ।
यत्र क्रीडितमस्माभिस्तदा राजन्समागतैः ॥ ०२७ ॥

दुर्योधन उवाच ॥

क्व सा क्रीडा गतास्माकं बाल्ये वै शिनिपुङ्गव ।
क्व च युद्धमिदं भूयः कालो हि दुरतिक्रमः ॥ ०२८ ॥

किं नु नो विद्यते कृत्यं धनेन धनलिप्सया ।
यत्र युध्यामहे सर्वे धनलोभात्समागताः ॥ ०२९ ॥

सञ्जय उवाच ॥

तं तथावादिनं तत्र राजानं माधवोऽब्रवीत् ।
एवंवृत्तं सदा क्षत्रं यद्धन्तीह गुरूनपि ॥ ०३० ॥

यदि तेऽहं प्रियो राजञ्जहि मां मा चिरं कृथाः ।
त्वत्कृते सुकृता.ण्ल्लोकान्गच्छेयं भरतर्षभ ॥ ०३१ ॥

या ते शक्तिर्बलं चैव तत्क्षिप्रं मयि दर्शय ।
नेच्छाम्येतदहं द्रष्टुं मित्राणां व्यसनं महत् ॥ ०३२ ॥

इत्येवं व्यक्तमाभाष्य प्रतिभाष्य च सात्यकिः ।
अभ्ययात्तूर्णमव्यग्रो निरपेक्षो विशां पते ॥ ०३३ ॥

तमायान्तमभिप्रेक्ष्य प्रत्यगृह्णात्तवात्मजः ।
शरैश्चावाकिरद्राजञ्शैनेयं तनयस्तव ॥ ०३४ ॥

ततः प्रववृते युद्धं कुरुमाधवसिंहयोः ।
अन्योन्यं क्रुद्धयोर्घोरं यथा द्विरदसिंहयोः ॥ ०३५ ॥

ततः पूर्णायतोत्सृष्टैः सात्वतं युद्धदुर्मदम् ।
दुर्योधनः प्रत्यविध्यद्दशभिर्निशितैः शरैः ॥ ०३६ ॥

तं सात्यकिः प्रत्यविद्धत्तथैव दशभिः शरैः ।
पञ्चाशता पुनश्चाजौ त्रिंशता दशभिश्च ह ॥ ०३७ ॥

तस्य संदधतश्चेषून्संहितेषुं च कार्मुकम् ।
अच्छिनत्सात्यकिस्तूर्णं शरैश्चैवाभ्यवीवृषत् ॥ ०३८ ॥

स गाढविद्धो व्यथितः प्रत्यपायाद्रथान्तरम् ।
दुर्योधनो महाराज दाशार्हशरपीडितः ॥ ०३९ ॥

समाश्वस्य तु पुत्रस्ते सात्यकिं पुनरभ्ययात् ।
विसृजन्निषुजालानि युयुधानरथं प्रति ॥ ०४० ॥

तथैव सात्यकिर्बाणान्दुर्योधनरथं प्रति ।
प्रततं व्यसृजद्राजंस्तत्सङ्कुलमवर्तत ॥ ०४१ ॥

तत्रेषुभिः क्षिप्यमाणैः पतद्भिश्च समन्ततः ।
अग्नेरिव महाकक्षे शब्दः समभवन्महान् ॥ ०४२ ॥

तत्राभ्यधिकमालक्ष्य माधवं रथसत्तमम् ।
क्षिप्रमभ्यपतत्कर्णः परीप्संस्तनयं तव ॥ ०४३ ॥

न तु तं मर्षयामास भीमसेनो महाबलः ।
अभ्ययात्त्वरितः कर्णं विसृजन्सायकान्बहून् ॥ ०४४ ॥

तस्य कर्णः शितान्बाणान्प्रतिहन्य हसन्निव ।
धनुः शरांश्च चिच्छेद सूतं चाभ्यहनच्छरैः ॥ ०४५ ॥

भीमसेनस्तु सङ्क्रुद्धो गदामादाय पाण्डवः ।
ध्वजं धनुश्च सूतं च संममर्दाहवे रिपोः ॥ ०४६ ॥

अमृष्यमाणः कर्णस्तु भीमसेनमयुध्यत ।
विविधैरिषुजालैश्च नानाशस्त्रैश्च संयुगे ॥ ०४७ ॥

सङ्कुले वर्तमाने तु राजा धर्मसुतोऽब्रवीत् ।
पाञ्चालानां नरव्याघ्रान्मत्स्यानां च नरर्षभान् ॥ ०४८ ॥

ये नः प्राणाः शिरो ये नो ये नो योधा महाबलाः ।
त एते धार्तराष्ट्रेषु विषक्ताः पुरुषर्षभाः ॥ ०४९ ॥

किं तिष्ठत यथा मूढाः सर्वे विगतचेतसः ।
तत्र गच्छत यत्रैते युध्यन्ते मामका रथाः ॥ ०५० ॥

क्षत्रधर्मं पुरस्कृत्य सर्व एव गतज्वराः ।
जयन्तो वध्यमाना वा गतिमिष्टां गमिष्यथ ॥ ०५१ ॥

जित्वा च बहुभिर्यज्ञैर्यक्ष्यध्वं भूरिदक्षिणैः ।
हता वा देवसाद्भूत्वा लोकान्प्राप्स्यथ पुष्कलान् ॥ ०५२ ॥

ते राज्ञा चोदिता वीरा योत्स्यमाना महारथाः ।
चतुर्धा वहिनीं कृत्वा त्वरिता द्रोणमभ्ययुः ॥ ०५३ ॥

पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन्बहुभिः शरैः ।

भीमसेनपुरोगाश्च एकतः पर्यवारयन् ॥ ०५४ ॥

आसंस्तु पाण्डुपुत्राणां त्रयोऽजिह्मा महारथाः ।
यमौ च भीमसेनश्च प्राक्रोशन्त धनञ्जयम् ॥ ०५५ ॥

अभिद्रवार्जुन क्षिप्रं कुरून्द्रोणादपानुद ।
तत एनं हनिष्यन्ति पाञ्चाला हतरक्षिणम् ॥ ०५६ ॥

कौरवेयांस्ततः पार्थः सहसा समुपाद्रवत् ।
पाञ्चालानेव तु द्रोणो धृष्टद्युम्नपुरोगमान् ॥ ०५७ ॥

पाञ्चालानां ततो द्रोणोऽप्यकरोत्कदनं महत् ।
यथा क्रुद्धो रणे शक्रो दानवानां क्षयं पुरा ॥ ०५८ ॥

द्रोणास्त्रेण महाराज वध्यमानाः परे युधि ।
नात्रसन्त रणे द्रोणात्सत्त्ववन्तो महारथाः ॥ ०५९ ॥

वध्यमाना महाराज पाञ्चालाः सृञ्जयास्तथा ।
द्रोणमेवाभ्ययुर्युद्धे मोहयन्तो महारथम् ॥ ०६० ॥

तेषां तूत्साद्यमानानां पाञ्चालानां समन्ततः ।
अभवद्भैरवो नादो वध्यतां शरशक्तिभिः ॥ ०६१ ॥

वध्यमानेषु सङ्ग्रामे पाञ्चालेषु महात्मना ।
उदीर्यमाणे द्रोणास्त्रे पाण्डवान्भयमाविशत् ॥ ०६२ ॥

दृष्ट्वाश्वनरसंघानां विपुलं च क्षयं युधि ।
पाण्डवेया महाराज नाशंसुर्विजयं तदा ॥ ०६३ ॥

कच्चिद्द्रोणो न नः सर्वान्क्षपयेत्परमास्त्रवित् ।
समिद्धः शिशिरापाये दहन्कक्षमिवानलः ॥ ०६४ ॥

न चैनं संयुगे कश्चित्समर्थः प्रतिवीक्षितुम् ।
न चैनमर्जुनो जातु प्रतियुध्येत धर्मवित्  ॥ ०६५  ॥

त्रस्तान्कुन्तीसुतान्दृष्ट्वा द्रोणसायकपीडितान् ।
मतिमाञ्श्रेयसे युक्तः केशवोऽर्जुनमब्रवीत्  ॥ ०६६  ॥

नैष युद्धेन सङ्ग्रामे जेतुं शक्यः कथञ्चन ।
अपि वृत्रहणा युद्धे रथयूथपयूथपः  ॥ ०६७  ॥

आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डव ।
यथा वः संयुगे सर्वान्न हन्याद्रुक्मवाहनः  ॥ ०६८  ॥

अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
तं हतं संयुगे कश्चिदस्मै शंसतु मानवः  ॥ ०६९  ॥

एतन्नारोचयद्राजन्कुन्तीपुत्रो धनञ्जयः ।
अन्ये त्वरोचयन्सर्वे कृच्छ्रेण तु युधिष्ठिरः  ॥ ०७०  ॥

ततो भीमो महाबाहुरनीके स्वे महागजम् ।
जघान गदया राजन्नश्वत्थामानमित्युत  ॥ ०७१  ॥

भीमसेनस्तु सव्रीडमुपेत्य द्रोणमाहवे ।
अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह  ॥ ०७२  ॥

अश्वत्थामेति हि गजः ख्यातो नाम्ना हतोऽभवत् ।
कृत्वा मनसि तं भीमो मिथ्या व्याहृतवांस्तदा  ॥ ०७३  ॥

भीमसेनवचः श्रुत्वा द्रोणस्तत्परमप्रियम् ।
मनसा सन्नगात्रोऽभूद्यथा सैकतमम्भसि  ॥ ०७४  ॥

शङ्कमानः स तन्मिथ्या वीर्यज्ञः स्वसुतस्य वै ।
हतः स इति च श्रुत्वा नैव धैर्यादकम्पत ॥ ०७५ ॥

स लब्ध्वा चेतनां द्रोणः क्षणेनैव समाश्वसत् ।
अनुचिन्त्यात्मनः पुत्रमविषह्यमरातिभिः ॥ ०७६ ॥

स पार्षतमभिद्रुत्य जिघांसुर्मृत्युमात्मनः ।
अवाकिरत्सहस्रेण तीक्ष्णानां कङ्कपत्रिणाम् ॥ ०७७ ॥

तं वै विंशतिसाहस्राः पाञ्चालानां नरर्षभाः ।
तथा चरन्तं सङ्ग्रामे सर्वतो व्यकिरञ्शरैः ॥ ०७८ ॥

ततः प्रादुष्करोद्द्रोणो ब्राह्ममस्त्रं परंतपः ।
वधाय तेषां शूराणां पाञ्चालानाममर्षितः ॥ ०७९ ॥

ततो व्यरोचत द्रोणो विनिघ्नन्सर्वसोमकान् ।
शिरांस्यपातयच्चापि पाञ्चालानां महामृधे ॥ ०८० ॥

तथैव परिघाकारान्बाहून्कनकभूषणान् ॥ ०८० ॥

ते वध्यमानाः समरे भारद्वाजेन पार्थिवाः ।
मेदिन्यामन्वकीर्यन्त वातनुन्ना इव द्रुमाः ॥ ०८१ ॥

कुञ्जराणां च पततां हयौघानां च भारत ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ ०८२ ॥

हत्वा विंशतिसाहस्रान्पाञ्चालानां रथव्रजान् ।
अतिष्ठदाहवे द्रोणो विधूमोऽग्निरिव ज्वलन् ॥ ०८३ ॥

तथैव च पुनः क्रुद्धो भारद्वाजः प्रतापवान् ।
वसुदानस्य भल्लेन शिरः कायादपाहरत् ॥ ०८४ ॥

पुनः पञ्चशतान्मत्स्यान्षट्सहस्रांश्च सृञ्जयान् ।
हस्तिनामयुतं हत्वा जघानाश्वायुतं पुनः ॥ ०८५ ॥

क्षत्रियाणामभावाय दृष्ट्वा द्रोणमवस्थितम् ।
ऋषयोऽभ्यागमंस्तूर्णं हव्यवाहपुरोगमाः ॥ ०८६ ॥

विश्वामित्रो जमदग्निर्भारद्वाजोऽथ गौतमः ।
वसिष्ठः कश्यपोऽत्रिश्च ब्रह्मलोकं निनीषवः ॥ ०८७ ॥

सिकताः पृश्नयो गर्गा बालखिल्या मरीचिपाः ।
भृगवोऽङ्गिरसश्चैव सूक्ष्माश्चान्ये महर्षयः ॥ ०८८ ॥

त एनमब्रुवन्सर्वे द्रोणमाहवशोभिनम् ।
अधर्मतः कृतं युद्धं समयो निधनस्य ते ॥ ०८९ ॥

न्यस्यायुधं रणे द्रोण समेत्यास्मानवस्थितान् ।
नातः क्रूरतरं कर्म पुनः कर्तुं त्वमर्हसि ॥ ०९० ॥

वेदवेदाङ्गविदुषः सत्यधर्मपरस्य च ।
ब्राह्मणस्य विशेषेण तवैतन्नोपपद्यते ॥ ०९१ ॥

न्यस्यायुधममोघेषो तिष्ठ वर्त्मनि शाश्वते ।
परिपूर्णश्च कालस्ते वस्तुं लोकेऽद्य मानुषे ॥ ०९२ ॥

इति तेषां वचः श्रुत्वा भीमसेनवचश्च तत् ।
धृष्टद्युम्नं च संप्रेक्ष्य रणे स विमनाभवत् ॥ ०९३ ॥

स दह्यमानो व्यथितः कुन्तीपुत्रं युधिष्ठिरम् ।
अहतं वा हतं वेति पप्रच्छ सुतमात्मनः ॥ ०९४ ॥

स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतम् ।
त्रयाणामपि लोकानामैश्वर्यार्थे कथञ्चन ॥ ०९५ ॥

तस्मात्तं परिपप्रच्छ नान्यं कञ्चिद्विशेषतः ।
तस्मिंस्तस्य हि सत्याशा बाल्यात्प्रभृति पाण्डवे ॥ ०९६ ॥

ततो निष्पाण्डवामुर्वीं करिष्यन्तं युधां पतिम् ।
द्रोणं ज्ञात्वा धर्मराजं गोविन्दो व्यथितोऽब्रवीत् ॥ ०९७ ॥

यद्यर्धदिवसं द्रोणो युध्यते मन्युमास्थितः ।
सत्यं ब्रवीमि ते सेना विनाशं समुपैष्यति ॥ ०९८ ॥

स भवांस्त्रातु नो द्रोणात्सत्याज्ज्यायोऽनृतं भवेत् ।
अनृतं जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतैः ॥ ०९९ ॥

तयोः संवदतोरेवं भीमसेनोऽब्रवीदिदम् ।
श्रुत्वैव तं महाराज वधोपायं महात्मनः ॥ १०० ॥

गाहमानस्य ते सेनां मालवस्येन्द्रवर्मणः ।
अश्वत्थामेति विख्यातो गजः शक्रगजोपमः ॥ १०१ ॥

निहतो युधि विक्रम्य ततोऽहं द्रोणमब्रुवम् ।
अश्वत्थामा हतो ब्रह्मन्निवर्तस्वाहवादिति ॥ १०२ ॥

नूनं नाश्रद्दधद्वाक्यमेष मे पुरुषर्षभः ।
स त्वं गोविन्दवाक्यानि मानयस्व जयैषिणः ॥ १०३ ॥

द्रोणाय निहतं शंस राजञ्शारद्वतीसुतम् ।
त्वयोक्तो नैष युध्येत जातु राजन्द्विजर्षभः ॥ १०४ ॥

सत्यवान्हि नृलोकेऽस्मिन्भवान्ख्यातो जनाधिप ॥ १०४ ॥

तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः ।
भावित्वाच्च महाराज वक्तुं समुपचक्रमे ॥ १०५ ॥

तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
अव्यक्तमब्रवीद्राजन्हतः कुञ्जर इत्युत ॥ १०६ ॥

तस्य पूर्वं रथः पृथ्व्याश्चतुरङ्गुल उत्तरः ।
बभूवैवं तु तेनोक्ते तस्य वाहास्पृशन्महीम् ॥ १०७ ॥

युधिष्ठिरात्तु तद्वाक्यं श्रुत्वा द्रोणो महारथः ।
पुत्रव्यसनसंतप्तो निराशो जीवितेऽभवत् ॥ १०८ ॥

आगस्कृतमिवात्मानं पाण्डवानां महात्मनाम् ।
ऋषिवाक्यं च मन्वानः श्रुत्वा च निहतं सुतम् ॥ १०९ ॥

विचेताः परमोद्विग्नो धृष्टद्युम्नमवेक्ष्य च ।
योद्धुं नाशक्नुवद्राजन्यथापूर्वमरिंदम ॥ ११० ॥

तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम् ।
पाञ्चालराजस्य सुतो धृष्टद्युम्नः समाद्रवत् ॥ १११ ॥

य इष्ट्वा मनुजेन्द्रेण द्रुपदेन महामखे ।
लब्धो द्रोणविनाशाय समिद्धाद्धव्यवाहनात् ॥ ११२ ॥

स धनुर्जैत्रमादाय घोरं जलदनिस्वनम् ।
दृढज्यमजरं दिव्यं शरांश्चाशीविषोपमान् ॥ ११३ ॥

संदधे कार्मुके तस्मिञ्शरमाशीविषोपमम् ।
द्रोणं जिघांसुः पाञ्चाल्यो महाज्वालमिवानलम् ॥ ११४ ॥

तस्य रूपं शरस्यासीद्धनुर्ज्यामण्डलान्तरे ।
द्योततो भास्करस्येव घनान्ते परिवेशिनः ॥ ११५ ॥

पार्षतेन परामृष्टं ज्वलन्तमिव तद्धनुः ।
अन्तकालमिव प्राप्तं मेनिरे वीक्ष्य सैनिकाः ॥ ११६ ॥

तमिषुं संहितं तेन भारद्वाजः प्रतापवान् ।
दृष्ट्वामन्यत देहस्य कालपर्यायमागतम् ॥ ११७ ॥

ततः स यत्नमातिष्ठदाचार्यस्तस्य वारणे ।
न चास्यास्त्राणि राजेन्द्र प्रादुरासन्महात्मनः ॥ ११८ ॥

तस्य त्वहानि चत्वारि क्षपा चैकास्यतो गता ।
तस्य चाह्नस्त्रिभागेन क्षयं जग्मुः पतत्रिणः ॥ ११९ ॥

स शरक्षयमासाद्य पुत्रशोकेन चार्दितः ।
विविधानां च दिव्यानामस्त्राणामप्रसन्नताम् ॥ १२० ॥

उत्स्रष्टुकामः शस्त्राणि विप्रवाक्याभिचोदितः ।
तेजसा प्रेर्यमाणश्च युयुधे सोऽतिमानुषम् ॥ १२१ ॥

अथान्यत्स समादाय दिव्यमाङ्गिरसं धनुः ।
शरांश्च ब्रह्मदण्डाभान्धृष्टद्युम्नमयोधयत् ॥ १२२ ॥

ततस्तं शरवर्षेण महता समवाकिरत् ।
व्यशातयच्च सङ्क्रुद्धो धृष्टद्युम्नममर्षणः ॥ १२३ ॥

तं शरं शतधा चास्य द्रोणश्चिच्छेद सायकैः ।
ध्वजं धनुश्च निशितैः सारथिं चाप्यपातयत् ॥ १२४ ॥

धृष्टद्युम्नः प्रहस्यान्यत्पुनरादाय कार्मुकम् ।

शितेन चैनं बाणेन प्रत्यविध्यत्स्तनान्तरे ॥ १२५ ॥

सोऽतिविद्धो महेष्वासः संभ्रान्त इव संयुगे ।
भल्लेन शितधारेण चिच्छेदास्य महद्धनुः ॥ १२६ ॥

यच्चास्य बाणं विकृतं धनूंषि च विशां पते ।
सर्वं संछिद्य दुर्धर्षो गदां खड्गमथापि च ॥ १२७ ॥

धृष्टद्युम्नं ततोऽविध्यन्नवभिर्निशितैः शरैः ।
जीवितान्तकरैः क्रुद्धः क्रुद्धरूपं परंतपः ॥ १२८ ॥

धृष्टद्युम्नरथस्याश्वान्स्वरथाश्वैर्महारथः ।
अमिश्रयदमेयात्मा ब्राह्ममस्त्रमुदीरयन् ॥ १२९ ॥

ते मिश्रा बह्वशोभन्त जवना वातरंहसः ।
पारावतसवर्णाश्च शोणाश्च भरतर्षभ ॥ १३० ॥

यथा सविद्युतो मेघा नदन्तो जलदागमे ।
तथा रेजुर्महाराज मिश्रिता रणमूर्धनि ॥ १३१ ॥

ईषाबन्धं चक्रबन्धं रथबन्धं तथैव च ।
प्रणाशयदमेयात्मा धृष्टद्युम्नस्य स द्विजः ॥ १३२ ॥

स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
उत्तमामापदं प्राप्य गदां वीरः परामृशत् ॥ १३३ ॥

तामस्य विशिखैस्तीक्ष्णैः क्षिप्यमाणां महारथः ।
निजघान शरैर्द्रोणः क्रुद्धः सत्यपराक्रमः ॥ १३४ ॥

तां दृष्ट्वा तु नरव्याघ्रो द्रोणेन निहतां शरैः ।
विमलं खड्गमादत्त शतचन्द्रं च भानुमत् ॥ १३५ ॥

असंशयं तथाभूते पाञ्चाल्यः साध्वमन्यत ।
वधमाचार्यमुख्यस्य प्राप्तकालं महात्मनः ॥ १३६ ॥

ततः स्वरथनीडस्थः स्वरथस्य रथेषया ।
अगच्छदसिमुद्यम्य शतचन्द्रं च भानुमत् ॥ १३७ ॥

चिकीर्षुर्दुष्करं कर्म धृष्टद्युम्नो महारथः ।
इयेष वक्षो भेत्तुं च भारद्वाजस्य संयुगे ॥ १३८ ॥

सोऽतिष्ठद्युगमध्ये वै युगसंनहनेषु च ।
शोणानां जघनार्धेषु तत्सैन्याः समपूजयन् ॥ १३९ ॥

तिष्ठतो युगपालीषु शोणानप्यधितिष्ठतः ।
नापश्यदन्तरं द्रोणस्तदद्भुतमिवाभवत् ॥ १४० ॥

क्षिप्रं श्येनस्य चरतो यथैवामिषगृद्धिनः ।
तद्वदासीदभीसारो द्रोणं प्रार्थयतो रणे ॥ १४१ ॥

तस्याश्वान्रथशक्त्यासौ तदा क्रुद्धः पराक्रमी ।
सर्वानेकैकशो द्रोणः कपोताभानजीघनत् ॥ १४२ ॥

ते हता न्यपतन्भूमौ धृष्टद्युम्नस्य वाजिनः ।
शोणाश्च पर्यमुच्यन्त रथबन्धाद्विशां पते ॥ १४३ ॥

तान्हयान्निहतान्दृष्ट्वा द्विजाग्र्येण स पार्षतः ।
नामृष्यत युधां श्रेष्ठो याज्ञसेनिर्महारथः ॥ १४४ ॥

विरथः स गृहीत्वा तु खड्गं खड्गभृतां वरः ।
द्रोणमभ्यपतद्राजन्वैनतेय इवोरगम् ॥ १४५ ॥

तस्य रूपं बभौ राजन्भारद्वाजं जिघांसतः ।
यथा रूपं परं विष्णोर्हिरण्यकशिपोर्वधे ॥ १४६ ॥

सोऽचरद्विविधान्मार्गान्प्रकारानेकविंशतिम् ।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतम् ॥ १४७ ॥

परिवृत्तं निवृत्तं च खड्गं चर्म च धारयन् ।
संपातं समुदीर्णं च दर्शयामास पार्षतः ॥ १४८ ॥

ततः शरसहस्रेण शतचन्द्रमपातयत् ।
खड्गं चर्म च संबाधे धृष्टद्युम्नस्य स द्विजः ॥ १४९ ॥

ते तु वैतस्तिका नाम शरा ह्यासन्नघातिनः ।
निकृष्टयुद्धे द्रोणस्य नान्येषां सन्ति ते शराः ॥ १५० ॥

शारद्वतस्य पार्थस्य द्रौणेर्वैकर्तनस्य च ।
प्रद्युम्नयुयुधानाभ्यामभिमन्योश्च ते शराः ॥ १५१ ॥

अथास्येषुं समाधत्त दृढं परमसंशितम् ।
अन्तेवासिनमाचार्यो जिघांसुः पुत्रसंमितम् ॥ १५२ ॥

तं शरैर्दशभिस्तीक्ष्णैश्चिच्छेद शिनिपुङ्गवः ।
पश्यतस्तव पुत्रस्य कर्णस्य च महात्मनः ॥ १५३ ॥

ग्रस्तमाचार्यमुख्येन धृष्टद्युम्नममोचयत् ॥ १५३ ॥

चरन्तं रथमार्गेषु सात्यकिं सत्यविक्रमम् ।
द्रोणकर्णान्तरगतं कृपस्यापि च भारत ॥ १५४ ॥

अपश्येतां महात्मानौ विष्वक्सेनधनञ्जयौ ॥ १५४ ॥

अपूजयेतां वार्ष्णेयं ब्रुवाणौ साधु साध्विति ।
दिव्यान्यस्त्राणि सर्वेषां युधि निघ्नन्तमच्युतम् ॥ १५५ ॥

अभिपत्य ततः सेनां विष्वक्सेनधनञ्जयौ ॥ १५५ ॥

धनञ्जयस्ततः कृष्णमब्रवीत्पश्य केशव ।
आचार्यवरमुख्यानां मध्ये क्रीडन्मधूद्वहः ॥ १५६ ॥

आनन्दयति मां भूयः सात्यकिः सत्यविक्रमः ।
माद्रीपुत्रौ च भीमं च राजानं च युधिष्ठिरम् ॥ १५७ ॥

यच्छिक्षयानुद्धतः सन्रणे चरति सात्यकिः ।
महारथानुपक्रीडन्वृष्णीनां कीर्तिवर्धनः ॥ १५८ ॥

तमेते प्रतिनन्दन्ति सिद्धाः सैन्याश्च विस्मिताः ।
अजय्यं समरे दृष्ट्वा साधु साध्विति सात्वतम् ॥ १५९ ॥

योधाश्चोभयतः सर्वे कर्मभिः समपूजयन् ॥ १५९ ॥

---

# अध्याय १६५

सञ्जय उवाच ॥

क्रूरमायोधनं जज्ञे तस्मिन्राजसमागमे ।
रुद्रस्येव हि क्रुद्धस्य निघ्नतस्तु पशून्यथा ॥ ००१ ॥

हस्तानामुत्तमाङ्गानां कार्मुकाणां च भारत ।
छत्राणां चापविद्धानां चामराणां च संयुगे ॥ ००२ ॥

भग्नचक्रै रथैश्चापि पातितैश्च महाध्वजैः ।
सादिभिश्च हतैः शूरैः सङ्कीर्णा वसुधाभवत् ॥ ००३ ॥

बाणपातनिकृत्तास्तु योधास्ते कुरुसत्तम ।
चेष्टन्तो विविधाश्चेष्टा व्यदृश्यन्त महाहवे ॥ ००४ ॥

वर्तमाने तथा युद्धे घोरे देवासुरोपमे ।
अब्रवीत्क्षत्रियांस्तत्र धर्मराजो युधिष्ठिरः ॥ ००५ ॥

अभिद्रवत संयत्ताः कुम्भयोनिं महारथाः ॥ ००५ ॥

एष वै पार्षतो वीरो भारद्वाजेन सङ्गतः ।
घटते च यथाशक्ति भारद्वाजस्य नाशने ॥ ००६ ॥

यादृशानि हि रूपाणि दृश्यन्ते नो महारणे ।
अद्य द्रोणं रणे क्रुद्धः पातयिष्यति पार्षतः ॥ ००७ ॥

ते यूयं सहिता भूत्वा कुम्भयोनिं परीप्सत ॥ ००७ ॥

युधिष्ठिरसमाज्ञप्ताः सृञ्जयानां महारथाः ।
अभ्यद्रवन्त संयत्ता भारद्वाजं जिघांसवः ॥ ००८ ॥

तान्समापततः सर्वान्भारद्वाजो महारथः ।
अभ्यद्रवत वेगेन मर्तव्यमिति निश्चितः ॥ ००९ ॥

प्रयाते सत्यसंधे तु समकम्पत मेदिनी ।
ववुर्वाताः सनिर्घातास्त्रासयन्तो वरूथिनीम् ॥ ०१० ॥

पपात महती चोल्का आदित्यान्निर्गतेव ह ।
दीपयन्तीव तापेन शंसन्तीव महद्भयम् ॥ ०११ ॥

जज्वलुश्चैव शस्त्राणि भारद्वाजस्य मारिष ।
रथाः स्वनन्ति चात्यर्थं हयाश्चाश्रूण्यवासृजन् ॥ ०१२ ॥

हतौजा इव चाप्यासीद्भारद्वाजो महारथः ।
ऋषीणां ब्रह्मवादानां स्वर्गस्य गमनं प्रति ॥ ०१३ ॥

सुयुद्धेन ततः प्राणानुत्स्त्रष्टुमुपचक्रमे ॥ ०१३ ॥

ततश्चतुर्दिशं सैन्यैर्द्रुपदस्याभिसंवृतः ।
निर्दहन्क्षत्रियव्रातान्द्रोणः पर्यचरद्रणे ॥ ०१४ ॥

हत्वा विंशतिसाहस्त्रान्क्षत्रियानरिमर्दनः ।
दशायुतानि तीक्ष्णाग्रैरवधीद्विशिखैः शितैः ॥ ०१५ ॥

सोऽतिष्ठदाहवे यत्तो विधूम इव पावकः ।
क्षत्रियाणामभावाय ब्राह्ममात्मानमास्थितः ॥ ०१६ ॥

पाञ्चाल्यं विरथं भीमो हतसर्वायुधं वशी ।
अविषण्णं महात्मानं त्वरमाणः समभ्ययात् ॥ ०१७ ॥

ततः स्वरथमारोप्य पाञ्चाल्यमरिमर्दनः ।
अब्रवीदभिसंप्रेक्ष्य द्रोणमस्यन्तमन्तिकात् ॥ ०१८ ॥

न त्वदन्य इहाचार्यं योद्धुमुत्सहते पुमान् ।
त्वरस्व प्राग्वधायैव त्वयि भारः समाहितः ॥ ०१९ ॥

स तथोक्तो महाबाहुः सर्वभारसहं नवम् ।
अभिपत्याददे क्षिप्रमायुधप्रवरं दृढम् ॥ ०२० ॥

संरब्धश्च शरानस्यन्द्रोणं दुर्वारणं रणे ।

विवारयिषुराचार्यं शरवर्षैरवाकिरत्  ॥ ०२१  ॥

तौ न्यवारयतां श्रेष्ठौ संरब्धौ रणशोभिनौ ।
उदीरयेतां ब्राह्माणि दिव्यान्यस्त्राण्यनेकशः  ॥ ०२२  ॥

स महास्त्रैर्महाराज द्रोणमाच्छादयद्रणे ।
निहत्य सर्वाण्यस्त्राणि भारद्वाजस्य पार्षतः  ॥ ०२३  ॥

स वसातीञ्शिबींश्चैव बाह्लीकान्कौरवानपि ।
रक्षिष्यमाणान्सङ्ग्रामे द्रोणं व्यधमदच्युतः  ॥ ०२४  ॥

धृष्टद्युम्नस्तदा राजन्गभस्तिभिरिवांशुमान् ।
बभौ प्रच्छादयन्नाशाः शरजालैः समन्ततः  ॥ ०२५  ॥

तस्य द्रोणो धनुश्छित्त्वा विद्ध्वा चैनं शिलीमुखैः ।
मर्माण्यभ्यहनद्भूयः स व्यथां परमामगात्  ॥ ०२६  ॥

ततो भीमो दृढक्रोधो द्रोणस्याश्लिष्य तं रथम् ।
शनकैरिव राजेन्द्र द्रोणं वचनमब्रवीत्  ॥ ०२७  ॥

यदि नाम न युध्येरञ्शिक्षिता ब्रह्मबन्धवः ।
स्वकर्मभिरसंतुष्टा न स्म क्षत्रं क्षयं व्रजेत्  ॥ ०२८  ॥

अहिंसा सर्वभूतेषु धर्मं ज्यायस्तरं विदुः ।
तस्य च ब्राह्मणो मूलं भवांश्च ब्रह्मवित्तमः  ॥ ०२९  ॥

श्वपाकवन्म्लेच्छगणान्हत्वा चान्यान्पृथग्विधान् ।
अज्ञानान्मूढवद्ब्रह्मन्पुत्रदारधनेप्सया  ॥ ०३०  ॥

एकस्यार्थे बहून्हत्वा पुत्रस्याधर्मविद्यथा ।
स्वकर्मस्थान्विकर्मस्थो न व्यपत्रपसे कथम्  ॥ ०३१  ॥

स चाद्य पतितः शेते पृष्टेनावेदितस्तव ।
धर्मराजेन तद्वाक्यं नातिशङ्कितुमर्हसि ॥ ०३२ ॥

एवमुक्तस्ततो द्रोणो भीमेनोत्सृज्य तद्धनुः ।
सर्वाण्यस्त्राणि धर्मात्मा हातुकामोऽभ्यभाषत ॥ ०३३ ॥

कर्ण कर्ण महेष्वास कृप दुर्योधनेति च ॥ ०३३ ॥

सङ्ग्रामे क्रियतां यत्नो ब्रवीम्येष पुनः पुनः ।
पाण्डवेभ्यः शिवं वोऽस्तु शस्त्रमभ्युत्सृजाम्यहम् ॥ ०३४ ॥

इति तत्र महाराज प्राक्रोशद्द्रौणिमेव च ।
उत्सृज्य च रणे शस्त्रं रथोपस्थे निवेश्य च ॥ ०३५ ॥

अभयं सर्वभूतानां प्रददौ योगयुक्तवान् ॥ ०३५ ॥

तस्य तच्छिद्रमाज्ञाय धृष्टद्युम्नः समुत्थितः ।
खड्गी रथादवप्लुत्य सहसा द्रोणमभ्ययात् ॥ ०३६ ॥

हाहाकृतानि भूतानि मानुषाणीतराणि च ।
द्रोणं तथागतं दृष्ट्वा धृष्टद्युम्नवशं गतम् ॥ ०३७ ॥

हाहाकारं भृशं चक्रुरहो धिगिति चाब्रुवन् ।
द्रोणोऽपि शस्त्राण्युत्सृज्य परमं साम्यमास्थितः ॥ ०३८ ॥

तथोक्त्वा योगमास्थाय ज्योतिर्भूतो महातपाः ।
दिवमाक्रामदाचार्यः सद्भिः सह दुराक्रमम् ॥ ०३९ ॥

द्वौ सूर्याविति नो बुद्धिरासीत्तस्मिंस्तथा गते ।
एकाग्रमिव चासीद्धि ज्योतिर्भिः पूरितं नभः ॥ ०४० ॥

समपद्यत चार्काभे भारद्वाजनिशाकरे ॥ ०४० ॥

निमेषमात्रेण च तज्ज्योतिरन्तरधीयत ।
आसीत्किलकिलाशब्दः प्रहृष्टानां दिवौकसाम् ॥ ०४१ ॥

ब्रह्मलोकं गते द्रोणे धृष्टद्युम्ने च मोहिते ॥ ०४१ ॥

वयमेव तदाद्राक्ष्म पञ्च मानुषयोनयः ।
योगयुक्तं महात्मानं गच्छन्तं परमां गतिम् ॥ ०४२ ॥

अहं धनञ्जयः पार्थः कृपः शारद्वतो द्विजः ।
वासुदेवश्च वार्ष्णेयो धर्मराजश्च पाण्डवः ॥ ०४३ ॥

अन्ये तु सर्वे नापश्यन्भारद्वाजस्य धीमतः ।
महिमानं महाराज योगमुक्तस्य गच्छतः ॥ ०४४ ॥

गतिं परमिकां प्राप्तमजानन्तो नृयोनयः ।
नापश्यन्गाच्छमानं हि तं सार्धमृषिपुङ्गवैः ॥ ०४५ ॥

आचार्यं योगमास्थाय ब्रह्मलोकमरिंदमम् ॥ ०४५ ॥

वितुन्नाङ्गं शरशतैर्न्यस्तायुधमसृक्क्षरम् ।
धिक्कृतः पार्षतस्तं तु सर्वभूतैः परामृशत् ॥ ०४६ ॥

तस्य मूर्धानमालम्ब्य गतसत्त्वस्य देहिनः ।
किञ्चिदब्रुवतः कायाद्विचकर्तासिना शिरः ॥ ०४७ ॥

हर्षेण महता युक्तो भारद्वाजे निपातिते ।
सिंहनादरवं चक्रे भ्रामयन्खड्गमाहवे ॥ ०४८ ॥

आकर्णपलितः श्यामो वयसाशीतिपञ्चकः ।
त्वत्कृते व्यचरत्संख्ये स तु षोडशवर्षवत् ॥ ०४९ ॥

उक्तवांश्च महाबाहुः कुन्तीपुत्रो धनञ्जयः ।
जीवन्तमानयाचार्यं मा वधीर्द्रुपदात्मज ॥ ०५० ॥

न हन्तव्यो न हन्तव्य इति ते सैनिकाश्च ह ।
उत्क्रोशन्नर्जुनश्चैव सानुक्रोशस्तमाद्रवत् ॥ ०५१ ॥

क्रोशमानेऽर्जुने चैव पार्थिवेषु च सर्वशः ।
धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभम् ॥ ०५२ ॥

शोणितेन परिक्लिन्नो रथाद्भूमिमरिंदमः ।
लोहिताङ्ग इवादित्यो दुर्दर्शः समपद्यत ॥ ०५३ ॥

एवं तं निहतं संख्ये ददृशे सैनिको जनः ॥ ०५३ ॥

धृष्टद्युम्नस्तु तद्राजन्भारद्वाजशिरो महत् ।
तावकानां महेष्वासः प्रमुखे तत्समाक्षिपत् ॥ ०५४ ॥

ते तु दृष्ट्वा शिरो राजन्भारद्वाजस्य तावकाः ।
पलायनकृतोत्साहा दुद्रुवुः सर्वतोदिशम् ॥ ०५५ ॥

द्रोणस्तु दिवमास्थाय नक्षत्रपथमाविशत् ।
अहमेव तदाद्राक्षं द्रोणस्य निधनं नृप ॥ ०५६ ॥

ऋषेः प्रसादात्कृष्णस्य सत्यवत्याः सुतस्य च ।
विधूमामिव संयान्तीमुल्कां प्रज्वलितामिव ॥ ०५७ ॥

अपश्याम दिवं स्तब्ध्वा गच्छन्तं तं महाद्युतिम् ॥ ०५७ ॥

हते द्रोणे निरुत्साहान्कुरून्पाण्डवसृञ्जयाः ।
अभ्यद्रवन्महावेगास्ततः सैन्यं व्यदीर्यत ॥ ०५८ ॥

निहता हयभूयिष्ठाः सङ्ग्रामे निशितैः शरैः ।
तावका निहते द्रोणे गतासव इवाभवन् ॥ ०५९ ॥

पराजयमथावाप्य परत्र च महद्भयम् ।
उभयेनैव ते हीना नाविन्दन्धृतिमात्मनः ॥ ०६० ॥

अन्विच्छन्तः शरीरं तु भारद्वाजस्य पार्थिवाः ।
नाध्यगच्छंस्तदा राजन्कबन्धायुतसङ्कुले ॥ ०६१ ॥

पाण्डवास्तु जयं लब्ध्वा परत्र च महद्यशः ।
बाणशब्दरवांश्चक्रुः सिंहनादांश्च पुष्कलान् ॥ ०६२ ॥

भीमसेनस्ततो राजन्धृष्टद्युम्नश्च पार्षतः ।
वरूथिन्यामनृत्येतां परिष्वज्य परस्परम् ॥ ०६३ ॥

अब्रवीच्च तदा भीमः पार्षतं शत्रुतापनम् ।
भूयोऽहं त्वां विजयिनं परिष्वक्ष्यामि पार्षत ॥ ०६४ ॥

सूतपुत्रे हते पापे धार्तराष्ट्रे च संयुगे ॥ ०६४ ॥

एतावदुक्त्वा भीमस्तु हर्षेण महता युतः ।
बाहुशब्देन पृथिवीं कम्पयामास पाण्डवः ॥ ०६५ ॥

तस्य शब्देन वित्रस्ताः प्राद्रवंस्तावका युधि ।
क्षत्रधर्मं समुत्सृज्य पलायनपरायणाः ॥ ०६६ ॥

पाण्डवास्तु जयं लब्ध्वा हृष्टा ह्यासन्विशां पते ।
अरिक्षयं च सङ्ग्रामे तेन ते सुखमाप्नुवन् ॥ ०६७ ॥

ततो द्रोणे हते राजन्कुरवः शस्त्रपीडिताः ।
हतप्रवीरा विध्वस्ता भृशं शोकपरायणाः ॥ ०६८ ॥

विचेतसो हतोत्साहाः कश्मलाभिहतौजसः ।
आर्तस्वरेण महता पुत्रं ते पर्यवारयन् ॥ ०६९ ॥

रजस्वला वेपमाना वीक्षमाणा दिशो दश ।
अश्रुकण्ठा यथा दैत्या हिरण्याक्षे पुरा हते ॥ ०७० ॥

स तैः परिवृतो राजा त्रस्तैः क्षुद्रमृगैरिव ।
अशक्नुवन्नवस्थातुमपायात्तनयस्तव ॥ ०७१ ॥

क्षुत्पिपासापरिश्रान्तास्ते योधास्तव भारत ।
आदित्येन च संतप्ता भृशं विमनसोऽभवन् ॥ ०७२ ॥

भास्करस्येव पतनं समुद्रस्येव शोषणम् ।
विपर्यासं यथा मेरोर्वासवस्येव निर्जयम् ॥ ०७३ ॥

अमर्षणीयं तद्दृष्ट्वा भारद्वाजस्य पातनम् ।
त्रस्तरूपतरा राजन्कौरवाः प्राद्रवन्भयात् ॥ ०७४ ॥

गान्धारराजः शकुनिस्त्रस्तस्त्रस्ततरैः सह ।
हतं रुक्मरथं दृष्ट्वा प्राद्रवत्सहितो रथैः ॥ ०७५ ॥

वरूथिनीं वेगवतीं विद्रुतां सपताकिनीम् ।
परिगृह्य महासेनां सूतपुत्रोऽपयाद्भयात् ॥ ०७६ ॥

रथनागाश्वकलिलां पुरस्कृत्य तु वाहिनीम् ।
मद्राणामीश्वरः शल्यो वीक्षमाणोऽपयाद्भयात् ॥ ०७७ ॥

हतप्रवीरैर्भूयिष्ठं द्विपैर्बहुपदातिभिः ।
वृतः शारद्वतोऽगच्छत्कष्टं कष्टमिति ब्रुवन् ॥ ०७८ ॥

भोजानीकेन शिष्टेन कलिङ्गारट्टबाह्लिकैः ।
कृतवर्मा वृतो राजन्प्रायात्सुजवनैर्हयैः ॥ ०७९ ॥

पदातिगणसंयुक्तस्त्रस्तो राजन्भयार्दितः ।
उलूकः प्राद्रवत्तत्र दृष्ट्वा द्रोणं निपातितम् ॥ ०८० ॥

दर्शनीयो युवा चैव शौर्ये च कृतलक्षणः ।
दुःशासनो भृशोद्विग्नः प्राद्रवद्गजसंवृतः ॥ ०८१ ॥

गजाश्वरथसंयुक्तो वृतश्चैव पदातिभिः ।
दुर्योधनो महाराज प्रायात्तत्र महारथः ॥ ०८२ ॥

गजान्रथान्समारुह्य परस्यापि हयाङ्गनाः ।
प्रकीर्णकेशा विध्वस्ता न द्वावेकत्र धावतः ॥ ०८३ ॥

नेदमस्तीति पुरुषा हतोत्साहा हतौजसः ।
उत्सृज्य कवचानन्ये प्राद्रवंस्तावका विभो ॥ ०८४ ॥

अन्योन्यं ते समाक्रोशन्सैनिका भरतर्षभ ।
तिष्ठ तिष्ठेति न च ते स्वयं तत्रावतस्थिरे ॥ ०८५ ॥

धुर्यान्प्रमुच्य तु रथाद्धतसूतान्स्वलङ्कृतान् ।
अधिरुह्य हयान्योधाः क्षिप्रं पद्भिरचोदयन् ॥ ०८६ ॥

द्रवमाणे तथा सैन्ये त्रस्तरूपे हतौजसि ।
प्रतिस्रोत इव ग्राहो द्रोणपुत्रः परानियात् ॥ ०८७ ॥

हत्वा बहुविधां सेनां पाण्डूनां युद्धदुर्मदः ।

कथञ्चित्सङ्कटान्मुक्तो मत्तद्विरदविक्रमः ॥ ०८८ ॥

द्रवमाणं बलं दृष्ट्वा पलायनकृतक्षणम् ।
दुर्योधनं समासाद्य द्रोणपुत्रोऽब्रवीदिदम् ॥ ०८९ ॥

किमियं द्रवते सेना त्रस्तरूपेव भारत ।
द्रवमाणां च राजेन्द्र नावस्थापयसे रणे ॥ ०९० ॥

त्वं चापि न यथापूर्वं प्रकृतिस्थो नराधिप ।
कर्णप्रभृतयश्चेमे नावतिष्ठन्ति पार्थिवाः ॥ ०९१ ॥

अन्येष्वपि च युद्धेषु नैव सेनाद्रवत्तदा ।
कच्चित्क्षेमं महाबाहो तव सैन्यस्य भारत ॥ ०९२ ॥

कस्मिन्निदं हते राजन्रथसिंहे बलं तव ।
एतामवस्थां संप्राप्तं तन्ममाचक्ष्व कौरव ॥ ०९३ ॥

तत्तु दुर्योधनः श्रुत्वा द्रोणपुत्रस्य भाषितम् ।
घोरमप्रियमाख्यातुं नाशकत्पार्थिवर्षभः ॥ ०९४ ॥

भिन्ना नौरिव ते पुत्रो निमग्नः शोकसागरे ।
बाष्पेण पिहितो दृष्ट्वा द्रोणपुत्रं रथे स्थितम् ॥ ०९५ ॥

ततः शारद्वतं राजा सव्रीडमिदमब्रवीत् ।
शंसेह सर्वं भद्रं ते यथा सैन्यमिदं द्रुतम् ॥ ०९६ ॥

अथ शारद्वतो राजन्नार्तिं गच्छन्पुनः पुनः ।
शशंस द्रोणपुत्राय यथा द्रोणो निपातितः ॥ ०९७ ॥

कृप उवाच ॥

वयं द्रोणं पुरस्कृत्य पृथिव्यां प्रवरं रथम् ।
प्रावर्तयाम सङ्ग्रामं पाञ्चालैरेव केवलैः ॥ ०९८ ॥

ततः प्रवृत्ते सङ्ग्रामे विमिश्राः कुरुसोमकाः ।
अन्योन्यमभिगर्जन्तः शस्त्रैर्देहानपातयन् ॥ ०९९ ॥

ततो द्रोणो ब्राह्ममस्त्रं विकुर्वाणो नरर्षभः ।
अहनच्छात्रवान्भल्लैः शतशोऽथ सहस्रशः ॥ १०० ॥

पाण्डवाः केकया मत्स्याः पाञ्चालाश्च विशेषतः ।
संख्ये द्रोणरथं प्राप्य व्यनशन्कालचोदिताः ॥ १०१ ॥

सहस्रं रथसिंहानां द्विसाहस्रं च दन्तिनाम् ।
द्रोणो ब्रह्मास्त्रनिर्दग्धं प्रेषयामास मृत्यवे ॥ १०२ ॥

आकर्णपलितः श्यामो वयसाशीतिपञ्चकः ।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ १०३ ॥

क्लिश्यमानेषु सैन्येषु वध्यमानेषु राजसु ।
अमर्षवशमापन्नाः पाञ्चाला विमुखाभवन् ॥ १०४ ॥

तेषु किञ्चित्प्रभग्नेषु विमुखेषु सपत्नजित् ।
दिव्यमस्त्रं विकुर्वाणो बभूवार्क इवोदितः ॥ १०५ ॥

स मध्यं प्राप्य पाण्डूनां शररश्मिः प्रतापवान् ।
मध्यङ्गत इवादित्यो दुष्प्रेक्ष्यस्ते पिताभवत् ॥ १०६ ॥

ते दह्यमाना द्रोणेन सूर्येणेव विराजता ।
दग्धवीर्या निरुत्साहा बभूवुर्गतचेतसः ॥ १०७ ॥

तान्दृष्ट्वा पीडितान्बाणैर्द्रोणेन मधुसूदनः ।

जयैषी पाण्डुपुत्राणामिदं वचनमब्रवीत् ॥ १०८ ॥

नैष जातु परैः शक्यो जेतुं शस्त्रभृतां वरः ।
अपि वृत्रहणा संख्ये रथयूथपयूथपः ॥ १०९ ॥

ते यूयं धर्ममुत्सृज्य जयं रक्षत पाण्डवाः ।
यथा वः संयुगे सर्वान्न हन्याद्रुक्मवाहनः ॥ ११० ॥

अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
हतं तं संयुगे कश्चिदाख्यात्वस्मै मृषा नरः ॥ १११ ॥

एतन्नारोचयद्वाक्यं कुन्तीपुत्रो धनञ्जयः ।
अरोचयंस्तु सर्वेऽन्ये कृच्छ्रेण तु युधिष्ठिरः ॥ ११२ ॥

भीमसेनस्तु सव्रीडमब्रवीत्पितरं तव ।
अश्वत्थामा हत इति तच्चाबुध्यत ते पिता ॥ ११३ ॥

स शङ्कमानस्तन्मिथ्या धर्मराजमपृच्छत ।
हतं वाप्यहतं वाजौ त्वां पिता पुत्रवत्सलः ॥ ११४ ॥

तदतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
अश्वत्थामानमाहेदं हतः कुञ्जर इत्युत ॥ ११५ ॥

भीमेन गिरिवर्ष्माणं मालवस्येन्द्रवर्मणः ॥ ११५ ॥

उपसृत्य तदा द्रोणमुच्चैरिदमभाषत ।
यस्यार्थे शस्त्रमाधत्से यमवेक्ष्य च जीवसि ॥ ११६ ॥

पुत्रस्ते दयितो नित्यं शोऽश्वत्थामा निपातितः ॥ ११६ ॥

तच्छ्रुत्वा विमनास्तत्र आचार्यो महदप्रियम् ।

नियम्य दिव्यान्यस्त्राणि नायुध्यत यथा पुरा ॥ ११७ ॥

तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम् ।
पाञ्चालराजस्य सुतः क्रूरकर्मा समाद्रवत् ॥ ११८ ॥

तं दृष्ट्वा विहितं मृत्युं लोकतत्त्वविचक्षणः ।
दिव्यान्यस्त्राण्यथोत्सृज्य रणे प्राय उपाविशत् ॥ ११९ ॥

ततोऽस्य केशान्सव्येन गृहीत्वा पाणिना तदा ।
पार्षतः क्रोशमानानां वीराणामच्छिनच्छिरः ॥ १२० ॥

न हन्तव्यो न हन्तव्य इति ते सर्वतोऽब्रुवन् ।
तथैव चार्जुनो वाहादवरुह्यैनमाद्रवत् ॥ १२१ ॥

उद्यम्य बाहू त्वरितो ब्रुवाणश्च पुनः पुनः ।
जीवन्तमानयाचार्यं मा वधीरिति धर्मवित् ॥ १२२ ॥

तथापि वार्यमाणेन कौरवैरर्जुनेन च ।
हत एव नृशंसेन पिता तव नरर्षभ ॥ १२३ ॥

सैनिकाश्च ततः सर्वे प्राद्रवन्त भयार्दिताः ।
वयं चापि निरुत्साहा हते पितरि तेऽनघ ॥ १२४ ॥

सञ्जय उवाच ॥

तच्छ्रुत्वा द्रोणपुत्रस्तु निधनं पितुराहवे ।
क्रोधमाहारयत्तीव्रं पदाहत इवोरगः ॥ १२५ ॥

# नारायणास्त्रमोक्षपर्व

## अध्याय १६६

धृतराष्ट्र उवाच ॥

अधर्मेण हतं श्रुत्वा धृष्टद्युम्नेन सञ्जय ।
ब्राह्मणं पितरं वृद्धमश्वत्थामा किमब्रवीत् ॥ ००१ ॥

मानुषं वारुणाग्नेयं ब्राह्ममस्त्रं च वीर्यवान् ।
ऐन्द्रं नारायणं चैव यस्मिन्नित्यं प्रतिष्ठितम् ॥ ००२ ॥

तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन सञ्जय ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ ००३ ॥

येन रामादवाप्येह धनुर्वेदं महात्मना ।
प्रोक्तान्यस्त्राणि दिव्यानि पुत्राय गुरुकाङ्क्षिणे ॥ ००४ ॥

एकमेव हि लोकेऽस्मिन्नात्मनो गुणवत्तरम् ।
इच्छन्ति पुत्रं पुरुषा लोके नान्यं कथञ्चन ॥ ००५ ॥

आचार्याणां भवन्त्येव रहस्यानि महात्मनाम् ।
तानि पुत्राय वा दद्युः शिष्यायानुगताय वा ॥ ००६ ॥

स शिल्पं प्राप्य तत्सर्वं सविशेषं च सञ्जय ।
शूरः शारद्वतीपुत्रः संख्ये द्रोणादनन्तरः ॥ ००७ ॥

रामस्यानुमतः शास्त्रे पुरंदरसमो युधि ।
कार्तवीर्यसमो वीर्ये बृहस्पतिसमो मतौ ॥ ००८ ॥

महीधरसमो धृत्या तेजसाग्निसमो युवा ।

समुद्र इव गाम्भीर्ये क्रोधे सर्पविषोपमः ॥ ००९ ॥

स रथी प्रथमो लोके दृढधन्वा जितक्लमः ।
शीघ्रोऽनिल इवाक्रन्दे चरन्क्रुद्ध इवान्तकः ॥ ०१० ॥

अस्यता येन सङ्ग्रामे धरण्यभिनिपीडिता ।
यो न व्यथति सङ्ग्रामे वीरः सत्यपराक्रमः ॥ ०११ ॥

वेदस्नातो व्रतस्नातो धनुर्वेदे च पारगः ।
महोदधिरिवाक्षोभ्यो रामो दाशरथिर्यथा ॥ ०१२ ॥

तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन संयुगे ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ ०१३ ॥

धृष्टद्युम्नस्य यो मृत्युः सृष्टस्तेन महात्मना ।
यथा द्रोणस्य पाञ्चाल्यो यज्ञसेनसुतोऽभवत् ॥ ०१४ ॥

तं नृशंसेन पापेन क्रूरेणात्यल्पदर्शिना ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ ०१५ ॥

सञ्जय उवाच ॥

छद्मना निहतं श्रुत्वा पितरं पापकर्मणा ।
बाष्पेणापूर्यत द्रौणी रोषेण च नरर्षभ ॥ ०१६ ॥

तस्य क्रुद्धस्य राजेन्द्र वपुर्दिव्यमदृश्यत ।
अन्तकस्येव भूतानि जिहीर्षोः कालपर्यये ॥ ०१७ ॥

अश्रुपूर्णे ततो नेत्रे अपमृज्य पुनः पुनः ।
उवाच कोपान्निःश्वस्य दुर्योधनमिदं वचः ॥ ०१८ ॥

पिता मम यथा क्षुद्रैर्न्यस्तशस्त्रो निपातितः ।
धर्मध्वजवता पापं कृतं तद्विदितं मम ॥ ०१९ ॥

अनार्यं सुनृशंसस्य धर्मपुत्रस्य मे श्रुतम् ॥ ०१९ ॥

युद्धेष्वपि प्रवृत्तानां ध्रुवौ जयपराजयौ ।
द्वयमेतद्भवेद्राजन्वधस्तत्र प्रशस्यते ॥ ०२० ॥

न्यायवृत्तो वधो यस्तु सङ्ग्रामे युध्यतो भवेत् ।
न स दुःखाय भवति तथा दृष्टो हि स द्विजः ॥ ०२१ ॥

गतः स वीरलोकाय पिता मम न संशयः ।
न शोच्यः पुरुषव्याघ्रस्तथा स निधनं गतः ॥ ०२२ ॥

यत्तु धर्मप्रवृत्तः सन्केशग्रहणमाप्तवान् ।
पश्यतां सर्वसैन्यानां तन्मे मर्माणि कृन्तति ॥ ०२३ ॥

कामात्क्रोधादवज्ञानाद्दर्पाद्बाल्येन वा पुनः ।
वैधर्मिकानि कुर्वन्ति तथा परिभवेन च ॥ ०२४ ॥

तदिदं पार्षतेनेह महदाधर्मिकं कृतम् ।
अवज्ञाय च मां नूनं नृशंसेन दुरात्मना ॥ ०२५ ॥

तस्यानुबन्धं स द्रष्टा धृष्टद्युम्नः सुदारुणम् ।
अनार्यं परमं कृत्वा मिथ्यावादी च पाण्डवः ॥ ०२६ ॥

यो ह्यसौ छद्मनाचार्यं शस्त्रं संन्यासयत्तदा ।
तस्याद्य धर्मराजस्य भूमिः पास्यति शोणितम् ॥ ०२७ ॥

सर्वोपायैर्यतिष्यामि पाञ्चालानामहं वधे ।
धृष्टद्युम्नं च समरे हन्ताहं पापकारिणम् ॥ ०२८ ॥

कर्मणा येन तेनेह मृदुना दारुणेन वा ।
पाञ्चालानां वधं कृत्वा शान्तिं लब्धास्मि कौरव ॥ ०२९ ॥

यदर्थं पुरुषव्याघ्र पुत्रमिच्छन्ति मानवाः ।
प्रेत्य चेह च संप्राप्तं त्राणाय महतो भयात् ॥ ०३० ॥

पित्रा तु मम सावस्था प्राप्ता निर्बन्धुना यथा ।
मयि शैलप्रतीकाशे पुत्रे शिष्ये च जीवति ॥ ०३१ ॥

धिङ्ममास्त्राणि दिव्यानि धिग्बाहू धिक्पराक्रमम् ।
यन्मां द्रोणः सुतं प्राप्य केशग्रहणमाप्तवान् ॥ ०३२ ॥

स तथाहं करिष्यामि यथा भरतसत्तम ।
परलोकगतस्यापि गमिष्याम्यनृणः पितुः ॥ ०३३ ॥

आर्येण तु न वक्तव्या कदाचित्स्तुतिरात्मनः ।
पितुर्वधममृष्यंस्तु वक्ष्याम्यद्येह पौरुषम् ॥ ०३४ ॥

अद्य पश्यन्तु मे वीर्यं पाण्डवाः सजनार्दनाः ।
मृद्नतः सर्वसैन्यानि युगान्तमिव कुर्वतः ॥ ०३५ ॥

न हि देवा न गन्धर्वा नासुरा न च राक्षसाः ।
अद्य शक्ता रणे जेतुं रथस्थं मां नरर्षभ ॥ ०३६ ॥

मदन्यो नास्ति लोकेऽस्मिन्नर्जुनाद्वास्त्रवित्तमः ।
अहं हि ज्वलतां मध्ये मयूखानामिवांशुमान् ॥ ०३७ ॥

प्रयोक्ता देवसृष्टानामस्त्राणां पृतनागतः ॥ ०३७ ॥

कृशाश्वतनया ह्यद्य मत्प्रयुक्ता महामृधे ।

दर्शयन्तोऽऽत्मनो वीर्यं प्रमथिष्यन्ति पाण्डवान्  ॥ ०३८  ॥

अद्य सर्वा दिशो राजन्धाराभिरिव सङ्कुलाः ।
आवृताः पत्रिभिस्तीक्ष्णैर्द्रष्टारो मामकैरिह  ॥ ०३९  ॥

किरन्हि शरजालानि सर्वतो भैरवस्वरम् ।
शत्रून्निपातयिष्यामि महावात इव द्रुमान्  ॥ ०४०  ॥

न च जानाति बीभत्सुस्तदस्त्रं न जनार्दनः ।
न भीमसेनो न यमौ न च राजा युधिष्ठिरः  ॥ ०४१  ॥

न पार्षतो दुरात्मासौ न शिखण्डी न सात्यकिः ।
यदिदं मयि कौरव्य सकल्यं सनिवर्तनम्  ॥ ०४२  ॥

नारायणाय मे पित्रा प्रणम्य विधिपूर्वकम् ।
उपहारः पुरा दत्तो ब्रह्मरूप उपस्थिते  ॥ ०४३  ॥

तं स्वयं प्रतिगृह्याथ भगवान्स वरं ददौ ।
वव्रे पिता मे परममस्त्रं नारायणं ततः  ॥ ०४४  ॥

अथैनमब्रवीद्राजन्भगवान्देवसत्तमः ।
भविता त्वत्समो नान्यः कश्चिद्युधि नरः क्वचित्  ॥ ०४५  ॥

न त्विदं सहसा ब्रह्मन्प्रयोक्तव्यं कथञ्चन ।
न ह्येतदस्त्रमन्यत्र वधाच्छत्रोर्निवर्तते  ॥ ०४६  ॥

न चैतच्छक्यते ज्ञातुं को न वध्येदिति प्रभो ।
अवध्यमपि हन्याद्धि तस्मान्नैतत्प्रयोजयेत्  ॥ ०४७  ॥

वधः संख्ये द्रवश्चैव शस्त्राणां च विसर्जनम् ।
प्रयाचनं च शत्रूणां गमनं शरणस्य च  ॥ ०४८  ॥

एते प्रशमने योगा महास्त्रस्य परंतप ।
सर्वथा पीडितो हि स्यादवध्यान्पीडयन्रणे ॥ ०४९ ॥

तज्जग्राह पिता मह्यमब्रवीच्चैव स प्रभुः ।
त्वं वर्षिष्यसि दिव्यानि शस्त्रवर्षाण्यनेकशः ॥ ०५० ॥

अनेनास्त्रेण सङ्ग्रामे तेजसा च ज्वलिष्यसि ॥ ०५० ॥

एवमुक्त्वा स भगवान्दिवमाचक्रमे प्रभुः ।
एतन्नारायणादस्त्रं तत्प्राप्तं मम बन्धुना ॥ ०५१ ॥

तेनाहं पाण्डवांश्चैव पाञ्चालान्मत्स्यकेकयान् ।
विद्रावयिष्यामि रणे शचीपतिरिवासुरान् ॥ ०५२ ॥

यथा यथाहमिच्छेयं तथा भूत्वा शरा मम ।
निपतेयुः सपत्नेषु विक्रमत्स्वपि भारत ॥ ०५३ ॥

यथेष्टमश्मवर्षेण प्रवर्षिष्ये रणे स्थितः ।
अयोमुखैश्च विहगैर्द्रावयिष्ये महारथान् ॥ ०५४ ॥

परश्वधांश्च विविधान्प्रसक्ष्येऽहमसंशयम् ॥ ०५४ ॥

सोऽहं नारायणास्त्रेण महता शत्रुतापन ।
शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ॥ ०५५ ॥

मित्रब्रह्मगुरुद्वेषी जाल्मकः सुविगर्हितः ।
पाञ्चालापसदश्चाद्य न मे जीवन्विमोक्ष्यते ॥ ०५६ ॥

तच्छ्रुत्वा द्रोणपुत्रस्य पर्यवर्तत वाहिनी ।
ततः सर्वे महाशङ्खान्दध्मुः पुरुषसत्तमाः ॥ ०५७ ॥

भेरीश्चाभ्यहनन्हृष्टा डिण्डिमांश्च सहस्रशः ।
तथा ननाद वसुधा खुरनेमिप्रपीडिता ॥ ०५८ ॥

स शब्दस्तुमुलः खं द्यां पृथिवीं च व्यनादयत् ॥ ०५८ ॥

तं शब्दं पाण्डवाः श्रुत्वा पर्जन्यनिनदोपमम् ।
समेत्य रथिनां श्रेष्ठाः सहिताः संन्यमन्त्रयन् ॥ ०५९ ॥

तथोक्त्वा द्रोणपुत्रोऽपि तदोपस्पृश्य भारत ।
प्रादुश्चकार तद्दिव्यमस्त्रं नारायणं तदा ॥ ०६० ॥

---

# अध्याय १६७

सञ्जय उवाच ॥

प्रादुर्भूते ततस्तस्मिन्नस्त्रे नारायणे तदा ।
प्रावात्सपृषतो वायुरनभ्रे स्तनयित्नुमान् ॥ ००१ ॥

चचाल पृथिवी चापि चुक्षुभे च महोदधिः ।
प्रतिस्रोतः प्रवृत्ताश्च गन्तुं तत्र समुद्रगाः ॥ ००२ ॥

शिखराणि व्यदीर्यन्त गिरीणां तत्र भारत ।
अपसव्यं मृगाश्चैव पाण्डुपुत्रान्प्रचक्रिरे ॥ ००३ ॥

तमसा चावकीर्यन्त सूर्यश्च कलुषोऽभवत् ।
संपतन्ति च भूतानि क्रव्यादानि प्रहृष्टवत् ॥ ००४ ॥

देवदानवगन्धर्वास्त्रस्ता आसन्विशां पते ।
कथं कथाभवत्तीव्रा दृष्ट्वा तद्व्याकुलं महत् ॥ ००५ ॥

व्यथिताः सर्वराजानस्तदा ह्यासन्विचेतसः ।
तद्दृष्ट्वा घोररूपं तु द्रौणेरस्त्रं भयावहम् ॥ ००६ ॥

धृतराष्ट्र उवाच ॥

निवर्तितेषु सैन्येषु द्रोणपुत्रेण संयुगे ।
भृशं शोकाभितप्तेन पितुर्वधममृष्यता ॥ ००७ ॥

कुरूनापततो दृष्ट्वा धृष्टद्युम्नस्य रक्षणे ।
को मन्त्रः पाण्डवेष्वासीत्तन्ममाचक्ष्व सञ्जय ॥ ००८ ॥

सञ्जय उवाच ॥

प्रागेव विद्रुतान्दृष्ट्वा धार्तराष्ट्रान्युधिष्ठिरः ।
पुनश्च तुमुलं शब्दं श्रुत्वार्जुनमभाषत ॥ ००९ ॥

आचार्ये निहते द्रोणे धृष्टद्युम्नेन संयुगे ।
निहते वज्रहस्तेन यथा वृत्रे महासुरे ॥ ०१० ॥

नाशंसन्त जयं युद्धे दीनात्मानो धनञ्जय ।
आत्मत्राणे मतिं कृत्वा प्राद्रवन्कुरवो यथा ॥ ०११ ॥

केचिद्भ्रान्तै रथैस्तूर्णं निहतपार्ष्णियन्तृभिः ।
विपताकध्वजच्छत्रैः पार्थिवाः शीर्णकूबरैः ॥ ०१२ ॥

भग्ननीडैराकुलाश्वैरारुह्यान्ये विचेतसः ।
भीताः पादैर्हयान्केचित्त्वरयन्तः स्वयं रथैः ॥ ०१३ ॥

युगचक्राक्षभग्नैश्च द्रुताः केचिद्भयातुराः ॥ ०१३ ॥

गजस्कन्धेषु संस्यूता नाराचैश्चलितासनाः ।
शरार्तैर्विद्रुतैर्नागैर्हताः केचिद्दिशो दश ॥ ०१४ ॥

विशस्त्रकवचाश्चान्ये वाहनेभ्यः क्षितिं गताः ।
संछिन्ना नेमिषु गता मृदिताश्च हयद्विपैः ॥ ०१५ ॥

क्रोशन्तस्तात पुत्रेति पलायन्तोऽपरे भयात् ।
नाभिजानन्ति चान्योन्यं कश्मलाभिहतौजसः ॥ ०१६ ॥

पुत्रान्पितॄन्सखीन्भ्रातॄन्समारोप्य दृढक्षतान् ।
जलेन क्लेदयन्त्यन्ये विमुच्य कवचान्यपि ॥ ०१७ ॥

अवस्थां तादृशीं प्राप्य हते द्रोणे द्रुतं बलम् ।
पुनरावर्तितं केन यदि जानासि शंस मे ॥ ०१८ ॥

हयानां हेषतां शब्दः कुञ्जराणां च बृंहताम् ।
रथनेमिस्वनश्चात्र विमिश्रः श्रूयते महान् ॥ ०१९ ॥

एते शब्दा भृशं तीव्राः प्रवृत्ताः कुरुसागरे ।
मुहुर्मुहुरुदीर्यन्तः कम्पयन्ति हि मामकान् ॥ ०२० ॥

य एष तुमुलः शब्दः श्रूयते लोमहर्षणः ।
सेन्द्रानप्येष लोकांस्त्रीन्भञ्ज्यादिति मतिर्मम ॥ ०२१ ॥

मन्ये वज्रधरस्यैष निनादो भैरवस्वनः ।
द्रोणे हते कौरवार्थं व्यक्तमभ्येति वासवः ॥ ०२२ ॥

प्रहृष्टलोमकूपाः स्म संविग्नरथकुञ्जराः ।
धनञ्जय गुरुं श्रुत्वा तत्र नादं सुभीषणम् ॥ ०२३ ॥

क एष कौरवान्दीर्णानवस्थाप्य महारथः ।
निवर्तयति युद्धार्थं मृधे देवेश्वरो यथा ॥ ०२४ ॥

अर्जुन उवाच ॥

उद्यम्यात्मानमुग्राय कर्मणे धैर्यमास्थिताः ।
धमन्ति कौरवाः शङ्खान्यस्य वीर्यमुपाश्रिताः ॥ ०२५ ॥

यत्र ते संशयो राजन्न्यस्तशस्त्रे गुरौ हते ।
धार्तराष्ट्रानवस्थाप्य क एष नदतीति ह ॥ ०२६ ॥

ह्रीमन्तं तं महाबाहुं मत्तद्विरदगामिनम् ।
व्याख्यास्याम्युग्रकर्माणं कुरूणामभयङ्करम् ॥ ०२७ ॥

यस्मिञ्जाते ददौ द्रोणो गवां दशशतं धनम् ।
ब्राह्मणेभ्यो महार्हेभ्यः सोऽश्वत्थामैष गर्जति ॥ ०२८ ॥

जातमात्रेण वीरेण येनोच्चैःश्रवसा इव ।
हेषता कम्पिता भूमिर्लोकाश्च सकलास्त्रयः ॥ ०२९ ॥

तच्छ्रुत्वान्तर्हितं भूतं नाम चास्याकरोत्तदा ।
अश्वत्थामेति सोऽद्यैष शूरो नदति पाण्डव ॥ ०३० ॥

योऽद्यानाथ इवाक्रम्य पार्षतेन हतस्तथा ।
कर्मणा सुनृशंसेन तस्य नाथो व्यवस्थितः ॥ ०३१ ॥

गुरुं मे यत्र पाञ्चाल्यः केशपक्षे परामृशत् ।
तन्न जातु क्षमेद्द्रौणिर्जानन्पौरुषमात्मनः ॥ ०३२ ॥

उपचीर्णो गुरुर्मिथ्या भवता राज्यकारणात् ।

धर्मज्ञेन सता नाम सोऽधर्मः सुमहान्कृतः ॥ ०३३ ॥

सर्वधर्मोपपन्नोऽयं मम शिष्यश्च पाण्डवः ।
नायं वक्ष्यति मिथ्येति प्रत्ययं कृतवांस्त्वयि ॥ ०३४ ॥

स सत्यकञ्चुकं नाम प्रविष्टेन ततोऽनृतम् ।
आचार्य उक्तो भवता हतः कुञ्जर इत्युत ॥ ०३५ ॥

ततः शस्त्रं समुत्सृज्य निर्ममो गतचेतनः ।
आसीत्स विह्वलो राजन्यथा दृष्टस्त्वया विभुः ॥ ०३६ ॥

स तु शोकेन चाविष्टो विमुखः पुत्रवत्सलः ।
शाश्वतं धर्ममुत्सृज्य गुरुः शिष्येण घातितः ॥ ०३७ ॥

न्यस्तशस्त्रमधर्मेण घातयित्वा गुरुं भवान् ।
रक्षत्विदानीं सामात्यो यदि शक्नोषि पार्षतम् ॥ ०३८ ॥

ग्रस्तमाचार्यपुत्रेण क्रुद्धेन हतबन्धुना ।
सर्वे वयं परित्रातुं न शक्ष्यामोऽद्य पार्षतम् ॥ ०३९ ॥

सौहार्दं सर्वभूतेषु यः करोत्यतिमात्रशः ।
सोऽद्य केशग्रहं श्रुत्वा पितुर्धक्ष्यति नो रणे ॥ ०४० ॥

विक्रोशमाने हि मयि भृशमाचार्यगृद्धिनि ।
अवकीर्य स्वधर्मं हि शिष्येण निहतो गुरुः ॥ ०४१ ॥

यदा गतं वयो भूयः शिष्टमल्पतरं च नः ।
तस्येदानीं विकारोऽयमधर्मो यत्कृतो महान् ॥ ०४२ ॥

पितेव नित्यं सौहार्दात्पितेव स हि धर्मतः ।
सोऽल्पकालस्य राज्यस्य कारणान्निहतो गुरुः ॥ ०४३ ॥

धृतराष्ट्रेण भीष्माय द्रोणाय च विशां पते ।
विसृष्टा पृथिवी सर्वा सह पुत्रैश्च तत्परैः ॥ ०४४ ॥

स प्राप्य तादृशीं वृत्तिं सत्कृतः सततं परैः ।
अवृणीत सदा पुत्रान्मामेवाभ्यधिकं गुरुः ॥ ०४५ ॥

अक्षीयमाणो न्यस्तास्त्रस्त्वद्वाक्येनाहवे हतः ।
न त्वेनं युध्यमानं वै हन्यादपि शतक्रतुः ॥ ०४६ ॥

तस्याचार्यस्य वृद्धस्य द्रोहो नित्योपकारिणः ।
कृतो ह्यनार्यैरस्माभी राज्यार्थे लघुबुद्धिभिः ॥ ०४७ ॥

पुत्रान्भ्रातॄन्पितॄन्दाराञ्जीवितं चैव वासविः ।
त्यजेत्सर्वं मम प्रेम्णा जानात्येतद्धि मे गुरुः ॥ ०४८ ॥

स मया राज्यकामेन हन्यमानोऽप्युपेक्षितः ।
तस्मादवाक्शिरा राजन्प्राप्तोऽस्मि नरकं विभो ॥ ०४९ ॥

ब्राह्मणं वृद्धमाचार्यं न्यस्तशस्त्रं यथा मुनिम् ।
घातयित्वाद्य राज्यार्थे मृतं श्रेयो न जीवितम् ॥ ०५० ॥

---

# अध्याय १६८

सञ्जय उवाच ॥

अर्जुनस्य वचः श्रुत्वा नोचुस्तत्र महारथाः ।
अप्रियं वा प्रियं वापि महाराज धनञ्जयम् ॥ ००१ ॥

ततः क्रुद्धो महाबाहुर्भीमसेनोऽभ्यभाषत ।
उत्स्मयन्निव कौन्तेयमर्जुनं भरतर्षभ ॥ ००२ ॥

मुनिर्यथारण्यगतो भाषसे धर्मसंहितम् ।
न्यस्तदण्डो यथा पार्थ ब्राह्मणः संशितव्रतः ॥ ००३ ॥

क्षतात्त्राता क्षताज्जीवन्क्षान्तस्त्रिष्वपि साधुषु ।
क्षत्रियः क्षितिमाप्नोति क्षिप्रं धर्मं यशः श्रियम् ॥ ००४ ॥

स भवान्क्षत्रियगुणैर्युक्तः सर्वैः कुलोद्वहः ।
अविपश्चिद्यथा वाक्यं व्याहरन्नाद्य शोभसे ॥ ००५ ॥

पराक्रमस्ते कौन्तेय शक्रस्येव शचीपतेः ।
न चातिवर्तसे धर्मं वेलामिव महोदधिः ॥ ००६ ॥

न पूजयेत्त्वा कोऽन्वद्य यत्त्रयोदशवार्षिकम् ।
अमर्षं पृष्ठतः कृत्वा धर्ममेवाभिकाङ्क्षसे ॥ ००७ ॥

दिष्ट्या तात मनस्तेऽद्य स्वधर्ममनुवर्तते ।
आनृशंस्ये च ते दिष्ट्या बुद्धिः सततमच्युत ॥ ००८ ॥

यत्तु धर्मप्रवृत्तस्य हृतं राज्यमधर्मतः ।
द्रौपदी च परामृष्टा सभामानीय शत्रुभिः ॥ ००९ ॥

वनं प्रव्राजिताश्चास्म वल्कलाजिनवाससः ।
अनर्हमाणास्तं भावं त्रयोदश समाः परैः ॥ ०१० ॥

एतान्यमर्षस्थानानि मर्षितानि त्वयानघ ।
क्षत्रधर्मप्रसक्तेन सर्वमेतदनुष्ठितम् ॥ ०११ ॥

तमधर्ममपाक्रष्टुमारब्धः सहितस्त्वया ।
सानुबन्धान्हनिष्यामि क्षुद्रान्राज्यहरानहम्  ॥ ०१२  ॥

त्वया तु कथितं पूर्वं युद्धायाभ्यागता वयम् ।
घटामश्च यथाशक्ति त्वं तु नोऽद्य जुगुप्ससे  ॥ ०१३  ॥

स्वधर्मं नेच्छसे ज्ञातुं मिथ्या वचनमेव ते ।
भयार्दितानामस्माकं वाचा मर्माणि कृन्तसि  ॥ ०१४  ॥

वपन्व्रणे क्षारमिव क्षतानां शत्रुकर्शन ।
विदीर्यते मे हृदयं त्वया वाक्शल्यपीडितम्  ॥ ०१५  ॥

अधर्ममेतद्विपुलं धार्मिकः सन्न बुध्यसे ।
यत्त्वमात्मानमस्मांश्च प्रशंस्यान्न प्रशंससि  ॥ ०१६  ॥

यः कलां षोडशीं त्वत्तो नार्हते तं प्रशंससि  ॥ ०१६  ॥

स्वयमेवात्मनो वक्तुं न युक्तं गुणसंस्तवम् ।
दारयेयं महीं क्रोधाद्विकिरेयं च पर्वतान्  ॥ ०१७  ॥

आविध्य च गदां गुर्वीं भीमां काञ्चनमालिनीम् ।
गिरिप्रकाशान्क्षितिजान्भञ्जेयमनिलो यथा  ॥ ०१८  ॥

स त्वमेवंविधं जानन्भ्रातरं मां नरर्षभ ।
द्रोणपुत्राद्भयं कर्तुं नार्हस्यमितविक्रम  ॥ ०१९  ॥

अथ वा तिष्ठ बीभत्सो सह सर्वैर्नरर्षभैः ।
अहमेनं गदापाणिर्जेष्याम्येको महाहवे  ॥ ०२०  ॥

ततः पाञ्चालराजस्य पुत्रः पार्थमथाब्रवीत् ।
सङ्क्रुद्धमिव नर्दन्तं हिरण्यकशिपुं हरिः  ॥ ०२१  ॥

बीभत्सो विप्रकर्माणि विदितानि मनीषिणाम् ।
याजनाध्यापने दानं तथा यज्ञप्रतिग्रहौ ॥ ०२२ ॥

षष्ठमध्ययनं नाम तेषां कस्मिन्प्रतिष्ठितः ।
हतो द्रोणो मया यत्तत्किं मां पार्थ विगर्हसे ॥ ०२३ ॥

अपक्रान्तः स्वधर्माच्च क्षत्रधर्ममुपाश्रितः ।
अमानुषेण हन्त्यस्मानस्त्रेण क्षुद्रकर्मकृत् ॥ ०२४ ॥

तथा मायां प्रयुञ्जानमसह्यं ब्राह्मणब्रुवम् ।
माययैव निहन्याद्यो न युक्तं पार्थ तत्र किम् ॥ ०२५ ॥

तस्मिंस्तथा मया शस्ते यदि द्रौणायनी रुषा ।
कुरुते भैरवं नादं तत्र किं मम हीयते ॥ ०२६ ॥

न चाद्भुतमिदं मन्ये यद्द्रौणिः शुद्धगर्जया ।
घातयिष्यति कौरव्यान्परित्रातुमशक्नुवन् ॥ ०२७ ॥

यच्च मां धार्मिको भूत्वा ब्रवीषि गुरुघातिनम् ।
तदर्थमहमुत्पन्नः पाञ्चाल्यस्य सुतोऽनलात् ॥ ०२८ ॥

यस्य कार्यमकार्यं वा युध्यतः स्यात्समं रणे ।
तं कथं ब्राह्मणं ब्रूयाः क्षत्रियं वा धनञ्जय ॥ ०२९ ॥

यो ह्यनस्त्रविदो हन्याद्ब्रह्मास्त्रैः क्रोधमूर्छितः ।
सर्वोपायैर्न स कथं वध्यः पुरुषसत्तम ॥ ०३० ॥

विधर्मिणं धर्मविद्भिः प्रोक्तं तेषां विषोपमम् ।
जानन्धर्मार्थतत्त्वज्ञः किमर्जुन विगर्हसे ॥ ०३१ ॥

नृशंसः स मयाक्रम्य रथ एव निपातितः ।
तन्माभिनन्द्यं बीभत्सो किमर्थं नाभिनन्दसे ॥ ०३२ ॥

कृते रणे कथं पार्थ ज्वलनार्कविषोपमम् ।
भीमं द्रोणशिरश्छेदे प्रशस्यं न प्रशंससि ॥ ०३३ ॥

योऽसौ ममैव नान्यस्य बान्धवान्युधि जघ्निवान् ।
छित्त्वापि तस्य मूर्धानं नैवास्मि विगतज्वरः ॥ ०३४ ॥

तच्च मे कृन्तते मर्म यन्न तस्य शिरो मया ।
निषादविषये क्षिप्तं जयद्रथशिरो यथा ॥ ०३५ ॥

अवधश्चापि शत्रूणामधर्मः शिष्यतेऽर्जुन ।
क्षत्रियस्य ह्ययं धर्मो हन्याद्धन्येत वा पुनः ॥ ०३६ ॥

स शत्रुर्निहतः संख्ये मया धर्मेण पाण्डव ।
यथा त्वया हतः शूरो भगदत्तः पितुः सखा ॥ ०३७ ॥

पितामहं रणे हत्वा मन्यसे धर्ममात्मनः ।
मया शत्रौ हते कस्मात्पापे धर्मं न मन्यसे ॥ ०३८ ॥

नानृतः पाण्डवो ज्येष्ठो नाहं वाधार्मिकोऽर्जुन ।
शिष्यध्रुङ्निहतः पापो युध्यस्व विजयस्तव ॥ ०३९ ॥

---

# अध्याय १६९

धृतराष्ट्र उवाच ॥

साङ्गा वेदा यथान्यायं येनाधीता महात्मना ।
यस्मिन्साक्षाद्धनुर्वेदो ह्रीनिषेधे प्रतिष्ठितः ॥ ००१ ॥

तस्मिन्नाक्रुश्यति द्रोणे महर्षितनये तदा ।
नीचात्मना नृशंसेन क्षुद्रेण गुरुघातिना ॥ ००२ ॥

यस्य प्रसादात्कर्माणि कुर्वन्ति पुरुषर्षभाः ।
अमानुषाणि सङ्ग्रामे देवैरसुकराणि च ॥ ००३ ॥

तस्मिन्नाक्रुश्यति द्रोणे समक्षं पापकर्मिणः ।
नामर्षं तत्र कुर्वन्ति धिक्क्षत्रं धिगमर्षितम् ॥ ००४ ॥

पार्थाः सर्वे च राजानः पृथिव्यां ये धनुर्धराः ।
श्रुत्वा किमाहुः पाञ्चाल्यं तन्ममाचक्ष्व सञ्जय ॥ ००५ ॥

सञ्जय उवाच ॥

श्रुत्वा द्रुपदपुत्रस्य ता वाचः क्रूरकर्मणः ।
तूष्णीं बभूवू राजानः सर्व एव विशां पते ॥ ००६ ॥

अर्जुनस्तु कटाक्षेण जिह्मं प्रेक्ष्य च पार्षतम् ।
सबाष्पमभिनिःश्वस्य धिग्धिग्धिगिति चाब्रवीत् ॥ ००७ ॥

युधिष्ठिरश्च भीमश्च यमौ कृष्णस्तथापरे ।
आसन्सुव्रीडिता राजन्सात्यकिरिदमब्रवीत् ॥ ००८ ॥

नेहास्ति पुरुषः कश्चिद्य इमं पापपूरुषम् ।
भाषमाणमकल्याणं शीघ्रं हन्यान्नराधमम् ॥ ००९ ॥

कथं च शतधा जिह्वा न ते मूर्धा च दीर्यते ।
गुरुमाक्रोशतः क्षुद्र न चाधर्मेण पात्यसे ॥ ०१० ॥

याप्यस्त्वमसि पार्थैश्च सर्वैश्चान्धकवृष्णिभिः ।
यत्कर्म कलुषं कृत्वा श्लाघसे जनसंसदि  ॥ ०११  ॥

अकार्यं तादृशं कृत्वा पुनरेव गुरुं क्षिपन् ।
वध्यस्त्वं न त्वयार्थोऽस्ति मुहूर्तमपि जीवता  ॥ ०१२  ॥

कस्त्वेतद्व्यवसेदार्यस्त्वदन्यः पुरुषाधमः ।
निगृह्य केशेषु वधं गुरोर्धर्मात्मनः सतः  ॥ ०१३  ॥

सप्तावरे तथा पूर्वे बान्धवास्ते निपातिताः ।
यशसा च परित्यक्तास्त्वां प्राप्य कुलपांसनम्  ॥ ०१४  ॥

उक्तवांश्चापि यत्पार्थं भीष्मं प्रति नरर्षभम् ।
तथान्तो विहितस्तेन स्वयमेव महात्मना  ॥ ०१५  ॥

तस्यापि तव सोदर्यो निहन्ता पापकृत्तमः ।
नान्यः पाञ्चालपुत्रेभ्यो विद्यते भुवि पापकृत्  ॥ ०१६  ॥

स चापि सृष्टः पित्रा ते भीष्मस्यान्तकरः किल ।
शिखण्डी रक्षितस्तेन स च मृत्युर्महात्मनः  ॥ ०१७  ॥

पाञ्चालाश्चलिता धर्मात्क्षुद्रा मित्रगुरुद्रुहः ।
त्वां प्राप्य सहसोदर्यं धिक्कृतं सर्वसाधुभिः  ॥ ०१८  ॥

पुनश्चेदीदृशीं वाचं मत्समीपे वदिष्यसि ।
शिरस्ते पातयिष्यामि गदया वज्रकल्पया  ॥ ०१९  ॥

सात्वतेनैवमाक्षिप्तः पार्षतः परुषाक्षरम् ।
संरब्धः सात्यकिं प्राह सङ्क्रुद्धः प्रहसन्निव  ॥ ०२०  ॥

श्रूयते श्रूयते चेति क्षम्यते चेति माधव ।
न चानार्य शुभं साधुं पुरुषं क्षेप्तुमर्हसि ॥ ०२१ ॥

क्षमा प्रशस्यते लोके न तु पापोऽर्हति क्षमाम् ।
क्षमावन्तं हि पापात्मा जितोऽयमिति मन्यते ॥ ०२२ ॥

स त्वं क्षुद्रसमाचारो नीचात्मा पापनिश्चयः ।
आ केशाग्रान्नखाग्राच्च वक्तव्यो वक्तुमिच्छसि ॥ ०२३ ॥

यः स भूरिश्रवाश्छिन्ने भुजे प्रायगतस्त्वया ।
वार्यमाणेन निहतस्ततः पापतरं नु किम् ॥ ०२४ ॥

व्यूहमानो मया द्रोणो दिव्येनास्त्रेण संयुगे ।
विसृष्टशस्त्रो निहतः किं तत्र क्रूर दुष्कृतम् ॥ ०२५ ॥

अयुध्यमानं यस्त्वाजौ तथा प्रायगतं मुनिम् ।
छिन्नबाहुं परैर्हन्यात्सात्यके स कथं भवेत् ॥ ०२६ ॥

निहत्य त्वां यदा भूमौ स विक्रामति वीर्यवान् ।
किं तदा न निहंस्येनं भूत्वा पुरुषसत्तमः ॥ ०२७ ॥

त्वया पुनरनार्येण पूर्वं पार्थेन निर्जितः ।
यदा तदा हतः शूरः सौमदत्तिः प्रतापवान् ॥ ०२८ ॥

यत्र यत्र तु पाण्डूनां द्रोणो द्रावयते चमूम् ।
किरञ्शरसहस्राणि तत्र तत्र प्रयाम्यहम् ॥ ०२९ ॥

स त्वमेवंविधं कृत्वा कर्म चाण्डालवत्स्वयम् ।
वक्तुमिच्छसि वक्तव्यः कस्मान्मां परुषाण्यथ ॥ ०३० ॥

कर्ता त्वं कर्मणोग्रस्य नाहं वृष्णिकुलाधम ।

पापानां च त्वमावासः कर्मणां मा पुनर्वद  ॥ ०३१  ॥

जोषमास्स्व न मां भूयो वक्तुमर्हस्यतः परम् ।
अधरोत्तरमेतद्धि यन्मा त्वं वक्तुमिच्छसि  ॥ ०३२  ॥

अथ वक्ष्यसि मां मौर्ख्याद्भूयः परुषमीदृशम् ।
गमयिष्यामि बाणैस्त्वां युधि वैवस्वतक्षयम्  ॥ ०३३  ॥

न चैव मूर्ख धर्मेण केवलेनैव शक्यते ।
तेषामपि ह्यधर्मेण चेष्टितं शृणु यादृशम्  ॥ ०३४  ॥

वञ्चितः पाण्डवः पूर्वमधर्मेण युधिष्ठिरः ।
द्रौपदी च परिक्लिष्टा तथाधर्मेण सात्यके  ॥ ०३५  ॥

प्रव्राजिता वनं सर्वे पाण्डवाः सह कृष्णया ।
सर्वस्वमपकृष्टं च तथाधर्मेण बालिश  ॥ ०३६  ॥

अधर्मेणापकृष्टश्च मद्रराजः परैरितः ।
इतोऽप्यधर्मेण हतो भीष्मः कुरुपितामहः  ॥ ०३७  ॥

भूरिश्रवा ह्यधर्मेण त्वया धर्मविदा हतः  ॥ ०३७  ॥

एवं परैराचरितं पाण्डवेयैश्च संयुगे ।
रक्षमाणैर्जयं वीरैर्धर्मज्ञैरपि सात्वत  ॥ ०३८  ॥

दुर्ज्ञेयः परमो धर्मस्तथाधर्मः सुदुर्विदः ।
युध्यस्व कौरवैः सार्धं मा गाः पितृनिवेशनम्  ॥ ०३९  ॥

एवमादीनि वाक्यानि क्रूराणि परुषाणि च ।
श्रावितः सात्यकिः श्रीमानाकम्पित इवाभवत्  ॥ ०४०  ॥

तच्छ्रुत्वा क्रोधताम्राक्षः सात्यकिस्त्वाददे गदाम् ।
विनिःश्वस्य यथा सर्पः प्रणिधाय रथे धनुः ॥ ०४१ ॥

ततोऽभिपत्य पाञ्चाल्यं संरम्भेणेदमब्रवीत् ।
न त्वां वक्ष्यामि परुषं हनिष्ये त्वां वधक्षमम् ॥ ०४२ ॥

तमापतन्तं सहसा महाबलममर्षणम् ।
पाञ्चाल्यायाभिसङ्क्रुद्धमन्तकायान्तकोपमम् ॥ ०४३ ॥

चोदितो वासुदेवेन भीमसेनो महाबलः ।
अवप्लुत्य रथात्तूर्णं बाहुभ्यां समवारयत् ॥ ०४४ ॥

द्रवमाणं तथा क्रुद्धं सात्यकिं पाण्डवो बली ।
प्रस्कन्दमानमादाय जगाम बलिनं बलात् ॥ ०४५ ॥

स्थित्वा विष्टभ्य चरणौ भीमेन शिनिपुङ्गवः ।
निगृहीतः पदे षष्ठे बलेन बलिनां वरः ॥ ०४६ ॥

अवरुह्य रथात्तं तु ह्रियमाणं बलीयसा ।
उवाच श्लक्ष्णया वाचा सहदेवो विशां पते ॥ ०४७ ॥

अस्माकं पुरुषव्याघ्र मित्रमन्यन्न विद्यते ।
परमन्धकवृष्णिभ्यः पाञ्चालेभ्यश्च माधव ॥ ०४८ ॥

तथैवान्धकवृष्णीनां तव चैव विशेषतः ।
कृष्णस्य च तथास्मत्तो मित्रमन्यन्न विद्यते ॥ ०४९ ॥

पाञ्चालानां च वार्ष्णेय समुद्रान्तां विचिन्वताम् ।
नान्यदस्ति परं मित्रं यथा पाण्डववृष्णयः ॥ ०५० ॥

स भवानीदृशं मित्रं मन्यते च यथा भवान् ।

भवन्तश्च यथास्माकं भवतां च तथा वयम् ॥ ०५१ ॥

स एवं सर्वधर्मज्ञो मित्रधर्ममनुस्मरन् ।
नियच्छ मन्युं पाञ्चाल्यात्प्रशाम्य शिनिपुङ्गव ॥ ०५२ ॥

पार्षतस्य क्षम त्वं वै क्षमतां तव पार्षतः ।
वयं क्षमयितारश्च किमन्यत्र शमाद्भवेत् ॥ ०५३ ॥

प्रशाम्यमाने शैनेये सहदेवेन मारिष ।
पाञ्चालराजस्य सुतः प्रहसन्निदमब्रवीत् ॥ ०५४ ॥

मुञ्च मुञ्च शिनेः पौत्रं भीम युद्धमदान्वितम् ।
आसादयतु मामेष धराधरमिवानिलः ॥ ०५५ ॥

यावदस्य शितैर्बाणैः संरम्भं विनयाम्यहम् ।
युद्धश्रद्धां च कौन्तेय जीवितस्य च संयुगे ॥ ०५६ ॥

किं नु शक्यं मया कर्तुं कार्यं यदिदमुद्यतम् ।
सुमहत्पाण्डुपुत्राणामायान्त्येते हि कौरवाः ॥ ०५७ ॥

अथ वा फल्गुनः सर्वान्वारयिष्यति संयुगे ।
अहमप्यस्य मूर्धानं पातयिष्यामि सायकैः ॥ ०५८ ॥

मन्यते छिन्नबाहुं मां भूरिश्रवसमाहवे ।
उत्सृजैनमहं वैनमेष मां वा हनिष्यति ॥ ०५९ ॥

शृण्वन्पाञ्चालवाक्यानि सात्यकिः सर्पवच्छ्वसन् ।
भीमबाह्वन्तरे सक्तो विस्फुरत्यनिशं बली ॥ ०६० ॥

त्वरया वासुदेवश्च धर्मराजश्च मारिष ।
यत्नेन महता वीरौ वारयामासतुस्ततः ॥ ०६१ ॥

निवार्य परमेष्वासौ क्रोधसंरक्तलोचनौ ।
युयुत्सवः परान्संख्ये प्रतीयुः क्षत्रियर्षभाः ॥ ०६२ ॥

---

# अध्याय १७०

सञ्जय उवाच ॥

ततः स कदनं चक्रे रिपूणां द्रोणनन्दनः ।
युगान्ते सर्वभूतानां कालसृष्ट इवान्तकः ॥ ००१ ॥

ध्वजद्रुमं शस्त्रशृङ्गं हतनागमहाशिलम् ।
अश्वकिंपुरुषाकीर्णं शरासनलतावृतम् ॥ ००२ ॥

शूलक्रव्यादसंघुष्टं भूतयक्षगणाकुलम् ।
निहत्य शात्रवान्भल्लैः सोऽचिनोद्देहपर्वतम् ॥ ००३ ॥

ततो वेगेन महता विनद्य स नरर्षभः ।
प्रतिज्ञां श्रावयामास पुनरेव तवात्मजम् ॥ ००४ ॥

यस्माद्युध्यन्तमाचार्यं धर्मकञ्चुकमास्थितः ।
मुञ्च शस्त्रमिति प्राह कुन्तीपुत्रो युधिष्ठिरः ॥ ००५ ॥

तस्मात्संपश्यतस्तस्य द्रावयिष्यामि वाहिनीम् ।
विद्राव्य सत्यं हन्तास्मि पापं पाञ्चाल्यमेव तु ॥ ००६ ॥

सर्वानेतान्हनिष्यामि यदि योत्स्यन्ति मां रणे ।

सत्यं ते प्रतिजानामि परावर्तय वाहिनीम् ॥ ००७ ॥

तच्छ्रुत्वा तव पुत्रस्तु वाहिनीं पर्यवर्तयत् ।
सिंहनादेन महता व्यपोह्य सुमहद्भयम् ॥ ००८ ॥

ततः समागमो राजन्कुरुपाण्डवसेनयोः ।
पुनरेवाभवत्तीव्रः पूर्णसागरयोरिव ॥ ००९ ॥

संरब्धा हि स्थिरीभूता द्रोणपुत्रेण कौरवाः ।
उदग्राः पाण्डुपाञ्चाला द्रोणस्य निधनेन च ॥ ०१० ॥

तेषां परमहृष्टानां जयमात्मनि पश्यताम् ।
संरब्धानां महावेगः प्रादुरासीद्रणाजिरे ॥ ०११ ॥

यथा शिलोच्चये शैलः सागरे सागरो यथा ।
प्रतिहन्येत राजेन्द्र तथासन्कुरुपाण्डवाः ॥ ०१२ ॥

ततः शङ्खसहस्राणि भेरीणामयुतानि च ।
अवादयन्त संहृष्टाः कुरुपाण्डवसैनिकाः ॥ ०१३ ॥

ततो निर्मथ्यमानस्य सागरस्येव निस्वनः ।
अभवत्तस्य सैन्यस्य सुमहानद्भुतोपमः ॥ ०१४ ॥

प्रादुश्चक्रे ततो द्रौणिरस्त्रं नारायणं तदा ।
अभिसंधाय पाण्डूनां पाञ्चालानां च वाहिनीम् ॥ ०१५ ॥

प्रादुरासंस्ततो बाणा दीप्ताग्राः खे सहस्रशः ।
पाण्डवान्भक्षयिष्यन्तो दीप्तास्या इव पन्नगाः ॥ ०१६ ॥

ते दिशः खं च सैन्यं च समावृण्वन्महाहवे ।
मुहूर्ताद्भास्करस्येव राज.ण्ल्लोकं गभस्तयः ॥ ०१७ ॥

तथापरे द्योतमाना ज्योतींषीवाम्बरेऽमले ।
प्रादुरासन्महीपाल कार्ष्णायसमया गुडाः ॥ ०१८ ॥

चतुर्दिशं विचित्राश्च शतघ्न्योऽथ हुताशदाः ।
चक्राणि च क्षुरान्तानि मण्डलानीव भास्वतः ॥ ०१९ ॥

शस्त्राकृतिभिराकीर्णमतीव भरतर्षभ ।
दृष्ट्वान्तरिक्षमाविग्नाः पाण्डुपाञ्चालसृञ्जयाः ॥ ०२० ॥

यथा यथा ह्ययुध्यन्त पाण्डवानां महारथाः ।
तथा तथा तदस्त्रं वै व्यवर्धत जनाधिप ॥ ०२१ ॥

वध्यमानास्तथास्त्रेण तेन नारायणेन वै ।
दह्यमानानलेनेव सर्वतोऽभ्यर्दिता रणे ॥ ०२२ ॥

यथा हि शिशिरापाये दहेत्कक्षं हुताशनः ।
तथा तदस्त्रं पाण्डूनां ददाह ध्वजिनीं प्रभो ॥ ०२३ ॥

आपूर्यमाणेनास्त्रेण सैन्ये क्षीयति चाभिभो ।
जगाम परमं त्रासं धर्मपुत्रो युधिष्ठिरः ॥ ०२४ ॥

द्रवमाणं तु तत्सैन्यं दृष्ट्वा विगतचेतनम् ।
मध्यस्थतां च पार्थस्य धर्मपुत्रोऽब्रवीदिदम् ॥ ०२५ ॥

धृष्टद्युम्न पलायस्व सह पाञ्चालसेनया ।
सात्यके त्वं च गच्छस्व वृष्ण्यन्धकवृतो गृहान् ॥ ०२६ ॥

वासुदेवोऽपि धर्मात्मा करिष्यत्यात्मनः क्षमम् ।
उपदेष्टुं समर्थोऽयं लोकस्य किमुतात्मनः ॥ ०२७ ॥

सङ्ग्रामस्तु न कर्तव्यः सर्वसैन्यान्ब्रवीमि वः ।
अहं हि सह सोदर्यैः प्रवेक्ष्ये हव्यवाहनम् ॥ ०२८ ॥

भीष्मद्रोणार्णवं तीर्त्वा सङ्ग्रामं भीरुदुस्तरम् ।
अवसत्स्याम्यसलिले सगणो द्रौणिगोष्पदे ॥ ०२९ ॥

कामः संपद्यतामस्य बीभत्सोराशु मां प्रति ।
कल्याणवृत्त आचार्यो मया युधि निपातितः ॥ ०३० ॥

येन बालः स सौभद्रो युद्धानामविशारदः ।
समर्थैर्बहुभिः क्रूरैर्घातितो नाभिपालितः ॥ ०३१ ॥

येनाविब्रुवता प्रश्नं तथा कृष्णा सभां गता ।
उपेक्षिता सपुत्रेण दासभावं नियच्छती ॥ ०३२ ॥

जिघांसुर्धार्तराष्ट्रश्च श्रान्तेष्वश्वेषु फल्गुनम् ।
कवचेन तथा युक्तो रक्षार्थं सैन्धवस्य च ॥ ०३३ ॥

येन ब्रह्मास्त्रविदुषा पाञ्चालाः सत्यजिन्मुखाः ।
कुर्वाणा मज्जये यत्नं समूला विनिपातिताः ॥ ०३४ ॥

येन प्रव्राज्यमानाश्च राज्याद्वयमधर्मतः ।
निवार्यमाणेनास्माभिरनुगन्तुं तदेषिताः ॥ ०३५ ॥

योऽसावत्यन्तमस्मासु कुर्वाणः सौहृदं परम् ।
हतस्तदर्थे मरणं गमिष्यामि सबान्धवः ॥ ०३६ ॥

एवं ब्रुवति कौन्तेये दाशार्हस्त्वरितस्ततः ।
निवार्य सैन्यं बाहुभ्यामिदं वचनमब्रवीत् ॥ ०३७ ॥

शीघ्रं न्यस्यत शस्त्राणि वाहेभ्यश्चावरोहत ।

एष योगोऽत्र विहितः प्रतिघातो महात्मना ॥ ०३८ ॥

द्विपाश्वस्यन्दनेभ्यश्च क्षितिं सर्वेऽवरोहत ।
एवमेतन्न वो हन्यादस्त्रं भूमौ निरायुधान् ॥ ०३९ ॥

यथा यथा हि युध्यन्ते योधा ह्यस्त्रबलं प्रति ।
तथा तथा भवन्त्येते कौरवा बलवत्तराः ॥ ०४० ॥

निक्षेप्स्यन्ति च शस्त्राणि वाहनेभ्योऽवरुह्य ये ।
तान्नैतदस्त्रं सङ्ग्रामे निहनिष्यति मानवान् ॥ ०४१ ॥

ये त्वेतत्प्रतियोत्स्यन्ति मनसापीह केचन ।
निहनिष्यति तान्सर्वान्रसातलगतानपि ॥ ०४२ ॥

ते वचस्तस्य तच्छ्रुत्वा वासुदेवस्य भारत ।
ईषुः सर्वेऽस्त्रमुत्स्रष्टुं मनोभिः करणेन च ॥ ०४३ ॥

तत उत्स्रष्टुकामांस्तानस्त्राण्यालक्ष्य पाण्डवः ।
भीमसेनोऽब्रवीद्राजन्निदं संहर्षयन्वचः ॥ ०४४ ॥

न कथञ्चन शस्त्राणि मोक्तव्यानीह केनचित् ।
अहमावारयिष्यामि द्रोणपुत्रास्त्रमाशुगैः ॥ ०४५ ॥

अथ वाप्यनया गुर्व्या हेमविग्रहया रणे ।
कालवद्विचरिष्यामि द्रौणेरस्त्रं विशातयन् ॥ ०४६ ॥

न हि मे विक्रमे तुल्यः कश्चिदस्ति पुमानिह ।
यथैव सवितुस्तुल्यं ज्योतिरन्यन्न विद्यते ॥ ०४७ ॥

पश्यध्वं मे दृढौ बाहू नागराजकरोपमा ।
समर्थौ पर्वतस्यापि शैशिरस्य निपातने ॥ ०४८ ॥

नागायुतसमप्राणो ह्यहमेको नरेष्विह ।
शक्रो यथा प्रतिद्वंद्वो दिवि देवेषु विश्रुतः  ॥ ०४९  ॥

अद्य पश्यत मे वीर्यं बाह्वोः पीनांसयोर्युधि ।
ज्वलमानस्य दीप्तस्य द्रौणेरस्त्रस्य वारणे  ॥ ०५०  ॥

यदि नारायणास्त्रस्य प्रतियोद्धा न विद्यते ।
अद्यैनं प्रतियोत्स्यामि पश्यत्सु कुरुपाण्डुषु  ॥ ०५१  ॥

एवमुक्त्वा ततो भीमो द्रोणपुत्रमरिंदमः ।
अभ्ययान्मेघघोषेण रथेनादित्यवर्चसा  ॥ ०५२  ॥

स एनमिषुजालेन लघुत्वाच्छीघ्रविक्रमः ।
निमेषमात्रेणासाद्य कुन्तीपुत्रोऽभ्यवाकिरत्  ॥ ०५३  ॥

ततो द्रौणिः प्रहस्यैनमुदासमभिभाष्य च ।
अवाकिरत्प्रदीप्ताग्रैः शरैस्तैरभिमन्त्रितैः  ॥ ०५४  ॥

पन्नगैरिव दीप्तास्यैर्वमद्भिरनलं रणे ।
अवकीर्णोऽभवत्पार्थः स्फुलिङ्गैरिव काञ्चनैः  ॥ ०५५  ॥

तस्य रूपमभूद्राजन्भीमसेनस्य संयुगे ।
खद्योतैरावृतस्येव पर्वतस्य दिनक्षये  ॥ ०५६  ॥

तदस्त्रं द्रोणपुत्रस्य तस्मिन्प्रतिसमस्यति ।
अवर्धत महाराज यथाग्निरनिलोद्धतः  ॥ ०५७  ॥

विवर्धमानमालक्ष्य तदस्त्रं भीमविक्रमम् ।
पाण्डुसैन्यमृते भीमं सुमहद्भयमाविशत्  ॥ ०५८  ॥

ततः शस्त्राणि ते सर्वे समुत्सृज्य महीतले ।
अवारोहन्रथेभ्यश्च हस्त्यश्वेभ्यश्च सर्वशः ॥ ०५९ ॥

तेषु निक्षिप्तशस्त्रेषु वाहनेभ्यश्च्युतेषु च ।
तदस्त्रवीर्यं विपुलं भीममूर्धन्यथापतत् ॥ ०६० ॥

हाहाकृतानि भूतानि पाण्डवाश्च विशेषतः ।
भीमसेनमपश्यन्त तेजसा संवृतं तदा ॥ ०६१ ॥

---

# अध्याय १७१

सञ्जय उवाच ॥

भीमसेनं समाकीर्णं दृष्ट्वास्त्रेण धनञ्जयः ।
तेजसः प्रतिघातार्थं वारुणेन समावृणोत् ॥ ००१ ॥

नालक्षयत तं कश्चिद्वारुणास्त्रेण संवृतम् ।
अर्जुनस्य लघुत्वाच्च संवृतत्वाच्च तेजसः ॥ ००२ ॥

साश्वसूतरथो भीमो द्रोणपुत्रास्त्रसंवृतः ।
अग्नावग्निरिव न्यस्तो ज्वालामाली सुदुर्दृशः ॥ ००३ ॥

यथा रात्रिक्षये राजञ्ज्योतींष्यस्तगिरिं प्रति ।
समापेतुस्तथा बाणा भीमसेनरथं प्रति ॥ ००४ ॥

स हि भीमो रथश्चास्य हयाः सूतश्च मारिष ।
संवृता द्रोणपुत्रेण पावकान्तर्गताभवन् ॥ ००५ ॥

यथा दग्ध्वा जगत्कृत्स्नं समये सचराचरम् ।
गच्छेदग्निर्विभोरास्यं तथास्त्रं भीममावृणोत्  ॥ ००६  ॥

सूर्यमग्निः प्रविष्टः स्याद्यथा चाग्निं दिवाकरः ।
तथा प्रविष्टं तत्तेजो न प्राज्ञायत किञ्चन  ॥ ००७  ॥

विकीर्णमस्त्रं तद्दृष्ट्वा तथा भीमरथं प्रति ।
उदीर्यमाणं द्रौणिं च निष्प्रतिद्वंद्वमाहवे  ॥ ००८  ॥

सर्वसैन्यानि पाण्डूनां न्यस्तशस्त्राण्यचेतसः ।
युधिष्ठिरपुरोगांश्च विमुखांस्तान्महारथान्  ॥ ००९  ॥

अर्जुनो वासुदेवश्च त्वरमाणौ महाद्युती ।
अवप्लुत्य रथाद्वीरौ भीममाद्रवतां ततः  ॥ ०१०  ॥

ततस्तद्द्रोणपुत्रस्य तेजोऽस्त्रबलसंभवम् ।
विगाह्य तौ सुबलिनौ माययाविशतां तदा  ॥ ०११  ॥

न्यस्तशस्त्रौ ततस्तौ तु नादहदस्त्रजोऽनलः ।
वारुणास्त्रप्रयोगाच्च वीर्यवत्त्वाच्च कृष्णयोः  ॥ ०१२  ॥

ततश्चकृषतुर्भीमं तस्य सर्वायुधानि च ।
नारायणास्त्रशान्त्यर्थं नरनारायणौ बलात्  ॥ ०१३  ॥

अपकृष्यमाणः कौन्तेयो नदत्येव महारथः ।
वर्धते चैव तद्घोरं द्रौणेरस्त्रं सुदुर्जयम्  ॥ ०१४  ॥

तमब्रवीद्वासुदेवः किमिदं पाण्डुनन्दन ।
वार्यमाणोऽपि कौन्तेय यद्युद्धान्न निवर्तसे  ॥ ०१५  ॥

यदि युद्धेन जेयाः स्युरिमे कौरवनन्दनाः ।
वयमप्यत्र युध्येम तथा चेमे नरर्षभाः ॥ ०१६ ॥

रथेभ्यस्त्ववतीर्णास्तु सर्व एव स्म तावकाः ।
तस्मात्त्वमपि कौन्तेय रथात्तूर्णमपाक्रम ॥ ०१७ ॥

एवमुक्त्वा ततः कृष्णो रथाद्भूमिमपातयत् ।
निःश्वसन्तं यथा नागं क्रोधसंरक्तलोचनम् ॥ ०१८ ॥

यदापकृष्टः स रथान्न्यासितश्चायुधं भुवि ।
ततो नारायणास्त्रं तत्प्रशान्तं शत्रुतापनम् ॥ ०१९ ॥

तस्मिन्प्रशान्ते विधिना तदा तेजसि दुःसहे ।
बभूवुर्विमलाः सर्वा दिशः प्रदिश एव च ॥ ०२० ॥

प्रववुश्च शिवा वाताः प्रशान्ता मृगपक्षिणः ।
वाहनानि च हृष्टानि योधाश्च मनुजेश्वर ॥ ०२१ ॥

व्यपोढे च ततो घोरे तस्मिंस्तेजसि भारत ।
बभौ भीमो निशापाये धीमान्सूर्य इवोदितः ॥ ०२२ ॥

हतशेषं बलं तत्र पाण्डवानामतिष्ठत ।
अस्त्रव्युपरमाद्धृष्टं तव पुत्रजिघांसया ॥ ०२३ ॥

व्यवस्थिते बले तस्मिन्नस्त्रे प्रतिहते तथा ।
दुर्योधनो महाराज द्रोणपुत्रमथाब्रवीत् ॥ ०२४ ॥

अश्वत्थामन्पुनः शीघ्रमस्त्रमेतत्प्रयोजय ।
व्यवस्थिता हि पाञ्चालाः पुनरेव जयैषिणः ॥ ०२५ ॥

अश्वत्थामा तथोक्तस्तु तव पुत्रेण मारिष ।

सुदीनमभिनिःश्वस्य राजानमिदमब्रवीत्  ॥ ०२६  ॥

नैतदावर्तते राजन्नस्त्रं द्विर्नोपपद्यते ।
आवर्तयन्निहन्त्येतत्प्रयोक्तारं न संशयः  ॥ ०२७  ॥

एष चास्त्रप्रतीघातं वासुदेवः प्रयुक्तवान् ।
अन्यथा विहितः संख्ये वधः शत्रोर्जनाधिप  ॥ ०२८  ॥

पराजयो वा मृत्युर्वा श्रेयो मृत्युर्न निर्जयः ।
निर्जिताश्चारयो ह्येते शस्त्रोत्सर्गान्मृतोपमाः  ॥ ०२९  ॥

दुर्योधन उवाच  ॥

आचार्यपुत्र यद्येतद्विरस्त्रं न प्रयुज्यते ।
अन्यैर्गुरुघ्ना वध्यन्तामस्त्रैरस्त्रविदां वर  ॥ ०३०  ॥

त्वयि ह्यस्त्राणि दिव्यानि यथा स्युस्त्र्यम्बके तथा ।
इच्छतो न हि ते मुच्येत्क्रुद्धस्यापि पुरंदरः  ॥ ०३१  ॥

धृतराष्ट्र उवाच  ॥

तस्मिन्नस्त्रे प्रतिहते द्रोणे चोपधिना हते ।
तथा दुर्योधनेनोक्तो द्रौणिः किमकरोत्पुनः  ॥ ०३२  ॥

दृष्ट्वा पार्थांश्च सङ्ग्रामे युद्धाय समवस्थितान् ।
नारायणास्त्रनिर्मुक्तांश्चरतः पृतनामुखे  ॥ ०३३  ॥

सञ्जय उवाच  ॥

जानन्पितुः स निधनं सिंहलाङ्गूलकेतनः ।
सक्रोधो भयमुत्सृज्य अभिदुद्राव पार्षतम्  ॥ ०३४  ॥

अभिद्रुत्य च विंशत्या क्षुद्रकाणां नरर्षभः ।
पञ्चभिश्चातिवेगेन विव्याध पुरुषर्षभम् ॥ ०३५ ॥

धृष्टद्युम्नस्ततो राजञ्ज्वलन्तमिव पावकम् ।
द्रोणपुत्रं त्रिषष्ट्या तु राजन्विव्याध पत्रिणाम् ॥ ०३६ ॥

सारथिं चास्य विंशत्या स्वर्णपुङ्खैः शिलाशितैः ।
हयांश्च चतुरोऽविध्यच्चतुर्भिर्निशितैः शरैः ॥ ०३७ ॥

विद्ध्वा विद्ध्वानदद्द्रौणिः कम्पयन्निव मेदिनीम् ।
आददत्सर्वलोकस्य प्राणानिव महारणे ॥ ०३८ ॥

पार्षतस्तु बली राजन्कृतास्त्रः कृतनिश्रमः ।
द्रौणिमेवाभिदुद्राव कृत्वा मृत्युं निवर्तनम् ॥ ०३९ ॥

ततो बाणमयं वर्षं द्रोणपुत्रस्य मूर्धनि ।
अवासृजदमेयात्मा पाञ्चाल्यो रथिनां वरः ॥ ०४० ॥

तं द्रौणिः समरे क्रुद्धश्छादयामास पत्रिभिः ।
विव्याध चैनं दशभिः पितुर्वधमनुस्मरन् ॥ ०४१ ॥

द्वाभ्यां च सुविकृष्टाभ्यां क्षुराभ्यां ध्वजकार्मुके ।
छित्त्वा पाञ्चालराजस्य द्रौणिरन्यैः समार्दयत् ॥ ०४२ ॥

व्यश्वसूतरथं चैनं द्रौणिश्चक्रे महाहवे ।
तस्य चानुचरान्सर्वान्क्रुद्धः प्राच्छादयच्छरैः ॥ ०४३ ॥

प्रदुद्राव ततः सैन्यं पाञ्चालानां विशां पते ।
संभ्रान्तरूपमार्तं च शरवर्षपरिक्षतम् ॥ ०४४ ॥

दृष्ट्वा च विमुखान्योधान्धृष्टद्युम्नं च पीडितम् ।
शैनेयोऽचोदयत्तूर्णं रणं द्रौणिरथं प्रति ॥ ०४५ ॥

अष्टभिर्निशितैश्चैव सोऽश्वत्थामानमार्दयत् ।
विंशत्या पुनराहत्य नानारूपैरमर्षणम् ॥ ०४६ ॥

विव्याध च तथा सूतं चतुर्भिश्चतुरो हयान् ॥ ०४६ ॥

सोऽतिविद्धो महेष्वासो नानालिङ्गैरमर्षणः ।
युयुधानेन वै द्रौणिः प्रहसन्वाक्यमब्रवीत् ॥ ०४७ ॥

शैनेयाभ्यवपत्तिं ते जानाम्याचार्यघातिनः ।
न त्वेनं त्रास्यसि मया ग्रस्तमात्मानमेव च ॥ ०४८ ॥

एवमुक्त्वार्करश्म्याभं सुपर्वाणं शरोत्तमम् ।
व्यसृजत्सात्वते द्रौणिर्वज्रं वृत्रे यथा हरिः ॥ ०४९ ॥

स तं निर्भिद्य तेनास्तः सायकः सशरावरम् ।
विवेश वसुधां भित्त्वा श्वसन्बिलमिवोरगः ॥ ०५० ॥

स भिन्नकवचः शूरस्तोत्त्रार्दित इव द्विपः ।
विमुच्य सशरं चापं भूरिव्रणपरिस्रवः ॥ ०५१ ॥

सीदन्रुधिरसिक्तश्च रथोपस्थ उपाविशत् ।
सूतेनापहृतस्तूर्णं द्रोणपुत्राद्रथान्तरम् ॥ ०५२ ॥

अथान्येन सुपुङ्खेन शरेण नतपर्वणा ।
आजघान भ्रुवोर्मध्ये धृष्टद्युम्नं परंतपः ॥ ०५३ ॥

स पूर्वमतिविद्धश्च भृशं पश्चाच्च पीडितः ।
ससाद युधि पाञ्चाल्यो व्यपाश्रयत च ध्वजम् ॥ ०५४ ॥

तं मत्तमिव सिंहेन राजन्कुञ्जरमर्दितम् ।
जवेनाभ्यद्रवञ्शूराः पञ्च पाण्डवतो रथाः ॥ ०५५ ॥

किरीटी भीमसेनश्च वृद्धक्षत्रश्च पौरवः ।
युवराजश्च चेदीनां मालवश्च सुदर्शनः ॥ ०५६ ॥

पञ्चभिः पञ्चभिर्बाणैरभ्यघ्नन्सर्वतः समम् ॥ ०५६ ॥

आशीविषाभैर्विंशद्भिः पञ्चभिश्चापि ताञ्शरैः ।
चिच्छेद युगपद्द्रौणिः पञ्चविंशतिसायकान् ॥ ०५७ ॥

सप्तभिश्च शितैर्बाणैः पौरवं द्रौणिरार्दयत् ।
मालवं त्रिभिरेकेन पार्थं षड्भिर्वृकोदरम् ॥ ०५८ ॥

ततस्ते विव्यधुः सर्वे द्रौणिं राजन्महारथाः ।
युगपच्च पृथक्चैव रुक्मपुङ्खैः शिलाशितैः ॥ ०५९ ॥

युवराजस्तु विंशत्या द्रौणिं विव्याध पत्रिणाम् ।
पार्थश्च पुनरष्टाभिस्तथा सर्वे त्रिभिस्त्रिभिः ॥ ०६० ॥

ततोऽर्जुनं षड्भिरथाजघान ; द्रौणायनिर्दशभिर्वासुदेवम् ।
भीमं दशार्धैर्युवराजं चतुर्भि ;र्द्वाभ्यां छित्त्वा कार्मुकं च ध्वजं च ॥ ०६१ ॥

पुनः पार्थं शरवर्षेण विद्ध्वा ; द्रौणिर्घोरं सिंहनादं ननाद ॥ ०६१ ॥

तस्यास्यतः सुनिशितान्पीतधारा ;न्द्रौणेः शरान्पृष्ठतश्चाग्रतश्च ।
धरा वियद्द्यौः प्रदिशो दिशश्च ; छन्ना बाणैरभवन्घोररूपैः ॥ ०६२ ॥

आसीनस्य स्वरथं तूग्रतेजाः ; सुदर्शनस्येन्द्रकेतुप्रकाशौ ।
भुजौ शिरश्चेन्द्रसमानवीर्य ;स्त्रिभिः शरैर्युगपत्सञ्चकर्त ॥ ०६३ ॥

स पौरवं रथशक्त्या निहत्य ; छित्त्वा रथं तिलशश्चापि बाणैः ।
छित्त्वास्य बाहू वरचन्दनाक्तौ ; भल्लेन कायाच्छिर उच्चकर्त ॥ ०६४ ॥

युवानमिन्दीवरदामवर्णं ; चेदिप्रियं युवराजं प्रहस्य ।
बाणैस्त्वरावाञ्ज्वलिताग्निकल्पै ;र्विद्ध्वा प्रादान्मृत्यवे साश्वसूतम् ॥ ०६५ ॥

तान्निहत्य रणे वीरो द्रोणपुत्रो युधां पतिः ।
दध्मौ प्रमुदितः शङ्खं बृहन्तमपराजितः ॥ ०६६ ॥

ततः सर्वे च पाञ्चाला भीमसेनश्च पाण्डवः ।
धृष्टद्युम्नरथं भीतास्त्यक्त्वा संप्राद्रवन्दिशः ॥ ०६७ ॥

तान्प्रभग्नांस्तथा द्रौणिः पृष्ठतो विकिरञ्शरैः ।
अभ्यवर्तत वेगेन कालवत्पाण्डुवाहिनीम् ॥ ०६८ ॥

ते वध्यमानाः समरे द्रोणपुत्रेण क्षत्रियाः ।
द्रोणपुत्रं भयाद्राजन्दिक्षु सर्वासु मेनिरे ॥ ०६९ ॥

---

# अध्याय १७२

सञ्जय उवाच ॥

तत्प्रभग्नं बलं दृष्ट्वा कुन्तीपुत्रो धनञ्जयः ।
न्यवारयदमेयात्मा द्रोणपुत्रवधेप्सया ॥ ००१ ॥

ततस्ते सैनिका राजन्नैव तत्रावतस्थिरे ।
संस्थाप्यमाना यत्नेन गोविन्देनार्जुनेन च ॥ ००२ ॥

एक एव तु बीभत्सुः सोमकावयवैः सह ।
मत्स्यैरन्यैश्च संधाय कौरवैः संन्यवर्तत ॥ ००३ ॥

ततो द्रुतमतिक्रम्य सिंहलाङ्गूलकेतनम् ।
सव्यसाची महेष्वासमश्वत्थामानमब्रवीत् ॥ ००४ ॥

या शक्तिर्यच्च ते वीर्यं यज्ज्ञानं यच्च पौरुषम् ।
धार्तराष्ट्रेषु या प्रीतिः प्रद्वेषोऽस्मासु यश्च ते ॥ ००५ ॥

यच्च भूयोऽस्ति तेजस्तत्परमं मम दर्शय ॥ ००५ ॥

स एव द्रोणहन्ता ते दर्पं भेत्स्यति पार्षतः ।
कालानलसमप्रख्यो द्विषतामन्तको युधि ॥ ००६ ॥

समासादय पाञ्चाल्यं मां चापि सहकेशवम् ॥ ००६ ॥

धृतराष्ट्र उवाच ॥

आचार्यपुत्रो मानार्हो बलवांश्चापि सञ्जय ।
प्रीतिर्धनञ्जये चास्य प्रियश्चापि स वासवेः ॥ ००७ ॥

न भूतपूर्वं बीभत्सोर्वाक्यं परुषमीदृशम् ।
अथ कस्मात्स कौन्तेयः सखायं रूक्षमब्रवीत् ॥ ००८ ॥

सञ्जय उवाच ॥

युवराजे हते चैव वृद्धक्षत्रे च पौरवे ।
इष्वस्त्रविधिसंपन्ने मालवे च सुदर्शने ॥ ००९ ॥

धृष्टद्युम्ने सात्यकौ च भीमे चापि पराजिते ।

युधिष्ठिरस्य तैर्वाक्यैर्मर्मण्यपि च घट्टिते ॥ ०१० ॥

अन्तर्भेदे च सञ्जाते दुःखं संस्मृत्य च प्रभो ।
अभूतपूर्वो बीभत्सोर्दुःखान्मन्युरजायत ॥ ०११ ॥

तस्मादनर्हमश्लीलमप्रियं द्रौणिमुक्तवान् ।
मान्यमाचार्यतनयं रूक्षं कापुरुषो यथा ॥ ०१२ ॥

एवमुक्तः श्वसन्क्रोधान्महेष्वासतमो नृप ।
पार्थेन परुषं वाक्यं सर्वमर्मघ्नया गिरा ॥ ०१३ ॥

द्रौणिश्चुकोप पार्थाय कृष्णाय च विशेषतः ॥ ०१३ ॥

स तु यत्तो रथे स्थित्वा वार्युपस्पृश्य वीर्यवान् ।
देवैरपि सुदुर्धर्षमस्त्रमाग्नेयमाददे ॥ ०१४ ॥

दृश्यादृश्यानरिगणानुद्दिश्याचार्यनन्दनः ।
सोऽभिमन्त्र्य शरं दीप्तं विधूममिव पावकम् ॥ ०१५ ॥

सर्वतः क्रोधमाविश्य चिक्षेप परवीरहा ॥ ०१५ ॥

ततस्तुमुलमाकाशे शरवर्षमजायत ।
ववुश्च शिशिरा वाताः सूर्यो नैव तताप च ॥ ०१६ ॥

चुक्रुशुर्दानवाश्चापि दिक्षु सर्वासु भैरवम् ।
रुधिरं चापि वर्षन्तो विनेदुस्तोयदाम्बरे ॥ ०१७ ॥

पक्षिणः पशवो गावो मुनयश्चापि सुव्रताः ।
परमं प्रयतात्मानो न शान्तिमुपलेभिरे ॥ ०१८ ॥

भ्रान्तसर्वमहाभूतमावर्जितदिवाकरम् ।

त्रैलोक्यमभिसंतप्तं ज्वराविष्टमिवातुरम् ॥ ०१९ ॥

शरतेजोऽभिसंतप्ता नागा भूमिशयास्तथा ।
निःश्वसन्तः समुत्पेतुस्तेजो घोरं मुमुक्षवः ॥ ०२० ॥

जलजानि च सत्त्वानि दह्यमानानि भारत ।
न शान्तिमुपजग्मुर्हि तप्यमानैर्जलाशयैः ॥ ०२१ ॥

दिशः खं प्रदिशश्चैव भुवं च शरवृष्टयः ।
उच्चावचा निपेतुर्वै गरुडानिलरंहसः ॥ ०२२ ॥

तैः शरैर्द्रोणपुत्रस्य वज्रवेगसमाहितैः ।
प्रदग्धाः शत्रवः पेतुरग्निदग्धा इव द्रुमाः ॥ ०२३ ॥

दह्यमाना महानागाः पेतुरुर्व्यां समन्ततः ।
नदन्तो भैरवान्नादाञ्जलदोपमनिस्वनान् ॥ ०२४ ॥

अपरे प्रद्रुतास्तत्र दह्यमाना महागजाः ।
त्रेसुस्तथापरे घोरे वने दावाग्निसंवृताः ॥ ०२५ ॥

द्रुमाणां शिखराणीव दावदग्धानि मारिष ।
अश्ववृन्दान्यदृश्यन्त रथवृन्दानि चाभिभो ॥ ०२६ ॥

अपतन्त रथौघाश्च तत्र तत्र सहस्रशः ॥ ०२६ ॥

तत्सैन्यं भगवानग्निर्ददाह युधि भारत ।
युगान्ते सर्वभूतानि संवर्तक इवानलः ॥ ०२७ ॥

दृष्ट्वा तु पाण्डवीं सेनां दह्यमानां महाहवे ।
प्रहृष्टास्तावका राजन्सिंहनादान्विनेदिरे ॥ ०२८ ॥

ततस्तूर्यसहस्राणि नानालिङ्गानि भारत ।
तूर्णमाजघ्निरे हृष्टास्तावका जितकाशिनः ॥ ०२९ ॥

कृत्स्ना ह्यक्षौहिणी राजन्सव्यसाची च पाण्डवः ।
तमसा संवृते लोके नादृश्यत महाहवे ॥ ०३० ॥

नैव नस्तादृशं राजन्दृष्टपूर्वं न च श्रुतम् ।
यादृशं द्रोणपुत्रेण सृष्टमस्त्रममर्षिणा ॥ ०३१ ॥

अर्जुनस्तु महाराज ब्राह्ममस्त्रमुदैरयत् ।
सर्वास्त्रप्रतिघाताय विहितं पद्मयोनिना ॥ ०३२ ॥

ततो मुहूर्तादिव तत्तमो व्युपशशाम ह ।
प्रववौ चानिलः शीतो दिशश्च विमलाभवन् ॥ ०३३ ॥

तत्राद्भुतमपश्याम कृत्स्नामक्षौहिणीं हताम् ।
अनभिज्ञेयरूपां च प्रदग्धामस्त्रमायया ॥ ०३४ ॥

ततो वीरौ महेष्वासौ विमुक्तौ केशवार्जुनौ ।
सहितौ संप्रदृश्येतां नभसीव तमोनुदौ ॥ ०३५ ॥

सपताकध्वजहयः सानुकर्षवरायुधः ।
प्रबभौ स रथो मुक्तस्तावकानां भयङ्करः ॥ ०३६ ॥

ततः किलकिलाशब्दः शङ्खभेरीरवैः सह ।
पाण्डवानां प्रहृष्टानां क्षणेन समजायत ॥ ०३७ ॥

हताविति तयोरासीत्सेनयोरुभयोर्मतिः ।
तरसाभ्यागतौ दृष्ट्वा विमुक्तौ केशवार्जुनौ ॥ ०३८ ॥

तावक्षतौ प्रमुदितौ दध्मतुर्वारिजोत्तमौ ।

दृष्ट्वा प्रमुदितान्पार्थांस्त्वदीया व्यथिताभवन्  ॥ ०३९  ॥

विमुक्तौ च महात्मानौ दृष्ट्वा द्रौणिः सुदुःखितः ।
मुहूर्तं चिन्तयामास किं त्वेतदिति मारिष  ॥ ०४०  ॥

चिन्तयित्वा तु राजेन्द्र ध्यानशोकपरायणः ।
निःश्वसन्दीर्घमुष्णं च विमनाश्चाभवत्तदा  ॥ ०४१  ॥

ततो द्रौणिर्धनुर्न्यस्य रथात्प्रस्कन्द्य वेगितः ।
धिग्धिक्सर्वमिदं मिथ्येत्युक्त्वा संप्राद्रवद्रणात्  ॥ ०४२  ॥

ततः स्निग्धाम्बुदाभासं वेदव्यासमकल्मषम् ।
आवासं च सरस्वत्याः स वै व्यासं ददर्श ह  ॥ ०४३  ॥

तं द्रौणिरग्रतो दृष्ट्वा स्थितं कुरुकुलोद्वह ।
सन्नकण्ठोऽब्रवीद्वाक्यमभिवाद्य सुदीनवत्  ॥ ०४४  ॥

भो भो माया यदृच्छा वा न विद्मः किमिदं भवेत् ।
अस्त्रं त्विदं कथं मिथ्या मम कश्च व्यतिक्रमः  ॥ ०४५  ॥

अधरोत्तरमेतद्वा लोकानां वा पराभवः ।
यदिमौ जीवतः कृष्णौ कालो हि दुरतिक्रमः  ॥ ०४६  ॥

नासुरामरगन्धर्वा न पिशाचा न राक्षसाः ।
न सर्पयक्षपतगा न मनुष्याः कथञ्चन  ॥ ०४७  ॥

उत्सहन्तेऽन्यथा कर्तुमेतदस्त्रं मयेरितम् ।
तदिदं केवलं हत्वा युक्तामक्षौहिणीं ज्वलत्  ॥ ०४८  ॥

केनेमौ मर्त्यधर्माणौ नावधीत्केशवार्जुनौ ।
एतत्प्रब्रूहि भगवन्मया पृष्टो यथातथम्  ॥ ०४९  ॥

व्यास उवाच ॥

महान्तमेतमर्थं मां यं त्वं पृच्छसि विस्मयात् ।
तत्प्रवक्ष्यामि ते सर्वं समाधाय मनः शृणु ॥ ०५० ॥

योऽसौ नारायणो नाम पूर्वेषामपि पूर्वजः ।
अजायत च कार्यार्थं पुत्रो धर्मस्य विश्वकृत् ॥ ०५१ ॥

स तपस्तीव्रमातस्थे मैनाकं गिरिमास्थितः ।
ऊर्ध्वबाहुर्महातेजा ज्वलनादित्यसंनिभः ॥ ०५२ ॥

षष्टिं वर्षसहस्राणि तावन्त्येव शतानि च ।
अशोषयत्तदात्मानं वायुभक्षोऽम्बुजेक्षणः ॥ ०५३ ॥

अथापरं तपस्तप्त्वा द्विस्ततोऽन्यत्पुनर्महत् ।
द्यावापृथिव्योर्विवरं तेजसा समपूरयत् ॥ ०५४ ॥

स तेन तपसा तात ब्रह्मभूतो यदाभवत् ।
ततो विश्वेश्वरं योनिं विश्वस्य जगतः पतिम् ॥ ०५५ ॥

ददर्श भृशदुर्दर्शं सर्वदेवैरपीश्वरम् ।
अणीयसामणीयांसं बृहद्भ्यश्च बृहत्तरम् ॥ ०५६ ॥

रुद्रमीशानमृषभं चेकितानमजं परम् ।
गच्छतस्तिष्ठतो वापि सर्वभूतहृदि स्थितम् ॥ ०५७ ॥

दुर्वारणं दुर्दृशं तिग्ममन्युं ; महात्मानं सर्वहरं प्रचेतसम् ।
दिव्यं चापमिषुधी चाददानं ; हिरण्यवर्माणमनन्तवीर्यम् ॥ ०५८ ॥

पिनाकिनं वज्रिणं दीप्तशूलं ; परश्वधिं गदिनं स्वायतासिम् ।

सुभ्रुं जटामण्डलचन्द्रमौलिं ; व्याघ्राजिनं परिघं दण्डपाणिम् ॥ ०५९ ॥

शुभाङ्गदं नागयज्ञोपवीतिं ; विश्वैर्गणैः शोभितं भूतसंघैः ।
एकीभूतं तपसां संनिधानं ; वयोतिगैः सुष्टुतमिष्टवाग्भिः ॥ ०६० ॥

जलं दिवं खं क्षितिं चन्द्रसूर्यौ ; तथा वाय्वग्नी प्रतिमानं जगच्च ।
नालं द्रष्टुं यमजं भिन्नवृत्ता ; ब्रह्मद्विषघ्नममृतस्य योनिम् ॥ ०६१ ॥

यं पश्यन्ति ब्राह्मणाः साधुवृत्ताः ; क्षीणे पापे मनसा ये विशोकाः ।
स तन्निष्ठस्तपसा धर्ममीड्यं ; तद्भक्त्या वै विश्वरूपं ददर्श ॥ ०६२ ॥

दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैः ; संहृष्टात्मा मुमुदे देवदेवम् ॥ ०६२ ॥

अक्षमालापरिक्षिप्तं ज्योतिषां परमं निधिम् ।
ततो नारायणो दृष्ट्वा ववन्दे विश्वसंभवम् ॥ ०६३ ॥

वरदं पृथुचार्वङ्ग्या पार्वत्या सहितं प्रभुम् ।
अजमीशानमव्यग्रं कारणात्मानमच्युतम् ॥ ०६४ ॥

अभिवाद्याथ रुद्राय सद्योऽन्धकनिपातिने ।
पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् ॥ ०६५ ॥

त्वत्संभूता भूतकृतो वरेण्य ; गोप्तारोऽद्य भुवनं पूर्वदेवाः ।
आविश्येमां धरणीं येऽभ्यरक्ष ;न्पुरा पुराणां तव देव सृष्टिम् ॥ ०६६ ॥

सुरासुरान्नागरक्षःपिशाचा ;न्नरान्सुपर्णानथ गन्धर्वयक्षान् ।
पृथग्विधान्भूतसंघांश्च विश्वां ;स्त्वत्संभूतान्विद्म सर्वांस्तथैव ॥ ०६७ ॥

ऐन्द्रं याम्यं वारुणं वैत्तपाल्यं ; मैत्रं त्वाष्ट्रं कर्म सौम्यं च तुभ्यम् ॥ ०६७ ॥

रूपं ज्योतिः शब्द आकाशवायुः ; स्पर्शः स्वाद्यं सलिलं गन्ध उर्वी ।

कामो ब्रह्मा ब्रह्म च ब्राह्मणाश्च ; त्वत्संभूतं स्थास्नु चरिष्णु चेदम्  ॥ ०६८  ॥

अद्भ्यः स्तोका यान्ति यथा पृथक्त्वं ; ताभिश्चैक्यं सङ्क्षये यान्ति भूयः ।
एवं विद्वान्प्रभवं चाप्ययं च ; हित्वा भूतानां तत्र सायुज्यमेति  ॥ ०६९  ॥

दिव्यावृतौ मानसौ द्वौ सुपर्णा ;ववाक्शाखः पिप्पलः सप्त गोपाः ।
दशाप्यन्ये ये पुरं धारयन्ति ; त्वया सृष्टास्ते हि तेभ्यः परस्त्वम्  ॥ ०७०  ॥

भूतं भव्यं भविता चाप्यधृष्यं ; त्वत्संभूता भुवनानीह विश्वा  ॥ ०७०  ॥

भक्तं च मां भजमानं भजस्व ; मा रीरिषो मामहिताहितेन ।
आत्मानं त्वामात्मनोऽनन्यभावो ; विद्वानेवं गच्छति ब्रह्म शुक्रम्  ॥ ०७१  ॥

अस्तौषं त्वां तव संमानमिच्छ ;न्विचिन्वन्वै सवृषं देववर्य ।
सुदुर्लभान्देहि वरान्ममेष्टा ;नभिष्टुतः प्रतिकार्षीश्च मा माम्  ॥ ०७२  ॥

तस्मै वरानचिन्त्यात्मा नीलकण्ठः पिनाकधृक् ।
अर्हते देवमुख्याय प्रायच्छदृषिसंस्तुतः  ॥ ०७३  ॥

नीलकण्ठ उवाच  ॥

मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु ।
अप्रमेयबलात्मा त्वं नारायण भविष्यसि  ॥ ०७४  ॥

न च त्वा प्रसहिष्यन्ति देवासुरमहोरगाः ।
न पिशाचा न गन्धर्वा न नरा न च राक्षसाः  ॥ ०७५  ॥

न सुपर्णास्तथा नागा न च विश्वे वियोनिजाः ।
न कश्चित्त्वां च देवोऽपि समरेषु विजेष्यति  ॥ ०७६  ॥

न शस्त्रेण न वज्रेण नाग्निना न च वायुना ।

नार्द्रेण न च शुष्केण त्रसेन स्थावरेण वा ॥ ०७७ ॥

कश्चित्तव रुजं कर्ता मत्प्रसादात्कथञ्चन ।
अपि चेत्समरं गत्वा भविष्यसि ममाधिकः ॥ ०७८ ॥

व्यास उवाच ॥

एवमेते वरा लब्धाः पुरस्ताद्विद्धि शौरिणा ।
स एष देवश्चरति मायया मोहयञ्जगत् ॥ ०७९ ॥

तस्यैव तपसा जातं नरं नाम महामुनिम् ।
तुल्यमेतेन देवेन तं जानीह्यर्जुनं सदा ॥ ०८० ॥

तावेतौ पूर्वदेवानां परमोपचितावृषी ।
लोकयात्राविधानार्थं सञ्जायेते युगे युगे ॥ ०८१ ॥

तथैव कर्मणः कृत्स्नं महतस्तपसोऽपि च ।
तेजोमन्युश्च विद्वंस्त्वं जातो रौद्रो महामते ॥ ०८२ ॥

स भवान्देववत्प्राज्ञो ज्ञात्वा भवमयं जगत् ।
अवाकर्षस्त्वमात्मानं नियमैस्तत्प्रियेप्सया ॥ ०८३ ॥

शुभमौर्वं नवं कृत्वा महापुरुषविग्रहम् ।
ईजिवांस्त्वं जपैर्होमैरुपहारैश्च मानद ॥ ०८४ ॥

स तथा पूज्यमानस्ते पूर्वदेवोऽप्यतूतुषत् ।
पुष्कलांश्च वरान्प्रादात्तव विद्वन्हृदि स्थितान् ॥ ०८५ ॥

जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः ।
ताभ्यां लिङ्गेऽर्चितो देवस्त्वयार्चायां युगे युगे ॥ ०८६ ॥

सर्वरूपं भवं ज्ञात्वा लिङ्गे योऽर्चयति प्रभुम् ।
आत्मयोगाश्च तस्मिन्वै शास्त्रयोगाश्च शाश्वताः ॥ ०८७ ॥

एवं देवा यजन्तो हि सिद्धाश्च परमर्षयः ।
प्रार्थयन्ति परं लोके स्थानमेव च शाश्वतम् ॥ ०८८ ॥

स एष रुद्रभक्तश्च केशवो रुद्रसंभवः ।
कृष्ण एव हि यष्टव्यो यज्ञैश्चैष सनातनः ॥ ०८९ ॥

सर्वभूतभवं ज्ञात्वा लिङ्गेऽर्चयति यः प्रभुम् ।
तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ॥ ०९० ॥

सञ्जय उवाच ॥

तस्य तद्वचनं श्रुत्वा द्रोणपुत्रो महारथः ।
नमश्चकार रुद्राय बहु मेने च केशवम् ॥ ०९१ ॥

हृष्टलोमा च वश्यात्मा नमस्कृत्य महर्षये ।
वरूथिनीमभिप्रेत्य अवहारमकारयत् ॥ ०९२ ॥

ततः प्रत्यवहारोऽभूत्पाण्डवानां विशां पते ।
कौरवाणां च दीनानां द्रोणे युधि निपातिते ॥ ०९३ ॥

युद्धं कृत्वा दिनान्पञ्च द्रोणो हत्वा वरूथिनीम् ।
ब्रह्मलोकं गतो राजन्ब्राह्मणो वेदपारगः ॥ ०९४ ॥

# अध्याय १७३

धृतराष्ट्र उवाच ॥

तस्मिन्नतिरथे द्रोणे निहते तत्र सञ्जय ।
मामकाः पाण्डवाश्चैव किमकुर्वन्नतः परम् ॥ ००१ ॥

सञ्जय उवाच ॥

तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै ।
कौरवेषु च भग्नेषु कुन्तीपुत्रो धनञ्जयः ॥ ००२ ॥

दृष्ट्वा सुमहदाश्चर्यमात्मनो विजयावहम् ।
यदृच्छयागतं व्यासं पप्रच्छ भरतर्षभ ॥ ००३ ॥

सङ्ग्रामे निघ्नतः शत्रूञ्शरौघैर्विमलैरहम् ।
अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ ००४ ॥

ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते ।
तस्यां दिशि विशीर्यन्ते शत्रवो मे महामुने ॥ ००५ ॥

न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चति ।
शूलाच्छूलसहस्राणि निष्पेतुस्तस्य तेजसा ॥ ००६ ॥

तेन भग्नानरीन्सर्वान्मद्भग्नान्मन्यते जनः ।
तेन दग्धानि सैन्यानि पृष्ठतोऽनुदहाम्यहम् ॥ ००७ ॥

भगवंस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः ।
शूलपाणिर्महान्कृष्ण तेजसा सूर्यसंनिभः ॥ ००८ ॥

व्यास उवाच ॥

प्रजापतीनां प्रथमं तैजसं पुरुषं विभुम् ।
भुवनं भूर्भुवं देवं सर्वलोकेश्वरं प्रभुम्  ॥ ००९  ॥

ईशानं वरदं पार्थ दृष्टवानसि शङ्करम् ।
तं गच्छ शरणं देवं सर्वादिं भुवनेश्वरम्  ॥ ०१०  ॥

महादेवं महात्मानमीशानं जटिलं शिवम् ।
त्र्यक्षं महाभुजं रुद्रं शिखिनं चीरवाससम्  ॥ ०११  ॥

दातारं चैव भक्तानां प्रसादविहितान्वरान्  ॥ ०११  ॥

तस्य ते पार्षदा दिव्या रूपैर्नानाविधैः विभोः ।
वामना जटिला मुण्डा ह्रस्वग्रीवा महोदराः  ॥ ०१२  ॥

महाकाया महोत्साहा महाकर्णास्तथापरे ।
आननैर्विकृतैः पादैः पार्थ वेषैश्च वैकृतैः  ॥ ०१३  ॥

ईदृशैः स महादेवः पूज्यमानो महेश्वरः ।
स शिवस्तात तेजस्वी प्रसादाद्याति तेऽग्रतः  ॥ ०१४  ॥

तस्मिन्घोरे तदा पार्थ सङ्ग्रामे लोमहर्षणे  ॥ ०१४  ॥

द्रोणकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः ।
कस्तां सेनां तदा पार्थ मनसापि प्रधर्षयेत्  ॥ ०१५  ॥

ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात्  ॥ ०१५  ॥

स्थातुमुत्सहते कश्चिन्न तस्मिन्नग्रतः स्थिते ।
न हि भूतं समं तेन त्रिषु लोकेषु विद्यते  ॥ ०१६  ॥

गन्धेनापि हि सङ्ग्रामे तस्य क्रुद्धस्य शत्रवः ।
विसञ्ज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च ॥ ०१७ ॥

तस्मै नमस्तु कुर्वन्तो देवास्तिष्ठन्ति वै दिवि ।
ये चान्ये मानवा लोके ये च स्वर्गजितो नराः ॥ ०१८ ॥

ये भक्ता वरदं देवं शिवं रुद्रमुमापतिम् ।
इह लोके सुखं प्राप्य ते यान्ति परमां गतिम् ॥ ०१९ ॥

नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदा ।
रुद्राय शितिकण्ठाय कनिष्ठाय सुवर्चसे ॥ ०२० ॥

कपर्दिने करालाय हर्यक्ष्णे वरदाय च ।
याम्यायाव्यक्तकेशाय सद्वृत्ते शङ्कराय च ॥ ०२१ ॥

काम्याय हरिनेत्राय स्थाणवे पुरुषाय च ।
हरिकेशाय मुण्डाय कृशायोत्तरणाय च ॥ ०२२ ॥

भास्कराय सुतीर्थाय देवदेवाय रंहसे ।
बहुरूपाय शर्वाय प्रियाय प्रियवाससे ॥ ०२३ ॥

उष्णीषिणे सुवक्राय सहस्राक्षाय मीढुषे ।
गिरिशाय प्रशान्ताय पतये चीरवाससे ॥ ०२४ ॥

हिरण्यबाहवे चैव उग्राय पतये दिशाम् ।
पर्जन्यपतये चैव भूतानां पतये नमः ॥ ०२५ ॥

वृक्षाणां पतये चैव अपां च पतये तथा ।
वृक्षैरावृतकायाय सेनान्ये मध्यमाय च ॥ ०२६ ॥

स्रुवहस्ताय देवाय धन्विने भार्गवाय च ।

बहुरूपाय विश्वस्य पतये चीरवाससे ॥ ०२७ ॥

सहस्रशिरसे चैव सहस्रनयनाय च ।
सहस्रबाहवे चैव सहस्रचरणाय च ॥ ०२८ ॥

शरणं प्राप्य कौन्तेय वरदं भुवनेश्वरम् ।
उमापतिं विरूपाक्षं दक्षयज्ञनिबर्हणम् ॥ ०२९ ॥

प्रजानां पतिमव्यग्रं भूतानां पतिमव्ययम् ॥ ०२९ ॥

कपर्दिनं वृषावर्तं वृषनाभं वृषध्वजम् ।
वृषदर्पं वृषपतिं वृषशृङ्गं वृषर्षभम् ॥ ०३० ॥

वृषाङ्कं वृषभोदारं वृषभं वृषभेक्षणम् ।
वृषायुधं वृषशरं वृषभूतं महेश्वरम् ॥ ०३१ ॥

महोदरं महाकायं द्वीपिचर्मनिवासिनम् ।
लोकेशं वरदं मुण्डं ब्रह्मण्यं ब्राह्मणप्रियम् ॥ ०३२ ॥

त्रिशूलपाणिं वरदं खड्गचर्मधरं प्रभुम् ।
पिनाकिनं खण्डपरशुं लोकानां पतिमीश्वरम् ॥ ०३३ ॥

प्रपद्ये शरणं देवं शरण्यं चीरवाससम् ॥ ०३३ ॥

नमस्तस्मै सुरेशाय यस्य वैश्रवणः सखा ।
सुवाससे नमो नित्यं सुव्रताय सुधन्विने ॥ ०३४ ॥

स्रुवहस्ताय देवाय सुखधन्वाय धन्विने ।
धन्वन्तराय धनुषे धन्वाचार्याय धन्विने ॥ ०३५ ॥

उग्रायुधाय देवाय नमः सुरवराय च ।

नमोऽस्तु बहुरूपाय नमश्च बहुधन्विने ॥ ०३६ ॥

नमोऽस्तु स्थाणवे नित्यं सुव्रताय सुधन्विने ।
नमोऽस्तु त्रिपुरघ्नाय भगघ्नाय च वै नमः ॥ ०३७ ॥

वनस्पतीनां पतये नराणां पतये नमः ।
अपां च पतये नित्यं यज्ञानां पतये नमः ॥ ०३८ ॥

पूष्णो दन्तविनाशाय त्र्यक्षाय वरदाय च ।
नीलकण्ठाय पिङ्गाय स्वर्णकेशाय वै नमः ॥ ०३९ ॥

कर्माणि चैव दिव्यानि महादेवस्य धीमतः ।
तानि ते कीर्तयिष्यामि यथाप्रज्ञं यथाश्रुतम् ॥ ०४० ॥

न सुरा नासुरा लोके न गन्धर्वा न राक्षसाः ।
सुखमेधन्ति कुपिते तस्मिन्नपि गुहागताः ॥ ०४१ ॥

विव्याध कुपितो यज्ञं निर्भयस्तु भवस्तदा ।
धनुषा बाणमुत्सृज्य सघोषं विननाद च ॥ ०४२ ॥

ते न शर्म कुतः शान्तिं लेभिरे स्म सुरास्तदा ।
विद्रुते सहसा यज्ञे कुपिते च महेश्वरे ॥ ०४३ ॥

तेन ज्यातलघोषेण सर्वे लोकाः समाकुलाः ।
बभूवुर्वशगाः पार्थ निपेतुश्च सुरासुराः ॥ ०४४ ॥

आपश्चुक्षुभिरे सर्वाश्चकम्पे च वसुंधरा ।
पर्वताश्च व्यशीर्यन्त दिशो नागाश्च मोहिताः ॥ ०४५ ॥

अन्धाश्च तमसा लोका न प्रकाशन्त संवृताः ।
जघ्निवान्सह सूर्येण सर्वेषां ज्योतिषां प्रभाः ॥ ०४६ ॥

चुक्रुशुर्भयभीताश्च शान्तिं चक्रुस्तथैव च ।
ऋषयः सर्वभूतानामात्मनश्च सुखैषिणः ॥ ०४७ ॥

पूषाणमभ्यद्रवत शङ्करः प्रहसन्निव ।
पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् ॥ ०४८ ॥

ततो निश्चक्रमुर्देवा वेपमाना नताः स्म तम् ।
पुनश्च संदधे दीप्तं देवानां निशितं शरम् ॥ ०४९ ॥

रुद्रस्य यज्ञभागं च विशिष्टं ते न्वकल्पयन् ।
भयेन त्रिदशा राजञ्शरणं च प्रपेदिरे ॥ ०५० ॥

तेन चैवातिकोपेन स यज्ञः संधितस्तदा ।
यत्ताश्चापि सुरा आसन्यत्ताश्चाद्यापि तं प्रति ॥ ०५१ ॥

असुराणां पुराण्यासंस्त्रीणि वीर्यवतां दिवि ।
आयसं राजतं चैव सौवर्णमपरं महत् ॥ ०५२ ॥

आयसं तारकाक्षस्य कमलाक्षस्य राजतम् ।
सौवर्णं परमं ह्यासीद्विद्युन्मालिन एव च ॥ ०५३ ॥

न शक्तस्तानि मघवान्भेत्तुं सर्वायुधैरपि ।
अथ सर्वेऽमरा रुद्रं जग्मुः शरणमर्दिताः ॥ ०५४ ॥

ते तमूचुर्महात्मानं सर्वे देवाः सवासवाः ।
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु ॥ ०५५ ॥

निपातयिष्यसे चैनानसुरान्भुवनेश्वर ॥ ०५५ ॥

स तथोक्तस्तथेत्युक्त्वा देवानां हितकाम्यया ।

अतिष्ठत्स्थाणुभूतः स सहस्रं परिवत्सरान्  ॥ ०५६  ॥

यदा त्रीणि समेतानि अन्तरिक्षे पुराणि वै ।
त्रिपर्वणा त्रिशल्येन तेन तानि बिभेद सः  ॥ ०५७  ॥

पुराणि न च तं शेकुर्दानवाः प्रतिवीक्षितुम् ।
शरं कालाग्निसंयुक्तं विष्णुसोमसमायुतम्  ॥ ०५८  ॥

बालमङ्कगतं कृत्वा स्वयं पञ्चशिखं पुनः ।
उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत्सुरान्  ॥ ०५९  ॥

बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत्प्रभुः ।
स एष भगवान्देवः सर्वलोकेश्वरः प्रभुः  ॥ ०६०  ॥

न संबुबुधिरे चैनं देवास्तं भुवनेश्वरम् ।
सप्रजापतयः सर्वे बालार्कसदृशप्रभम्  ॥ ०६१  ॥

अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा च स महेश्वरम् ।
अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तं पितामहः  ॥ ०६२  ॥

ततः प्रसादयामासुरुमां रुद्रं च ते सुराः ।
अभवच्च पुनर्बाहुर्यथाप्रकृति वज्रिणः  ॥ ०६३  ॥

तेषां प्रसन्नो भगवान्सपत्नीको वृषध्वजः ।
देवानां त्रिदशश्रेष्ठो दक्षयज्ञविनाशनः  ॥ ०६४  ॥

स वै रुद्रः स च शिवः सोऽग्निः शर्वः स सर्ववित् ।
स चेन्द्रश्चैव वायुश्च सोऽश्विनौ स च विद्युतः  ॥ ०६५  ॥

स भवः स च पर्जन्यो महादेवः स चानघः ।
स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः  ॥ ०६६  ॥

स कालः सोऽन्तको मृत्युः स यमो रात्र्यहानि च ।
मासार्धमासा ऋतवः संध्ये संवत्सरश्च सः ॥ ०६७ ॥

स च धाता विधाता च विश्वात्मा विश्वकर्मकृत् ।
सर्वासां देवतानां च धारयत्यवपुर्वपुः ॥ ०६८ ॥

सर्वैर्देवैः स्तुतो देवः सैकधा बहुधा च सः ।
शतधा सहस्रधा चैव तथा शतसहस्रधा ॥ ०६९ ॥

ईदृशः स महादेवो भूयश्च भगवानजः ।
न हि सर्वे मया शक्या वक्तुं भगवतो गुणाः ॥ ०७० ॥

सर्वैर्ग्रहैर्गृहीतान्वै सर्वपापसमन्वितान् ।
स मोचयति सुप्रीतः शरण्यः शरणागतान् ॥ ०७१ ॥

आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् ।
स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः ॥ ०७२ ॥

सेन्द्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते ।
स चैव व्याहृते लोके मनुष्याणां शुभाशुभे ॥ ०७३ ॥

ऐश्वर्याच्चैव कामानामीश्वरः पुनरुच्यते ।
महेश्वरश्च भूतानां महतामीश्वरश्च सः ॥ ०७४ ॥

बहुभिर्बहुधा रूपैर्विश्वं व्याप्नोति वै जगत् ।
अस्य देवस्य यद्वक्त्रं समुद्रे तदतिष्ठत ॥ ०७५ ॥

एष चैव श्मशानेषु देवो वसति नित्यशः ।
यजन्त्येनं जनास्तत्र वीरस्थान इतीश्वरम् ॥ ०७६ ॥

अस्य दीप्तानि रूपाणि घोराणि च बहूनि च ।
लोके यान्यस्य कुर्वन्ति मनुष्याः प्रवदन्ति च ॥ ०७७ ॥

नामधेयानि लोकेषु बहून्यत्र यथार्थवत् ।
निरुच्यन्ते महत्त्वाच्च विभुत्वात्कर्मभिस्तथा ॥ ०७८ ॥

वेदे चास्य समाम्नातं शतरुद्रीयमुत्तमम् ।
नाम्ना चानन्तरुद्रेति उपस्थानं महात्मनः ॥ ०७९ ॥

स कामानां प्रभुर्देवो ये दिव्या ये च मानुषाः ।
स विभुः स प्रभुर्देवो विश्वं व्याप्नुवते महत् ॥ ०८० ॥

ज्येष्ठं भूतं वदन्त्येनं ब्राह्मणा मुनयस्तथा ।
प्रथमो ह्येष देवानां मुखादस्यानलोऽभवत् ॥ ०८१ ॥

सर्वथा यत्पशून्पाति तैश्च यद्रमते पुनः ।
तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः ॥ ०८२ ॥

नित्येन ब्रह्मचर्येण लिङ्गमस्य यदा स्थितम् ।
महयन्ति च लोकाश्च महेश्वर इति स्मृतः ॥ ०८३ ॥

ऋषयश्चैव देवाश्च गन्धर्वाप्सरसस्तथा ।
लिङ्गमस्यार्चयन्ति स्म तच्चाप्यूर्ध्वं समास्थितम् ॥ ०८४ ॥

पूज्यमाने ततस्तस्मिन्मोदते स महेश्वरः ।
सुखी प्रीतश्च भवति प्रहृष्टश्चैव शङ्करः ॥ ०८५ ॥

यदस्य बहुधा रूपं भूतभव्यभवत्स्थितम् ।
स्थावरं जङ्गमं चैव बहुरूपस्ततः स्मृतः ॥ ०८६ ॥

एकाक्षो जाज्वलन्नास्ते सर्वतोक्षिमयोऽपि वा ।

क्रोधाद्यश्चाविशल्लोकांस्तस्माच्छर्व इति स्मृतः ॥ ०८७ ॥

धूम्रं रूपं च यत्तस्य धूर्जटिस्तेन उच्यते ।
विश्वे देवाश्च यत्तस्मिन्विश्वरूपस्ततः स्मृतः ॥ ०८८ ॥

तिस्रो देवीर्यदा चैव भजते भुवनेश्वरः ।
द्यामपः पृथिवीं चैव त्र्यम्बकश्च ततः स्मृतः ॥ ०८९ ॥

समेधयति यन्नित्यं सर्वार्थान्सर्वकर्मसु ।
शिवमिच्छन्मनुष्याणां तस्मादेश शिवः स्मृतः ॥ ०९० ॥

सहस्राक्षोऽयुताक्षो वा सर्वतोक्षिमयोऽपि वा ।
यच्च विश्वं महत्पाति महादेवस्ततः स्मृतः ॥ ०९१ ॥

दहत्यूर्ध्वं स्थितो यच्च प्राणोत्पत्तिस्थितश्च यत् ।
स्थितलिङ्गश्च यन्नित्यं तस्मात्स्थाणुरिति स्मृतः ॥ ०९२ ॥

विषमस्थः शरीरेषु समश्च प्राणिनामिह ।
स वायुर्विषमस्थेषु प्राणापानशरीरिषु ॥ ०९३ ॥

पूजयेद्विग्रहं यस्तु लिङ्गं वापि समर्चयेत् ।
लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते ॥ ०९४ ॥

ऊरुभ्यामर्धमाग्नेयं सोमार्धं च शिवा तनुः ।
आत्मनोऽर्धं च तस्याग्निः सोमोऽर्धं पुनरुच्यते ॥ ०९५ ॥

तैजसी महती दीप्ता देवेभ्यश्च शिवा तनुः ।
भास्वती मानुषेष्वस्य तनुर्घोराग्निरुच्यते ॥ ०९६ ॥

ब्रह्मचर्यं चरत्येष शिवा यास्य तनुस्तया ।
यास्य घोरतरा मूर्तिः सर्वानत्ति तयेश्वरः ॥ ०९७ ॥

यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् ।
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ॥ ०९८ ॥

एष देवो महादेवो योऽसौ पार्थ तवाग्रतः ।
सङ्ग्रामे शात्रवान्निघ्नंस्त्वया दृष्टः पिनाकधृक् ॥ ०९९ ॥

एष वै भगवान्देवः सङ्ग्रामे याति तेऽग्रतः ।
येन दत्तानि तेऽस्त्राणि यैस्त्वया दानवा हताः ॥ १०० ॥

धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च सञ्ज्ञितम् ।
देवदेवस्य ते पार्थ व्याख्यातं शतरुद्रियम् ॥ १०१ ॥

सर्वार्थसाधकं पुण्यं सर्वकिल्बिषनाशनम् ।
सर्वपापप्रशमनं सर्वदुःखभयापहम् ॥ १०२ ॥

चतुर्विधमिदं स्तोत्रं यः श‍ृणोति नरः सदा ।
विजित्य सर्वाञ्शत्रून्स रुद्रलोके महीयते ॥ १०३ ॥

चरितं महात्मनो दिव्यं साङ्ग्रामिकमिदं शुभम् ।
पठन्वै शतरुद्रीयं श‍ृण्वंश्च सततोत्थितः ॥ १०४ ॥

भक्तो विश्वेश्वरं देवं मानुषेषु तु यः सदा ।
वरान्स कामा.णल्लभते प्रसन्ने त्र्यम्बके नरः ॥ १०५ ॥

गच्छ युध्यस्व कौन्तेय न तवास्ति पराजयः ।
यस्य मन्त्री च गोप्ता च पार्श्वतस्ते जनार्दनः ॥ १०६ ॥

सञ्जय उवाच ॥

एवमुक्त्वार्जुनं संख्ये पराशरसुतस्तदा ।

